# ब्रह्मवैवर्तपुराणम् ।

## द्वितीयो भागः ।

[ श्रीकृष्णजन्मखण्डम् । ]

श्रीमहर्षिवेदव्यासविरचितम् ।


बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतम् ।



कलिकातानगरे

सरस्वतीयन्त्रे

मुद्रितम् ।

इं १८८८ ।

## श्रीकृष्णजन्मखण्डस्य सूचीपत्रम् ।

| विषयः | पृष्ठाङ्कः । |
|---|---|

| विषयः | | | पृष्ठाङ्कः । |
|---|---|---|---|

विषय: पृष्ठाङ्क: ।

सूचीपत्र सम्पूर्णम्।

---

# श्रीकृष्णजन्मखण्डम् ।

## प्रथमोऽध्यायः ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जय मुदीरयेत् ॥

नारद उवाच ।

श्रुतं प्रथमतो ब्रह्मन् ब्रह्मखण्डं मनोहरम् ।
ब्रह्मणो वदनाम्भोजात् परमाद्भुतमेव च ॥ १ ॥
तत स्तद्वचनात्तूर्णं समागत्य तवान्तिकम् ।
श्रुतं प्रकृतिखण्डञ्च सुधाखण्डात् परं वरम् ॥ २ ॥
ततो गणपतेः खण्ड मखण्डजन्मखण्डनम् ।
न मे तृप्तं मनो लोलं विशिष्टं श्रोतुमिच्छति ॥ ३ ॥
श्रीकृष्णजन्मखण्डञ्च जन्मादिखण्डनं नृणाम् ।
प्रदीपं सर्वतत्त्वानां कर्मघ्नं हरिभक्तिदम् ॥ ४ ॥
सद्यो वैराग्यजनकं भवरागनिकृन्तनम् ।
कारणं मुक्तिवीजानां भवाब्धितारणं परम् ॥ ५ ॥
कर्मोपभोगरोगाणां खण्डने च रसायनम् ।
श्रीकृष्णचरणाम्भोजप्राप्तिसोपानकारणम् ॥ ६ ॥
जीवनं वैष्णवानाञ्च जगतां पावनं रयम् ।
वद विस्तरशो भक्तं शिष्यं मां शरणागतम् ॥ ७ ॥

केन वा प्रार्थितः कृष्ण आजगाम महीतलम् ।
सर्वांशैरेक एवेशः परिपूर्णतमः स्वयम् ॥ ८ ॥
युगे कुत्र कुतो हेतोः कुत्र वाविर्बभूवह ।
वसुदेवोऽस्य जनकः कोवा कावा च देवकी ॥ ९ ॥
वद कस्य कुले जन्म मायया सुविडम्बनम् ।
किञ्चकार समागत्य केन रूपेण वा हरिः ॥ १० ॥
जगाम गोकुलं कंसभयेन सूतिकागृहात् ।
कथं कंसात् कीटतुल्यात् भयेशस्य भयं मुने ॥ ११ ॥
हरिर्वा गोपवेशेन गोकुले किञ्चकारह ।
कुतो गोपाङ्गनासार्द्धं विजहार जगत्पतिः ॥ १२ ॥
का का गोपाङ्गनाः केवा गोपाला बालरूपिणः ।
का वा यशोदा को नन्दः किं वा पुण्यञ्चकारह ॥१३॥
कथं राधा पुण्यवती देवी गोलोकवासिनी ।
व्रजे वा व्रजकन्या सा बभूव प्रेयसी हरेः ॥ १४ ॥
कथं गोप्यो दुराराध्यं सम्प्रापुरीश्वरं परम् ।
कथं ताश्च परित्यज्य जगाम मथुरां पुनः ॥ ॥१५॥
भारावतारणं कृत्वा किं विधाय जगाम सः ।
कथयस्व महाभाग पुण्यश्रवणकीर्त्तनम् ॥ १६ ॥
सुदुर्लभां हरिकथां तरणिं भवतारणे ।
निषेव्य भोगनिगड़क्लेशछेदनकर्त्तनीम् ॥ १७ ॥
पापेन्धनानां दहने ज्वलदग्निशिखामिव ।
पुंसां श्रुतवतां कोटिजन्मकिल्बिषनाशिनीम् ॥१८॥
मुक्तिं कर्णसुधारम्यां शोकसागरनाशिनीम् ।
मह्यं भक्ताय शिष्याय ज्ञानं देहि कृपानिधे ॥ १९ ॥

तपोजपमहादानपृथिवीतीर्थदर्शनात् ।
श्रुतिपाठादनशनाद् व्रतदेवार्चनादपि ॥ २० ॥
दीक्षया सर्वयज्ञेषु यत् फलं लभते नरः ।
षोड़शीं ज्ञानदानस्य कलां नार्हति तत् फलम् ॥२१॥
पित्राहं प्रेषितो ज्ञानादानाय तव सन्निधिम् ।
सुधासमुद्रं संप्राप्य न कोवा पातु मिच्छति ॥ २२ ॥

नारायण उवाच ।

मया ज्ञातोऽसि धन्य स्त्वं पुण्यराशिः सुमूर्त्तिमान् ।
करोषि भ्रमणं लोकान् पावितु ं कुलपावन ॥ २३ ॥
जनानां हृदयं सद्यः सुव्यक्तं वचनेन वै ।
शिष्ये कलत्रे कन्यायां दौहित्रे बान्धवेऽपिच ॥ २४ ॥
पुत्रे पौत्रे च वचसि प्रतापे यशसि श्रियाम् ।
बुद्धौ वारिणि विद्यायां ज्ञायते हृदयं नृणाम् ॥ २५ ॥
जीवन्मुक्तोऽसि पूत स्त्वं शुद्धभक्तो गदाभृतः ।
पुनासि पादरजसा सर्वाधारां वसुन्धराम् ॥ २६ ॥
पुनासि लोकान् सर्वांश्च स्वयं विग्रहदर्शनात् ।
सुमङ्गला हरिकथा तेन तां श्रोतुमिच्छसि ॥ २७ ॥
यत्र कृष्णकथाः सन्ति तत्रैव सर्वदेवताः ।
ऋषयो मुनयश्चैव तीर्थानि निखिलानि च ॥ २८ ॥
कथाः श्रुत्वा तथान्ते ते यान्ति सन्तो निरापदम् ।
भवन्ति तानि तीर्थानि येषु कृष्णकथाः शुभाः ॥२९॥
सद्यः कृष्णकथावक्ता स्वस्य पुंसां शतं शतम् ।
समुद्धृत्य श्रुतवतां पुनाति निखिलं कुलम् ॥ ३० ॥
प्रष्टातु प्रश्नमात्रेण पुनाति कुलमा ह नः ।

श्रोता श्रवणमात्रेण स्वकुलं स्वस्वबान्धवान् ॥३१॥
शतजन्मतपःपूतो जन्मेदं भारते लभेत् ।
करोति सफलं जन्म श्रुत्वा हरिकथामृतम् ॥ ३२ ॥
अर्च्चनं वन्दनं मन्त्रजपं सेवनमेवच ।
स्मरणं कीर्त्तनं शश्वद्गुणश्रवणमीप्सितम् ॥ ३३ ॥
निवेदनं तस्य दास्यं नवधा भक्तिलक्षणम् ।
करोति जन्म सफलं श्रुत्वैतानि च भारते ॥ ३४ ॥
नच विघ्नो भवेत्तस्य परमायुर्न नश्यति ।
न याति तत्पुरःकालो वैनतेयमिवोरगः ॥ ३५ ॥
न जहाति समीपञ्च क्षणं तस्य हरिः स्वयम् ।
उपतिष्ठन्ति तूर्णं त मणिमादिकसिद्धयः ॥ ३६ ॥
सुदर्शनं भ्रमत्येव तस्य पार्श्वे दिवानिशम् ।
कृष्णाज्ञया च रक्षार्थं कोवा किं कर्त्तुमीश्वरः ॥ ३७ ॥
न यान्ति तत् समीपञ्च स्वप्नेऽपि यमकिङ्कराः ।
ज्वलदग्निं यथा दृष्ट्वा शलभा न व्रजन्ति तम् ॥ ३८ ॥
व्याधयो विपदः शोका विघ्नाश्च न प्रयान्ति तम् ।
न याति तत्समीपञ्च मृत्युर्मृत्युभयात् मुने ॥ ३९ ॥
ऋषयो मुनयः सिद्धाः सन्तुष्टाः सर्वदेवताः ।
स च सर्वत्र निःशङ्कः सुखी कृष्णप्रसादतः ॥ ४० ॥
तव कृष्णकथायाञ्च रति रात्यन्तिकी सदा ।
जनकस्य स्वभावोऽहि जन्ये तिष्ठति निश्चितम् ॥ ४१ ॥
विप्रेन्द्र का प्रशंसेयं जन्म ते ब्रह्ममानसे ।
यस्य यत्र कुले जन्म तन्मतिस्तादृशी भवेत् ॥ ४२ ॥
पिता विधाता जगतां कृष्णपादाब्जसेवया ।

नित्यं करोति यः शश्वत्तथा भक्तिलक्षणम् ॥ ४३ ॥
रतिः कृष्णकथायाञ्च यस्याश्रुपुलकोद्गमः ।
मनो निमग्नं तत्रैव स भक्तः कथितो बुधैः ॥ ४४ ॥
पुत्रदारादिकं सर्वं जानाति यो हरेरिव ।
आत्मना मनसा वाचा स भक्तः कथितो बुधैः ॥४५॥
दयास्ति सर्वजीवेषु सर्वं कृष्णमयं जगत् ।
यो जानाति महाज्ञानी स भक्तो वैष्णवोत्तमः ॥ ४६ ॥
निर्जने तीर्थसम्पर्के निःसङ्गा ये मुदान्विताः ।
ध्यायन्ते चरणाम्भोजं श्रीहरेस्तेच वैष्णवाः ॥ ४७ ॥
शश्वद् ये नाम गायन्ति गुणं मन्त्रं जपन्ति च ।
कुर्वन्ति श्रवणं गाथा वदन्ति तेऽतिवैष्णवाः ॥ ४८ ॥
लब्ध्वा मिष्टानि वस्तूनि प्रदातुं हरये मुदा ।
तूर्णं यस्य मनो हृष्टं स भक्तो ज्ञानिनां वरः ॥ ४९ ॥
यन्मनो हरिपादाब्जे स्वप्ने ज्ञानं दिवानिशम् ।
पूर्वकर्म्मोपभोगञ्च वहिर्भुङ्क्ते स वैष्णवः ॥ ५० ॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशत्यथ ।
तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥ ५१ ॥
पूर्वान् सप्त परान् सप्त सप्त मातामहादिकान् ।
सोदरा मुद्धरेद्भक्तः स्वप्रसूञ्च प्रसूप्रसूम् ॥ ५२ ॥
कलत्रं कन्यकां बन्धुं शिष्यं दौहित्र मात्मन
किङ्करं किङ्करीं पुत्र मुद्धरेद्वैष्णवः सदा ...नम् ॥ २९ ।
सदा वाञ्छन्ति तीर्थानि वैष्णवस्...पि च ॥ ३० ॥
पापिदत्तानि पापानि तेषां ...लोचना ।
गोदोहनक्षणं यावद् यत्...ं दर्शयितुं क्षमाः ॥ ३१ ॥

तत्र सर्वाणि तीर्थानि सन्ति तावन्महीतले ॥ ५५ ॥
ध्रुवन्तत्र मृतः पापी मुक्तो याति हरे पदम् ।
यथैव ज्ञानगङ्गायामन्ते कृष्णस्मृतौ यथा ॥ ५६ ॥
तुलसी कानने गोष्ठे श्रीकृष्णमन्दिरे पदे ।
वृन्दारण्ये हरिद्वारे तीर्थेष्वन्येषु वा यथा ॥ ५७ ॥
पापानि पापिनां यान्ति तीर्थस्नानावगाहनात् ।
तेषां पापानि नश्यन्ति वैष्णवस्पर्शवायुना ॥ ५८ ॥
नहि स्थातुं शक्नुवन्ति पापान्येव कृतानि च ।
ज्वलदग्नौ यथा चिप्रं शुष्काणि हि तृणानि च ॥ ५९ ॥
भक्तं वर्त्मनि गच्छन्तं ये ये पश्यन्ति मानवाः ।
सप्तजन्मकृताघानि तेषां नश्यन्ति निश्चितम् ॥ ६० ॥
ये निन्दन्ति हृषीकेशं तद्भक्तं पुण्यरूपिणम् ।
शतजन्मार्ज्जितं पुण्यं तेषां नश्यति निश्चितम् ॥ ६१ ॥
ते पच्यन्ते महाघोरे कुम्भीपाके भयानके ।
भक्षिताः कीटसङ्घेन यावच्चन्द्रदिवाकरौ ॥ ६२ ॥
तस्य दर्शनमात्रेण पुण्यं नश्यति निश्चितम् ।
गङ्गां स्नात्वा रविं दृष्ट्वा तदा विद्वान् विशुद्ध्यति ॥६३॥
वैष्णवस्पर्शमात्रेण मुक्तो भवति पातकी ।
तस्य पापं निहन्त्येव स्वान्तःस्थो मधुसूदनः ॥ ६४ ॥
तव ... कथितो विप्र विष्णुवैष्णवयोर्गुणः ।
जनकस्य ... हरेर्ज्जन्म निबोध कथयामि ते ॥ ६५ ॥
विप्रेन्द्र का प्रश्न ... महापुराणे नारायणनारदसंवादे
यस्य यत्र कुले जन्म ... विष्णुवैष्णवयोर्गुणप्रशंसा
पिता विधाता जगतां ...ऽध्यायः ।

# द्वितीयोऽध्यायः ।

नारायण उवाच ।

येन वा प्रार्थितः कृष्ण आजगाम महीतलम् ।
यं यं विधाय भूमौ स जगाम स्वालयं विभुः ॥ १ ॥
भारावतरणोपायं दुष्टानाञ्च वधोद्यमम् ।
सर्वं ते कथयिष्यामि सुविचार्य्य विधानतः ॥ २ ॥
अधुना गोपवेशश्च गोकुलागमनं हरेः ।
राधा गोपालिका येन निबोध कथयामि ते ॥ ३ ॥
शङ्खचूड़वधे पूर्वं संक्षेपात् कथितं श्रुतम् ।
अधुना तत् सुविस्तार्य्य निबोध कथयामि ते ॥ ४ ॥
श्रीदाम्नः कलहश्चैव बभूव राधया सह ।
श्रीदामा शङ्खचूड़श्च शापात्तस्या बभूवह ॥ ५ ॥
राधां शशाप श्रीदामा याहि योनिञ्च मानवीम् ।
व्रजे व्रजाङ्गना भूत्वा विचरस्व च भूतले ॥ ६ ॥
भीता श्रीदामशापात् सा श्रीकृष्णं समुवाच ह ।
गोपीरूपं भविष्यामि श्रीदामा मां शशापह ।
किमुपायं करिष्यामि वद मां भयभञ्जनम् ॥ २९ ।
त्वया विना कथमहं धरिष्यामि स्वजीवं च ॥ ३० ॥
क्षणेन मे युगशतं कालं नाथ जलोचना ।
चक्षुर्निमेषविरहाद्भवेद्दग्धं स्मं दर्शयितुं क्षमाः ॥ ३१ ॥

शरत् पार्वण चन्द्राभ सुधापूर्णाननं तव ।
नाथ चक्षुश्चकोराभ्यां पिवाम्यह महर्निशम् ॥ १० ॥
त्वमात्मा मे मनः प्राणा देहमात्रं वदाम्यहम् ।
दृष्टिशक्तिश्च चक्षु स्त्वं जीवनं परमं धनम् ॥ ११ ॥
स्वप्ने ध्याने त्वयि मनःस्मरामि त्वत्पदाम्बुजम् ।
तव दास्यं विना नाथ न जीवामि क्षणं विभो ॥ १२ ॥
कृष्ण स्तद्वचनं श्रुत्वा बोधयामास सुन्दरीम् ।
वक्षसि प्रेयसीं कृत्वा चकार निर्भयाञ्च ताम् ॥ १३ ॥
महीतलं गमिष्यामि वाराहे च वरानने ।
मया सार्द्धं भूगमनं जन्म तेऽपि निरूपितम् ॥ १४ ॥
व्रजं गत्वा व्रजे देवि विहरिष्यामि कानने ।
मम प्राणाधिका त्वञ्च भयं किन्ते मयि स्थिते ॥ १५ ॥
ता मित्युक्त्वा हरि स्तत्र विरराम जगत्पतिः ।
अतो हेतोर्जगन्नाथो जगाम नन्दगोकुलम् ॥ १६ ॥
किंवा तस्य भयं कस्माद्भयान्तकारकस्य च ।
मायाभयच्छलेनैव जगाम राधिकान्तिकम् ॥ १७ ॥
विजहार तया सार्द्धं गोपवेशं विधाय सः ।
सह गोपाङ्गनाभिश्च प्रतिज्ञापालनाय च ॥ १८ ॥
ब्रह्मणा प्रार्थितः कृष्णः समागत्य महीतलम् ।
तव [illegible]रावतारणं कृत्वा जगाम स्वालयं विभुः ॥ १९ ॥
जनकस्य [illegible]
विप्रेन्द्र का प्रश्न[illegible]

नारद उवाच ।

यस्य यत्र कुले जन्म [illegible]व कथं वा राधया सह ।
पिता विधाता जगतां [illegible]संव्यस्य कथयाधुना ॥ २० ॥

नारायण उवाच ।

एकदा राधया सार्द्धं गोलोके श्रीहरिः स्वयम् ।
विजहार महारण्ये विजने रासमण्डले ।
राधिका सुखसम्भोगात् बुबुधे न स्वकं परम् ॥ २१ ॥
कृत्वा विहारं श्रीकृष्ण स्तामदृष्टां विहाय च ।
गोपिकां विरजा मन्यां शृङ्गारार्थं जगाम ह ॥ २२ ॥
वृन्दारण्ये च विरजा सुभगा राधिकासमा ।
तस्या वयस्याः सुन्दर्य्यो गोपीनां शतकोटयः ॥ २३ ॥
कृष्णप्राणाधिका गोपी धन्या मान्या च योषिताम् ।
रत्नसिंहासनस्था सा ददर्श हरिमन्तिके ॥ २४ ॥
ददर्श श्रीहरिस्ताञ्च शरच्चन्द्रनिभाननाम् ।
मनोहरां सस्मिताञ्च पश्यन्तीं वक्रचक्षुषा ॥ २५ ॥
सदा षोड़शवर्षीयां प्रोद्भिन्नवयौवनाम् ।
रत्नालङ्कारशोभाढ्यां भूषितां सूक्ष्मवाससा ॥ २६ ॥
पुलकाङ्कितसर्वाङ्गीं कामवाणप्रपीड़िताम् ।
दृष्ट्वा तां श्रीहरिस्तूर्णं विजहार तया सह ॥ २७ ॥
पुष्पतल्पे महारण्ये निर्जने रत्नमण्डले ।
मूर्च्छामवाप विरजा कृष्णशृङ्गारकौतुकात् ॥ २८ ॥
कृत्वा वक्षसि प्राणेशं कोटिकन्दर्पसन्निभम् ।
तया सक्तं श्रीहरिञ्च रत्नमण्डप संस्थितम् ।
दृष्ट्वा च राधिकासख्यः चक्रुस्ताञ्च निवेदनम् ॥ २९ ।
तासाञ्च वचनं श्रुत्वा सुष्वाप च चुकोप च ॥ ३० ॥
भृशं रुरोद सा देवी रक्तपङ्कजलोचना ।
ता उवाच महादेवी मा तं दर्शयितुं क्षमाः ॥ ३१ ॥

यदि सत्यं ब्रूत यूयं मया सार्द्धं प्रगच्छत ।
करिष्यामि फलं गोप्याः कृष्णस्य च यथोचितम् ॥३२॥
को रचिताद्य तस्याश्च मयि शास्तिं प्रकुर्वति ।
शीघ्रमानयतान्याश्च तया सार्द्धं हरिप्रियाः ॥ ३३ ॥
अन्तर्वक्रं सस्मितञ्च विषकुम्भं सुधामुखम् ॥ ३४ ॥
मदाश्रयं समागन्तुं यूयं दासं न दास्यथ ।
तत्रैव मण्डपं रम्यं यात संरचतेश्वरम् ॥ ३५ ॥
राधिकावचनं श्रुत्वा काश्चित् गोप्यो भयान्विताः ।
ताः सर्वाः सम्पुटाञ्जल्यो भक्तिनम्रास्यकन्धराः ॥ ३६ ॥
तामूचुः पुरतः स्थित्वा सर्वा एव प्रियां सतीम् ।
वयं तं दर्शयिष्यामो विरजासहितं प्रभुम् ॥ ३७ ॥
तासाञ्च वचनं श्रुत्वा रथ मारुह्य सुन्दरी ।
जगाम सार्द्धं गोपीभि स्त्रिषष्टिशतकोटिभिः ॥ ३८ ॥
रत्नेन्द्रसाररचितं कोटिसूर्य्यसमप्रभम् ।
मणीन्द्रसार रचितं कलसानां त्रिकोटिभिः ।
राजितं चित्र वाजिभिः वैजयन्तीविराजितम् ॥ ३९ ॥
लक्षचक्र समायुक्तं मनोयायि मनोहरम् ।
मणिसार विकारैश्च कोटिस्तम्भैः सुशोभितम् ॥ ४० ॥
नानाचित्रविचित्रैश्च सहितैः सुमनोहरैः ।
सिन्दुराकारमणिभिर्मध्यदेशे विभूषितैः ॥ ४१ ॥
रत्नकृत्रिमसंघैश्च रथचक्रोड्डसंस्थितैः ॥ ४२ ॥
चतुर्लक्षपरिमितैः चित्रघण्टासमन्वितैः ।
चित्रनूपुरशोभाढ्यै र्विचित्रैश्च विराजितैः ॥ ४३ ॥
मणिमन्दिरलक्षैश्च रत्नसारविनिर्मितैः ।

मणिसारकपाटैश्च शोभितैश्चित्रराजिभिः ॥ ४४ ॥
मणीन्द्रसारकलसैः शेखरोज्ज्वलितैर्युतम्।
भोगद्रव्यसमायुक्तं वेशद्रव्यसमन्वितैः ॥ ४५ ॥
शोभितं रत्नशय्याभी रत्नपात्रपुटान्वितम्।
हिरण्मयीनां वेदीनां समूहेन समन्वितम् ॥ ४६ ॥
कुङ्कुमाभमणीनाञ्च सोपानकोटिभिर्युतम्।
स्यमन्तकैः कौस्तुभैश्च रुचकैः प्रवरैस्तथा ॥ ४७ ॥
पद्मकृत्रिमकोटीनां शतकैश्च सुशोभितम्।
चित्रकाननवापीभिर्विशिष्टाधाररराजितम् ॥ ४८ ॥
रत्नेन्द्रसाररचितं कलसोज्ज्वलशेखरम्।
शतयोजनमूर्द्धञ्च दशयोजनविस्तृतम् ॥ ४९ ॥
पारिजातप्रसूनानां मालाकोटिविराजितम्।
कुन्दानां करवीराणां यूथिकानान्तथैव च ॥ ५० ॥
सुचारुचम्पकानाञ्च नागेशानां मनोहरैः।
मल्लिकानां मालतीनां माधवीनां सुगन्धिनाम् ॥ ५१ ॥
कदम्बानाञ्च मालानां कदम्बैश्च विराजितम्।
सहस्रदलपद्मानां मालापद्मैर्विभूषितम् ॥ ५२ ॥
चित्रपुष्पोद्यानसरःकाननैश्च विभूषितम्।
सर्वेषां स्यन्दनानाञ्च श्रेष्ठं वायुवहं परम् ॥ ५३ ॥
रत्सूक्ष्मवस्त्रसाराणां वरैराच्छादितं वरम्।
रत्नदर्पणलक्षाणां शतकैश्च समन्वितम् ॥ ५४ ॥
श्वेतचामरकोटिभि र्वस्त्रमुष्टिभिरन्वितम्।
चन्दनागुरुकस्तूरी कुङ्कुमद्रव्यचर्चितैः ॥ ५५ ॥
पारिजातप्रसूनानां कोटितल्पविराजितम्।

कोटिघण्टासमायुक्तं पताकाकोटिभिर्युतम् ॥ ५६ ॥
रत्नशय्याकोटिभिश्च चित्रवस्त्रपरिच्छदैः ।
चन्दनाक्तैश्चम्पकानां कुङ्कुमैश्च विचर्चितैः ॥ ५७ ॥
पुष्पोपधानसंयुक्तश्रृङ्गारार्हाभिरन्वितम् ।
अदृश्यैरश्रुतैर्द्रव्यैः सुन्दरैश्च विभूषितम् ॥ ५८ ॥
एवम्भूता द्रुथात्तूर्णं मवरुह्य हरिप्रिया ।
जगाम सहसा देवी तं रत्नमण्डपं मुने ॥ ५९ ॥
द्वारे नियुक्तं ददर्श द्वारपालं मनोहरम् ।
लक्षगोपपरिवृतं स्मेराननसरोरुहम् ॥ ६० ॥
गोपं श्रीदामनामानं श्रीकृष्णस्य प्रियङ्करम् ।
तमुवाच रुषा देवी रक्तपङ्कजलोचना ॥ ६१ ॥
दूरं गच्छ गच्छ दूरं रतिलम्पटकिङ्कर ।
कीदृशीं सुरूपां कान्तां द्रक्ष्यामि त्वत्प्रभोरहम् ॥६२॥
राधिकावचनं श्रुत्वा निःशङ्कः पुरतः स्थितः ।
तामेव न ददौ गन्तुं वेत्रपाणिर्महाबलः ॥ ६३ ॥
तूर्णञ्च राधिकान्यश्च श्रीदामानं सुकिङ्करम् ।
बलेन प्रेरयामासुः कोपेन स्फुरिताधरा ॥ ६४ ॥
श्रुत्वा कोलाहलं शब्दं गोलोकानां हरिः स्वयम् ।
ज्ञात्वा च कोपितां राधा मन्तर्द्धानं चकार ह ॥६५॥
विरजा राधिकाशब्दा दन्तर्द्धानं हरेरपि ।
दृष्ट्वा राधाभयार्त्ता सा जहौ प्राणांश्च योगतः ॥६६॥
सद्यस्तत्र सरिद्रूपं तच्छरीरं बभूव ह ।
व्याप्तश्च वर्त्तुलाकारं तया गोलोकमेव च ॥ ६७ ॥
कोटियोजनविस्तीर्णं दैर्घ्येऽतिनिम्नमेव च ।

देव्यैं दशगुणं चारु नाना रत्नाकरं परम् ॥ ६८ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे विरजानन्द प्रस्तावोनाम
द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

---

नारायण उवाच ।

राधा रतिगृहं गत्वा न ददर्श हरिं मुने ।
विरजाञ्च सरिद्रूपां दृष्ट्वा गेहं जगाम सा ॥ १ ॥
श्रीकृष्णो विरजां दृष्ट्वा सरिद्रूपां प्रियां सतीम् ।
उच्चै रुरोद विरजातीरे नीरमनोहरे ॥ २ ॥
ममान्तिकं समागच्छ प्रेयसीनां परे वरे ।
त्वया विनाहं सुभगे कथं जीवामि सुन्दरि ॥ ३ ॥
नद्यधिष्ठात्री देवी त्वं भव मूर्त्तिमती सति ।
ममाशिषा रूपवती सुन्दरी योषितांवरा ।
पूर्वरूपाच्च सौभाग्यादिदानीमधिका भव ॥ ४ ॥
पुरातनं शरीरन्ते सरिद्रूप मभूत् सति ।
जलादुत्थाय चागच्छ विधाय नूतनां तनुम् ॥ ५ ॥
आजगाम हरेरग्रं साक्षाद्राधेव सुन्दरी ।
पीतवस्त्रपरिधाना स्मेराननसरोरुहा ॥ ६ ॥
पश्यन्तं प्राणनाथञ्च पश्यन्ती वक्रचक्षुषा ।

नितम्बश्रोणिभारार्त्ता पीनोन्नतपयोधरा ॥ ७ ॥
मानिनी मानिनीनाञ्च गजेन्द्रमन्दगामिनी ।
सुन्दरी सुन्दरीणाञ्च धन्या मान्या च योषिताम् ॥ ८ ॥
चारुचम्पकवर्णाभा पक्वविम्बाधरा वरा ।
पक्वदाड़िमवीजाभा दन्तपङ्क्तिमनोहरा ॥ ९ ॥
शरत्पार्वणचन्द्रास्या फुल्लेन्दीवरलोचना ।
कस्तूरीविन्दुना सार्द्धं सिन्दूरविन्दुभूषिता ॥ १० ॥
चारुपत्रकशोभाढ्या सुचारुकवरीयुता ।
रत्नकुण्डलगण्डस्था भूषिता रत्नमालया ॥ ११ ॥
गजमौक्तिकनासाग्रा मुक्ताहारविराजिता ॥ १२ ॥
रत्नकङ्कणकेयूरचारुशङ्खकरोज्ज्वला ।
किङ्किणीजालशब्दाढ्या रत्नमञ्जीरमण्डिता ॥ १३ ॥
ताञ्च रूपवतीं दृष्ट्वा प्रेमोद्रेकां जगत्पतिः ।
चकारालिङ्गनं तूर्णं चुचुम्ब च मुहुर्मुहुः ॥ १४ ॥
नानाप्रकारश्रृङ्गारं विपरीतादिकं विभुः ।
रहसि प्रेयसीं प्राप्य चकार च पुनःपुनः ॥ १५ ॥
विरजा सा रजोयुक्ता धृत्वा वीर्य्यममोघकम् ।
सद्यो बभूव तत्रैव धन्या गर्भवती सती ॥ १६ ॥
दधार गर्भमीशस्य दिव्यं वर्षशतञ्च सा ।
ततः सुषाव तत्रैव पुत्रान् सप्त मनोहरान् ॥ १७ ॥
माता सा सप्तपुत्राणां श्रीकृष्णस्य प्रिया सती ।
तस्थौ तत्र सुखासीना सार्द्धं पुत्रैश्च सप्तभिः ॥ १८ ॥
एकदा हरिणा सार्द्धं वृन्दारण्ये सुनिर्जने ।
विजहार पुनः साध्वी श्रृङ्गारासक्तमानसा ॥ १९ ॥

एतस्मिन्नन्तरे तत्र मातुः क्रोड़ं जगामह ।
कनिष्ठपुत्त्रस्तस्याश्च भ्रातृभिः पीड़ितो भिया ॥ २० ॥
भीतं स्वतनयं दृष्ट्वा तत्याज तां कृपानिधिः ।
क्रोड़े चकार बालं सा कृष्णो राधागृहं ययौ ॥ २१ ॥
प्रबोध्य बालं सा साध्वी न ददर्शान्तिके प्रियम् ।
विललाप भृशं तत्र शृङ्गारातृप्तमानसा ॥ २२ ॥
शशाप स्वसुतं कोपाल्लवणोदो भविष्यसि ।
कदापि ते जलं केचित् न खादिष्यन्ति जीविनः ॥२३॥
शशाप सर्वान् बालांश्च यान्तु मूढ़ा महीतलम् ।
गच्छध्वञ्च महीं मूढ़ा जम्बुद्वीपं मनोहरम् ॥ २४ ॥
स्थितिर्नैकत्र युष्माकं भविष्यति पृथक् पृथक् ।
द्वीपे द्वीपे स्थितिं कृत्वा तिष्ठन्तु सुखिनः सुताः ॥ २५ ॥
द्वीपस्थाभिर्नदीभिश्च सह क्रीड़न्तु निर्जने ।
कनिष्ठो मातृशापाच्च लवणोदो बभूवह ॥ २६ ॥
कनिष्ठः कथयामास मातृशापञ्च बालकान् ।
आजग्मुर्दुःखिताः सर्वे मातृस्थानञ्च बालकाः ॥ २७ ॥
श्रुत्वा विवरणं सर्वे प्रजग्मुर्धरणीतलम् ।
प्रणम्य चरणं मातुर्भक्तिनम्रात्मकन्धराः ॥ २८ ॥
सप्तद्वीपे समुद्राश्च सप्त तस्थुर्विभागशः ।
कनिष्ठात् वृद्धपर्य्यन्तं द्विगुणं द्विगुणं मुने ॥ २९ ॥
लवणेक्षुसुरासर्पिर्दधि दुग्ध जलार्णवाः ।
एतेषाञ्च जलं पृथ्व्यां शस्यार्थञ्च भविष्यति ॥ ३० ॥
व्याप्ताः समुद्राः सप्तैव सप्तद्वीपां वसुन्धराम् ।
रुरुदुर्बालकाः सर्वे मातृभ्रातृभिश्चान्विताः ॥ ३१ ॥

रुरोद च भृशं साध्वी पुत्रविच्छेदकातरा ।
मूर्च्छामवाप शोकेन पुत्राणां भर्त्तुरेव च ॥ ३२ ॥
तां शोकसागरे मग्नां विज्ञाय राधिकापतिः ।
आजगाम पुनस्तस्याः स्मेराननसरोरुहः ॥ ३३ ॥
दृष्ट्वा हरिं सा तत्याज शोकं रोदनमेव च ।
आनन्दसागरे मग्ना दृष्ट्वा कान्तं बभूवह ॥ ३४ ॥
चकार श्रीहरिं क्रोड़े विजहार स्मरातुरा ।
ताञ्च पुत्रपरित्यक्तां हरिस्तुष्टो बभूव ह ॥ ३५ ॥
वरं तस्मै ददौ प्रीत्या प्रसन्नवदनेक्षणः ।
कान्ते नित्यं तव स्थानमागमिष्यामि निश्चितम् ॥३६॥
यथा राधा तत्समा त्वं भविष्यसि प्रिया मम ।
पुत्रान्‌रक्षसि नित्यं त्वं मद्वरस्य प्रभावतः ॥ ३७ ॥
इत्युक्तवन्तं श्रीकृष्णं वसन्तं विरजान्तिके ।
दृष्ट्वा राधावयस्याश्च कथयामासुरीश्वरीम् ।
श्रुत्वा रुरोद सा देवी सुष्वाप क्रोधमन्दिरे ॥ ३८ ॥
एतस्मिन्नन्तरे कृष्णो जगाम राधिकान्तिकम् ।
स तस्थौ राधिकाद्वारे श्रीदाम्ना सह नारद ॥ ३९ ॥
रासेश्वरी हरिं दृष्ट्वा रुष्टोवाचाप्रियं तदा ॥ ४० ॥
मत्तो बहुतराः कान्ता गोलोके सन्ति ते हरे ।
याहि तासां सन्निधानं मया ते किं प्रयोजनम् ॥ ४१ ॥
विरजा प्रेयसी कान्ता सरिद्रूपा बभूव ह ।
देहं त्यक्त्वा भयात्तथापि यासि तां प्रति ॥ ४२ ॥
तत्तीरे मन्दिरं कृत्वा तिष्ठ तिष्ठ च याहि ताम् ।
नदी बभूव सा त्वञ्च नदो भवितु मर्हसि ॥ ४३ ॥

नदस्य नद्या सार्द्धञ्च सङ्गमो गुणवान् भवेत्।
स्वजातौ परमा प्रीति शयने भोजने सुखात्॥ ४४॥
देवचूड़ामणेः क्रीड़ा नद्या सार्द्धं मयेरितम्।
महाजनः स्मेरमुखः श्रुत्वा सद्यो भविष्यति॥ ४५॥
ये त्वां वदन्ति सर्वेशं ते किं जानन्ति त्वन्मनः।
भगवान् सर्वभूतात्मा नदीं संभक्तुमिच्छति॥ ४६॥
इत्युक्त्वा राधिका देवी विरराम रुषान्विता।
नोत्तस्थौ भूमिशयनाद्गोपीलक्षसमन्विता॥ ४७॥
काश्चिच्चामरहस्ताश्च काश्चित् सूक्ष्मांशुकाधराः।
काश्चित् ताम्बूलहस्ता च काश्चिन्मालावराकराः॥४८॥
वासितोदकराः काश्चित् काश्चित् पद्मवराकराः।
काश्चित् सिन्दूरहस्ताश्च माल्यहस्ताश्च काश्चन॥ ४९॥
रत्नालङ्कारहस्ताश्च काश्चित् कज्जलवाहिकाः।
वेणुवीणाकराः काश्चित् काश्चित् कङ्कतिकाकराः॥५०॥
काश्चिद्दावीरहस्ताश्च यन्त्रहस्ताश्च काश्चन।
सुगन्धितैलहस्ताश्च काश्चन प्रमदोत्तमाः।
करतालकराः काश्चित् गेण्डहस्ताश्च काश्चन॥ ५१॥
काश्चिन् मृदङ्गमुरजमुरलीतालकारिकाः।
सङ्गीतनिपुणाः काश्चित् काश्चिन्नर्त्तनतत्पराः॥५२॥
क्रीड़ावस्तुकराः काश्चिन्मधुहस्ताश्च काश्चन।
सुधापात्रकराः काश्चिदङ्घ्रिपीठकराः पराः॥ ५३॥
वेशवस्तुकराः काश्चित् काश्चिच्चरणसेविकाः।
पुटाञ्जलिकराः काश्चित् काश्चित् स्तुतिपरा वराः॥५४॥
एवं कतिविधाः सन्ति राधिकापुरतो मुने।

वहिर्द्देशस्थिताः काश्चित् कोटिशः कोटिशः सदा ॥५५॥
काश्चित् द्वारनियुक्ताश्च वयस्या वेत्रधारिकाः ।
कृष्ण मभ्यन्तरं गन्तुं न ददुः द्वारसंस्थितम् ॥ ५६ ॥
पुरः स्थितस्तं प्राणेशं राधा पुनरुवाच सा ।
नानुरूपमत्यकथ्य मयोग्य मतिकर्कशम् ॥ ५७ ॥

राधिकोवाच ।

हे कृष्ण विरजाकान्त गच्छ मत्पुरतो हरे ।
कथं दूनोषि मां लोल रतिचौरातिलम्पट ॥ ५८ ॥
शीघ्रं पद्मावतीं गच्छ रत्नमालां मनोरमाम् ।
अथवा वनमालां वा रूपेणाप्रतिमां व्रज ॥ ५९ ॥
हे नदीकान्त देवेश देवानाञ्च गुरोर्गुरो ।
मया ज्ञातोऽसि भद्रन्ते गच्छ गच्छ ममाश्रमात् ॥६०॥
शश्वत्ते मानुषस्येव व्यवहारश्च लम्पट ।
लभतां मानुषीं योनिं गोलोकाद् व्रज भारतम् ॥६१॥
हे सुशीले शशिकले हे पद्मावति माधवि ।
निवार्य्यताञ्च धूर्त्तोऽय मस्यात्र किं प्रयोजनम् ॥ ६२ ॥
राधिकावचनं श्रुत्वा तमूचुर्गोपिका हरिम् ।
हितं तथ्यञ्च विनयं सारं यत् समयोचितम् ॥ ६३ ॥
काश्चिदूचुरिति हरे गच्छ स्थानान्तरं क्षणम् ।
राधाकोपापनयने गमयिष्यामि हे वयम् ॥ ६४ ॥
काश्चिदूचुरतिप्रीत्या क्षणं गच्छ गृहान्तरम् ।
तवैव वर्द्धिता राधा त्वां विना कश्च रक्षति ॥ ६५ ॥
काश्चिदूचुरिति प्रेम्णा राधिकाया हरिम् मुने ।
क्षणं वृन्दावनं गच्छ मानापनयनावधि ॥ ६६ ॥

काश्चिदित्यूचुरीशञ्च परिहासपरं वचः ।
मानापनयनं भक्त्या कामिन्याः कुरु कामुकः ॥ ६७ ॥
काश्चिन्नोचुरितीशं तं याहि जायान्तरं तव ।
लोलुपस्य फलं नाथ करिष्यामो यथोचितम् ॥ ६८ ॥
काश्चिन्नोचुरिति हरिं सस्मितं पुरतः स्थितम् ।
गत्वा समीप मुत्थाय मानापनयनं कुरु ॥ ६९ ॥
काश्चिन्नोचुरिति प्राणनाथं गोप्यो दुरत्ययम् ।
कः क्षमः साम्प्रतं द्रष्टुं राधिकामुखपङ्कजम् ॥ ७० ॥
काश्चनोचुरिति विभुं व्रज स्थानान्तरं हरे ।
कोपापनयने काले पुनरागमनं तव ॥ ७१ ॥
काश्चनोचुरितीदं तं प्रगल्भाः प्रमदोत्तमाः ।
वयं त्वां वाचयिष्यामो नचेद् याहि गृहान्तरम् ॥ ७२ ॥
काश्चिन्निवारयामासुर्माधवं प्रमदोत्तमाः ।
स्मितवक्त्रञ्च सर्वेशं स्वच्छ मक्रोधमीश्वरम् ॥ ७३ ॥
गोपीभिर्वार्य्यमाणे च जगत्कारणकारणे ।
सद्यश्चुकोप श्रीदामा हरौ गृहान्तरे गते ॥ ७४ ॥
कोपादुवाच श्रीदामा राधिकां परमेश्वरीम् ।
रक्तपद्मेक्षणां रुष्टां रक्तपङ्कज लोचनः ॥ ७५ ॥

श्रीदामोवाच ।

कथं वदसि मात स्त्वं कटुवाक्यं मदीश्वरम् ।
विचारणां विना देवि करोषि भर्त्सनं वृथा ॥ ७६ ॥
ब्रह्मानन्तेश धर्मेशं जगत्कारणकारणम् ।
वाणीपद्मालयामायाप्रकृतीशञ्च निर्गुणम् ॥ ७७ ॥
आत्मारामं पूर्णकामं करोषि त्वं विडम्बनम् ।

देवीनां प्रवरा त्वञ्च निबोध यस्य सेवया ॥ ७८ ॥
यस्य पादार्च्चनेनैव सर्व्वेषामीश्वरी परा ।
तं न जानासि कल्याणि किं महं वक्तुमीश्वरः ॥ ७९ ॥
भ्रूभङ्गलीलया कृष्णः स्रष्टुं शक्तश्च त्वद्विधाः ।
कोटिशः कोटिदेव्य स्त्वं न जानासि च निर्गुणम् ॥८०॥
वैकुण्ठे श्रीहरेरस्य चरणाम्बुजमार्जनम् ।
करोति केशैः शश्वत् श्रीः सेवनं भक्तिपूर्व्वकम् ॥ ८१ ॥
सरस्वती च स्तवनैः कर्णपीयूषसुन्दरैः ।
सन्ततं स्तौति यं भक्त्या न जानासि तमीश्वरम् ।८२॥
शीताच प्रकृतिर्म्माया सर्व्वेषां जीवरूपिणी ।
सन्ततं स्तौति यं भक्त्या तं न जानासि मानिनि ॥८३॥
स्तुवन्ति सततं वेदा महिम्नः षोड़शीं कलाम् ।
कदापि तं न जानन्ति त्वं न जानासि भामिनि ॥८४
वक्त्रैश्चतुर्भिर्यं ब्रह्मा वेदानां जनको विभुः ।
स्तौति नित्यं सेवते च चरणाम्भोज मीश्वरि ॥ ८५ ॥
शङ्करः पञ्चभिर्व्वक्त्रैः स्तौति यं योगिनां गुरुः ।
साश्रुपूर्णः सपुलकः सेवते चरणाम्बुजम् ॥ ८६ ॥
शेषः सहस्रवदनैः परमात्मानमीश्वरम् ।
सततं स्तौति भक्त्या च सेवते चरणाम्बुजम् ॥ ८७ ॥
धर्म्मः पाताच सर्व्वेषां साक्षी च जगतां पतिः ।
भक्त्या च चरणाम्भोजं सेवते सततं मुदा ॥ ८८ ॥
श्वेतद्वीपनिवासी यः पाता विष्णुः स्वयं विभुः ।
यस्यांशश्च तथाचायं ध्यायतेऽणुचरणं परम् ॥ ८९ ॥
सुरासुरमुनीन्द्राश्च मनवो मानवा बुधाः ।

सेवन्ते नहि पश्यन्ति स्वप्नेऽपि चरणाम्बुजम् ।
क्षिप्रं रोषं परित्यज्य भज पादाम्बुजं हरेः ॥ ९० ॥
भ्रूभङ्गलीलामात्रेण सृष्टिः संहर्त्तुरेव च । ९१ ॥
निमेषमात्रादस्यैव ब्रह्मणः पतनं हरेः ।
यस्यैव दिवसे प्यष्टाविंशतीन्द्राः पतन्त्यपि ॥ ९२ ॥
एवमष्टोत्तरशतमायुर्यस्य जगद्विधेः ।
त्वं वा कान्याश्च वा राधे मदीश्वर वशेऽखिलम् ॥९३॥
श्रीदाम्नो वचनं श्रुत्वा केवलं कटुमूल्वणम् ।
सद्यश्चुकोप सा ब्रह्मन्नुत्थाय तमुवाच ह । ९४ ॥
रासेश्वरी वहिर्गत्वा तमुवाच ह निष्ठुरम् ।
स्फुरदोष्ठी मुक्तकेशी रक्ताम्भोरुहलोचना ॥ ९५ ॥

राधिकोवाच ।

रे रे जाल्म महामूढ़ शृणु लम्पटकिङ्कर ।
त्वञ्च जानासि सर्वार्थं न जानामि त्वदीश्वरम् । ९६ ॥
त्वदीश्वरोहि श्रीकृष्णो नह्यस्माकं व्रजाधम ।
जानामि जनकं स्तौषि सदा निन्दसि मातरम् ॥ ९७॥
यथाऽसुराश्च त्रिदशान्नित्यं निन्दन्ति सन्ततम् ।
तथा निन्दसि मां मूढ़ तस्मात्त्वमसुरो भव ॥ ९८ ॥
गोप व्रजासुरीं योनिं गोलोकाच्च वहिर्भव ।
मयाद्य शप्तो मूढ़ त्वं कस्त्वां रक्षितुमीश्वरः ॥ ९९ ॥
रासेश्वरी तमित्युक्त्वा तुष्वाप विरराम च ।
वयस्याः सेवयामासुश्चामरै रत्नमुष्टिभिः । १०० ॥
श्रुत्वा च वचनं तस्याः कोपेन स्फुरिताधरः ।
शशाप ताञ्च श्रीदामा व्रज योनिञ्च मानुषीम् ॥१०१॥

मनुष्य इव कोपस्ते तस्मात् त्वं मानुषी भव।
भविष्यसि न सन्देहो मया शप्ता त्वमम्बिके ॥ १०२ ॥
छायया कलया चापि परस्वस्ता कलङ्किनी ।
मूढ़रायाणपत्नीं त्वां वक्ष्यन्ति जगतीतले ॥ १०३ ॥
रायाण: श्रीहरेरंशो वैश्यो वृन्दावने वने ।
भविष्यति महायोगी राधाशापेन गर्भजः ॥ १०४ ॥
गोकुले प्राप्य तं कृष्णं विहृत्य वस कानने ।
भविता ते वर्षशतं विच्छेदो हरिणा सह ।
पुनः प्राप्य तमीशञ्च गोलोक मागमिष्यसि ॥ १०५ ॥
ता मित्युक्का च नत्वा च स जगाम हरेः पुरः॥१०६॥
गत्वा प्रणम्य श्रीकृष्णं शापाख्यान मुवाच ह ।
आनुपूर्व्वन्तु तत् सर्वं रुरोद च भृशं व्रजः ॥ १०७ ॥
उवाच तं रुदन्तञ्च गच्छ त्वं धरणीतलम् ।
न जेता ते त्रिभुवने ह्यसुरेन्द्रो भविष्यसि ॥ १०८ ॥
काले शङ्करशूलेन देहं त्यक्का ममान्तिकम् ।
आगमिष्यसि पञ्चाशद्युगेऽतीते मदाशिषा ॥ १०९ ॥
श्रीकृष्णस्य वचः श्रुत्वा तमुवाच शुचान्वितः ।
त्वद्भक्तिरहितं माञ्च कदाचिन्न करिष्यसि ॥ ११० ॥
इत्युक्का स हरिं नत्वा जगाम स्वाश्रमाद्वहि ।
पश्चाज्जगाम सा देवी रुरोद च पुनःपुनः ॥ १११ ॥
क्व यासि वत्सेत्युच्चार्य्य विललाप भृशं सती ।
स एव शङ्खचूड़श्च बभूव तुलसीपतिः ॥ ११२ ॥
गते श्रीदाम्नि सा देवी जगामेश्वरसन्निधिम् ।
सर्वं निवेदयामास हरिः प्रत्युत्तरं ददौ ॥ ११३ ॥

शोकातुराञ्च तां कृष्णो बोधयामास प्रेयसीम्।
शङ्खचूड़श्च कालेन सम्प्राप पुनरीश्वरम् ॥ ११४ ॥
राधा जगाम धरणीं वाराहे हरिणा सह।
वृकभानुगृहे जन्म ललाभ गोकुले मुने ॥ ११५ ॥
इत्येवं कथितं सर्वं श्रीकृष्णाख्यान मुत्तमम्।
सर्वेषां वाञ्छितं सारं किम्भूयः श्रोतुमिच्छसि ॥११६॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे सप्तसमुद्रजन्मादिराधाश्रीदाम्नोः शापोद्भवो नाम तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः।

नारद उवाच।

केन वा प्रार्थितः कृष्णो महीञ्च केन हेतुना।
आजगाम जगन्नाथो वद वेदविदांवरः ॥ १ ॥

नारायण उवाच।

पुरा वाराहकल्पे सा भाराक्रान्ता वसुन्धरा।
भृशं बभूव शोकार्त्ता ब्रह्माणं शरणं ययौ ॥ २ ॥
सुरैश्चासुरसन्त्रस्तै र्भृशमुद्विग्नमानसैः।
सार्द्धं तैस्तां दुर्गमाञ्च जगाम वेधसः सभाम् ॥ ३ ॥
ददर्श तस्यां देवेशं ज्वलन्तं ब्रह्मतेजसा।
ऋषीन्द्रैश्च मुनीन्द्रैश्च सिद्धेन्द्रैः सेवितं मुदा ॥ ४ ॥

अप्सरोगणनृत्यञ्च पश्यन्तं सस्मितं मुदा ।
गन्धर्वाणाञ्च सङ्गीतं शृतवन्तं मनोहरम् ॥ ५ ॥
जपन्तं परमं ब्रह्म कृष्ण इत्यक्षरद्वयम् ।
भक्त्यानन्दाश्रुपूर्णं तं पुलकाङ्कितविग्रहम् ॥ ६ ॥
भक्त्या सा त्रिदशैः सार्द्धं प्रणम्य चतुराननम् ।
सर्वं निवेदनञ्चक्रे दैत्यभारादिकं मुने ।
साश्रुपूर्णा सपुलका तुष्टाव च रुरोद च ॥ ७ ॥
तामुवाच जगद्धाता कथं स्तौषि च रोदिषि ॥ ८ ॥
कथमागमनं भद्रे वद भद्रं भविष्यति ।
सुस्थिरा भव कल्याणि भयं किन्ते मयि स्थिते ॥ ९ ॥
आश्वास्य पृथिवीं ब्रह्मा देवान् पप्रच्छ सादरम् ।
कथमागमनं देवा युष्माकं मम सन्निधिम् ॥ १० ॥
ब्रह्मणो वचनं श्रुत्वा देवा ऊचुः प्रजापतिम् ।
भाराक्रान्ता च वसुधा दैत्यग्रस्ता वयं प्रभो ॥ ११ ॥
त्वमेव जगतां स्रष्टा शीघ्रं नो निष्कृतिं कुरु ।
गतिस्त्वमस्या भो ब्रह्मन् निर्वृतिं कर्त्तु मर्हसि ॥ १२॥
पीड़िता येन भारेण पृथिवीयं पितामह ।
वयं तेनैव दुःखार्त्ता स्तद्भारहरणं कुरु ॥ १३ ॥
देवानां वचनं श्रुत्वा पप्रच्छ तां जगद्विधिः ।
दूरीकृत्य भयं वत्से सुखं तिष्ठ ममान्तिके ॥ १४ ॥
केषां भारमशक्ता त्वं सोढुं पद्मविलोचने ।
अपनेष्यामि तं भद्रे भद्रं ते भविता ध्रुवम् ॥ १५ ॥
तस्य सा वचनं श्रुत्वा तमुवाच स्वपीड़नम् ।
पीड़िता येन येनैवं प्रसन्नवदनेक्षणा ॥ १६ ॥

शृणु तात प्रवक्ष्यामि स्वकीयां मानसीं व्यथाम् ।
विना बन्धुं सविश्वासं नाहं कथितु मुत्सहे ॥ १७ ॥
स्त्रीजातिरबला शश्वद्रक्षणीया स्वबन्धुभिः ।
जनकस्वामिपुत्रैश्च गर्हितान्यैश्च निश्चितम् ॥ १८ ॥
त्वया सृष्टा जगत्तात न लज्जा कथितुं मम ।
येषां भारैः पीड़िताहं श्रूयतां कथयामि ते ॥ १९ ॥
कृष्णभक्तिविहीना ये ये च तद्भक्तनिन्दकाः ।
तेषां महापातकिनामशक्ता भारवाहने ॥ २० ॥
स्वधर्म्माचारहीना ये नित्यकृत्यविवर्जिताः ।
श्रद्धाहीनाश्च वेदेषु तेषां भारेण पीड़िता ॥ २१ ॥
पितृमातृगुरुस्त्रीणां पोषणं पुत्रपोष्ययोः ।
ये न कुर्वन्ति तेषाञ्च न शक्ता भारवाहने ॥ २२ ॥
ये मिथ्यावादिनस्तात दयासत्यविहीनकाः ।
निन्दका गुरुदेवानां तेषां भारेण पीड़िता ॥ २३ ॥
मित्रद्रोही कृतघ्नश्च मिथ्यासाक्ष्यप्रदायकः ।
विश्वासघ्नः स्थाप्यहारी तेषां भारेण पीड़िता ॥ २४ ॥
कल्याणयुक्तनामानि हरेर्नामैकमङ्गलम् ।
कुर्वन्ति विक्रयं ये वै तेषां भारेण पीड़िता ॥ २५ ॥
जीवघाती गुरुद्रोही ग्रामयाजी च लुब्धकः ।
शवदाही शूद्रभोजी तेषां भारेण पीड़िता ॥ २६ ॥
पूजायज्ञोपवासानां व्रतानां नियमस्य च ।
ये ये मूढ़ा निहन्तारस्तेषां भारेण पीड़िता ॥ २७ ॥
सदा द्विषन्ति ये पापा गोविप्रसुरवैष्णवान् ।
हरिं हरिकथाभक्तिं तेषां भारेण पीड़िता ॥ २८ ॥

शङ्खचूड़स्य भारेण पीड़िताहं यथा विधे ।
ततोऽधिकानां दैत्यानां भारेण परिपीड़िता ॥ २९ ॥
इत्येवं कथितं सर्वमनाथाया निवेदनम् ।
त्वया यदि सनाथाहं प्रतीकारं कुरु प्रभो ॥ ३० ॥
इत्येवमुक्का वसुधा रुरोद च मुहुर्मुहुः ।
ब्रह्मा तद्रोदनं दृष्ट्वा तामुवाच कृपानिधिः ।
भारं तवापनेष्यामि दस्यूनामप्युपायतः ॥ ३१ ॥
उपायतोऽपि कार्य्याणि सिध्यन्त्येव वसुन्धरे ।
कालेन भारहरणं करिष्यति मदीश्वरः ॥ ३२ ॥
यन्त्रं मङ्गलकुम्भञ्च शिवलिङ्गञ्च कुङ्कुमम् ।
मधु काष्ठं चन्दनञ्च कस्तूरीं तीर्थमृत्तिकाम् ॥ ३३ ॥
खड्गं गण्डकखड्गञ्च स्फटिकं पद्मरागकम् ।
इन्द्रनीलं सूर्य्यमणिं रुद्राक्षं कुशमूलकम् ॥ ३४ ॥
शालग्रामशिलां शङ्खं तुलसीं प्रतिमाजलम् ।
शङ्खं प्रदीपमालाञ्च शिलामर्च्चाञ्च घण्टिकाम् ॥ ३५ ॥
निर्माल्यञ्चैव नैवेद्यं हरिद्वर्णमणिन्तथा ।
ग्रन्थियुक्तं यज्ञसूत्रं दर्पणं श्वेतचामरम् ॥ ३६ ॥
गोरोचनाञ्च मुक्ताञ्च शुक्तिं माणिक्यमेव च ।
पुराणसंहितां वह्निं कर्पूरं परशुं तथा ॥ ३७ ॥
रजतं काञ्चनञ्चैव प्रवालरत्नमेव च ।
कुशद्विजं तीर्थतोयं गव्यं गोमूत्रगोमयम् ॥ ३८ ॥
त्वयि ये स्थापयिष्यन्ति मूढाश्चैतानि सुन्दरि ।
तिष्ठन्ति कालसूत्रे वै वर्षाणामयुतं ध्रुवम् ॥ ३९ ॥
ब्रह्मा पृथ्वीं धर्म्मेणैवं प्र. देवताभिस्त्वया सह ।

जगाम जगतां धाता कैलासं शङ्करालयम्॥ ४० ॥
गत्वा तमाश्रमं रम्यं ददर्श शङ्करं विधिः।
वसन्तमक्षयवटमूले च सरितस्तटे॥ ४१ ॥
व्याघ्रचर्म्मपरीधानं दक्षकन्यास्थिभूषणम्।
त्रिशूलपट्टिशधरं पञ्चवक्त्रं त्रिलोचनम्॥ ४२ ॥
नानासिद्धैः परिवृतं योगीन्द्रगणसेवितम्।
परितोऽप्सरसां नृत्यं पश्यन्तं सस्मितं मुदा॥ ४३ ॥
गन्धर्वाणाञ्च सङ्गीतं श्रुतवन्तं कुतूहलात्।
पश्यन्तीं पार्वतीं प्रीत्या पश्यन्तं वक्रचक्षुषा॥ ४४ ॥
जपन्तं पञ्चवक्त्रेण हरेर्नामैकमङ्गलम्।
मन्दाकिनीपद्मवीजमालया पुलकाङ्कितम्॥ ४५ ॥
एतस्मिन्नन्तरे ब्रह्मा तस्यावश्ये स धूर्जटिः।
पृथिव्या सुरसङ्घैश्च सार्द्धं प्रणतकन्धरैः॥ ४६ ॥
उत्तस्थौ शङ्करः शीघ्रं भक्त्या दृष्ट्वा जगद्गुरुम्।
ननाम मूर्ध्ना सम्प्रीत्या लब्धवानाशिषं ततः॥ ४७ ॥
प्रणेमुर्देवताः सर्वाः शङ्करं चन्द्रशेखरम्।
प्रणनाम धरा भक्त्या चाशिषं युयुजे हरः॥ ४८ ॥
वृत्तान्तं कथयामास पार्वतीशं प्रजापतिः।
श्रुत्वा नतमुखस्तूर्णं शङ्करो भक्तवत्सलः॥ ४९ ॥
भक्तापायं समाकर्ण्य पार्वतीपरमेश्वरौ।
बभूवतुस्तौ दुःखार्त्तौ बोधयामास तौ विधिः॥ ५० ॥
ततो ब्रह्मा महेशश्च सुरसंघान् वसुन्धराम्।
गृहं प्रस्थापयामास समाश्वास्य प्रयत्नतः॥ ५१ ॥
[illegible]ो देवेश्वरौ तूर्णमागत्य धर्म्ममन्दिरम्।

सह तेन समालोच्य प्रजग्मुर्भवनं हरेः ॥ ५२ ॥
वैकुण्ठं परमं धाम जरामृत्युहरं परम् ।
वायुना धार्य्यमाणञ्च ब्रह्माण्डादूर्द्ध्वमुत्तमम् ॥ ५३ ॥
कोटियोजनमूर्द्धञ्च ब्रह्मलोकात् सनातनम् ।
न वर्णनीयं कविभिर्विचित्रं रत्ननिर्मितम् ।
पद्मरागैरिन्द्रनीलै राजमार्गैर्विभूषितम् ॥ ५४ ॥
ते मनोयायिनः सर्वे सम्प्रापुस्तं मनोहरम् ।
हरेरन्तःपुरं गत्वा ददृशुः श्रीहरिं पुरः ॥ ५५ ॥
रत्नसिंहासनस्थञ्च रत्नालङ्कारभूषितम् ।
रत्नकेयूरवलयरत्ननूपुरशोभितम् ॥ ५६ ॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् ।
पीतवस्त्रपरीधानं वनमालाविभूषितम् ॥ ५७ ॥
शान्तं सरस्वतीकान्तं लक्ष्मीधृतपदाम्बुजम् ।
कोटिकन्दर्पलीलाभं स्मितवक्त्रं चतुर्भुजम् ॥ ५८ ॥
सुनन्दनन्दकुमुदैः पार्षदैरुपसेवितम् ।
चन्दनोचितसर्वाङ्गं सरत्नमुकुटोज्ज्वलम् ॥ ५९ ॥
परमानन्दरूपञ्च भक्तानुग्रहकातरम् ।
तं प्रणेमुः सुरेन्द्राश्च भक्त्या ब्रह्मादयो मुने ॥ ६० ॥
तुष्टुवुः परया भक्त्या भक्तिनम्रात्मकन्धराः ।
परमानन्दभारार्त्ताः पुलकाङ्कितविग्रहाः ॥ ६१ ॥

ब्रह्मोवाच ।

नमामि कमलाकान्तं शान्तं सर्वेशमच्युतम् ।
वयं यस्य कलाभेदाः कलांशकलया सुराः ॥ ६२ ॥
मनवश्च मुनीन्द्राश्च मानुषाश्च चराचराः ।

कलाकलांशकलया भूतास्त्वत्तो निरञ्जन ॥ ६३ ॥

शङ्कर उवाच ।

त्वामक्षयमक्षरं वा राममव्यक्तमीश्वरम् ।
अणादिमादिमानन्दरूपिणं सर्वरूपिणम् ॥ ६४ ॥
अनिमादिकसिद्धीनां कारणं सर्वकारणम् ।
सिद्धिज्ञं सिद्धिदं सिद्धिरूपं कः स्तोतुमीश्वरः ॥ ६५ ॥

धर्म उवाच ।

वेदेऽनिरूपितं वस्तु वर्णनीयं विचक्षणैः ।
वेदेऽनिर्वचनीयं यत्तन्निर्वक्तुञ्च कः क्षमः ॥ ६६ ॥
यस्य सम्भावनीयं यद्गुणरूपं निरञ्जनम् ।
तदतिरिक्तञ्च स्तवनं किमहं स्तौमि निर्गुणम् ॥ ६७ ॥
ब्रह्मादीनामिदं स्तोत्रं षट्श्लोकोक्तं महामुने ।
पठित्वा मुच्यते दुर्गाद्वाञ्छितञ्च लभेन्नरः ॥ ६८ ॥
देवानां स्तवनं श्रुत्वा तानुवाच हरिः स्वयम् ।
गोलोकं यात यूयञ्च यामि पश्चात् श्रिया सह ॥ ६९ ॥
नरनारायणौ तौ द्वौ श्वेतद्वीपनिवासिनौ ।
एते यास्यन्ति गोलकं तथा देवी सरस्वती ॥ ७० ॥
अनन्तो मम माया च कार्त्तिकेयो गणाधिपः ।
सा सावित्री वेदमाता पश्चाद् यास्यति निश्चितम् ॥ ७१ ॥
तत्राहं द्विभुजः कृष्णो गोपीभी राधया सह ।
तत्राहं कमलायुक्तः सुनन्दादिभिरावृतः ॥ ७२ ॥
नारायणश्च कृष्णोऽहं श्वेतद्वीपनिवासकृत् ।
ममैवान्ये कलाः सर्वे देवा ब्रह्मादयः स्मृताः ॥ ७३ ॥
कलाकलांशकलया सुरासुर नरादयः ।

गोलोकं यात यूयञ्च कार्य्यसिद्धिर्भविष्यति ॥ ७४ ॥
वयं पश्चाद्गमिष्यामः सर्व्वेषामिष्टसिद्धये ।
इत्युक्त्वा च सभामध्ये विरराम हरिः स्वयम् ॥ ७५ ॥
प्रणम्य देवताः सर्व्वा जग्मुर्गोलोकमद्भुतम् ।
विचित्रं परमं धाम जरामृत्युहरं परम् ॥ ७६ ॥
ऊर्द्ध्वं वैकुण्ठतोऽगम्यं पञ्चाशत्कोटियोजनम् ।
वायुना धार्य्यमाणञ्च निर्म्मितं स्वेच्छया विभोः ॥ ७७ ॥
तमनिर्व्वचनीयञ्च देवास्ते गमनोन्मुखाः ।
ते मनोयायिनः सर्व्वे सम्प्रापुर्विरजातटम् ॥ ७८ ॥
दृष्ट्वा देवाः सरित्तीरं विस्मयं परमं ययुः ।
शुद्धस्फटिकसङ्काशं सुविस्तीर्णं मनोहरम् ॥ ७९ ॥
मुक्तामाणिक्यपरमणिरत्नाकरान्वितम् ।
कृष्णशुभ्रहरिद्रक्तमणिराजिविराजितम् ॥ ८० ॥
प्रवालाङ्कुरमुद्भूतं कुत्रचित् सुमनोहरम् ।
परमामूल्य सद्रत्नाकरराजिविभूषितम् ॥ ८१ ॥
विधेरदृश्यमाश्चर्य्यं निधिश्रेष्ठाकरान्वितम् ।
पद्मरागेन्द्रनीलानामाकरं कुत्रचिन्मुने ॥ ८२ ॥
कुत्रचिच्च मरकताकरश्रेणीसमन्वितम् ।
स्यमन्तकाकरं कुत्र कुत्रचिद्रुचकारकम् ॥ ८३ ॥
अमूल्यपीतवर्णकमणिश्रेण्याकरान्वितम् ।
रत्नाकरं कुत्रचिच्च कुत्रचित् कौस्तुभाकरम् ॥ ८४ ॥
कुत्रानिर्व्वचनीयानां मणीनामाकरं परम् ।
कुत्रचित् कुत्रचिद्रम्यविहारस्थलमुत्तमम् ॥ ८५ ॥
दृष्ट्वा तु परमाश्चर्य्यं जग्मुस्तत्पारमीश्वराः ।

ददृशुः पर्वतश्रेष्ठं शतशृङ्गं मनोहरम्॥ ८६ ॥
पारिजाततरूणाञ्च वनराजीविराजितम्।
कल्पवृक्षैः परिवृतं वेष्टितं कामधेनुभिः॥ ८७ ॥
कोटियोजनमूर्द्ध्वञ्च दैर्घ्यं दशगुणोत्तरम्।
शैलप्रस्थं परिमितं पञ्चाशत्कोटियोजनम्॥ ८८ ॥
प्राकाराकारमस्यैव शिखरे रासमण्डलम्।
दशयोजनविस्तीर्णं वर्त्तुलाकारमुत्तमम्॥ ८९ ॥
पुष्पोद्यानसहस्रेण पुष्पितेन सुगन्धिना।
संकुलेन मधुभ्राणां समूहेन समन्वितम्॥ ९० ॥
सुरतद्रव्यसंयुक्तै राजितं रतिमन्दिरैः।
रत्नमण्डपकोटीनां सहस्रेण समन्वितम्॥ ९१ ॥
रत्नसोपानयुक्तेन सद्रत्नकलसेन च।
हरिन्मणीनां स्तम्भेन शोभितेन च शोभितम्॥ ९२ ॥
सिन्दूरवर्णमणिभिः परितः खचितेन च।
इन्द्रनीलैर्म्मध्यभागमण्डितेन मनोहरैः॥ ९३ ॥
रत्नप्राकारसंयुक्तं मणिभेदैर्विराजितम्।
द्वारैः कवाटसंयुक्तैश्चतुर्भिश्च विराजितम्॥ ९४ ॥
वज्रग्रन्थिसमायुक्तै रसालपल्लवान्वितैः।
परितः कदलीस्तम्भसमूहैश्च समन्वितम्॥ ९५ ॥
शुक्लधान्यपर्णराजफलदूर्वाङ्करान्वितम्।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्च्चितम्॥ ९६ ॥
वेष्टितं गोपकन्यानां समूहैः कोटिशो मुने।
रत्नालङ्कारसंयुक्तै रत्नमालाविराजितैः॥ ९७ ॥
रत्नकङ्कणकेयूररत्ननूपुरभूषितैः।

रत्नकुण्डलयुग्मेन गण्डस्थलविराजितैः ॥ ९८ ॥
रत्नाङ्गुरीयललितैर्हस्ताङ्गुलिविभूषितैः ।
रत्नपाशकवृन्दैश्च पदाङ्गुलिविराजितैः । ९९ ॥
भूषितैरत्नभूषाभिः सद्रत्नमुकुटोज्ज्वलैः ।
गजेन्द्रमुक्तालङ्कारैर्नासिकामध्यराजितैः ॥ १०० ॥
सिन्दूरविन्दूना सार्द्धमलङ्कारस्थलोज्ज्वलैः ।
चारुचम्पकवर्णाभैश्चन्दनद्रवचर्च्चितैः ॥ १०१ ॥
पीतवस्त्रपरीधानैर्विम्बाधरमनोहरैः ।
शरत्पार्वणचन्द्राणां प्रभाजुष्टमुखोज्ज्वलैः ॥ १०२ ॥
शरत्प्रफुल्लपद्मानां शोभामोचनलोचनैः ।
कस्तूरीपत्रिकायुक्तरेखाक्तकज्जलोज्ज्वलैः ॥ १०३ ॥
प्रफुल्लमालतीमालाजालैः कवरीशोभितैः ।
मधुलुब्धमधुभ्राणां समूहैश्चापि संकुलैः ॥ १०४ ॥
चारुणा गमनेनैव गजखञ्जनगञ्जनैः ।
वक्रभ्रूभङ्गसंयोगस्वल्पस्मितसमन्वितैः ॥ १०५ ॥
पक्वदाड़िम्ववीजाभदन्तपङ्क्तिविराजितैः ।
खगेन्द्रचञ्चुशोभाढ्यनासिकोन्नतभूषितैः ॥ १०६ ॥
गजेन्द्रगण्डयुग्माभस्तनभारनतैरिव ।
नितम्बकठिनश्रोणिपीनभारभरानतैः ॥ १०७ ॥
कन्दर्पशरचेष्टाभिर्ज्जर्जरीभूतमानसैः ।
दर्पणैः पूर्णचन्द्रास्यसौन्दर्य्यदर्शनोत्सुकैः ॥ १०८ ॥
राधिकाचरणाम्भोजसेवासक्तमनोरथैः ।
सुन्दरीणां समूहैश्च रचितं राधिकाज्ञया ॥ १०९ ॥
क्रीड़ासरोवराणाञ्च लक्षैश्च परिवेष्टितम् ।

श्वेतरक्तलोहितैश्च वेष्टितैः पद्मराजितैः ।
सुकुजद्भिर्मधुभ्राणां समूहसङ्कुलैः सदा ॥ ११० ॥
पुष्पोद्यानसहस्रेण पुष्पितेन समन्वितम् ।
कोटिकुञ्जकुटीरैश्च पुष्पशय्यासमन्वितैः ॥ १११ ॥
भोगद्रव्यसकर्पूरताम्बूलवस्त्रसंयुतैः ।
रत्नप्रदीपैः परितः श्वेतचामरदर्पणैः ॥ ११२ ॥
विचित्रपुष्पमालाभिः शोभितैः शोभितं मुने ।
तद्रासमण्डलं दृष्ट्वा जग्मुस्ते पर्वताद्वहिः ॥ ११३ ॥
ततो विलक्षणं रम्यं ददृशुः सुन्दरं वनम् ।
वनं वृन्दावनं नाम राधामाधवयोः प्रियम् ॥ ११४ ॥
क्रीड़ास्थानं तयोरेव कल्पवृक्षचयान्वितम् ।
विरजा तीर नीरार्क्तैः कल्पितं मन्दवायुभिः ॥ ११५ ॥
कस्तूरीयुक्तपत्रार्क्तैः सर्वत्र सुरभीकृतम् ।
नवपल्लवसंयुक्तं परपुष्टरुतश्रुतम् ॥ ११६ ॥
कुत्र केलिकदम्बानां कदम्बैः कमनीयकम् ।
मन्दराणां चन्दनानां चम्पकानां तथैवच ॥ ११७ ॥
सुगन्धिकुसुमानाञ्च गन्धेन सुरभीकृतम् ॥ ११८ ॥
आम्राणां नागरङ्गाणां पनसानां तथैवच ।
तालानां नारिकेलानां वृन्दैर्वृन्दावनं वनम् ॥ ११९ ॥
जम्बूनां वदरीणाञ्च खर्ज्जूराणां विशेषतः ।
गुवाकाम्रातकानाञ्च जम्बीराणाञ्च नारद ॥ १२० ॥
कदलीनां श्रीफलानां दाड़िम्बानां मनोहरैः ।
सुपक्वफलसंयुक्तैः समूहैश्च विराजितम् ॥ १२१ ॥
पियालानाञ्च सालानामश्वत्थानां तथैव च ।

निम्बानां शाल्मलीनाञ्च तिन्तिड़ीनाञ्च शोभनैः ॥१२२॥
अन्येषां तरुभेदानां संकुलैः संकुलैः सदा ।
परितः कल्पवृक्षाणां वृन्दैर्वृन्दैर्विराजितम् ॥ १२३ ॥
मल्लिका मालती कुन्दं केतकी माधवीलता ।
एतासाञ्च समूहैश्च यूथिकाभिः समन्वितम् ॥ १२४ ॥
चारुकुञ्जकुटीरैस्तैः पञ्चाशत्कोटिभिर्मुने ।
रत्नप्रदीपदीप्तैश्च धूपेन सुरभीकृतैः ॥ १२५ ॥
शृङ्गारद्रव्ययुक्तैश्च वासितैर्गन्धवायुभिः ।
चन्दनाक्तैः पुष्पतल्पैर्मालाजालसमन्वितैः ॥ १२६ ॥
मधुलुब्धमधुभ्राणां कलशब्दैश्च शब्दितम् ।
रत्नालङ्कारशोभाढ्यैर्गोपीवृन्दैश्च वेष्टितम् ॥ १२७ ॥
पञ्चाशत्कोटिगोपाभी रचितं राधिकाज्ञया ।
द्वात्रिंशत् काननं तत्र रम्यं रम्यं मनोहरम् ॥ १२८ ॥
वृन्दावनाभ्यन्तरितं निर्जनस्थानमुत्तमम् ।
सुपक्वमधुरस्वादुफलैर्वृन्दावनं मुने ॥ १२९ ॥
गोष्ठानाञ्च गवानाञ्च समूहैश्च समन्वितम् ।
पुष्पोद्यानसहस्रेण पुष्पितेन सुगन्धिना ॥ १३० ॥
मधुलुब्धमधुभ्राणां समूहेन समन्वितम् ।
पञ्चाशत्कोटिगोपानां विलासैश्च विराजितम् ।
श्रीकृष्णतुल्यरूपाणां सद्रत्नगठितैर्वरैः ॥ १३१ ॥
दृष्ट्वा वृन्दावनं रम्यं ययुर्गोलोकमीश्वराः ।
परितो वर्त्तुलाकारं कोटियोजनविस्तृतम् ॥ १३२ ॥
रत्नप्राकारसंयुक्तं चतुर्द्वारान्वितं मुने ।
गोपानाञ्च समूहैश्च द्वारपालैः समन्वितम् ॥ १३३ ॥

आश्रमै रत्नखचितैर्नानाभोगसमन्वितैः ।
गोपानां कृष्णभृत्यानां पञ्चाशत्कोटिभिर्युतम् ॥१३४॥
भक्तानां गोपवृन्दानामाश्रमैः शतकोटिभिः ।
ततोऽधिकसुनिर्म्माणैः सद्रत्नगठितैर्युतम् ॥ १३५ ॥
आश्रमैः पार्षदानाञ्च ततोऽधिकविलक्षणैः ।
सुमूल्यै रत्नरचितैः संयुक्तं दशकोटिभिः ॥ १३६ ॥
पार्षदप्रवराणाञ्च श्रीकृष्णरूपधारिणाम् ।
आश्रमैः कोटिभिर्युक्तं सद्रत्नेन विनिर्मितैः ॥ १३७ ॥
राधिकाशुद्धभक्तानां गोपीनामाश्रमैर्वरैः ।
सद्रत्नरचितैर्द्दिव्यैर्द्वात्रिंशत्कोटिभिर्युतम् ॥ १३८ ॥
तासाञ्च किङ्करीणाञ्च भवनैः सुमनोहरैः ।
मणिरत्नादिरचितैः शोभितं दशकोटिभिः ॥ १३९ ॥
शतजन्मतपःपूता भक्ता ये भारते भुवि ।
हरिभक्तिपरा ये च कर्म्मनिर्वाणकारकाः ॥ १४० ॥
स्वप्ने ज्ञाने हरेर्ध्याने निविष्टमानसा मुने ।
राधा कृष्णेति कृष्णेति प्रजपन्तोदिवानिशम् ॥ १४१ ॥
तेषां श्रीकृष्णभक्तानां निवासैः सुमनोहरैः ।
सद्रत्नमणिनिर्म्माणैर्नानाभोगसमन्वितैः ॥ १४२ ॥
पुष्पशय्यापुष्पमालाश्वेतचामरशोभितैः ।
रत्नदर्पणशोभाढ्यैर्हरिन्मणिसमन्वितैः ॥ १४३ ॥
अमूल्यरत्नकलससमूहान्वितशेखरैः ।
सूक्ष्मवस्त्राभ्यन्तरितैः संयुक्तं शतकोटिभिः ॥ १४४ ॥
देवास्तमद्भुतं दृष्ट्वा कियद्दूरं ययुर्मुदा ।
तत्राक्षयवटं रम्यं ददृशुर्जगदीश्वराः ॥ १४५ ॥

पञ्चयोजनविस्तीर्णमूर्द्ध्वं तद्द्विगुणं मुने ॥ १४६ ॥
सहस्रस्कन्धसंयुक्तं शाखासंख्यसमन्वितम् ।
रत्नपक्वफलाकीर्णं शोभितं रत्नवेदिभिः ॥ १४७ ॥
कृष्णस्वरूपान् तन्मूले ददृशुः प्रबलान् शिशून् ।
पीतवस्त्रपरीधानान् क्रीड़ासक्तान् मनोहरान् ।
चन्दनोचितसर्वाङ्गान् रत्नभूषणभूषितान् ॥ १४८ ॥
ददृशुस्तत्र देवेशाः पार्षदप्रवरान् हरेः ।
ततो विदूरे ददृशू राजमार्गं मनोहरम् ॥ १४९ ॥
सिन्दूराकारमणिभिः परितो रचितं मुने ।
इन्द्रनीलैः पद्मरागैर्हीरकै रुचकैस्तथा ॥ १५० ॥
निर्म्मितैर्वेदिभिर्युक्तं परितो रत्नमण्डपम् ।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्च्चितम् ॥ १५१ ॥
दधिपर्णलाजफलपुष्पदूर्वाङ्कितान्वितैः ॥ १५२ ॥
सूक्ष्मसूत्रग्रन्थियुक्तश्रीखण्डपल्लवान्वितैः ।
रम्भास्तम्भसमूहैश्च कुङ्कमाक्तैर्विराजितम् ॥ १५३ ॥
सद्रत्नमङ्गलघटैः फलशाखासमन्वितैः ।
सिन्दूरकुङ्कुमाक्तैश्च गन्धचन्दनचर्च्चितैः ॥ १५४ ॥
भूषितैः पुष्पमालाभिः परितो भूषितं परम् ।
गोपिकानां समूहैश्च क्रीड़ासक्तैश्च वेष्टितम् ॥ १५५ ॥
बहुमूल्येन रत्नेन रत्नसोपाननिर्म्मितान् ।
वह्निशुद्धांशुकै रम्यैः श्वेतचामर दर्पणैः ॥ १५६ ॥
रत्नतल्पविचित्रैश्च पुष्पमाल्यैर्विराजितान् ।
षोड़शद्वारसंयुक्तान् द्वारपालैश्च रक्षितान् ॥ १५७ ॥
परितः परिखायुक्तान् रत्नप्राकारवेष्टितान् ।

चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितान् ।
एतान्मनोरमान् दृष्ट्वा ते देवा गमनोन्मुखाः ॥ १५८ ॥
जग्मुः शीघ्रं कियद्दूरं ददृशुः सुन्दरं ततः ।
आश्रमं राधिकायाश्च रासेश्वर्य्याश्च नारद ॥ १५९ ॥
देवादिदेव्या गोपीनां वरयोश्चारुनिर्मितम् ।
प्राणाधिकायाः कृष्णस्य रम्यं द्रव्यं मनोहरम् ॥१६०॥
सर्वानिर्वचनीयञ्च पण्डितैर्न निरूपितम् ।
सुचारुवर्त्तुलाकारं षड्गव्यूतिप्रमाणकम् ॥ १६१ ॥
शतमन्दिरसंयुक्तं ज्वलितं रत्नतेजसा ।
अमूल्यरत्नसाराणां वरैर्विरचितं वरम् ॥ १६२ ॥
दुर्लङ्घ्याभिर्गभीराभिः परिखाभिः सुशोभितम् ।
कल्पवृक्षैः परिवृतं पुष्पोद्यानशतान्तरम् ॥ १६३ ॥
सुमूल्यरत्नरचितैः प्राकारैः परिवेष्टितम् ॥ १६४ ॥
सद्रत्नवेदिकायुक्तं युक्तं द्वारैश्च सप्तभिः ।
संयुक्तं रत्नैश्चित्रैश्च विचित्रैर्बहुलैर्मुने । १६५ ॥
प्रधानद्वारसप्तभ्यः क्रमशः क्रमशो मुने ।
सर्वतोऽपि ततस्तत्र षोड़शद्वारसंयुतम् ॥ १६६ ॥
देवा दृष्ट्वा च प्राकारं सहस्रधनुरुच्छ्रितम् ।
सद्रत्नक्षुद्रकलससमूहैः सुमनोहरैः ।
सुदीप्तं तेजसा रम्यं परमं विस्मयं ययुः ॥ १६७ ॥
ततः प्रदक्षिणीकृत्य कियद्दूरं ययुर्मुदा ।
पुरतो गच्छतां तेषां पश्चाद्भूतस्तदाश्रमः ॥ १६८ ॥
गोपानां गोपिकानाञ्च ददृशुराश्रमान् परान् ।
अमूल्यरत्नखचितान् शतकोटिमितान्मुने ॥ १६९ ॥

दर्शं दर्शञ्च परितो गोपानां सर्वमाश्रमम् ।
गोपिकानाञ्चापरं वा रम्यं रम्यं नवं नवम् ॥ १७० ॥
गोलोकं निखिलं दृष्ट्वा पुलकाङ्गं ययुः सुराः ।
तदेव वर्त्तुलाकारं रम्यं वृन्दावनं वनम् ॥ १७१ ॥
दहशुः शतशृङ्गञ्च तद्बहिर्विरजानदीम् ।
विरजान्तं ययुर्देवा दहशुः शून्यमेव च ॥ १७२ ॥
वायुधारञ्च गोलोकं सद्रत्नमयमद्भुतम् ॥ १७३ ॥
ईश्वरेच्छानिर्मितञ्च राधिकाज्ञानबन्धनात् ।
युक्तं सहस्रैः सरसां केवलं मङ्गलालयम् ॥ १७४ ॥
नृत्यञ्च दहशुस्तत्र देवाश्च सुमनोहरम् ।
सुतालं चारु सङ्गीतं राधाकृष्णगुणान्वितम् ॥ १७५ ॥
श्रुत्वैव गीतपीयूषं मूर्च्छामापुः सुरा मुने ।
क्षणेन चेतनां प्राप्य ते देवाः कृष्णमानसाः ।
दहशुः परमाश्चर्यं स्थाने स्थाने मनोहरम् ॥ १७६ ॥
दहशुः गोपिकाः सर्वा नानावेशविधायिकाः ।
काश्चिन्मृदङ्गहस्ताश्च काश्चिद्वीणाकरा वराः ॥१७७॥
काश्चिच्चामरहस्ताश्च करतालकराः पराः ।
काश्चिद् यन्त्रवाद्यहस्ता रत्ननूपुरशब्दिताः ॥ १७८ ॥
सद्रत्नकिङ्किणीजालशब्देन शब्दिताः पराः ।
काश्चिन्मस्तककुम्भाश्च नृत्यभेदमनोरथाः ॥ १७९ ॥
पुंवेशनायिकाः काश्चित् काश्चित्तासाञ्च नायिकाः ।
कृष्णवेशधराः काश्चिद् राधावेशधराः पराः ॥ १८० ॥
काश्चित् संयोगनिरताः काश्चिदालिङ्गने रताः ।
क्रीड़ासक्ताश्च ता दृष्ट्वा सस्मिता जगदीश्वराः ॥१८१॥

प्रगच्छन्तः कियद्दूरं ददृशुराश्रमान् बहून् ।
राधासखीनां गेहांश्च प्रधानानाञ्च नारद ॥ १८२ ॥
रूपेणैव गुणेनैव वेशेन यौवनेन च ।
सौभाग्येनैव वयसा सदृशीनाञ्च तत्र वै ॥ १८३ ॥
त्रयस्त्रिंशद्वयस्याश्च राधिकायाश्च गोपिकाः ।
वेशानिर्वचनीयाश्च तासां नामानि च शृणु । १८४ ॥
सुशीला च शशिकला यमुना माधवी रतिः ॥ १८५ ॥
कदम्बमाला कुन्ती च जाह्नवी च स्वयंप्रभा ।
चन्द्रमुखी पद्ममुखी सावित्री च सुधामुखी । १८६ ॥
शुभा पद्मा पारिजाता गौरी च सर्वमङ्गला ।
कालिका कमला दुर्गा भारती च सरस्वती । १८७ ॥
गङ्गाम्बिका मधुमती चम्पापर्णा च सुन्दरी ।
कृष्णप्रिया सती चैव नन्दनी नन्दनेति च ॥ १८८ ॥
एतासां समरूपाणां रत्नधातुविचित्रितान् ।
नानाप्रकारचित्रेण चित्रितान् सुमनोहरान् ॥ १८९ ॥
अमूल्यरत्नकलससमूहैः शिखरोज्ज्वलान् ।
सद्रत्नरचितान् शुभ्रान् आश्रमान् ददृशुस्तथा ॥१९०॥
ब्रह्माण्डाद्बहिरूर्द्ध्वञ्च नास्ति लोकस्तदूर्द्ध्वगः ।
ऊर्द्ध्वं शून्यमयं सर्वं तदन्ता सृष्टिरेव च ॥ १९१ ॥
रसातलेभ्यः सप्तभ्यो नास्त्यधः सृष्टिरेव च ।
तदधश्च जलं ध्वान्तमगम्यमदृश्यकम् ।
ब्रह्माण्डान्तं तद्बहिश्च सर्वं मत्तो निशामय ॥ १९२ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे गोलोकवर्णनं नाम चतुर्थोऽध्यायः ।

# पञ्चमोऽध्यायः ।

—o—

नारायण उवाच ।

गोलोकं निखिलं दृष्ट्वा देवास्ते हृष्टमानसाः ।
पुनराजग्मूराधायाः प्रधानद्वारमेव च ॥ १ ॥
सद्रत्नमणिनिर्माणं वेदिकाद्वयसंयुतम् ।
हरिद्राकारमणिना वज्रसंमिश्रितेन च ।
अमूल्यरत्नरचितकपाटेन विभूषितम् ॥ २ ॥
द्वारे नियुक्तं दद्दशुर्वीरभानुमनुत्तमम् ॥ ३ ॥
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ।
पीतवस्त्रपरीधानं सद्रत्नमुकुटोज्ज्वलम् ॥ ४ ॥
रचन्तं द्वारं चित्रञ्च विचित्रीकृतमद्भुतम् ।
सर्वं निवेदयामासुर्देवा दौवारिकं मुदा ॥ ५ ॥
तानुवाच द्वारपालो निःशङ्कस्त्रिदशेश्वरान् ।
नाहं विनाज्ञया गन्तुं दास्यामि साम्प्रतं सुराः ॥ ६ ॥
किङ्करान् प्रेषयित्वासौ श्रीकृष्णस्थानमेव च ।
हरेरनुज्ञां सम्प्राप्य ददौ गन्तुं सुरान्मुने ॥ ७ ॥
तं सम्भाष्य ययुर्देवा द्वितीयं द्वारमुत्तमम् ।
ततोऽधिकं विचित्रञ्च सुन्दरं सुमनोहरम् ॥ ८ ॥
द्वारे नियुक्तं दद्दशुश्चन्द्रभानुञ्च नारद ।
किशोरं श्यामलञ्चारुस्वर्णवेत्रधरं वरम् ॥ ९ ॥
रत्नसिंहासनस्थञ्च रत्नभूषणभूषितम् ।

सोपानानाञ्च समूहेन पञ्चलक्षेण शोभितम् ॥ १० ॥
तं सम्भाष्य ययुर्देवास्तृतीयं द्वारमुत्तमम्।
ततोऽतिसुन्दरं चित्रं ज्वलितं मणितेजसा ॥ ११ ॥
द्वारे नियुक्तं दृष्टश्चः सूर्य्यभानुञ्च नारद।
द्विभुजं मुरलीहस्तं किशोरं श्यामसुन्दरम् ॥ १२ ॥
मणिकुण्डलयुग्मेन कपोलस्थेन राजितम् ॥ १३ ॥
रत्नकुण्डलिनं श्रेष्ठं प्रेष्ठं राधेशयोः परम्।
नवलक्षेण गोपेन वेष्टितञ्च नृपेन्द्रवत् ॥ १४ ॥
तं सम्भाष्य ययुर्देवाश्चतुर्थं द्वारमेव च।
तेभ्यो विलक्षणं रम्यं सुदीप्तं मणितेजसा ॥ १५ ॥
अत्यद्भुतविचित्रेण भूषितं सुमनोहरम्।
द्वारे नियुक्तं दृष्टश्चर्वसुभानुं व्रजेश्वरम् ॥ १६ ॥
किशोरं सुन्दरवरं मणिदण्डकरं परम्।
रत्नसिंहासनस्थञ्च रम्यभूषणभूषितम्।
पक्वबिम्बाधरौष्ठञ्च सस्मितं सुमनोहरम् ॥ १७ ॥
तं सम्भाष्य ययुर्देवाः पञ्चमं द्वारमेव च।
वज्रभित्तिस्थितैश्चित्रविचित्रैर्ज्वलितं परम् ॥ १८ ॥
द्वारपालञ्च दृष्टश्चर्देवभानुञ्च तत्र वै।
चारुसिंहासनस्थञ्च रत्नभूषणभूषितम् ॥ १९ ॥
मयूरपुच्छचूडञ्च रत्नमालाविभूषितम् ॥ २० ॥
कदम्बपुष्पसंयुक्तं सद्रत्नकुण्डलोज्ज्वलम्।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥ २१ ॥
नृपेन्द्रवरतुल्यञ्च दशलक्षप्रजान्वितम्।
तं वेत्रपाणिं सम्भाष्य ययुर्देवा मुदान्विताः ॥ २२ ॥

विलक्षणं द्वारषट्कं चित्रराजिविराजितम्।
वज्रभित्तियुग्मयुक्तं पुष्पमालाविभूषितम्।
द्वारे नियुक्तं ददृशुः शक्रभानुं व्रजेश्वरम्॥ २३॥
नानालङ्कारशोभाढ्यं दशलक्षप्रजान्वितम्।
श्रीखण्डपङ्कवासक्तकपोलकुण्डलोज्ज्वलम्॥ २४॥
सम्भाष्य तं सुरास्तूर्णं ययुर्द्वारञ्च सप्तमम्।
नानाप्रकारचित्रञ्च षड्भ्यश्चातिविलक्षणम्॥ २५॥
द्वारे नियुक्तं ददृशुः रत्नभानुं हरेः प्रियम्।
चन्दनोचितसर्वाङ्गं पुष्पमालाविभूषितम्॥ २६॥
भूषितं भूषणैः रम्यैर्मणिरत्नमनोहरैः।
गोपैर्द्वादशलक्षैश्च राजेन्द्रमिव राजितम्॥ २७॥
रत्नसिंहासनस्थञ्च स्मेराननसरोरुहम्।
तं वेत्रहस्तं सम्भाष्य जग्मुर्देवेश्वरा मुदा॥ २८॥
विचित्रमष्टमं द्वारं सप्तभ्योऽपि विलक्षणम्।
दौवारिकं ते ददृशुः सुपार्श्वं सुमनोहरम्॥ २९॥
सस्मितं सुन्दरवरं श्रीखण्डतिलकोज्ज्वलम्।
बन्धुजीवाधरौष्ठञ्च रत्नकुण्डलमण्डितम्॥ ३०॥
सर्वालङ्कारशोभाढ्यं रत्नदण्डधरं वरम्।
गोपैर्द्वादशलक्षैश्च किशोरैश्च समन्वितम्॥ ३१॥
ततः शीघ्रं ययुर्देवा नवमद्वारमीप्सितम्॥ ३२॥
वज्रसद्रत्नरचितचतुर्वेदिसमन्वितम्।
अपूर्वचित्रयुक्तञ्च मालाजालैर्विराजितम्॥ ३३॥
द्वारपालञ्च ददृशुः सुबलं ललिताकृतिम्।
नानाभूषणभूषाढ्यं भूषणार्हं मनोहरम्॥ ३४॥

वज्रैर्हीरदशलक्षैश्च संयुक्तं सुमनोहरम् ।
तं दण्डहस्तं सम्भाष्य सुरा द्वारान्तरं ययुः ॥ ३५ ॥
विशिष्टं दशमद्वारं दृष्ट्वा ते विस्मिताः सुराः ।
सर्वानिर्वचनीयञ्चाप्यदृष्टमश्रुतं मुने ॥ ३६ ॥
ददृशुर्द्वारपालञ्च सुदामानञ्च सुन्दरम् ।
अनिर्वचनीयरूपञ्च कृष्णतुल्यं मनोहरम् ।
गोपविंशतिलक्षाणां समूहैः परिवारितम् ॥ ३७ ॥
तं दण्डहस्तं दृष्ट्वैव जग्मुर्द्वारान्तरं सुराः ।
द्वारमेकादशाख्यञ्च सुचित्रमङ्गतञ्च तत् ॥ ३८ ॥
द्वारपालञ्च तत्रस्थं श्रीदामानं व्रजेश्वरम् ।
राधिकापुत्रतुल्यञ्च पीतवस्त्रेण भूषितम् ॥ ३९ ॥
अमूल्यरत्नरचितरम्यसिंहासनस्थितम् ।
अमूल्यरत्नभूषाभिर्भूषितं सुमनोहरम् ॥ ४० ॥
चन्दनागुरुकस्तूरीकुङ्कुमेन विराजितम् ।
गण्डस्थलकपोलार्हसद्रत्नकुण्डलोज्ज्वलम् ॥ ४१ ॥
सद्रत्नश्रेष्ठरचितविचित्रमुकुटोज्ज्वलम् ॥ ४२ ॥
प्रफुल्लमालतीमालाजालैः सर्वाङ्गभूषितम् ।
कोटिगोपैः परिवृतं राजेन्द्राधिकमुज्ज्वलम् ॥ ४३ ॥
तं संभाष्य ययुर्द्वारं द्वादशाख्यं सुरा मुदा ।
अमूल्यरत्नरचितवेदिकाभिः समन्वितम् ॥ ४४ ॥
सर्वेषां दुर्लभं चित्रमदृश्यमश्रुतं मुने ।
वज्रभित्तिस्थितं चित्रसुन्दरं सुमनोहरम् ॥ ४५ ॥
द्वारे नियुक्ता ददृशुर्देवा गोपाङ्गना वराः ।
रूपयौवनसम्पन्ना रत्नाभरणभूषिताः ॥ ४६ ॥

पीतवस्त्रपरीधानाः कवरीभारशोभिताः ।
सुगन्धिमालतीमालाजालैः सर्वाङ्गभूषिताः ॥ ४७ ॥
रत्नकङ्कणकेयूररत्ननूपुरभूषिताः ।
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताः ॥ ४८ ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चिताः ।
पीनश्रोणिभरा नम्रा नितम्बभारपीड़िताः ॥ ४९ ॥
गोपीनां शतकोटीनां श्रेष्ठा श्रेष्ठा हरेरपि ।
गोपीनां कोटिशो दृष्ट्वा सुरास्ते विस्मयं ययुः ॥ ५० ॥
संभाष्य ता मुदा युक्ता ययुर्द्वारान्तरं मुने ।
ततश्च क्रमशो विप्र त्रिषु द्वारेषु तत्र वै ॥ ५१ ॥
गोपाङ्गनानां श्रेष्ठाश्च ददृशुः सुमनोहराः ।
वराणाञ्च वरा रम्या धन्या मान्याश्च शोभनाः ॥ ५२ ॥
सर्वाः सौभाग्ययुक्ताश्च राधिकायाः प्रियाः स्मृताः ।
भूषिता भूषणैरम्यैः प्रोद्भिन्ननवयौवनाः ॥ ५३ ॥
एवं द्वारत्रयं दृष्ट्वा सुज्ञानादद्भुताश्रयम् ।
अदृश्यमतिरम्यञ्चाप्यनिरूप्यं विचक्षणैः ॥ ५४ ॥
तास्ताः संभाष्य देवास्ते विस्मिता ययुरीश्वराः ।
राधिकाभ्यन्तरं द्वारं षोड़शाख्यं मनोहरम् ॥ ५५ ॥
सर्वासाञ्च विधानानां गोप्यं गोपाङ्गनागणैः ।
त्रयस्त्रिंशद्वयस्याभिर्वयस्यानिकरैर्मुने ॥ ५६ ॥
वेशानिर्वचनीयैश्च नानागुणसमन्वितैः ।
रूपयौवनसम्पन्नैः रत्नालङ्कारभूषितैः ॥ ५७ ॥
रत्नकङ्कणकेयूररत्ननूपुरभूषितैः ।
सद्रत्नकिङ्किणीजालैर्मध्यदेशविभूषितैः ॥ ५८ ॥

रत्नकुण्डलयुग्मेन गण्डस्थलविराजितैः।
प्रफुल्लमालतीजालैर्वेणीमध्यस्थलोज्ज्वलैः॥ ५९ ॥
शरत्पार्वणचन्द्राणां प्रभाजुष्टमुखेन्दुभिः।
पारिजातप्रसूनानां मालाजालेन वेष्टितैः।
सुरम्यकबरीभारैर्भूषणैर्भूषितैर्वरैः॥ ६० ॥
पक्वबिम्बाधरौष्ठैश्च स्मेराननसरोरुहैः।
पक्वदाड़िम्बवीजाभैः शोभितैर्दन्तपङ्क्तिभिः॥ ६१ ॥
चारुचम्पकवर्णाभैर्मध्यस्थलकृशैर्मुने॥ ६२ ॥
गजमौक्तिकयुक्ताभिर्नासिकाभिर्विराजितैः।
खगेन्द्रचारुचञ्चूनां शोभाजुष्टाभिरेव च॥ ६३ ॥
गजेन्द्रगण्डकठिनस्तनभारभरानतैः।
पीनश्रोणिभरार्त्तैश्च मुकुन्दपदमानसैः॥ ६४ ॥
निमेषरहिता देवा द्वारस्था ददृशुश्च ताः।
सद्रत्नमणिरत्नैश्च वेदिकायुग्मशोभितम्॥ ६५ ॥
हरिन्मणीनां स्तम्भानां समूहैः संयुतं सदा।
सिन्दूराकारमणिभिर्मध्यस्थलविराजितैः॥ ६६ ॥
पारिजातप्रसूनानां मालाजालविभूषितम्।
तत्सम्पर्कैर्गन्धवाहैः सर्वत्र सुरभीकृतम्॥ ६७ ॥
दृष्ट्वा तत् परमाश्चर्य्यं राधिकाभ्यन्तरं सुराः।
श्रीकृष्णचरणाम्भोजदर्शनोत्सुकमानसाः॥ ६८ ॥
ताः संभाष्य ययुः शीघ्रं पुलकाङ्कितविग्रहाः।
भक्त्युद्रेकादश्रुपूर्णाः किञ्चिन्नम्रास्यकन्धराः॥ ६९ ॥
आरात्ते ददृशुर्देवा राधिकाभ्यन्तरं वरम्।
मन्दिराणाञ्च मध्यस्थं चतुःशालं मनोहरम्॥ ७० ॥

अमूल्यरत्नसाराणां सारेण रचितं परम् ।
नानारत्नमणिस्तम्भैर्वज्रयुक्तैश्च भूषितम् ॥ ७१ ॥
पारिजातप्रसूनानां मालाजालैर्विराजितम् ।
मुक्तासमूहैर्माणिक्यैः श्वेतचामरदर्पणैः ॥ ७२ ॥
अमूल्यरत्नसाराणां कलसैर्भूषितं मुने ।
पट्टसूत्रग्रन्थियुक्तश्रीखण्डपल्लवान्वितैः ॥ ७३ ॥
मणिस्तम्भसमूहैश्च रम्यप्राङ्गणभूषितम् ।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् ॥ ७४ ॥
शुक्लधान्यशुक्लपुष्पप्रवालफलतण्डुलैः ।
पूर्णदूर्वाक्षतैर्लाजैर्निर्मञ्छनविभूषितम् ॥ ७५ ॥
फलरत्नैरत्नकुम्भैः सिन्दूरकुङ्कुमान्वितैः ।
पारिजातप्रसूनानां मालायुक्तैर्विराजितम् ।
प्रसूनानैर्गन्धवद्भिः सर्वत्र सुरभीकृतम् ॥ ७६ ॥
सर्वानिर्वचनीयञ्च यद्द्रव्यमनिरूपितम् ।
ब्रह्माण्डदुर्लभं यद्यद्वस्तुभिस्तैर्विराजितम् ॥ ७७ ॥
रत्नशय्या सुललिता सूक्ष्मवस्त्रपरिच्छदा ।
पारिजातप्रसूनानां मालाजालैः सुशोभितम् ॥ ७८ ॥
कोटिशो रत्नकुम्भाश्च रत्नपात्राणि नारद ।
अमूल्यानि च चारूणि तैस्तैरेव विभूषितम् ॥ ७९ ॥
नानाप्रकारवाद्यानां कलनादनिनादितम् ।
स्वरयन्त्रैश्च वीणाभिर्गोपीसङ्गीतसंयुतम् ॥ ८० ॥
मोहितं वाद्यशब्दैश्च सदङ्गानाञ्च नारद ॥ ८१ ॥
गोपानां कृष्णतुल्यानां समूहैः परिवारितम् ।
राधासखीनां गोपीनां वृन्दैर्वृन्दैर्विराजितम् ॥ ८२ ॥

राधाकृष्णगुणोद्रेकपदसङ्गीतसुश्रुतम् ।
एवमभ्यन्तरं दृष्ट्वा बभूवुर्विस्मिताः सुराः ॥ ८३ ॥
सुश्रुवुर्मधुरं गीतं ददृशुर्नृत्यमुत्तमम् ।
तत्र तस्थुः सुराः सर्वे ध्यानैकतानमानसाः ॥ ८४ ॥
रत्नसिंहासनं रम्यं ददृशुस्त्रिदशेश्वराः ।
धनुःशतप्रमाणञ्च परितो मण्डलाकृतिम् ॥ ८५ ॥
सद्रत्नरुद्रकलससमूहैश्च समन्वितम् ।
चित्रपुत्तलिकापुष्पचित्रकाननभूषितम् ॥ ८६ ॥
तत्र तेजःसमूहञ्च सूर्य्यकोटिसमप्रभम् ।
प्रभया ज्वलितं ब्रह्मन्नाश्चर्य्यं महदद्भुतम् ॥ ८७ ॥
सप्ततालप्रमाणं तद् व्याप्तमूर्द्धं समन्ततः ।
तेजोमुष्टञ्च सर्वेषां व्याप्ताश्रमविराजितम् ॥ ८८ ॥
सर्वव्यापि सर्ववीजं चक्षूरोधकरं परम् ।
दृष्ट्वा तेजःस्वरूपञ्च ते देवा ध्यानतत्पराः ॥ ८९ ॥
प्रणेमुः परया भक्त्या भक्तिनम्रात्मकन्धराः ।
परमानन्दसंयोगादश्रुपूर्णविलोचनाः ।
पुलकाङ्कितसर्वाङ्गा वाञ्छापूर्णमनोरथाः ॥ ९० ॥
नत्वा तेजःस्वरूपञ्च तमीशं त्रिदशेश्वराः ।
तत्रोत्थाय ध्यानयुक्ता प्रतस्थुस्तेजसः पुरः ॥ ९१ ॥
ध्यात्वैवं जगतां धाता बभूव सम्पुटाञ्जलिः ।
दक्षिणे शङ्करं कृत्वा वामे धर्मञ्च नारद ॥ ९२ ॥
भक्त्युद्रेकात् प्रतुष्टाव ध्यानैकतानमानसः ।
परात्परं गुणातीतं परमात्मानमीश्वरम् ॥ ९३ ॥

ब्रह्मोवाच ।

वरं वरेण्यं वरदं वरदानाञ्च कारणम् ।
कारणं सर्वभूतानां तेजोरूपं नमाम्यहम् ॥ ९४ ॥
मङ्गल्यं मङ्गलार्हञ्च मङ्गलं मङ्गलप्रदम् ।
समस्तमङ्गलाधारं तेजोरूपं नमाम्यहम् ॥ ९५ ॥
स्थितं सर्वत्र निर्लिप्तमात्मरूपं परात्परम् ।
निरीहमवितर्क्यञ्च तेजोरूपं नमाम्यहम् ॥ ९६ ॥
सगुणं निर्गुणं ब्रह्मज्योतीरूपं सनातनम् ।
साकारञ्च निराकारं तेजोरूपं नमाम्यहम् ॥ ९७ ॥
त्वमनिर्वचनीयञ्च व्यक्तमव्यक्तमेककम् ।
स्वेच्छामयं सर्वरूपं तेजोरूपं नमाम्यहम् ॥ ९८ ॥
गुणत्रयविभागाय रूपत्रयधरं परम् ।
कलया ते सुराः सर्वे किं जानन्ति श्रुतिः परम् ॥ ९९ ॥
सर्वाधारं सर्वरूपं सर्ववीजमवीजकम् ।
सर्वान्तःकरणन्तञ्च तेजोरूपं नमाम्यहम् ॥ १०० ॥
लक्ष्यं यद्गुणरूपञ्च वर्णनीयं विचक्षणैः ।
किं वर्णयामि लक्षन्ते तेजोरूपं नमाम्यहम् ॥ १०१ ॥
अशरीरं विग्रहवदिन्द्रियवदतीन्द्रियम् ।
यदसाक्षि सर्वसाक्षि तेजोरूपं नमाम्यहम् ॥ १०२ ॥
गमनार्हमपादं यदचक्षुः सर्वदर्शनम् ।
हस्तास्यहीनं यद्भोक्तृ तेजोरूपं नमाम्यहम् ॥ १०३ ॥
वेदे निरूपितं वस्तु सन्तः शक्ताश्च वर्णितुम् ।
वेदेऽनिरूपितं यत्तत्तेजोरूपं नमाम्यहम् ॥ १०४ ॥
सर्वेशं यदनीशं यत् सर्वादि यदनादि यत् ।

सर्वात्मकमनात्मं यत्तेजोरूपं नमाम्यहम्॥ १०५॥
अहं विधाता जगतां वेदानां जनकः स्वयम्।
पाता धर्मो हरो हर्त्ता स्तोतुं शक्तो न कोऽपि यत्॥१०६
सेवया तव धर्मोऽयं रक्षितारञ्च रक्षति।
तवाज्ञया च संहर्त्ता त्वया काले निरूपिते॥ १०७॥
निषेकलिपिकर्त्ताहं त्वत्पादाम्भोजसेवया।
कर्मिणां फलदाता च त्वद्भक्तानाञ्च न प्रभुः॥ १०८॥
ब्रह्माण्डे विश्वसदृशा भूत्वा विषयिणो वयम्।
एवं कतिविधाः सन्ति तेष्वनन्तेषु सेवकाः॥ १०९॥
यथा न संख्या रेणूनां तथा तेषामणीयसाम्।
सर्वेषां जनकश्चेशो यस्त्वां स्तोतुञ्च कः क्षमः॥ ११०॥
एकैकलोमविवरे ब्रह्माण्डमेकमेककम्।
यस्यैव महतो विष्णोः षोड़शांशस्तवैव सः॥ १११॥
ध्यायन्ति योगिनः सर्वे तवैतद्रूपमीप्सितम्।
न भक्ता दास्यनिरताः सेवन्ते चरणाम्बुजम्॥ ११२॥
किशोरं सुन्दरतरं यद्रूपं कमनीयकम्।
भक्तध्यानानुरूपञ्च दर्शयास्माकमीश्वर॥ ११३॥
नवीनजलदश्यामं पीताम्बरधरं परम्।
द्विभुजं मुरलीहस्तं सस्मितं सुमनोहरम्॥ ११४॥
मयूरपुच्छचूड़ञ्च मालतीजालमण्डितम्।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्च्चितम्॥ ११५॥
अमूल्यरत्नसाराणां भूषणैश्च विभूषितम्।
अमूल्यरत्नरचितकिरीटमुकुटोज्ज्वलम्॥ ११६॥
शरत्प्रफुल्लकमलप्रभामोच्यास्यचन्द्रकम्।

पक्वबिम्बसमानेन ह्यधरौष्ठेन राजितम् ।
पक्वदाड़िम्बवीजाभदन्तपङ्क्तिमनोरमम् ॥ ११७ ॥
केलिकदम्बमूले च स्थितं रासरसोत्सुकम् ।
गोपीवक्त्राणि पश्यन्तं राधावक्षःस्थलस्थितम् ॥ ११८ ॥
एवं वाञ्छास्ति रूपं ते द्रष्टुं केलिरसोत्सुकम् ॥ ११९ ॥
इत्येवमुक्त्वा विश्वसृट् प्रणनाम पुनः पुनः ।
एवं स्तोत्रेण तुष्टाव धर्मोऽपि शङ्करः स्वयम् ।
ननाम भूयोभूयश्च साश्रुपूर्णविलोचनः ॥ १२० ॥
तिष्ठन्तोऽपि पुनः स्तोत्रं प्रचक्रुस्त्रिदशेश्वराः ।
व्याप्तास्तत्रामराः सर्वे श्रीकृष्णतेजसा मुने ॥ १२१ ॥
स्तवराजमिमं नित्यं धर्मेशब्रह्मभिः कृतम् ।
पूजाकाले हरेरेव भक्तियुक्तश्च यः पठेत् ॥ १२२ ॥
सुदुर्लभां दृढ़ां भक्तिं निश्चलां लभते हरेः ॥ १२३ ॥
सुरासुरमुनीन्द्राणां दुर्लभं दास्यमेव च ।
अणिमादिकसिद्धिञ्च सालोक्यादिचतुष्टयम् ॥ १२४ ॥
इहैव विष्णुतुल्यश्च विख्यातः पूजितो ध्रुवम् ।
वाक्सिद्धिर्मन्त्रसिद्धिश्च भवेत्तस्य विनिश्चितम् ॥ १२५ ॥
सर्वसौभाग्यमारोग्यं यशसा पूरितं जगत् ।
पुत्रश्च विद्या कविता निश्चला कमला तथा ॥ १२६ ॥
पत्नी पतिव्रता साध्वी सुशीला सुस्थिराः प्रजाः ।
कीर्त्तिश्च चिरकालीनाप्यन्ते कृष्णान्तिकस्थितिः ॥१२७॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

—∞∞∞—

नारायण उवाच ।

ध्यात्वा स्तुत्वा च तिष्ठन्तो देवास्ते तेजसः पुरः ।
ददृशुस्तेजसो मध्ये शरीरं कमनीयकम् ॥ १ ॥
सजलाम्भोदवर्णाभं सस्मितं सुमनोहरम् ।
परमाह्लादकं रूपं त्रैलोक्यचित्तमोहनम् ॥ २ ॥
गण्डस्थलकपोलाभ्यां ज्वलन्मकरकुण्डलम् ।
सद्रत्ननूपुराभ्याञ्च चरणाम्भोजराजितम् ॥ ३ ॥
वह्निशुद्धहरिद्राभवस्त्रामूल्यविराजितम् ।
मणिरत्नेन्द्रसाराणां स्वेच्छाकौतुकनिर्मितम् ॥ ४ ॥
विनोदमुरलीयुक्तविम्बाधरमनोहरम् ।
शुभेक्षणेन पश्यन्तं भक्तानुग्रहकातरम् ॥ ५ ॥
सद्रत्नगुटिकायुक्तकवाटोरःस्थलोज्ज्वलम् ।
कौस्तुभासक्तसद्रत्नप्रदीप्ततेजसोज्ज्वलम् ॥ ६ ॥
अत्र तेजसि चार्वङ्गीं ददृशू राधिकाभिधाम् ।
पश्यन्तं सस्मितं कान्तं पश्यन्तीं वक्रचक्षुषा ॥ ७ ॥
मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिविराजिताम् ।
ईषद्धास्यप्रसन्नास्यां शरत्पङ्कजलोचनाम् ॥ ८ ॥
शरत्पार्वणचन्द्राभाविनिन्द्यास्यमनोहराम् ।
बन्धुजीवप्रभामोष्याधरौष्ठरुचिराम्बराम् ॥ ९ ॥
रणन्मञ्जीरयुग्मेन पादाम्बुजविराजिताम् ।

मणीन्द्राणां प्रभामोषिनखराजीविराजिताम् ॥ १० ॥
कुङ्कुमाभासमाच्छाद्य पादाधोरागभूषिताम्
अमूल्यरत्नसाराणां पाशकश्रेणिशोभिताम् ॥ ११ ॥
हुताशनविशुद्धांशुकामूल्यज्वलितोज्ज्वलाम् ।
महामणीन्द्रसाराणां किङ्किणीमध्यसंयुताम् ॥ १२ ॥
सद्रत्नहारकेयूरकरकङ्कणभूषिताम् ।
रत्नेन्द्ररचितोत्कृष्टकपोलोज्ज्वलकुण्डलाम् ।
कर्णोपरि मणीन्द्राणां कर्णभूषणभूषिताम् ॥ १३ ॥
खगेन्द्रचञ्चुनासाग्रे गजेन्द्रमौक्तिकान्विताम् ।
मालतीमालया वक्रां बिभ्रतीं कबरीं तथा ॥ १४ ॥
मणीनां कौस्तुभेन्द्राणां वक्षःस्थलसुशोभिताम् ।
पारिजातप्रसूनानां मालाजालोज्ज्वलां वराम् ॥ १५ ॥
रत्नाङ्गुरीयनिकरैः कराङ्गुलिविभूषिताम् ॥ १६ ॥
दिव्यशङ्खविकारैश्च चित्ररागविभूषितैः ।
सूक्ष्मसूत्रकृतै रम्यैर्भूषितां शङ्खभूषणैः ॥ १७ ॥
सद्रत्नसारगुटिकारक्तसूत्रातिशोभिताम् ।
प्रतप्तस्वर्णवर्णाभामाच्छाद्य चारुविग्रहाम् ॥ १८ ॥
नितम्बश्रोणिललितां स्तनपीनोन्नतां तथा ।
भूषितां भूषणैः सर्वैस्तत्सौन्दर्य्येण भूषितैः ॥ १९ ॥
विस्मितास्त्रिदशाः सर्वे दृष्ट्वा शमीश्वरीं वराम् ।
तुष्टुवुस्ते सुराः सर्वे पूर्णसर्वमनोरथाः ॥ २० ॥

ब्रह्मोवाच ।

तव चरणसरोजे मन्मनश्चञ्चरीको
भ्रमतु सततमीश प्रेमभक्त्या सरोजे ।

भवनमरणरोगात् पाहि शान्त्यौषधेन
सुदृढसुपरिपक्कां देहि भक्तिञ्च दास्यम्॥ २१॥

शङ्कर उवाच।

भवजलधिनिमग्नं चित्तमीनो मदीयो
भ्रमति सततमस्मिन् घोरसंसारकूपे।
विषयमतिविनिन्द्यं सृष्टिसंहाररूप-
मपनय तव भक्तिं देहि पादारविन्दे॥ २२॥

धर्म्म उवाच।

तव निजजनसार्द्धं सङ्गमो मे सदैव
भवतु विषयबन्धच्छेदने तीक्ष्णखड्गः।
तव चरणसरोजस्थानदानैकहेतु-
र्जनुषि जनुषि भक्तिं देहि पादारविन्दे॥ २३॥

नारायण उवाच।

इत्येवं स्तवनं कृत्वा परिपूर्णैकमानसाः।
कामपूरस्य पुरतस्तस्थुस्ते राधिकापतेः॥ २४॥
सुराणां स्तवनं श्रुत्वा तानुवाच कृपानिधिः।
हितं तथ्यञ्च वचनं स्मेराननसरोरुहः॥ २५॥

श्रीकृष्ण उवाच।

स्वागतं स्वागतं तुभ्यं मदीयेहि पुरेऽधुना।
शिवाश्रयाणां कुशलं प्रष्टुं युक्तमसाम्प्रतम्॥ २६॥
निश्चिन्ता भवतात्रैव का चिन्ता वो मयि स्थिते।
स्थितोऽहं सर्वजीवेषु प्रत्यक्षोऽहं स्तवेन वै।
युष्माकं यदभिप्रायं सर्वं जानामि निश्चितम्॥ २७॥
शुभाशुभञ्च यत् कर्म काले खलु भविष्यति।

महत् क्षुद्रञ्च यत् कर्म्म सर्वं कालकृतं सुराः ॥ २८ ॥
स्वस्वकाले च तरवः फलिनः पुष्पिणः सदा ।
परिपक्वफलाः काले कालेऽपक्वफलान्विताः ॥ २९ ॥
सुखं दुःखं विपत् सम्पत् शोकश्चिन्ता शुभाशुभम् ।
स्वकर्म्मफलनिष्ठञ्च सर्वं काले ह्युपस्थितम् ॥ ३० ॥
न हि कस्य प्रियः को वा विप्रियो वा जगत्त्रये ।
काले कार्य्यवशात् सर्वे भवन्त्येवाप्रियाः प्रियाः ॥ ३१ ॥
राजानो मनवः पृथ्व्यां दृष्टा युष्माभिरत्र वै ।
स्वकर्म्मफलपाकेन सर्वे कालवशङ्गताः ॥ ३२ ॥
युष्माकमधुनात्रैव गोलोके यत्क्षणं गतम् ।
पृथिव्यां तत्क्षणेनैव सप्तमन्वन्तरं गतम् ॥ ३३ ॥
इन्द्राः सप्त गतास्तत्र देवेन्द्रश्चाष्टमोऽधुना ।
कालचक्रं भ्रमत्येवं मदीयञ्च दिवानिशम् ॥ ३४ ॥
इन्द्राश्च मनवो भूपाः सर्वे कालवशङ्गताः ।
कीर्त्तिः पृथ्वी पुण्यमघं कथामात्रावशेषितम् ॥ ३५ ॥
अधुनापि च राजानो दुष्टाश्च हरिनिन्दकाः ।
बभूवुर्बहवो भूमौ महाबलपराक्रमाः ॥ ३६ ॥
सर्वे यास्यन्ति कालेन ग्रासं कालान्तकस्य च ॥ ३७ ॥
उपस्थितोऽपि कालोऽयं वातो वाति निरन्तरम् ।
वह्निर्दहति सूर्य्यश्च तपत्येव ममाज्ञया ॥ ३८ ॥
व्याधयः सन्ति देहेषु मृत्युश्चरति जन्तुषु ।
वर्षन्त्येते जलधराः सर्वे देवा ममाज्ञया ॥ ३९ ॥
ब्रह्मण्यनिष्ठा विप्राश्च तपोनिष्ठास्तपोधनाः ।
ब्रह्मर्षयो ब्रह्मनिष्ठा योगनिष्ठाश्च योगिनः ॥ ४० ॥

ते सर्वे मद्भयाद्भीताः स्वधर्म्मकर्म्मतत्पराः ।
मद्भक्ताश्चैव निःशङ्काः कर्म्मनिर्मूलकारकाः ॥ ४१ ॥
देवाः कालस्य कालोऽहं विधाता धातुरेव च ।
संहारकर्त्तुः संहर्त्ता पातुः पाता परात्परः ॥ ४२ ॥
ममाज्ञयायं संहर्त्ता नाम्ना तेन हरः स्मृतः ।
त्वं विश्वसृक् सृष्टिहेतोः पाता धर्म्मस्य रक्षणात् ॥४३॥
ब्रह्मादितृणपर्य्यन्तं सर्वेषामहमीश्वरः ।
स्वकर्म्मफलदाताहं कर्म्मनिर्मूलकारकः ॥ ४४ ॥
अहं यान् संहरिष्यामि कस्तेषामपि रक्षिता ।
यानहं पालयिष्यामि तेषां हन्ता न कोऽपि च ॥४५॥
सर्वेषामपि संहर्त्ता स्रष्टा पाताहमेव च ।
नाहं शक्तश्च भक्तानां संहारे नित्यदेहिनाम् ॥ ४६ ॥
भक्ता ममानुगा नित्यं मत्पादार्चनतत्पराः ।
अहं भक्तान्तिके शश्वत्तेषां रक्षणहेतवे ॥ ४७ ॥
सर्वे नश्यन्ति ब्रह्माण्डे प्रभवन्ति पुनः पुनः ।
न मे भक्ताः प्रणश्यन्ति निःशङ्काश्च निरापदः ॥ ४८ ॥
ततो विपश्चितः सर्वे दास्यं वाञ्छन्ति नो वरम् ।
ये मां दास्यं प्रयाचन्ते धन्यास्तेऽन्ये च वञ्चिताः ॥४९॥
जन्ममृत्युजराव्याधिभयञ्च यमताड़ना ।
अन्येषां कर्म्मिणामस्ति न भक्तानाञ्च कर्म्मिणाम् ॥५०॥
भक्ता न लिप्ताः पापेषु पुण्येषु सर्वकर्म्मणः ।
अहं धुनोमि तेषाञ्च कर्म्मभोगांश्च निश्चितम् ॥ ५१ ॥
अहं प्राणाश्च भक्तानां भक्ताः प्राणा ममापि च ।
ध्यायन्ते ये च मां नित्यं तान् स्मरामि दिवानिशम्॥५२

चक्रं सुदर्शनं नाम षोड़शारं सुतीक्ष्णकम् ।
यत्तेजःषोड़शांशोऽपि नास्ति सर्वेषु जीविषु ॥ ५३ ॥
भक्तान्तिके तु तच्चक्रं दत्त्वा रक्षार्थमीप्सितम् ।
तथापि न प्रतीतिर्मे यामि तेषाञ्च सन्निधिम् ॥ ५४ ॥
न मे स्वास्थ्यञ्च वैकुण्ठे गोलोके राधिकान्तिके ।
यत्र तिष्ठन्ति भक्तास्ते तत्र तिष्ठाम्यहर्निशम् ॥ ५५ ॥
प्राणेभ्यः प्रेयसी राधा स्थितोरसि दिवानिशम्
यूयं प्राणाधिका लक्ष्मीर्न मे भक्तात् पराः स्मृताः ॥५६॥
भक्तदत्तञ्च यद्‌द्रव्यं भक्त्याश्नामि सुरेश्वराः ।
अभक्तदत्तं नाश्नामि ध्रुवं भुङ्क्ते बलिः स्वयम् ॥ ५७ ॥
स्त्रीपुत्त्रस्वजनांस्त्यक्त्वा ध्यायन्ते मामहर्निशम् ।
युष्मान् विहाय तान्नित्यं स्मराम्यहमहर्निशम् ॥ ५८ ॥
द्वेष्टारो ये च भक्तानां ब्राह्मणानां गवामपि ।
क्रतूनां देवतानाञ्च हिंसां कुर्वन्ति निश्चितम् ॥ ५९ ॥
तदाऽचिरं ते नश्यन्ति यथा वह्नौ तृणानि च ।
न कोऽपि रक्षिता तेषां मयि हन्तर्य्युपस्थिते ॥ ६० ॥
यास्यामि पृथिवीं देवा यात यूयं स्वमालयम् ।
यूयं चैवांशरूपेण शीघ्रं गच्छत भूतलम् ॥ ६१ ॥
इत्युक्त्वा जगतां नाथो गोपानाहूय गोपिकाः ।
उवाच मधुरं सत्यं वाक्यं तत्समयोचितम् ॥ ६२ ॥
गोपा गोप्यश्च शृणुत यात नन्दव्रजं परम् ।
वृषभानुगृहं क्षिप्रं गच्छ त्वमपि राधिके ॥ ६३ ॥
वृषभानुप्रिया साध्वी नाम्ना गोपी कलावती ।
सुबलस्य सुता सा च कमलांशसमुद्भवा ॥ ६४ ॥

पितॄणां मानसी कन्या धन्या मान्या च योषिताम् ।
पुरा दुर्वाससः शापाज्जन्म तस्या व्रजे गृहे ॥ ६५ ॥
तस्यां लभस्व त्वं जन्म शीघ्रं नन्दव्रजं व्रज ।
त्वामहं बालरूपेण गृह्लामि कमलानने ॥ ६६ ॥
त्वं मे प्राणाधिका राधे तव प्राणाधिकोऽप्यहम् ।
न किञ्चिदावयोर्भिन्नमेकाङ्गः सर्वदैव हि ॥ ६७ ॥
श्रुत्वैवं राधिका तत्र रुरोद प्रेमविह्वला ।
पपौ चक्षुश्चकोराभ्यां मुखचन्द्रं हरेर्मुने ॥ ६८ ॥
जनुर्लभत गोपाश्च गोप्यश्च पृथिवीतले ।
गोपानामुत्तमानाञ्च मन्दिरे मन्दिरे शुभे ॥ ६९ ॥
एतस्मिन्नन्तरे सर्वे ददृशू रथमुत्तमम् ।
मणिरत्नेन्द्रसारेण हीरकेण विभूषितम् ॥ ७० ॥
श्वेतचामरलक्षेण शोभितं दर्पणायुतैः ।
सूक्ष्मकाषायवस्त्रेण वह्निशुद्धेन भूषितम् ॥ ७१ ॥
सद्रत्नकलसानाञ्च सहस्रेण सुशोभितम् ।
पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥ ७२ ॥
पार्षदप्रवरैर्युक्तं शतकुम्भमयं शुभम् ।
तेजःस्वरूपमतुलं शतसूर्य्यसमप्रभम् ॥ ७३ ॥
तत्रस्थं पुरुषं श्यामसुन्दरं कमनीयकम् ।
शङ्खचक्रगदापद्मधरं पीताम्बरं परम् ॥ ७४ ॥
किरीटिनं कुण्डलिनं वनमालाविभूषितम् ।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥ ७५ ॥
चतुर्भुजं स्मेरवक्त्रं भक्तानुग्रहकातरम् ।
मणिरत्नेन्द्रसाराणां सारभूषणभूषितम् ॥ ७६ ॥

देवीं तद्दामतो रम्यां शुक्लवर्णां मनोहराम् ।
वेणुवीणाग्रन्थहस्तां भक्तानुग्रहकातराम् ।
विद्याधिष्ठातृदेवीञ्च ज्ञानरूपां सरस्वतीम् ॥ ७७ ॥
अपरां दक्षिणे रम्यां शरच्चन्द्रसमप्रभाम ।
तप्तकाञ्चनवर्णाभां सस्मितां सुमनोहराम् ॥ ७८ ॥
सद्रत्नकुण्डलाभ्याञ्च सुकपोलविराजिताम् ।
अमूल्यरत्नखचितामूल्यवस्त्रेण भूषिताम् ॥ ७९ ॥
अमूल्यरत्नकेयूरकरकङ्कणशोभिताम् ।
सद्रत्नसारमञ्जीरकलशब्दसमन्विताम् ॥ ८० ॥
पारिजातप्रसूनानां माल्यैर्वक्षःस्थलोज्ज्वलाम् ।
प्रफुल्लमालतीमालासंयुक्तकवरीं शुभाम् ॥ ८१ ॥
शरच्चन्द्रप्रभामोषिमुखचारुविभूषिताम् ॥ ८२ ॥
कस्तूरीविन्दुसंयुक्तसिन्दूरतिलकान्विताम् ।
सुचारुकज्जलासक्तशरत्पङ्कजलोचनाम् ॥ ८३ ॥
सहस्रदलसंयुक्तलीलाकमलसंयुताम् ।
नारायणञ्च पश्यन्तं पश्यन्तीं वक्रचक्षुषा ॥ ८४ ॥
अवरुह्य रथात्तूर्णं सस्त्रीकः सह पार्षदैः ।
जगाम च सभां रम्यां गोपगोपीसमन्विताम् ॥ ८५ ॥
देवा गोपाश्च गोप्यश्चोत्तस्थुः प्राञ्जलयो मुदा ।
सामवेदोक्तस्तोत्रेण कृतेन च सुरर्षिभिः ॥ ८६ ॥
गत्वा नारायणो देवो विलीनः कृष्णविग्रहे ।
दृष्ट्वा च परमाश्चर्य्यं ते सर्वे विस्मयं ययुः ॥ ८७ ॥
एतस्मिन्नन्तरे तत्र शातकुम्भमयाद्रथात् ।
अवरुह्य स्वयं विष्णुः पाता च जगतां पतिः ॥ ८८ ॥

आजगाम चतुर्बाहुः वनमालाविभूषितः ।
पीताम्बरधरः श्रीमान् सस्मितः सुमनोहरः ।
सर्वालङ्कारशोभाढ्यः सूर्य्यकोटिसमप्रभः ॥ ८९ ॥
उत्तस्थुस्ते च तं दृष्ट्वा तुष्टुवुः प्रणता मुने ।
स चापि लीनस्तत्रैव राधिकेश्वरविग्रहे ॥ ९० ॥
ते दृष्ट्वा महदाश्चर्य्यं विस्मयं परमं ययुः ।
संविलीने हरेरङ्गे श्वेतद्वीपनिवासिनः ॥ ९१ ॥
एतस्मिन्नन्तरे तूर्णमाजगाम तरान्वितः ।
शुद्धस्फटिकसङ्काशो नाम्ना सङ्कर्षणः स्मृतः ।
सहस्रशीर्षा पुरुषः शतसूर्य्यसमप्रभः ॥ ९२ ॥
आगतं तुष्टुवुः सर्वे दृष्ट्वा तं विष्णुविग्रहम् ।
स चागत्य नतस्कन्ध तुष्टाव राधिकेश्वरम् ।
सहस्रमूर्द्धभिर्भक्त्या प्रणनाम च नारद ॥ ९३ ॥
आवाञ्च धर्मपुत्त्रौ द्वौ नरनारायणाभिधौ ।
लीनोऽहं कृष्णपादाब्जे बभूव फाल्गुनो वरः ॥ ९४ ॥
ब्रह्मेशशेषधर्माश्च तस्थुरेकत्र तत्र वै ॥ ९५ ॥
एतस्मिन्नन्तरे देवा ददृशू रथमुत्तमम् ।
स्वर्णसारविकारञ्च नानारत्नपरिच्छदम् ॥ ९६ ॥
मणीन्द्रसारसंयुक्तं वह्निशुद्धांशुकान्वितम् ।
श्वेतचामरसंयुक्तं भूषितं दर्पणायुतैः ॥ ९७ ॥
सद्रत्नसारकलससमूहेन विराजितम् ।
पारिजातप्रसूनानां मालाजालैः सुशोभितम् ॥ ९८ ॥
सहस्रचक्रसंयुक्तं मनोयायि मनोरमम् ।
ग्रीष्ममध्याह्नमार्त्तण्डप्रभामोषकरं परम् ॥ ९९ ॥

मुक्तामाणिक्यवज्राणां समूहेन समुज्ज्वलम् ।
चित्रपुत्तलिकापुष्पसरःकाननचित्रितम् ॥ १०० ॥
देवानां दानवानाञ्च रथानां प्रवरं मुने ।
यत्नेन शङ्करप्रीत्या निर्मितं विश्वकर्म्मणा ॥१०१॥
पञ्चाशद्योजनोर्द्ध्वञ्च चतुर्योजनविस्तृतम् ।
रतितल्पसमायुक्तैः शोभितं शतमन्दिरैः ॥ १०२ ॥
ततस्तां दृष्टवान्देवीं रत्नालङ्कारभूषिताम् ।
शरद्ध्यस्वर्णसाराणां प्रभामोषकरद्युतिम् ।
तेजःस्वरूपामतुलां मूलप्रकृतिमीश्वरीम् ॥ १०३ ॥
सहस्रभुजसंयुक्तां नानायुधसमन्विताम् ।
ईषद्धास्यप्रसन्नास्यां भक्तानुग्रहकातराम् ॥ १०४ ॥
गण्डस्थलकपोलाभ्यां सद्रत्नकुण्डलोज्ज्वलाम् ।
रत्नेन्द्रसाररचितक्वणन्मञ्जीररञ्जिताम् ॥ १०५ ॥
मणीन्द्रमेखलायुक्तमध्यदेशसुशोभनाम् ।
सद्रत्नसारकेयूरकरकङ्कणभूषिताम् ॥ १०६ ॥
मन्दारपुष्पमालाभिरुरःस्थलसमुज्ज्वलाम् ।
नितम्बकठिनश्रोणिपीनोन्नतकुचानताम् ॥ १०७ ॥
शरत्सुधाकराभासविनिन्दास्यमनोहराम् ।
कज्जलोज्ज्वलरेखाक्तशरत्पङ्कजलोचनाम् ॥ १०८ ॥
चन्दनागुरुकस्तूरीचित्रपत्रकभूषिताम् ।
नवीनबन्धुजीवाभामोष्ठाधरसुशोभिताम् ॥ १०९ ॥
मुक्तापङ्क्तिप्रभामोषिदन्तपङ्क्तिविराजिताम् ।
प्रफुल्लमालतीमालासंसक्तकबरीभराम् ॥ ११० ॥
पक्षीन्द्रचञ्चुनासाग्रगजेन्द्रमौक्तिकान्विताम् ॥१११॥

वह्निशुद्धांशुकानातिज्वलितेन समुज्ज्वलाम्।
सिंहपृष्ठसमारूढ़ां सुताभ्यां सहितां मुदा॥ ११२॥
अवरुह्य रथात्तूर्णं श्रीकृष्णं प्रणनाम च।
सुताभ्यां सह सा देवी समुवास वरासने॥ ११३॥
गणेशः कार्त्तिकेयश्च नत्वा कृष्णं परात्परम्।
ननाम शङ्करं धर्म्ममनन्तं कमलोद्भवम्॥ ११४॥
उत्तस्थुरारात्ते देवा दृष्ट्वा तौ विदशेश्वरौ।
आशिषञ्च ददुर्देवा वासयामासुः सन्निधौ।
ताभ्यां सह सदालापं चक्रुर्देवा मुदान्विताः॥ ११५॥
तस्थुर्देवाः सभामध्ये देवी च पुरतो हरेः।
गोपा गोप्यश्च बहुशो बभूवुर्विस्मयाकुलाः॥ ११६॥
उवाच कमलां कृष्णः स्मेराननसरोरुहः।
त्वं गच्छ भीष्मकगृहं नानारत्नसमन्वितम्॥ ११७॥
वैदर्भ्या उदरे जन्म लभ देवि सनातनि।
तव पाणिं ग्रहीष्यामि गत्वाहं कुण्डिनं सति॥ ११८॥
ता देव्यः पार्वतीं दृष्ट्वा समुत्थाप्य त्वरान्विताः।
रत्नसिंहासने रम्ये वासयामासुरीश्वरीम्। ११९॥
विप्रेन्द्र पर्वती लक्ष्मीर्वागधिष्ठातृदेवताः।
तस्थुरेकासने तत्र सम्भाष्य च यथोचितम्॥ १२०॥
ताश्च सम्भाषयामासुः सम्प्रीत्या गोपकन्यकाः।
ऊषुर्गोपालिकाः काश्चिन्मुदा तासाञ्च सन्निधौ॥१२१॥
श्रीकृष्णः पार्वतीं तत्र समुवाच जगत्पतिः।
देवि त्वमंशरूपेण व्रज नन्दव्रजं शुभे॥ १२२॥
उदरे च यशोदायाः कल्याणि नन्दरेतसा।

लभ जन्म महामाये सृष्टिसंहारकारिणि ॥ १२३ ॥
ग्रामे ग्रामे च पूजां ते कारयिष्यामि भूतले ।
कृत्स्ने महीतले भक्त्या नगरेषु वनेषु च ॥ १२४ ॥
तत्राधिष्ठातृदेवीं त्वां पूजयिष्यन्ति मानवाः ।
द्रव्यैर्नानाविधैर्दिव्यैर्बलिभिश्च मुदान्विताः ॥ १२५ ॥
तव भूस्पर्शमात्रेण सूतिकामन्दिरे शिवे ।
पिता मां तत्र संस्थाप्य त्वामादाय गमिष्यति ॥१२६॥
कंसदर्शनमात्रेणागमिष्यसि शिवान्तिकम् ।
भारावतारणं कृत्वा गमिष्यामि स्वमाश्रमम् ॥ १२७ ॥
इत्युक्त्वा श्रीहरिस्तूर्णमुवाच च षडाननम् ।
अंशरूपेण वत्स त्वं गमिष्यसि महीतलम् ॥ १२८ ॥
जाम्बवत्याश्च गर्भे च लभ जन्म सुरेश्वर ।
अंशेन देवताः सर्वा गच्छन्तु धरणीतलम् ।
भारहारं करिष्यामि वसुधायाश्च निश्चितम् ॥१२९॥
इत्युक्त्वा राधिकानाथस्तस्थौ सिंहासने वरे ।
तस्थुर्देवाश्च देव्यश्च गोपा गोप्यश्च नारद ॥ १३० ॥
एतस्मिन्नन्तरे ब्रह्मा समुत्तस्थौ हरेः पुरः ।
पुटाञ्जलिर्जगन्नाथमुवाच विनयान्वितः ॥ १३१ ॥

ब्रह्मोवाच ।

अवधानं कुरु विभो किङ्करस्य निवेदने ।
आज्ञां कुरु महाभाग कस्य कुत्र स्थलं भुवि ॥ १३२ ॥
भर्त्ता पातोद्धारकर्त्ता सेवकानां प्रभुः सदा ।
स भृत्यः सर्वदा भक्त ईश्वराज्ञां करोति यः ॥ १३३ ॥
के देवाः केन रूपेण देव्यश्च कलया कया ।

कुत्र कस्याभिधेयश्च विषयश्च महीतले ॥ १३४ ॥
ब्रह्मणो वचनं श्रुत्वा प्रत्युवाच जगत्पतिः ।
यस्य यत्रावकाशश्च कथयामि विधानतः ॥ १३५ ॥

श्रीकृष्ण उवाच ।

कामदेवो रौक्मिणेयो रती मायावती सती ।
शम्बरस्य गृहे या च छायारूपेण संस्थिता ॥ १३६ ॥
त्वं तस्य पुत्रो भविता नाम्नानिरुद्ध एव च ।
भारती शोणितपुरे बाणपुत्री भविष्यति ॥ १३७ ॥
अनन्तो देवकीगर्भाद्रोहिणेयो जगत्पतिः ।
मायया गर्भसङ्कर्षान्नाम्ना सङ्कर्षणः स्मृतः ॥ १३८ ॥
कालिन्दी सूर्य्यतनया गङ्गांशेन महीतले ।
अर्द्धांशेनैव तुलसी लक्ष्मणा राजकन्यका ॥ १३९ ॥
सावित्री वेदमाता च नाम्ना नाग्नजिती सती ।
वसुन्धरा सत्यभामा शैव्या देवी सरस्वती ॥ १४० ॥
रोहिणी मित्रविन्दा च भविता राजकन्यका ।
सूर्य्यपत्नी रत्नमाला कलया च जगद्गुरोः ॥ १४१ ॥
स्वाहांशेन सुशीला च रुक्मिण्याद्याः स्त्रियो नव ।
दुर्गार्द्धांशा जाम्बवती महिषीणां दश स्मृताः ॥ १४२ ॥
अर्द्धांशेन शैलपुत्री यातु जाम्बवतो गृहम् ।
कैलासे शङ्कराज्ञा च बभूव पार्वतीं प्रति ॥ १४३ ॥
कैलासगामिनं विष्णुं श्वेतद्वीपनिवासिनम् ।
आलिङ्गनं देहि कान्ते नास्ति दोषो ममाज्ञया ॥ १४४ ॥

ब्रह्मोवाच ।

कथं शिवाज्ञा तां देवीं बभूव राधिकापते ।

विष्णोः सम्भाषणे पूर्वं श्वेतद्वीपनिवासिनः ॥ १४५ ॥

श्रीकृष्ण उवाच ।

पुरा गणेशं द्रष्टुञ्च प्रजग्मुः सर्वदेवताः ।
श्वेतद्वीपात् स्वयं विष्णुर्जगाम शङ्करस्तवात् ॥ १४६ ॥
दृष्ट्वा गणेशं मुदितः समुवास सुखासने ।
सुखेन ददृशुः सर्वे त्रैलोक्यमोहनं वपुः ॥ १४७ ॥
किरीटिनं कुण्डलिनं पीताम्बरधरं वरम् ।
सुन्दरं श्यामरूपञ्च नवयौवनसंयुतम् ॥ १४८ ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् ।
रत्नालङ्कारशोभाढ्यं स्मेराननसरोरुहम् ॥ १४९ ॥
रत्नसिंहासनस्थञ्च पार्षदैः परिवेष्टितम् ।
वन्दितञ्च सुरैः सर्वैः शिवेन पूजितं स्तुतम् ॥ १५० ॥
तं दृष्ट्वा पार्वती विष्णुं प्रसन्नवदनेक्षणा ।
मुखमाच्छादयामास वाससा व्रीड़या सती ॥ १५१ ॥
अतीवसुन्दरं रूपं दर्शं दर्शं पुनः पुनः ।
ददर्श मुखमाच्छाद्य निमेषरहिता सती ॥ १५२ ॥
परमाद्भुतवेशञ्च सस्मिता वक्रचक्षुषा ।
सुखसागरसंमग्ना बभूव पुलकाञ्चिता ॥ १५३ ॥
क्षणं ददर्श पञ्चास्यं शुभ्रवर्णं त्रिलोचनम् ।
त्रिशूलपरिघधरं कन्दर्पकोटिसुन्दरम् ॥ १५४ ॥
क्षणं ददर्श श्यामं तमेकास्यञ्च द्विलोचनम् ।
चतुर्भुजं पीतवस्त्रं वनमालाविभूषितम् ॥ १५५ ॥
एकं ब्रह्ममूर्त्तिभेदमभेदं वा निरूपितम् ।
दृष्ट्वा बभूव सा माया सकामा विष्णुमायया । १५६॥

मदंशाश्च त्रयो देवा ब्रह्मविष्णुमहेश्वराः।
ताभ्यामौत्कर्षपाताच्च श्रेष्ठः सत्वगुणात्मकः॥ १५७॥
दृष्ट्वा तं पार्वती भक्त्या पुलकाञ्चितविग्रहा।
मनसा पूजयामास परमात्मानमीश्वरम्॥ १५८॥
दुर्गान्तराभिप्रायञ्च बुबुधे शङ्करः स्वयम्।
सर्वान्तरात्मा भगवानन्तर्यामी जगत्पतिः॥ १५९॥
दुर्गाञ्च निर्ज्जनीभूय तामुवाच हरः स्वयम्।
बोधयामास विविधं हितं तथ्यमखण्डितम्॥ १६०॥

शङ्कर उवाच।

निवेदनं मदीयञ्च निबोध शैलकन्यके।
शृङ्गारं देहि भद्रं ते हरये परमात्मने॥ १६१॥
अहं ब्रह्मा च विष्णुश्च ब्रह्मैकञ्च सनातनम्।
देवकी भेदरहितो विषयान्मूर्त्तिभेदकः॥ १६२॥
सर्वेषां प्रकृतिर्ह्येका माता त्वं सर्वरूपिणी।
स्वयम्भुवश्च वाणी त्वं लक्ष्मीर्नारायणोरसि॥ १६३॥
मम वक्षसि दुर्गा त्वं निबोधाध्यात्मकं सति।
शिवस्य वचनं श्रुत्वा तमुवाच सुरेश्वरी॥ १६४॥

श्रीपार्वत्युवाच।

दीनबन्धो कृपासिन्धो तव मामकृपा कथम्।
सुचिरं तपसा लब्धो नाथस्त्वं जगतां मया॥ १६५॥
मादृशीं किङ्करीं नाथ न परित्यक्तुमर्हसि।
अयोग्यमीदृशं वाक्यं मां मा वद महेश्वर॥ १६६॥
तव वाक्यं महादेव पालयिष्यामि सुव्रत।
देहान्तरे जन्म लब्ध्वा भजिष्यामि हरिं हर॥ १६७॥

इत्येवं वचनं श्रुत्वा विरराम महेश्वरः ।
उच्चैर्जहासाभयदः पार्वत्यै चाभयं ददौ ॥ १६८ ॥
तत्प्रतिज्ञापालनाय पार्वती जाम्बवद्गृहे ।
लभिष्यति जनुर्धातर्नाम्ना जाम्बवती सती ॥ १६९ ॥

ब्रह्मोवाच ।

भूमौ कतिविधे भूपे संस्थिते पार्वती कथम् ।
ललाभ भारते जन्म निन्दिते भाल्लुके गृहे ॥ १७० ॥

श्रीकृष्ण उवाच ।

रामावतारे त्रेतायां देवांशाश्च ययुर्महीम् ।
हिमालयांशो भल्लूको जाम्बवान् रामकिङ्करः ॥ १७१॥
रामस्य वरदानेन चिरजीवी श्रिया युतः ।
कोटिसिंहबलाधारः क्रियते च महाबलः ॥ १७२ ॥
पितुरंशगृहं गत्वा जगामांशेन भूतलम् ।
एवं पूर्वस्य वृत्तान्तं कथितं शृणु मन्मुखात् ॥ १७३ ॥
सर्वेषाञ्च सुराणाञ्चैवांशा गच्छन्तु भूतलम् ।
नृपपुत्रा मत्सहाया भविष्यन्ति रणे विधे ॥ १७४ ॥
कमलाकलया सर्वा भवन्तु नृपकन्यकाः ।
मन्महिष्यो भविष्यन्ति सहस्राणाञ्च षोड़श ॥ १७५ ॥
धर्मोऽयमंशरूपेण पाण्डुपुत्रो युधिष्ठिरः ।
वायोरंशाद्भीमसेनो वज्रांशादर्जुनः स्वयम् ॥ १७६ ॥
नकुलः सहदेवश्च स्वर्वैद्यांशसमुद्भवः ।
सूर्य्यांशः कर्णवीरश्च विदुरः शमनः स्वयम् ॥ १७७ ॥
दुर्य्योधनः कलेरंशः समुद्रांशश्च शान्तनुः ।
अश्वत्थामा शङ्करांशो द्रोणो वह्न्यंशसम्भवः ॥ १७८ ॥

चन्द्रांशोऽप्यभिमनुश्च भीष्मश्चैव स्वयं वसुः ।
वसुदेवः कश्यपांशोऽप्यदित्यंशा च देवकी ॥ १७६ ॥
वस्वंशो नन्दगोपश्च यशोदा वसुकामिनी ।
द्रौपदी कमलांशा च यज्ञकुण्डसमुद्भवा ॥ १८० ॥
हुताशनांशो भगवान् धृष्टद्युम्नो महाबलः ।
सुभद्रा शतरूपांशा देवकीगर्भसम्भवा ॥ १८१ ॥
देवा गच्छन्तु पृथिवीमंशेन भारहारकाः ।
कलया देवपत्न्यश्च गच्छन्तु पृथिवीतलम् ॥ १८२ ॥
इत्येवमुक्त्वा भगवान् विरराम च नारद ।
सर्वं विवरणं श्रुत्वा तत्रोवास प्रजापतिः ॥ १८३ ॥
कृष्णस्य वामे वाग्देवी दक्षिणे कमलालया ।
पुरतो देवताः सर्वाः पार्वती चापि नारद ॥ १८४ ॥
गोप्यो गोपाश्च पुरतो राधा वक्षःस्थलस्थिता ।
एतस्मिन्नन्तरे सा च तमुवाच व्रजेश्वरी ॥ १८५ ॥

राधिकोवाच ।

शृणु नाथ प्रवक्ष्यामि किङ्करीवचनं प्रभो ।
प्राणा दहन्ति सततमान्दोलयति मे मनः ॥ १८६ ॥
चक्षुर्निमीलनङ्कर्त्तुमशक्ता तव दर्शने ।
त्वया विना कथं नाथ यास्यामि धरणीतलम् ॥१८७॥
कतिकालान्तरं बन्धो मेलनं मे त्वया सह ।
प्राणेश्वर ब्रूहि सत्यं भविष्यत्येव गोकुले ॥ १८८ ॥
निमेषश्च युगशतं भविता मे त्वया विना ।
कं द्रक्ष्यामि क्व यास्यामि को वा मां पालयिष्यति ॥१८९
मातरं पितरं बन्धुं भ्रातरं भगिनीं सुतम् ।

त्वया विनाहं प्राणेश चिन्तयामि न कं क्षणम् ॥१९०॥
करोषि माययाच्छन्नां मास्त्वि मायेश भूतले ।
विस्मृतां विभवं दत्त्वा सत्यं मे शपथं कुरु ॥ १९१ ॥
अणुक्षणं मम मनोमधुपो मधुसूदन ।
करोतु भ्रमणं नित्यं समाध्वीके पदाम्बुजे ॥ १९२ ॥
यत्र तत्र च यस्यां वा योनौ जन्म भवत्विदम् ।
त्वं स्वस्य स्मरणं दास्यं मह्यं दास्यसि वाञ्छितम् ॥१९३
कृष्णस्त्वं राधिकाहञ्च प्रेमसौभाग्यमावयोः ।
न विस्मरामि भूमौ च देहि मह्यं परं वरम् ॥ १९४ ॥
यथा तन्वा सह प्राणाः शरीरं छायया सह ।
तथावयोर्जन्म यातु देहि मह्यं वरं विभो ॥ १९५ ॥
चक्षुर्निमेषविच्छेदो भविता नावयोर्भुवि ।
तत्रागत्यापि कुत्रापि देहि मह्यं वरं प्रभो ॥ १९६ ॥
मम प्राणैस्तव तनुः केन वा वार्य्यते हरेः ।
आत्मना मुरली पादौ मनसा वापि निर्मितौ ॥१९७॥
स्त्रियः कतिविधाः सन्ति पुरुषा वा पुरष्टुतः ।
नास्ति कुत्रापि कान्ता वा कान्तासक्ता च मादृशी॥१९८
तव देहार्द्धभागेन केन वाहं विनिर्मिता ।
इदमेवावयोर्भेदो नास्त्यतस्त्वयि मे मनः ॥ १९९ ॥
ममात्ममानसः प्राणांस्त्वयि संस्थाप्य केन वा ।
तयात्ममानसः प्राणा मयि वा संस्थिता अपि ॥२००॥
अतो निमेषविरहादात्मनो विक्लवं मनः ।
प्रदग्धं सन्ततं प्राणा दहन्ति विरहश्रुतौ ॥ २०१ ॥
इत्येवमुक्त्वा सा देवी तत्रैव सुरसंसदि ।

भूयोभूयो रुरोदोच्चैर्धृत्वा तच्चरणाम्बुजे ॥ २०२ ॥
क्रोड़े कृत्वा च तां कृष्णो मुखं संमृज्य वाससा।
बोधयामास विविधं सत्यं तथ्यं हितं वचः ॥ २०३ ॥

श्रीकृष्ण उवाच।

आध्यात्मिकं परं योगं शोकच्छेदनकर्त्तनम्।
शृणु देवि प्रवक्ष्यामि योगीन्द्राणाञ्च दुर्लभम् ॥ २०४ ॥
आधाराधेययोः सर्वं ब्रह्माण्डं पश्य सुन्दरि।
आधारव्यतिरेकेण नास्त्याधे यस्य सम्भवः ॥ २०५ ॥
फलाधारश्च पुष्पञ्च पुष्पाधारश्च पल्लवम्।
स्कन्धश्च पल्लवाधारः स्कन्धाधारस्तरुः स्वयम् ॥ २०६ ॥
वृक्षाधारोऽप्यङ्कुरश्च वीजशक्तिसमन्वितः।
अष्टिरेवाङ्कुराधारश्चाष्ट्याधारो वसुन्धरा ॥ २०७ ॥
शेषो वसुन्धराधारः शेषाधारो हि कच्छपः।
वायुश्च कच्छपाधारो वायुाधारोऽहमेव च ॥ २०८ ॥
ममाधारस्वरूपा त्वं त्वयि तिष्ठामि शाश्वतम्।
त्वञ्च शक्तिसमूहा च मूलप्रकृतिरीश्वरी ॥ २०९ ॥
त्वं शरीरस्वरूपासि त्रिगुणाधाररूपिणी।
तवात्माहं निरीहश्च चेष्टावांश्च त्वया सह ॥ २१० ॥
पुरुषाद्वीर्य्यमुत्पन्नं वीर्य्यात् सन्ततिरेव च।
तयोराधाररूपा च कामिनी प्रकृतिः कला ॥ २११ ॥
विना देहेन कुत्रात्मा क्व शरीरं विनात्मना।
प्राधान्यञ्च द्वयोर्देवि विना द्वाभ्यां कुतो भवः ॥ २१२ ॥
न कुत्राप्यावयोर्भेदो राधे संसारजीवयोः।
यत्रात्मा तत्र देहश्च न भेदो विनयेन किम् ॥ २१३ ॥

यथा क्षीरे च धावल्यं दाहिका च हुताशने ।
भूमौ गन्धो जले शैत्यं तथा त्वयि मम स्थितिः ॥२१४॥
धावल्यदुग्धयोरैक्यं दाहिकानलयोर्यथा ।
भूगन्धजलशैत्यानां नास्ति भेदस्तथावयोः ॥ २१५ ॥
मया विना त्वं निर्जीवा चादृश्योऽहं त्वया विना ।
त्वया विना भवं कर्त्तुं नालं सुन्दरि निश्चितम् ॥२१६॥
विना मृदा घटं कर्त्तुं यथा नालं कुलालकः ।
विना स्वर्णं स्वर्णकारोऽलङ्कारं कर्त्तुमक्षमः ॥ २१७ ॥
स्वयमात्मा यथा नित्यस्तथा त्वं प्रकृतिः स्वयम् ।
सर्वशक्तिसमायुक्ता सर्वाधारा सनातनी ॥ २१८ ॥
मम प्राणसमा लक्ष्मीर्वाणी च सर्वमङ्गला ।
ब्रह्मेशानन्तधर्माश्च त्वं मे प्राणाधिका प्रिया ॥२१९॥
समीपस्था इमे सर्वे सुरा देव्यश्च राधिके ।
एतेभ्योऽप्यधिका नोचेत् कथं वक्षःस्थलस्थिता ॥२२०॥
त्यजाश्रुमोक्षणं राधे भ्रान्तिञ्च निष्फलां सति ।
विहाय शङ्कां निःशङ्कं वृषभानुगृहं व्रज ॥ २२१ ॥
कलावत्याश्च जठरे मासानां नव सुन्दरि ।
वायुना पूरयित्वा च गर्भं रोधय मायया ॥ २२२ ॥
दशमे समनुप्राप्ते त्वमाविर्भव भूतले ।
आत्मरूपं परित्यज्य शिशुरूपं विधाय च ॥ २२३ ॥
वायुनिःसरणे काले कलावत्याः समीपतः ।
भूमौ विवस्त्रीभूय पतित्वा रोदिषि ध्रुवम् ॥२२४॥
अयोनिसम्भवा त्वञ्च भविता गोकुले सति ।
अयोनिसम्भवोऽहञ्च नावयोर्गर्भसंस्थितिः ॥२२५॥

भूमिष्ठमात्रं तातो मां गोकुलं प्रापयिष्यति ।
तव हेतोर्गमिष्यामि कृत्वा कंसभयं छलम् ॥ २२६ ॥
यशोदामन्दिरे माञ्च सानन्दं नन्दनन्दनम् ।
नित्यं द्रक्ष्यसि कल्याणि समाश्लेषणपूर्वकम् ॥ २२७ ॥
स्मृतिस्ते भविता काले वरेण मम राधिके ।
स्वच्छन्दं विहरिष्यामि नित्यं वृन्दावने वने ॥ २२८ ॥
त्रिःसप्तशतकोटिभिर्गोपिभिर्गोकुलं व्रज ।
त्रयस्त्रिंशद्वयस्याभिः सुशीलादिभिरेव च ॥ २२९ ॥
संस्थाप्य संख्यारहिता गोपीर्गोलोक एव च ।
समाश्वास्य प्रबोधेन स्मितया च सुधागिरा ॥ २३० ॥
अहमसंख्यान् गोपालान् संस्थाप्यात्रैव राधिके ।
वसुदेवाश्रयं पश्चाद् यास्यामि मथुरां पुरीम् ॥ २३१ ॥
व्रजं व्रजन्तु क्रीडार्थं मम सङ्गे प्रियात् प्रियाः ।
वल्लवानां गृहे जन्म लभन्तु गोपकोटयः ॥ २३२ ॥
इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद ।
ऊचुर्देवाश्च देव्यश्च गोपा गोप्यश्च तत्र वै ॥ २३३ ॥
ब्रह्मेशधर्मशेषाश्च श्रीकृष्णं तं परात्परम् ।
शिवापद्मासरस्वत्यस्तुष्टुवुः परया मुदा ॥ २३४ ॥
भक्त्या गोपाश्च गोप्यश्च विरहज्वरकातराः ।
तत्र संस्तूय श्रीकृष्णं प्रणेमुः प्रेमविह्वलाः ॥ २३५ ॥
प्राणाधिकं प्रियं कान्तं राधा पूर्णमनोरथा ।
परितुष्टाव भक्त्या च विरहज्वरकातरा ॥ २३६ ॥
साश्रुपूर्णातिदीनाञ्च दृष्ट्वा राधां भयाकुलाम् ।
प्रबोधवचनं सत्यमुवाच तां हरिः स्वयम् ॥ २३७

श्रीकृष्ण उवाच ।

प्राणाधिके महादेवि स्थिरा भव भयं त्यज ।
यथा त्वञ्च तथाहञ्च का चिन्ता ते मयि स्थिते ।
किन्तु ते कथयिष्यामि किञ्चिदेवास्त्यमङ्गलम् ॥ २३८ ॥
वर्षाणां शतकं पूर्णं त्वद्विच्छेदो मया सह ।
श्रीदामशापजन्येन कर्मभोगेन सुन्दरि ॥ २३९ ॥
भविष्यत्येव मम च मथुरागमनं ततः ॥ २४० ॥
तत्र भारावतरणं पित्रोर्बन्धनमोचनम् ।
मालाकारतन्त्रवायकुब्जिकानाञ्च मोचनम् ॥ २४१ ॥
घातयित्वा च यवनं मुचकुन्दस्य मोचनम् ।
द्वारकायाञ्च निर्माणं राजसूयस्य दर्शनम् ॥ २४२ ॥
उद्वाहं राजकन्यानां सहस्राणाञ्च षोड़श ।
दशाधिकशतस्यापि शत्रूणां दमनन्तथा ॥ २४३ ॥
मित्रोपकरणञ्चैव वाराणस्याञ्च दाहनम् ।
हरस्य जृम्भणं तत्र बाणस्य भुजकर्त्तनम् ॥ २४४ ॥
पारिजातस्य हरणं यद् यत् कर्मान्यदेव च ।
गमनं तीर्थयात्रायां मुनिसङ्गप्रदर्शनम् ॥ २४५ ॥
सम्भाषणञ्च बन्धूनां यज्ञसम्पादनं पितुः ।
शुभक्षणे पुनस्तत्र त्वया सार्द्धं प्रदर्शनम् ॥ २४६ ॥
करिष्यामि च तत्रैव गोपिकानाञ्च दर्शनम् ।
तुभ्यमाध्यात्मिकं दत्त्वा पुनः सत्यं त्वया सह ॥ २४७ ॥
दिवानिशमविच्छेदो मया सार्द्धमतःपरम् ।
भविष्यति त्वया सार्द्धं पुनरागमनं व्रजे ॥ २४८ ॥
काले विच्छेदसमये वर्षाणां शतके सति ।

नित्यं संमीलनं स्वप्ने भविष्यति त्वया सह ॥२४९॥
गतस्य द्वारकां त्वत्तो मम नारायणांशस्य।
शतवर्षान्तरे साध्व्यास्त्यैव सुनिश्चितम् ॥ २५० ॥
भविष्यति पुनस्तत्र वने वासस्त्वया सह।
पुनः पित्रोश्च गोपीनां शोकसम्मार्जनं परम् ॥२५१॥
कृत्वा भारावतरणं पुनरागमनं मम।
त्वया सहापि गोलोकं गोपैर्गोपीभिरेव च ॥२५२॥
मम नारायणांशस्य वाण्या च पद्मया सह।
वैकुण्ठगमनं राधे नित्यस्य परमात्मनः ॥ २५३ ॥
श्वेतद्वीपे धर्म्मगेहमंशानाञ्च भविष्यति।
देवानाञ्चैव देवीनामंशा यास्यन्ति चाव्ययम्।
पुनः संस्थितिरत्रैव गोलोके मे त्वया सह ॥२५४॥
इत्येवं कथितं सर्वं भविष्यञ्च शुभाशुभम्।
मया निरूपितं यत्तत् कान्ते केन निवार्य्यते ॥२५५॥
इत्येवमुक्त्वा श्रीकृष्णः कृत्वा राधां स्ववक्षसि।
तस्थौ तस्थुः सुराः सर्वे सुरपत्न्यश्च विस्मिताः ॥२५६॥
उवाच श्रीहरिर्द्देवान् देवीश्च समयोचितम्।
देवा गच्छत कार्य्यार्थं स्वालयं विषयोचितम् ॥२५७॥
गच्छ पार्वति कैलासं सुताभ्यां स्वामिना सह।
मया नियोजितं कर्म्म सर्वं काले भविष्यति ॥२५८॥
भविता कलया जन्म सर्वेषाञ्च व्रजेश्वरि।
क्षुद्राणाञ्चैव महतां देवं लम्बोदरं विना ॥ २५९ ॥
प्रणम्य श्रीहरिं देवाः स्वालयं प्रययुर्मुदा।
लक्ष्मीं सरस्वतीं भक्त्या प्रणम्य पुरुषोत्तमम् ॥ २६० ॥

हरिणा योजितं कर्म्म कर्त्तुं व्यग्रा महीं ययुः ।
भर्त्रा निरूपितं स्थानं देवानामपि दुर्ल्लभम् ॥ २६१ ॥
उवाच राधिकां कृष्णो वृषभानुगृहं व्रज ।
गोपगोपीसमूहैश्च सह पूर्व्वनिरूपितैः ॥ २६२ ॥
अहं यास्यामि मथुरां वसुदेवालये प्रिये ।
पश्चात् कंसभयव्याजाद् गोकुलं तव सन्निधिम् ॥२६३॥
राधा प्रणम्य श्रीकृष्णं रक्तपङ्कजलोचना ।
भृशं रुरोद पुरतः प्रेमविच्छेदकातरा ॥ २६४ ॥
स्थायं स्थायं क्वचित् यान्ती गत्वा गत्वा पुनः पुनः ।
पुनः पुनः समागत्य दर्शं दर्शं हरेर्मुखम् ॥ २६५ ॥
पपौ चक्षुश्चकोराभ्यां निमेषरहिता सती ।
शरत्पार्व्वणचन्द्राभसुधापूर्णं प्रभोर्मुखम् ॥ २६६ ॥
ततः प्रदक्षिणीकृत्य सप्तधा परमेश्वरी ।
प्रणम्य सप्तधा चैव पुनस्तस्थौ हरेः पुरः ॥ २६७ ॥
आजग्मुर्गोपिकानाञ्च त्रिःसप्तशतकोटयः ।
आजगाम च गोपानां समूहः कोटिसंख्यकः ॥२६८॥
गोपानां गोपिकानाञ्च समूहैः सह राधिका ।
पुनः प्रणम्य तं कृष्णं तत्र तस्थौ च नारद ॥ २६९ ॥
त्रयस्त्रिंशद्वयस्याभिर्गोपीभिः सह सुन्दरी ।
गोपानाञ्च समूहैस्तु प्रणम्य प्रययौ महीम् ॥ २७० ॥
हरिणा योजितं स्थानं प्रजग्मुर्नन्दगोकुलम् ।
वृषभानुगृहं राधा गोप्यो गोपगृहं ययुः ॥ २७१ ॥
मह्यीं गतायां राधायां गोपीभिः सह गोपकैः ।
बभूव श्रीहरिः सद्यः पृथिवीगमनोन्मुखः ॥ २७२ ॥

सम्भाष्य गोपान् गोपीश्च नियोज्य स्वीयकर्म्मणि ।
मनोयायी जगन्नाथो जगाम मथुरां हरिः ॥ २७३ ॥
पूर्वं यद्यदपत्यञ्च देवकीवसुदेवयोः ।
बभूव सद्यस्तत् कंसः पुत्रषट्कं जघान ह ॥ २७४ ॥
शेषांशं सप्तमं गर्भं माया चाकृष्य गोकुले ।
निधाय रोहिणीगर्भे जगाम चाज्ञया हरेः ॥ २७५ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः ।

नारद उवाच ।

तस्यातिरिक्तं कृष्णस्य महत्पुण्यकरं परम् ।
वद जन्म महाभाग जन्ममृत्युजरापहम् ॥ १ ॥
वसुदेवः कस्य पुत्रः कस्य कन्या च देवकी ।
को वा वसुदेवकी वा विवाहश्च तयोर्वद ॥ २ ॥
कथं जघान कंसस्तत्पुत्रषट्कं सुदारुणः ।
कस्मिन् दिने हरेर्जन्म श्रोतुमिच्छामि तद्वद ॥ ३ ॥
नारायण उवाच ।
कश्यपो वसुदेवश्च देवमाता च देवकी ।
पूर्वपुण्यफलेनैव प्रापतुः श्रीहरिं सुतम् ॥ ४ ॥

देवमीढ़ान्मारिषायां वसुदेवो महानभूत् ।
यस्योद्भवे देवसङ्घो वादयामास दुन्दुभिम् ॥ ५ ॥
आनकश्च महाहृष्टो श्रीहरेर्जनकश्च तम् ।
सन्तः पुरातनास्तेन वदन्त्यानकदुन्दुभिम् ॥ ६ ॥
आहुकस्य सुतः श्रीमान् यदुवंशसमुद्भवः ।
देवको ज्ञानसिन्धुश्च तस्य कन्या च देवकी ॥ ७ ॥
गर्गो यदुकुलाचार्य्यः सम्बन्धं वसुना सह ।
देवक्याः कारयामास विधिवच्च यथोचितम् ॥ ८ ॥
महासम्भृतसम्भारो वसुदेवाय सुत्तणे ।
उद्वाहे देवकीं तस्मै देवकः प्रददौ किल ॥ ९ ॥
अश्वानाञ्च सहस्राणि स्वर्णपात्राणि नारद ।
सालङ्कृतानां दासीनां शतानि सुन्दराणि च ॥१०॥
नानाविधानि द्रव्याणि रत्नानि विविधानि च ।
मणिश्रेष्ठानि वस्त्राणि रत्नपात्राणि नारद ॥ ११ ॥
सद्रत्नभूषितां कन्यां शतचन्द्रसमप्रभाम् ।
त्रैलोक्यमोहिनीं धन्यां मान्यां श्रेष्ठाञ्च योषिताम् ॥१२
रूपाधारां गुणाधारां सस्मितां वक्रलोचनाम् ।
नवसङ्गमयोग्याञ्च प्रोद्भिन्ननवयौवनाम् ।
तां गृहीत्वा रथे कृत्वा प्रस्थानमकरोत्तदा ॥ १३ ॥
कंसो हृष्टः सहचरो भगिन्युद्वाहकर्म्मणि ।
तस्या रथसमीपेचागच्छत् कंसोऽपि तत्क्षणात् ॥१४॥
कंसं संबोध्य गगने वाग् बभूवाशरीरिणी ।
कथं हृष्टोऽसि राजेन्द्र शृणु सत्यवचो हितम् ।
देवक्या अष्टमो गर्भो मृत्युहेतुस्तवैव हि ॥ १५ ॥

श्रुत्वैवं देवकीं कंसः खड्गहस्तो महाबलः ।
दैववाक्याद्भयात् कोपात् पापिष्ठो हन्तुमुद्यतः ॥१६॥
तां हन्तुमुद्यतं दृष्ट्वा वसुदेवः सुपण्डितः ।
बोधयामास नीतिज्ञो नीतिशास्त्रविशारदः ॥१७॥

वसुदेव उवाच ।

राजनीतिं न जानासि शृणु मे वचनं हितम् ।
यशस्करञ्च दोषघ्नं शास्त्रोक्तं समयोचितम् ॥ १८ ॥
अस्या एवाष्टमात् गर्भात् मृत्युश्चेत् तव भूमिप ।
इमां हत्वा हि दुष्कीर्त्तिं करोषि नरकं च किम् ॥१९॥
बधे च क्षुद्रजन्तूनां हिंसकानाञ्च पण्डितः ।
कार्षापणं समुत्सृज्य मृत्युकाले प्रमुच्यते ॥ २० ॥
अहिंसकानां क्षुद्राणां बधे शतगुणं ध्रुवम् ।
प्रायश्चित्तं मृत्युकाले कथितं पद्मयोनिना ॥ २१ ॥
बधे विशिष्टजन्तूनां पश्वादीनाञ्च कामतः ।
ततः शतगुणं पापं निश्चितं मनुरब्रवीत् ।
नराणां म्लेच्छजातीनां बधे शतगुणं ततः ॥ २२ ॥
म्लेच्छानाञ्च शतानाञ्च यत् पापं लभते बधे ।
सच्छूद्रैकस्य च बधे तत् पापं लभते पुमान् ॥२३॥
सत् शूद्राणां शतानाञ्च यत् पापं लभते बधे ।
तत् पापं लभते नूनं गोबधेनैव निश्चितम् ॥२४॥
गवां दशगुणं पापं ब्राह्मणस्य बधे भवेत् ।
विप्रहत्यासमं पापं स्त्रीबधे लभते नरः ॥ २५ ॥
विशेषतो हि भगिनी पोष्या या शरणागता ।
स्त्रीहत्याशतपापञ्च भवेत् तस्या बधे नृप ॥ २६ ॥

तपो जपञ्च दानञ्च पूजनं तीर्थदर्शनम् ।
विप्राणां भोजनं होमं स्वर्गार्थं कुरुते नरः ॥ २७ ॥
जलबुद्बुदवत् सर्वं स्वप्नवद् भयदं भवम् ।
पश्यन्ति सततं सन्तो धर्मं कुर्वन्ति यत्नतः ॥ २८ ॥
भग्नीं च त्यज धर्मिष्ठ स्ववंशपद्मभास्कर ।
बुधाः कतिविधाः सन्ति सभायां पृच्छ तान् नृप ॥२९॥
अस्याश्चैवाष्टमे गर्भे यदपत्यं भवेन्मम ।
बध्वो तुभ्यं प्रदास्यामि तेन मे किं प्रयोजनम् ॥३०॥
अथवा यान्यपत्यानि भवन्ति ज्ञानिनां वर ।
तानि सर्वाणि दास्यामि त्वत्तो नैको वरः प्रियः ॥३१॥
भगिनीं त्यज राजेन्द्र कन्यातुल्यां प्रियां तव ।
मिष्टान्नपानदानेन वर्द्धितामनुजां सदा ॥ ३२ ॥
वसुदेववचः श्रुत्वा तत्याज भगिनीं नृपः ।
वसुदेवः प्रियां नीत्वा जगाम निजमन्दिरम् ॥३३॥
क्रमादपत्यषट्कञ्च यद् यज्जातञ्च नारद ।
ददौ तस्मै वसुः सत्यात् स जघान क्रमेण तान् ॥३४॥
देवक्याः सप्तमे गर्भे कंसो रक्षां ददौ भिया ।
रोहिणीजठरे माया तमाकृष्य ररक्ष च ॥ ३५ ॥
रक्षकाः कथयामासुर्गर्भस्रावो बभूव ह
तस्माद् बभूव भगवन्नाम्ना सङ्कर्षणः प्रभुः ॥ ३६ ॥
तस्या एवाष्टमो गर्भो वायुपूर्णो बभूव ह ॥ ३७ ॥
गते च नवमे मासि दशमे समुपस्थिते ।
दृष्टिं ददौ च गर्भे स भगवान् सर्वदर्शनः ॥ ३८ ॥
स्वयं रूपवती देवी सर्वासां योषितां वरा ।

बभूव दर्शनात् सद्यः सुन्दरी सा चतुर्गुणा ॥३९॥
ददर्श देवकीं कंसः प्रफुल्लवदनेक्षणाम्।
तेजसा प्रज्वलन्तीञ्च मायामिव दिशो दश ॥ ४० ॥
ज्योतिषां संहतिञ्चैव यथा मूर्त्तिमतीमिव।
दृष्ट्वा तामसुरेन्द्रश्च विस्मयं परमं ययौ । ४१ ॥
अस्माद्गर्भादपत्यञ्च मृत्युवीजं ममैव च।
इत्येवमुक्ता कंसश्च चक्रे रक्षां प्रयत्नतः।
देवकीं वसुदेवञ्च सप्तद्वारे ररक्ष च ॥ ४२ ॥
पूर्णे च दशमे मासि गर्भः पूर्णो बभूव ह।
बभूव सा चलन्मन्दा जड़रूपा च नारद । ४३ ।
गर्भे च वायुना पूर्णे निर्लिप्तो भगवान् स्वयम्।
हृत्पद्मदेशे देवक्या ह्यधिष्ठानं चकार ह ॥ ४४ ॥
सा विश्वम्भरगर्भा च मन्दिराभ्यन्तरे सती।
उवास जड़रूपा च क्लेशयुक्ता बभूव ह । ४५ ॥
उवास च क्षणं देवी क्षणमुत्थाय तिष्ठति।
क्षणं व्रजति पादैकं क्षणं स्वपिति तत्र वै ॥४६॥
दृष्ट्वा च देवकीं शीघ्रं वसुदेवो महामनाः।
प्रसूतिसमयं दृष्ट्वा सस्मार हरिमीश्वरम् ॥ ४७ ॥
रत्नप्रदीपसंयुक्तमन्दिरे सुमनोहरे।
स्थापयामास खड्गञ्च लौहं तोयं हुताशनम् ॥ ४८
मन्त्रज्ञञ्च नरञ्चैव बन्धुपत्नीर्भयाकुलः।
विद्वांसं ब्राह्मणञ्चैव ततो बन्धूंश्च सादरम् ॥ ४९ ॥
एतस्मिन्नन्तरे तस्यां रात्रौ द्विप्रहरे गते।
व्याप्तञ्च गगनं मेघैः क्षणद्युतिसमन्वितैः ॥ ५० ॥

ववुश्च वायवश्चेष्टा ययुर्निद्राश्च रक्षकाः ।
अचेष्टिताश्च शयने मृता इव विचेतनाः ॥ ५१ ॥
एतस्मिन्नन्तरे तत्राजग्मुस्त्रिदशेश्वराः ।
तुष्टुवुर्धर्म्मब्रह्मेशा गर्भस्थं परमेश्वरम् ॥ ५२ ॥

देवा ऊचुः ।

जगद्योनिरयोनिस्त्वमनन्तोऽव्यय एव च ।
ज्योतिःस्वरूपो ह्यनघः सगुणो निर्गुणो महान् ॥५३॥
भक्तानुरोधात् साकारो निराकारो निरङ्कुशः ।
स्वेच्छामयश्च सर्वेशः सर्वः सर्वगुणाश्रयः ॥ ५४ ॥
सुखदो दुःखदो दुर्गो दुर्जनान्तक एव च ।
निर्व्यूहो निखिलाधारो निःशङ्को निरुपद्रवः ॥ ५५ ॥
निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः ।
स्वात्मारामः पूर्णकामो निर्दोषो नित्य एव च ॥ ५६ ॥
सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः ।
वेदहेतुश्च वेदाश्च वेदाङ्गो वेदविद्विभुः ॥ ५७ ॥
इत्येवमुक्त्वा देवाश्च प्रणेमुश्च मुहुर्मुहुः ।
हर्षाश्रुलोचनाः सर्वे ववर्षुः कुसुमानि च ॥ ५८ ॥
द्विचत्वारिंशन्नामानि प्रातरुत्थाय यः पठेत् ।
दृढां भक्तिं हरेर्दास्यं लभते वाञ्छितं फलम् ॥ ५९ ॥
इति श्रीब्रह्मवैवर्त्ते ब्रह्मादिकृतश्रीकृष्णस्तोत्रम् ।

नारायण उवाच ।

इत्येवं स्तवनं कृत्वा देवास्ते स्वालयं ययुः ।
बभूव जलवृष्टिश्च निश्चेष्टा मथुरा पुरी ।
घोरान्धकारनिविड़ा बभूव यामिनी मुने ॥ ६० ॥

गते सप्तमुहूर्त्ते तु चाष्टमे समुपस्थिते ॥ ६१ ॥
वेदातिरिक्ते दुर्ज्ञेये सर्वोत्कृष्टे शुभेक्षणे ।
शुभग्रहैर्दृष्टलग्नेऽप्यदृष्टे चाशुभग्रहैः ॥ ६२ ॥
अर्द्धरात्रे समुत्पन्ने रोहिण्यामष्टमीतिथौ ।
जयन्तीयोगयुक्ते च चार्द्धचन्द्रोदये मुने ॥ ६३ ॥
दृष्ट्वा दृष्ट्वा क्षणं लग्नं भीताः सूर्य्यादयस्तथा ।
गमने क्रममुल्लङ्घ्य जग्मुर्मीनं शुभाशुभाः ॥ ६४ ॥
सुप्रसन्ना ग्रहाः सर्वे बभूवुस्तत्र संस्थिताः ।
एकादशस्थास्ते प्रीत्या मुहूर्त्तं धातुराज्ञया ॥ ६५ ॥
ववर्षुश्च जलधरा ववुर्वाताः सुशीतलाः ।
सुप्रसन्ना च पृथिवी प्रसन्नाश्च दिशो दश ॥ ६६ ॥
ऋषयो मनवश्चैव यक्षगन्धर्वकिन्नराः ।
देवा देव्यश्च मुदिता नृतुश्चाप्सरोगणाः ॥ ६७ ॥
जगुर्गन्धर्वपतयो विद्याधर्य्यश्च नारद ।
सुखेन सुस्रुवुर्नद्यो जज्वलुश्चाग्नयो मुदा ॥ ६८ ॥
नेदुर्दुन्दुभयःस्वर्गे चानकाश्च मनोरमाः ।
प्रफुल्लपारिजातानां पुष्पवृष्टिर्बभूव ह ॥ ६९ ॥
जगाम सूतिकागेहं नारीरूपं विधाय भूः ।
जयशब्दः शङ्खशब्दो हरिशब्दो बभूवह ॥ ७० ॥
एतस्मिन्नन्तरे तत्र पपात देवकी सती ।
निःससार च वायुश्च देवकीजठरात्ततः ॥ ७१ ॥
तत्रैव भगवान् कृष्णो दिव्यरूपं विधाय च ।
हृत्पद्मकोषाद् देवक्या हरिराविर्बभूव ह ॥ ७२ ॥
अतीवकमनीयञ्च शरीरं सुमनोहरम् ।

द्विभुजं मुरलीहस्तं स्फुरन्मकरकुण्डलम् ॥ ७३ ॥
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ।
मणिरत्नेन्द्रसाराणां भूषणैश्च विभूषितम् ॥ ७४ ॥
नवीननीरदश्यामं शोभितं पीतवाससा ।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥ ७५ ॥
शरत्पार्वणचन्द्रास्यं बिम्बाधरमनोहरम् ।
मयूरपुच्छचूड़ञ्च सद्रत्नमुकुटोज्ज्वलम् ॥ ७६ ॥
त्रिभङ्गवक्रमध्यञ्च वनमालाविभूषितम् ।
श्रीवत्सवक्षसं चारुकौस्तुभेन विराजितम् ।
किशोरवयसं शान्तं कान्तं ब्रह्मेशयोः परम् ॥ ७७ ॥
ददर्श वसुदेवश्च देवकीपुरतो मुने ।
तुष्टाव परया भक्त्या विस्मयं परमं ययौ ॥ ७८ ॥
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ।
अश्रुपूर्णः सपुलको देवक्या च स्त्रिया सह ॥ ७९ ॥

वसुदेव उवाच ।

श्रीमन्तमिन्द्रियातीतमक्षरं निर्गुणं विभुम् ।
ध्यानासाध्यञ्च सर्वेषां परमात्मानमीश्वरम् ॥ ८० ॥
स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम् ।
निर्लिप्तं परमं ब्रह्म वीजरूपं सनातनम् ॥ ८१ ॥
स्थूलात् स्थूलतरं व्याप्तमतिसूक्ष्ममदर्शनम् ।
स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकम् ॥ ८२ ॥
शरीरवन्तं सगुणमशरीरं गुणोत्करम् ।
प्रकृतिं प्रकृतीशञ्च प्राकृतं प्रकृतेः परम् । ८३ ॥
सर्वेशं सर्वरूपञ्च सर्वान्तकरमव्ययम् ।

सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभो ॥ ८४ ॥
अनन्तः स्तवनेऽशक्तोऽशक्ता देवी सरस्वती ।
यं स्तोतुमसमर्थश्च पञ्चवक्त्रः षड़ाननः ॥ ८५ ॥
चतुर्मुखो वेदकर्त्ता यं स्तोतुमक्षमः सदा ।
गणेशो न समर्थश्च योगीन्द्राणां गुरोर्गुरुः ॥ ८६ ॥
ऋषयो देवताश्चैव मुनीन्द्रमनुमानवाः ।
स्वप्ने तेषामदृश्यश्च त्वामेवं किं स्तुवन्ति ते ॥ ८७ ॥
श्रुतयः स्तवनेऽशक्ताः किं स्तुवन्ति विपश्चितः ।
विहायैवं शरीरञ्च बालो भवितुमर्हसि ॥ ८८ ॥
वसुदेवकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः ।
भक्तिदास्यमवाप्नोति श्रीकृष्णचरणाम्बुजे ॥ ८९ ॥
विशिष्टपुत्त्रं लभते हरिदासं गुणान्वितम् ।
सङ्कटं निस्तरेत् तूर्णं शत्रुभीत्याः प्रमुच्यते ॥ ९० ॥
इति श्रीब्रह्मवैवर्त्ते वसुदेवकृतं श्रीकृष्णस्तोत्रम् ।

नारायण उवाच ।

वसुदेववचः श्रुत्वा तमुवाच हरिः स्वयम् ।
प्रसन्नवदनः श्रीमान् भक्तानुग्रहकातरः ॥ ९१ ॥

श्रीकृष्ण उवाच ।

तपसाञ्च फलेनैव पुत्त्रोऽहं तव साम्प्रतम् ।
वरं वृणुस्व भद्रन्ते भविष्यति न संशयः ॥ ९२ ॥
पुरा तपस्विनां श्रेष्ठः सुतपास्त्वं प्रजापतिः ।
पत्न्या सह तपस्विन्या तपसाराधितस्त्वया ॥ ९३ ॥
पुत्त्रो मत्सदृशस्तत्र दृष्ट्वा माञ्च वृतो वरः ।
मया दत्तो वरस्तुभ्यं मत्समो भविता सुतः ॥ ९४ ॥

दत्त्वा तुभ्यं वरं तात मनसालोच्य चिन्तितम् ।
मत्समो नास्ति भुवने पुत्रोऽहं तेन हेतुना ॥ ९५ ॥
तपसाञ्च प्रभावेण त्वमेव कश्यपः स्वयम् ।
सुतपा देवमातेयमदितिश्च पतिव्रता ॥ ९६ ॥
अधुना कश्यपांशस्त्वं वसुदेवः पिता मम ।
देवकी देवमातेयमदितेरंशसम्भवा ॥ ९७ ॥
त्वत्तोऽदित्यां वामनोऽहं पुत्रस्तेऽंशेन सम्भवः ।
अधुना परिपूर्णोऽहं पुत्रस्ते तपसः फलात् ॥ ९८ ॥
मां वा त्वं पुत्रभावेन ब्रह्मभावेन वा पुनः ।
मां प्राप्तोऽसि महाप्राज्ञ जीवन्मुक्तो भविष्यसि ॥ ९९ ॥
यशोदाभवनं शीघ्रं मां गृहीत्वा व्रजं व्रज ।
संस्थाप्य तत्र मां तात मायामादाय स्थापय ॥ १०० ॥
इत्युक्त्वा श्रीहरिस्तत्र बालरूपो बभूव ह ।
नग्नं भूमौ शयानञ्च ददर्श श्यामलं सुतम् ॥ १०१ ॥
दृष्ट्वा स बालकं तत्र मोहितो विष्णुमायया ।
किं वा कृतञ्च तन्द्रायामपूर्वं सूतिकागृहे ॥ १०२॥
इत्युक्त्वा वसुदेवश्च समालोच्य स्त्रिया सह ।
गृहीत्वा बालकं क्रोडे जगाम नन्दगोकुलम् ॥ १३० ॥
गत्वा नन्दव्रजं शीघ्रं विवेश सूतिकागृहम् ।
ददर्श शयने न्यस्तां यशोदां निद्रयान्विताम् ।
निद्रान्वितञ्च नन्दञ्च सर्वं तत्र गृहे स्थितम् ॥ १०४ ॥
ददर्श बालिकां नग्नां तप्तकाञ्चनसन्निभाम् ।
ईषद्धास्यप्रसन्नास्यां पश्यन्तीं गृहशेखरम् ॥ १०५ ॥
तां दृष्ट्वा वसुदेवश्च विस्मयं परमं ययौ ॥ १०६ ॥

संस्थाप्य तत्र पुत्रञ्च कन्यामादाय सत्वरम् ।
जगाम मथुरां वस्तः स्वकान्तासूतिकागृहम् ॥१०७॥
स्थापयामास तत्रैव महामायाञ्च बालिकाम् ।
रोरुद्यमानां तामेव दृष्ट्वा वस्ता च देवकी ॥ १०८ ॥
रोदनेनैव सा बाला बोधयामास रक्षकान् ।
उत्थाय रक्षकाः शीघ्रं जगृहुर्बालिकां तदा ॥ १०९ ॥
गृहीत्वा बालिकां ते च प्रजग्मुः कंससन्निधिम् ।
जगाम देवकी पश्चात् वसुदेवश्च शोकतः ॥ ११० ॥
दृष्ट्वा च बालिकां कंसो नातिहृष्टो महामुने ।
रोरुद्यमानां कल्याणीं तद्दया न बभूव ह ॥ १११ ॥
तां गृहीत्वा च पाषाणे हन्तुं यान्तं सुदारुणम् ।
ऊचतुर्वसुदेवश्च देवकी परमादरम् ॥ ११२ ॥
भो भो कंस नृपश्रेष्ठ नीतिशास्त्रविशारद ।
निबोध वाक्यं सत्यञ्च नीतियुक्तं मनोहरम् ॥ ११३ ॥
हत्वावयोः पुत्रषट्कं दया ते नास्ति बान्धव ।
अधुना चाष्टमे गर्भे बालिकामबलां मम ॥ ११४ ॥
हत्वा किं ते महैश्वर्य्यं भविष्यति महीतले ।
स्त्रीमेव हन्तुमबला किं क्षमा रणमूर्द्धनि ॥ ११५ ॥
इत्येवमुक्ता तं वसुर्देवकी च सभातले ।
ररोद पुरतस्तत्र कंसस्य च दुरात्मनः ॥ ११६ ॥
कंसस्तयोर्वचः श्रुत्वा तामुवाच सुदारुणः ।
शृणु वाक्यं मदीयञ्च निबोध बोधयामि ते ॥ ११७ ॥

कंस उवाच ।

तृणेन पर्वतं हन्तुं शक्तो धाता च दैवतः ।

कीटेन सिंहशार्दूलं मशकेन गजं तथा ॥ ११८ ॥
शिशुना च महावीरं महान्तं क्षुद्रजन्तुभिः ।
मूषिकेण च मार्जारं मण्डूकेन भुजङ्गमम् ॥ ११९ ॥
एवं जन्येन जनकं भक्ष्येणैव च भक्षकम् ।
वह्निना च जलं नष्टं वह्निं शुष्कतृणेन च ॥ १२० ॥
पीताः सप्त समुद्राश्च द्विजेनैकेन जह्नुना ।
धातुर्गतिर्विचित्रा च दुर्ज्ञेया भुवनत्रये ॥ १२१ ॥
दैवेन बालिका नष्टुं मां समर्था भविष्यति ।
बालिकाञ्च वधिष्यामि नात्र कालविचारणा ॥ १२२ ॥
इत्येवमुक्त्वा कंसश्च गृहीत्वा बालिकां तदा ।
हन्तुमारब्धवान् कंसस्तमुवाच वसुस्तदा ।
वृथा हिंसितवान् राजन् देहि बालां कृपानिधे ॥१२३
स तच्छ्रुत्वा विचारज्ञः कंसस्तुष्टो महामुने ।
संबोधयन्ती तत्रैव वागबभूवाशरीरिणी ॥ १२४ ॥
हे कंस हंसि कां मूढ़ न विज्ञाय विधेर्गतिम् ।
कृतचित्ते निहन्तास्ति काले व्यक्तो भविष्यति ॥१२५॥
श्रुत्वैवं दैववाणीञ्च तत्याज बालिकां नृपः ॥ १२६ ॥
वसुदेवो देवकी च तामादाय मुदान्वितः ।
जग्मतुः स्वगृहं तौ च कन्यां कृत्वा स्ववक्षसि ॥ १२७ ॥
मृतामिव पुनः प्राप्य ब्राह्मणेभ्यो ददौ धनम् ।
सा परा भगिनी विप्र कृष्णस्य परमात्मनः ।
एकानंशेन विख्याता पार्वत्यंशसमुद्भवा ॥ १२८ ॥
वसुस्तां द्वारकायान्तु रुक्मिण्युद्वाहकर्मणि ।
ददौ दुर्वाससे भक्त्या शङ्करांशाय भक्तितः ॥ १२९ ॥

एवं निगदितं सर्वं कृष्णजन्मानुकीर्त्तनम् ।
जन्ममृत्युजराविघ्नं सुखदं पुण्यदं मुने ॥ १३० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

---

नारद उवाच ।

जन्माष्टमीव्रतं ब्रूहि व्रतानां व्रतमुत्तमम् ।
फलं जयन्तीयोगस्य सामान्येन च साम्प्रतम् ॥ १ ॥
को वा दोषोऽप्यकरणे भोजने वा महामुने ।
उपवासफलं किंवा जयन्त्याञ्च सुसम्मतम् ॥ २ ॥
व्रतपूजाविधानञ्च संयमस्य च साम्प्रतम् ।
उपवासपारणयोः सुविचार्य्य वद प्रभो ॥ ३ ॥

नारायण उवाच ।

कृत्वा हविष्यं सप्तम्यां संयतः पारणे तथा ।
अरुणोदयवेलायां समुत्थाय परेऽहनि ॥ ४ ॥
प्रातःकृत्यं संविधाय स्नात्वा सङ्कल्पमाचरेत् ।
व्रतोपवासयोर्ब्रह्मन् श्रीकृष्णप्रीतिहेतुकम् ॥ ५ ॥
मन्वादिदिवसे प्राप्ते यत् फलं स्नानपूजनैः ।
फलं भाद्रपदेऽष्टम्यां भवेत् कोटिगुणं द्विज ॥ ६ ॥
तस्यां तिथौ वारिमात्रं पितॄणां यः प्रयच्छति ।
गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः ॥ ७ ॥

स्नात्वा नित्यक्रियां कृत्वा निर्माय सूतिकागृहम्।
लौहखड्गं वह्निजालैर्युक्तं रक्षकसङ्कुलैः॥ ८॥
तत्र द्रव्यं बहुविधं नाड़ीच्छेदनकर्त्तनम्।
धात्रीस्वरूपां नारीञ्च यत्नतः स्थापयेद् बुधः॥ ९॥
पूजाद्रव्याणि चारूणि सोपचाराणि षोड़श।
फलान्यष्टौ च मिष्टानि द्रव्याण्येव हि नारद॥ १०॥
जातीफलञ्च कक्कोलं दाड़िमं श्रीफलन्तथा।
नारिकेलञ्च जम्बीरं कुष्माण्डञ्च मनोहरम्॥ ११॥
आसनं वसनं पाद्यं मधुपर्कं तथैव च।
अर्घ्यमाचमनीयञ्च स्नानीयं शयनन्तथा॥ १२॥
गन्धपुष्पञ्च नैवेद्यं ताम्बूलमनुलेपनम्।
धूपदीपौ भूषणञ्च चोपचाराणि षोड़श॥ १३॥
पादप्रक्षालनं कृत्वा धृत्वा धौते च वाससी।
आचम्य चासने स्थित्वा स्वस्तिवाचनपूर्वकम्॥ १४॥
घटस्यारोपणं कृत्वा सम्पूज्य पञ्च देवताः।
घटे ह्यावाहनं कृत्वा श्रीकृष्णं परमेश्वरम्॥ १५॥
वसुदेवं देवकीञ्च यशोदां नन्दमेव च।
रोहिणीं बलदेवञ्च षष्ठीदेवीं वसुन्धराम्॥ १६॥
रोहिणीं ब्राह्मणीञ्चैव ह्यष्टमीं स्थानदेवताम्।
अश्वत्थाम्ना सह बलिं हनूमन्तं विभीषणम्॥ १७॥
कृपं परशुरामञ्च व्यासदेवं मृकण्डकम्।
सर्व्वस्यावाहनं कृत्वा ध्यानं कुर्य्याद्धरेस्तथा॥ १८॥
पुष्पकं मस्तके न्यस्य पुनर्ध्यायेद्विचक्षणः।
ध्यानञ्च सामवेदोक्तं शृणु वक्ष्यामि नारद।

ब्रह्मणा कथितं पूर्वं कुमाराय महात्मने ॥ १९ ॥
बालं नीलाम्बुदाभमतिशयरुचिरं स्मेरवक्त्राम्बुजाभं
ब्रह्मेशानन्तधर्मैःकतिकतिदिवसैः स्तूयमानं परं यत्।
ध्यानासाध्यमृषीन्द्रैर्मुनिमनुजवरैः सिद्धसङ्घैरसाध्यं
योगीन्द्राणामचिन्त्यमतिशयमतुलं साक्षिरूपं भजेऽहम् ॥२०॥
ध्यात्वा पुष्पञ्च दत्त्वा तु तत् सर्वं मन्त्रपूर्वकम् ।
दत्त्वा व्रती व्रतं कुर्य्यात् शृणु मन्त्रं यथाक्रमम् ॥ २१ ॥
आसनं सर्वशोभाढ्यं सद्रत्नमणिनिर्मितम् ।
विचित्रितञ्च चित्रेण गृह्यतां शोभनं हरे ॥ २२ ॥
वसनं वह्निशुद्धञ्च निर्मितं विश्वकर्म्मणा ।
प्रतप्तस्वर्णखचितं वसनं गृह्यतां हरे ॥ २३ ॥
पादप्रक्षालनार्थञ्च स्वर्णपात्रस्थितं जलम् ।
पवित्रं निर्म्मलं चारु पुष्पं पाद्यञ्च गृह्यताम् ॥ २४ ॥
मधु सर्पिर्दधि क्षीरं शर्करासंयुतं परम् ।
स्वर्णपात्रस्थितं देयं स्नानार्थं गृह्यतां हरे ॥ २५ ॥
दूर्वाक्षतं शुक्लपुष्पं स्वच्छतोयसमन्वितम् ।
चन्दनागुरुकस्तूरीसहितं गृह्यतां हरे ॥ २६ ॥
सुस्वादु स्वच्छतोयञ्च वासितं गन्धवस्तुना ।
शुद्धमाचमनार्हञ्च गृह्यतां परमेश्वर ॥ २७ ॥
गन्धद्रव्यसमायुक्तं विष्णुतैलं सुवासितम् ।
आमलक्या द्रवञ्चैव स्नानीयं गृह्यतां हरे ॥ २८ ॥
सद्रत्नमणिसारेण रचितां सुमनोहराम् ।
छादितां सूक्ष्मवस्त्रेण शय्याञ्च गृह्यतां हरे ॥ २९ ॥
सचूर्णो वृक्षभेदानां मूलानां द्रवसंयुतः ।

कस्तूरीरससंयुक्तो गन्धोऽयं गृह्यतां हरे ॥ ३० ॥
पुष्पं सुगन्धिसंयुक्तं वनस्पतिसमुद्भवम् ।
सुप्रियं सर्वदेवानां गृह्यतां परमेश्वर ॥ ३१ ॥
शर्करास्वस्तिकाक्तञ्च मिष्टद्रव्यसमन्वितम् ।
सुपक्वफलसंयुक्तं नैवेद्यं गृह्यतां हरे ॥ ३२ ॥
शीतलं शर्करायुक्तं चीरं स्वादु सुपक्वकम् ।
लड्डुकं मोदकञ्चैव सर्पिः चीरं गुड़ं मधु ।
नवोद्धृतं दधि तक्रं नैवेद्यं गृह्यतां हरे ॥ ३३ ॥
ताम्बूलं भोगसारञ्च कर्पूरादिसमन्वितम् ।
मया निवेदितं भक्त्या गृह्यतां परमेश्वर ॥ ३४ ॥
चन्दनागुरुकस्तूरीकुङ्कुकद्रवसंयुतम् ।
आवीरचूर्णं रुचिरं गृह्यतां परमेश्वर ॥ ३५ ॥
तरुभेदरसोत्कर्षो गन्धयुक्ताग्निना सह ।
सुप्रियः सर्वदेवानां धूपोऽयं गृह्यतां हरे ॥ ३६ ॥
घोरान्धकारनाशैकहेतुरेव शुभावहः ।
सुप्रदीपो दीप्तिकरो दीपोऽयं गृह्यतां हरे ॥ ३७ ॥
पवित्रं निर्म्मलं तोयं कर्पूरादिसुवासितम् ।
जीवनं सर्वजीवानां पानार्थं गृह्यतां हरे ॥ ३८ ॥
नानापुष्पसमायुक्तं ग्रथितं सूक्ष्मतन्तुना ।
शरीरभूषणवरं माल्यञ्च प्रतिगृह्यताम् ॥ ३९ ॥
दत्त्वा देयानि द्रव्याणि पूजोपयोगितानि च ।
व्रतस्थानश्रितं द्रव्यं हरये देयमेव च ॥ ४० ॥
फलानि तरुबीजानि स्वादूनि सुन्दराणि च ।
वंशवृद्धिकराण्येव गृह्यन्तां परमेश्वर ॥ ४१ ॥

आवाहितांश्च देवांश्च प्रत्येकं पूजयेद् व्रती ।
संपूज्य भक्तिभावेन दद्यात् पुष्पाञ्जलित्रयम् ॥ ४२ ॥
सुनन्दनन्दकुमुदान् गोपान् गोपीश्च राधिकाम् ।
गणेशं कार्त्तिकेयञ्च ब्रह्माणञ्च शिवं शिवाम् ॥ ४३ ॥
लक्ष्मीं सरस्वतीञ्चैव दिक्पालांश्च ग्रहांस्तथा ।
शेषं सुदर्शनञ्चैव पार्षदप्रवरांस्तथा ॥ ४४ ॥
संपूज्य सर्वदेवांश्च प्रणम्य दण्डवद् भुवि ।
ब्राह्मणेभ्यश्च नैवेद्यं दत्त्वा दद्याच्च दक्षिणाम् ॥४५॥
कथाञ्च जन्माध्यायोक्तां शृणुयाद्भक्तिभावतः ।
तदा कुशासने स्थित्वा कुर्य्याद् जागरणं व्रती ॥४६॥
प्रभाते चाह्निकं कृत्वा संपूज्य श्रीहरिं मुदा ।
ब्राह्मणान् भोजयित्वा च कुर्य्यात् श्रीहरिकीर्त्तनम् ॥४७

नारद उवाच ।

व्रतकालव्यवस्थाञ्च वेदोक्तां सर्वसम्मताम् ।
वेदार्थञ्च समालोच्य संहिताञ्च पुरातनीम् ॥४८॥
उपवासे जागरणे व्रते वा किं फलं भवेत् ।
किं वा पापं तत्र भुक्त्वा वद वेदविदां वर ॥ ४९ ॥

नारायण उवाच ।

अष्टमीपादमेकन्तु रात्रार्द्धे यदि दृश्यते ।
स एव मुख्यकालश्च तत्र जातः स्वयं हरिः ॥ ५० ॥
जयं पुण्यञ्च कुरुते जयन्ती तेन सा स्मृता ।
तत्रोपोष्य व्रतं कृत्वा कुर्य्याद् जागरणं बुधः ॥ ५१ ॥
सर्वापवादः कालोऽयं प्रधानः सर्वसम्मतः ।
इति वेदविदां वाणी चेत्युक्ता वेधसा पुरा ॥ ५२ ॥

तत्र जागरणं कृत्वा यश्चोपोष्य व्रतं चरेत् ।
कोटिजन्मार्जितात् पापान्मुच्यते नात्र संशयः ॥ ५३ ॥
वर्जनीया प्रयत्नेन सप्तमीसहिताष्टमी ।
सा सर्चापि न कर्त्तव्या सप्तमी सहिताष्टमी ॥ ५४ ॥
अविद्धायान्तु ऋचायां जातो देवकीनन्दनः ।
वेदवेदाङ्गगुप्ते च विशिष्टे मङ्गले क्षणे ।
व्यतीते रोहिणीऋचे व्रती कुर्य्याच्च पारणम् ॥ ५५ ॥
तिथ्यन्ते च हरिं स्मृत्वा कृत्वा देवासुरार्चनम् ।
पारणं पावनं पुंसां सर्वपापप्रणाशनम् ॥ ५६ ॥
उपवासाङ्गभूतञ्च फलदं शुद्धिकारणम् ।
सर्वेष्वेवोपवासेषु दिवापारणमिष्यते ॥ ५७ ॥
अन्यथा फलहानिः स्याद् कृते धारणपारणे ॥ ५८ ॥
न रात्रौ पारणं कुर्य्यादृते वै रोहणीव्रतात् ।
निशायां पारणं कुर्य्याद् वर्जयित्वा महानिशाम् ॥५९॥
पूर्वाह्णे पारणं शस्तं कृत्वा विप्रसुरार्चनम् ।
सर्वेषां सम्मतं कुर्य्याद् व्रते वै रोहिणीव्रतम् ॥ ६० ॥
बुधसोमसमायुक्ता जयन्ती यदि लभ्यते ।
न कुर्य्याद् गर्भवासञ्च तत्र कृत्वा व्रतं व्रती ॥ ६१ ॥
उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
भवेद् बुधेन्दुसंयुक्ता प्राजापत्यर्चसंयुता ॥ ६२ ॥
अपि वर्षशतेनापि लभ्यते वा न लभ्यते ।
व्रती च तद् व्रतं कृत्वा पुंसां कोटीः समुद्धरेत् ॥ ६३ ॥
नृणां विना व्रतेनापि भक्तानां हीनसम्पदाम् ।
कृतेनेवोपवासेन प्रीतो भवति माधवः ॥ ६४ ॥

भक्त्या नानोपचारेण रात्रौ जागरणेन च ।
फलं ददाति दैत्यारिर्जयन्तीव्रतसम्भवम् ॥ ६५ ॥
वित्तशाठ्यमकुर्वाणः सम्यक् फलमवाप्नुयात् ।
कुर्वाणः वित्तशाठ्यञ्च लभते सदृशं फलम् ॥ ६६ ॥
अष्टम्यामथ रोहिण्यां न कुर्यात् पारणं बुधः ।
हन्यात् पूर्वकृतं पुण्यमुपवासार्जितं फलम् ॥ ६७ ॥
तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम् ।
तस्मात् प्रयत्नतः कुर्य्यात् तिथिभान्ते च पारणम् ॥६८॥
महानिशायां प्राप्तायां तिथिभान्तं यदा भवेत् ।
तृतीयेऽह्नि मुनिश्रेष्ठ पारणं कुरुते व्रती ॥ ६९ ॥
षण्मुहूर्त्ते व्यतीते तु रात्रावेव महानिशा ।
लभते ब्रह्महत्याञ्च तत्र भुक्त्वा च नारद ॥ ७० ॥
गोमांसविण्मूत्रसमं ताम्बूलञ्च फलं जलम् ।
पुंसामभक्ष्यं शुद्धायामोदनस्यापि का कथा ॥ ७१ ॥
त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् ।
दण्डानां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते ॥ ७२ ॥
जन्माष्टम्याञ्च शुद्धायां कृत्वा जागरणं व्रतम् ।
शतजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥ ७३ ॥
जन्माष्टम्याञ्च शुद्धायामुपोष्य केवलं नरः ।
अश्वमेधफलं तस्य व्रतं जागरणं विना ॥ ७४ ॥
यद् बाल्ये यच्च कौमारे यौवने यच्च वार्द्धके ।
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥ ७५ ॥
श्रीकृष्णजन्मदिवसे यश्च भुङ्क्ते नराधमः ।
स भवेन्मातृगामी च ब्रह्महत्याशतं लभेत् ॥ ७६ ॥

कोटिजन्मार्जितं पुण्यं तस्य नश्यति निश्चितम् ।
अनर्हश्चाशुचिः शश्वत् दैवे पैत्रे च कर्मणि ॥ ७७ ॥
अन्ते वसेत् कालसूत्रे यावच्चन्द्रदिवाकरौ ।
क्रिमिभिः शूलतुल्यैश्च तीक्ष्णदंष्ट्रैश्च भक्षितः ॥ ७८ ॥
पापी ततः समुत्थाय भारते जन्म चेल्लभेत् ।
षष्टिवर्षसहस्राणि विष्ठायाञ्च क्रिमिर्भवेत् ॥ ७९ ॥
गृध्रः कोटिसहस्राणि शतजन्मानि शूकरः ।
श्वापदं शतजन्मानि शृगालः शतजन्मसु ।
सप्तजन्मसु सर्पश्च काकश्च सप्तजन्मसु ॥ ८० ॥
ततो भवेन्नरो मूको गलत्कुष्ठी सदातुरः ।
ततो भवेत् पशुघ्नश्च व्यालग्राही ततो भवेत् ॥ ८१ ॥
तदन्ते च भवेद्दस्युर्धर्महीनो नरघ्नकः ॥ ८२ ॥
ततो भवेत् स रजकस्तैलकारस्ततो भवेत् ।
ततो भवेद्देवलश्च ब्राह्मणश्च सदाशुचिः ॥ ८३ ॥
उपवासासमर्थश्चेदेकं विप्रञ्च भोजयेत् ।
तावद्धनानि वा दद्याद् यद्भुक्तं द्विगुणं भवेत् ॥ ८४
सहस्रसम्मितां देवीं जपेद् वा प्राणसंयमम् ।
कुर्य्याद् द्वादशसंख्याकान् यथार्थं तद् व्रते नरः ॥८५॥
इत्येवं कथितं वत्स श्रुतं यद्धर्मवक्त्रतः ।
व्रतोपवासपूजानां विधानमष्टमे च यत् ॥ ८६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे जन्माष्टमीव्रतपूजोपवास-
निरूपणं नामाष्टमोऽध्यायः ।

———

## नवमोऽध्यायः ।

---

नारद उवाच ।

संस्थाप्य गोकुले कृष्णं यशोदामन्दिरे वसुः ।
जगाम स्वगृहं नन्दः किं चकार सुतोत्सवम् ॥ १ ॥
किं चकार हरिस्तत्र कतिवर्षस्थितिर्विभोः ।
बालक्रीड़नकं तस्य वर्णय क्रमशः प्रभो ॥ २ ॥
पुरा कृता या प्रतिज्ञा गोलोके राधया सह ।
तत् कृतं केन विधिना प्रतिज्ञापालनं वने ॥ ३ ॥
कीदृक् वृन्दावनं रासमण्डलं किंविधं वद ।
रासक्रीड़ां जलक्रीड़ां संव्यस्य वर्णय प्रभो ॥ ४ ॥
नन्दस्तपः किं चकार यशोदा चाथ रोहिणी ।
हरेः पूर्वञ्च हलिनः कुत्र जन्म बभूव ह ॥ ५ ॥
पीयूषखण्डमाख्यानमपूर्वं श्रीहरेः स्मृतम् ।
विशेषतः कविमुखे काव्यं नूत्नं पदे पदे ॥ ६ ॥
स्वरासमण्डलक्रीड़ां वर्णयस्व त्वमेव च ।
परोक्षवर्णनं काव्यं प्रशस्तं दृष्टवर्णनम् ॥ ७ ॥
श्रीकृष्णो भगवान् साक्षाद् योगीन्द्राणां गुरोर्गुरुः ।
यो यस्यांशः स तु जनस्तस्यैव सुखतः सुखी ॥ ८ ॥
त्वयैव वर्णितौ पादौ विलीनौ तु युवां हरेः ।
साक्षाद् गोलोकनाथांशस्त्वमेव तत्समो महान् ॥ ९ ॥

नारायण उवाच।

ब्रह्मा शेषविघ्नेशाः कूर्मो धर्मोऽयमेव च।
मत्स्य कार्त्तिकेयश्च श्रीकृष्णांशा वयं नव। १०।
अहो गोलोकनाथस्य महिमा केन वर्ण्यते।
यं स्वयं नो विजानीमो न वेदाः किं विपश्चितः॥११॥
शूकरो वामनः कल्की बौद्धः कपिलमीनकौ।
एते चांशाः कलाश्चान्ये सन्त्येव कतिधा मुने॥ १२।
पूर्णो नृसिंहो रामश्च श्वेतद्वीपविराट् विभुः।
परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम्॥ १३॥
वैकुण्ठे कमलाकान्तो रूपभेदाच्चतुर्भुजः।
गोलोके गोकुले राधाकान्तोऽयं द्विभुजः स्वयम्।१४॥
अस्यैव तेजो नित्यञ्च चित्ते कुर्वन्ति योगिनः।
भक्ताः पादाम्बुजं तेजः कुतस्तेजस्विनं विना॥१५॥
शृणु विप्र वर्णयामि यशोदानन्दयोस्तपः।
रोहिण्याश्च यतो हेतोर्दृदृशुस्ते हरेर्मुखम्॥ १६॥
वसूनां प्रवरो नन्दो नाम्ना द्रोणस्तपोधनः।
तस्य पत्नी धरा साध्वी यशोदा सा तपस्विनी॥१७॥
रोहिणी सर्पमाता च कद्रुश्च सर्पकारिणी।
एतेषां जन्मचरितं निबोध कथयामि ते॥ १८॥
एकदा च धराद्रोणौ पर्वते गन्धमादने।
पुण्यदे भारते वर्षे गौतमाश्रमसन्निधौ॥ १९।
चक्रतुश्च तपस्तत्र वर्षाणामयुतं मुने।
कृष्णस्य दर्शनार्थञ्च निर्जने सुप्रभातटे।
न ददर्श हरिं द्रोणो धरा चैव तपस्विनी॥ २०॥

कृत्वाग्निकुण्डं वैराग्यात् प्रवेष्टुं समुपस्थितौ ॥ २१ ॥
तौ मर्त्तुकामौ दृष्ट्वा च वाग् बभूवाशरीरिणी ।
दृक्षथः श्रीहरिं पृथ्व्यां गोकुले पुत्त्ररूपिणम् ॥ २२ ॥
जन्मान्तरे वसुश्रेष्ठ दुर्दर्शं योगिनां विभुम् ।
ध्यानासाध्यञ्च विदुषां ब्रह्मादीनाञ्च वन्दितम् ॥२३॥
श्रुत्वैवं तद्वराद्‌द्रोणौ जग्मतुः स्वालयं सुखात् ।
लब्धा तु भारते जन्म दृष्टं ताभ्यां हरेर्मुखम् ॥ २४ ॥
यशोदानन्दयोरेव कथितं चरितं तव ।
सुगोप्यं देवतानाञ्च रोहिणीचरितं शृणु ॥ २५ ॥
एकदा देवतामाता पुष्पोत्सवदिने सती ।
विज्ञापनञ्चरद्वारा चकार कश्यपं मुने ॥ २६ ॥
सुस्नाता सुन्दरी देवी रत्नालङ्कारभूषिता ।
चकार वेशं विविधं ददर्श दर्पणे मुखम् ॥ २७ ॥
कस्तूरीविन्दुना सार्द्धं सिन्दूरविन्दुसंयुतम् ।
रत्नकुण्डलशोभाढ्यं पत्राभरणभूषितम् ॥ २८ ॥
गजमौक्तिकसंयुक्तं नासाग्रं सुमनोहरम् ।
शरत्पार्वणचन्द्रास्यं शरत्पङ्कजलोचनम् ।
वक्रभ्रूभङ्गिसंयुक्तं विचित्रकज्जलोज्ज्वलम् ॥ २९ ॥
पक्वदाड़िम्बवीजाभदन्तराजिविराजितम् ।
पक्वविम्बाधरौष्ठञ्च सस्मितं सुन्दरं सदा ॥ ३० ॥
प्रतीवकमनीयञ्च मुनीन्द्रचित्तमोहनम् ॥ ३१ ॥
एवम्भूतं मुखं दृष्ट्वा सुन्दरी स्वगृहे स्थिता ।
पश्यन्ती पतिमार्गञ्च कामबाणप्रपीड़िता ॥ ३२ ॥
शुश्राव वार्त्तामदितिः कश्यपं कद्रुसंयुतम् ।

रसभावसमारम्भे तस्या वक्षःस्थले स्थितम् ॥ ३३ ॥
श्रुत्वा चुकोप साध्वी सा हताशा रतिकातरा ।
न शशाप पतिं प्रेम्णा शशाप सर्पमातरम् ॥ ३४ ॥
न देवालययोग्या सा धर्म्मिष्ठा धर्म्मनाशिनी ।
दूरं गच्छतु स्वर्लोकाद् यातु योनिञ्च मानवीम् ॥ ३५ ॥
श्रुत्वैवं सा चरद्दारा शशाप देवमातरम् ।
सा चैवं मानवीं योनिं यातु मर्त्ये जरायुताम् ॥ ३६ ॥
कश्यपो बोधयामास कद्रुञ्च सर्पमातरम् ।
काले यास्यसि मर्त्यञ्च मया सह शुचिस्मिते ।
त्यज भीतिं लभ मुदं द्रक्ष्यसि श्रीहरेर्मुखम् ॥ ३७ ॥
एवमुक्त्वा कश्यपश्च प्रजगामादितेर्गृहम् ।
वाञ्छां पूर्णाञ्च तस्याश्च चकार भगवान् विभुः ॥ ३८ ॥
ऋतौ तत्र महेन्द्रश्च बभूव ह सुरर्षभः ॥ ३९ ॥
अदितिर्देवकी चैव सर्पमाता च रोहिणी ।
कश्यपो वसुदेवश्च श्रीकृष्णजनको महान् ॥ ४० ॥
रहस्यं गोपनीयञ्च सर्वं निगदितं मुने ।
अधुना बलदेवस्य जन्माख्यानं मुने शृणु ।
अनन्तस्याप्रमेयस्य सहस्रशिरसः प्रभोः ॥ ४१ ॥
रोहिणी वसुदेवस्य भार्य्यारत्नञ्च प्रेयसी ॥ ४२ ॥
जगाम गोकुलं साध्वी वसुदेवाज्ञया मुने ।
सङ्कर्षणस्य रक्षार्थं कंसभीता पलायिता ॥ ४३ ॥
देवक्याः सप्तमं गर्भं माया कृष्णाज्ञया तदा ।
रोहिण्या जठरे तत्र स्थापयामास गोकुले ।
संस्थाप्य च तदा गर्भं कैलासं सा जगाम ह ॥ ४४ ॥

दिनान्तरे कतिपये रोहिणी नन्दमन्दिरे ॥ ४५ ॥
सुषाव पुत्रं कृष्णांशं तप्तरौप्याभमीश्वरम्।
ईषद्धास्यं प्रसन्नास्यं ज्वलन्तं ब्रह्मतेजसा ॥ ४६ ॥
तस्यैव जन्ममात्रेण देवाः प्रमुदिरे तदा।
स्वर्गे दुन्दुभयो नेदुरानका मुरजादयः।
जयशब्दं शङ्खशब्दं चक्रुर्देवा मुदान्विताः ॥ ४७ ॥
नन्दो हृष्टो ब्राह्मणेभ्यो धनं बहुविधं ददौ।
चिच्छेद नाड़ीं धात्री च स्नापयामास बालकम् ॥४८॥
जयशब्दं जगुर्गोप्यः सर्वाभरणभूषिताः।
परपुत्रोत्सवं नन्दश्चकार परमादरात् ॥ ४९ ॥
ददौ यशोदा गोपीभ्यो ब्राह्मणीभ्यो धनं मुदा।
नानाविधानि द्रव्याणि सिन्दूरं तैलमेव च ॥ ५० ॥
इत्येवं कथितं वत्स यशोदानन्दयोस्तपः।
जन्माख्यानञ्च हलिनो रोहिणीचरितं तथा ॥ ५१ ॥
अधुना वाञ्छनीयन्ते नन्दपुत्रोत्सवं शृणु।
सुखदं मोक्षदं सारं जन्ममृत्युजरापहम् ॥ ५२ ॥
मङ्गलं कृष्णचरितं वैष्णवानाञ्च जीवनम्।
सर्वाशुभविनाशञ्च भक्तिदास्यप्रदं हरेः ॥ ५३ ॥
वसुदेवश्च श्रीकृष्णं संस्थाप्य नन्दमन्दिरे।
गृहीत्वा बालिकां हृष्टो जगाम निजमन्दिरम् ॥ ५४ ॥
कथितं चरितं तस्याः श्रुतं यत् सुखदं मुने।
अधुना गोकुले कृष्णचरितं शृणु मङ्गलम् ॥ ५५ ॥
वसुदेवे गृहे याते यशोदा नन्द एव च।
मङ्गले सूतिकागारे जयागारे जयान्विते ॥ ५६ ॥

ददृशु पुत्त्रं भूमिष्ठं नवीननीरदप्रभम्।
अतीव सुन्दरं नग्नं पश्यन्तं गृहशेखरम्॥ ५७॥
शरत्पार्वणचन्द्रास्यं नीलेन्दीवरलोचनम्।
रुदन्तञ्च हसन्तञ्च रेणुसंयुक्तविग्रहम्।
हस्तद्वयं भुविन्यस्तं प्रेमवन्तं पदाम्बुजम्॥ ५८॥
दृष्ट्वा नन्दः स्त्रिया सार्द्धं हरिं हृष्टो बभूव ह॥ ५९॥
धात्री तं स्नापयामास शीततोयेन बालकम्।
चिच्छेद नाड़ीं बालस्य हर्षाद् गोप्यो जयं जगुः॥६०॥
आजग्मुर्गोपिकाः सर्वा वृहत्श्रोण्यश्चलत्कुचाः।
बालिकाश्च वयःस्थाश्च विप्रपत्न्यश्च सूतिकाम्॥ ६१॥
आशिषं युयुजुः सर्वा दद्दशुर्बालकं मुदा।
क्रोड़े चक्रुः प्रशंसन्त्य ऊषुस्तत्र च काश्चन॥ ६२॥
नन्दः सचेलः स्नात्वा च धृत्वा धौते च वाससी।
पारम्पर्य्यविधिं तत्र चकार हृष्टमानसः॥ ६३॥
ब्राह्मणान् भोजयामास कारयामास मङ्गलम्।
वाद्यानि वादयामास वन्दिभ्यश्च ददुर्धनम्॥ ६४॥
ततो नन्दश्च सानन्दं ब्राह्मणेभ्यो धनं ददौ।
सद्रत्नानि प्रवालानि हीरकाणि च सादरम्॥ ६५॥
तिलानां पर्वतान् सप्त सुवर्णशतकं मुने।
रौप्यं धान्याचलं वस्त्रं गोसहस्रं मनोरमम्॥ ६६॥
दधि दुग्धं शर्कराश्च नवनीतं घृतं मधु।
मिष्टान्नं लड्डुकौघञ्च स्वादूनि मोदकानि च॥ ६७॥
भूमिञ्च सर्वशस्याढ्यं वायुवेगांस्तुरङ्गमान्।
ताम्बूलानि च तैलानि दत्त्वा हृष्टो बभूव ह॥ ६८॥

रचितुं सूतिकागारं योजयामास ब्राह्मणान् ।
तत्र मन्त्रज्ञमनुजान् स्थविरान् गोपिकागणान् ॥६९॥
वेदांश्च पाठयामास हरेर्नामैकमङ्गलम् ।
भक्त्या च ब्राह्मणद्वारा पूजयामास देवताः ॥ ७० ॥
सस्मिता विप्रपत्न्यश्च वयस्थाः स्थविरा वराः ।
बालिकाबालकयुता आजग्मुर्नन्दमन्दिरम् ।
तेभ्योऽपि प्रददौ रत्नं धनानि विविधानि च ॥ ७१ ॥
गोपालिकाश्च वृद्धाश्च रत्नालङ्कारभूषिताः ।
सस्मिताः शीघ्रगामिन्यः आजग्मुर्नन्दमन्दिरम् ।
वस्त्राणि रौप्याणि गोसहस्राणि सादरम् ॥ ७२ ॥
नानाविधाश्च गणका ज्योतिःशास्त्रविशारदाः ।
वाक्सिद्धाः पुस्तककरा आजग्मुर्नन्दमन्दिरम् ॥ ७३ ॥
नन्दस्तेभ्यो नमस्कृत्य चकार विनयं मुदा ।
आशिषं युयुजुः सर्वे दृष्ट्वा बालकं परम् ॥ ७४ ॥
एवं संभृतसम्भारो बभूव व्रजपुङ्गवः ।
गणकैः कारयामास यद्भविष्यं शुभाशुभम् ॥ ७५ ॥
एवं ववर्द्ध बालश्च शुक्लपक्षे यथा शशी ।
नन्दालये हली चैव भुङ्क्ते मातुः पयोधरम् ॥ ७६ ॥
तदा च रोहिणी हृष्टा तत्र पुत्त्रोत्सवे मुदा ।
तैलसिन्दूरताम्बूलं धनं ताभ्यो ददौ मुने ॥ ७७ ॥
दत्त्वाशिषश्च शिरसि ताश्च ते स्वालयं ययुः ।
यशोदारोहिणीनन्दास्तस्थुर्गेहे मुदान्विताः ॥ ७८ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे नन्दपुत्त्रोत्सवो नाम नवमोऽध्यायः ॥

# दशमोऽध्यायः ।

---

नारायण उवाच ।

अथ कंसः सभामध्ये स्वर्णसिंहासनस्थितः ।
शुश्राव वाचं गगने सुनृतामशरीरिणीम् ॥ १ ॥
किं करोषि महामूढ़ चिन्तां स्वश्रेयसः कुरु ।
जातः कालो धरण्यां ते तिष्ठोपाये नराधिप ॥ २ ॥
नन्दाय तनयं दत्त्वा वसुदेवस्तवान्तकम् ।
कन्यामादाय तुभ्यञ्च दत्त्वा संमायया स्थितः ॥ ३ ॥
मायांशा कन्यकेयञ्च वासुदेवः स्वयं हरिः ।
तव हन्ता गोकुले च वर्द्धते नन्दमन्दिरे ।
देवकीसप्तमो गर्भो वर्द्धते नन्दमन्दिरे ॥ ४ ॥
देवकीसप्तमो गर्भो न सुस्राव मृतं सुतम् ।
स्थापयामास माया तं रोहिणीजठरे किल ।
तत्र जातश्च शेषांशो बलदेवो महाबलः ॥ ५ ॥
गोकुले तौ च वर्द्धेते कालौ ते नन्दमन्दिरे ॥ ६ ॥
श्रुत्वा तद्वचनं राजा बभूव नतकन्धरः ।
चिन्तामवाप सहसा तत्याजाहारमुन्मनाः ॥ ७ ॥
पूतनाञ्च समानीय प्राणेभ्यः प्रेयसीं सतीम् ।
उवाच भगिनीं राजा सभामध्ये च नीतिवित् ॥८॥

कंस उवाच ।

पूतने गोकुलं गच्छ कार्य्यार्थं नन्दमन्दिरे ।
विषाक्तञ्च स्तनं कृत्वा शिशवे देहि सत्वरम् ॥ ९ ॥

त्वं मनोयायिनी वत्से मायाशास्त्रविशारदा ।
मायामानुषरूपञ्च विधाय व्रज योगिनी ॥ १० ॥
दुर्वाससो महामन्त्रं प्राप्य सर्वत्रगामिनी ।
सर्वरूपं विधातुं त्वं शक्तासि सुप्रतिष्ठिते ॥ ११ ॥
इत्युक्ता तां महाराजस्तस्थौ संसदि नारद ।
जगाम पूतना कंसं प्रणम्य कामचारिणी ॥ १२ ॥
तप्तकाञ्चनवर्णाभा नानालङ्कारभूषिता ।
बिभ्रती कवरीभारं मालतीमाल्यसंयुतम् ॥ १३ ॥
कस्तूरीबिन्दुना युक्तं सिन्दूरं बिभ्रती मुदा ।
मञ्जीररशनाभ्याञ्च कलशब्दं प्रकुर्वती ॥ १४ ॥
संप्राप्य गोष्ठं ददर्श नन्दालयं मनोहरम ।
परिखाभिर्गभीराभिर्दुर्लङ्घ्याभिश्च वेष्टितम् ॥ १५ ॥
रचितं प्रस्तरैर्दिव्यैर्निर्मितं विश्वकर्म्मणा ।
इन्द्रनीलैर्मरकतैः पद्मरागैश्च भूषितम् ॥ १६ ॥
सुवर्णकलसैर्दिव्यैश्चित्रितैः शेखरोज्ज्वलैः ।
प्राकारैर्गगनस्पर्शैश्चतुर्द्वारसमन्वितैः ॥ १७ ॥
युक्तं लौहकवाटैश्च द्वारपालसमन्वितैः ।
वेष्टितं सुन्दरं रम्यं सुन्दरीगणवेष्टितम् ॥ १८ ॥
मुक्तामाणिक्यपरशैः पूर्णं रत्नादिभिर्धनैः ।
स्वर्णपात्रघटाकीर्णं गवां कोटिभिरन्वितम् ॥ १९ ॥
भरणीयैः किङ्करैश्च गोपलक्षैः समन्वितम् ।
दासीनाञ्च सहस्रैश्च कर्म्मव्यग्रैः समन्वितम् ॥ २० ॥
प्रविवेशाश्रमं साध्वी सस्मिता सुमनोहरा ।
दृष्ट्वा तां प्रविशन्तीं च गोप्यस्ता बहु मेनिरे ॥ २१ ॥

किंवा पद्मालया दुर्गा कृष्णं द्रष्टुं समागता।
प्रणेमुर्गोपिका गोपाः पप्रच्छुः कुशलञ्च ताम्।
ददौ सिंहासनं पाद्यं वासयामास तत्र वै॥ २२॥
पप्रच्छ कुशलं सा च गोपानां बालकस्य च।
उवास सस्मिता साध्वी पाद्यं जग्राह सादरम्॥ २३॥
तामूचुर्गोपिकाः सर्वाः का त्वमीश्वरि साम्प्रतम्।
वासस्ते कुत्र किन्नाम किं वात्र कर्म्म तद्वद॥ २४॥
तासाञ्च वचनं श्रुत्वा साप्युवाच मनोहरम्।
मथुरावासिनी गोपी साम्प्रतं विप्रकामिनी॥ २५॥
श्रुतं वाचिकवक्त्रेण तत्त्वं मङ्गलसूचकम्।
बभूव स्थविरे काले नन्दपुत्त्रो महानिति॥ २६॥
श्रुत्वागताहं तं द्रष्टुमाशिषं कर्त्तुमीप्सितम्।
पुत्त्रमानय तं दृष्ट्वा यामि कृत्वा तदाशिषम्॥ २७॥
ब्राह्मणीवचनं श्रुत्वा यशोदा हृष्टमानसा।
प्रणमय्य सुतं क्रोड़े ददौ ब्राह्मणयोषिते॥ २८॥
कृत्वा क्रोड़े शिशुं साध्वी चुचुम्ब च पुनः पुनः।
स्तनं ददौ सुखासीना हरिं पुण्यवती सती॥ २९॥
अहोऽद्भुतोऽयं बालस्ते सुन्दरो गोपसुन्दरि।
गुणैर्नारायणसमो बालोऽयमित्युवाच ह॥ ३०॥
कृष्णो विषस्तनं पीत्वा जहास वक्षसि स्थितः।
तस्याः प्राणैः सह पपौ विषक्षीरं सुधामिव॥ ३१॥
तत्याज बालकं साध्वी प्राणांस्त्यक्त्वा पपात ह।
विकृताकारदशना चोत्तानवदना मुने॥ ३२॥
स्थूलदेहं परित्यज्य सूक्ष्मदेहं विवेश सा।

आरुरोह रथं शीघ्रं रत्नसारविनिर्म्मितम् ॥ ३३ ॥
पार्षदप्रवरैर्दिव्यैर्वेष्टितं सुमनोहरैः।
श्वेतचामरलक्षेण वेष्टितं लक्षदर्पणैः ॥ ३४ ॥
वह्निशौचेन वस्त्रेण सूक्ष्मेण शोभितं वरम्।
नानाचित्रविचित्रैश्च सद्रत्नकलसैर्युतम् ॥ ३५ ॥
सुन्दरं शतचक्रञ्च ज्वलितं रत्नतेजसा।
पार्षदास्तां रथे कृत्वा जग्मुर्गोलोकमुत्तमम् ॥ ३६ ॥
दृष्ट्वा तमद्भुतं गोपा गोपिकाश्चापि विस्मिताः।
कंसः श्रुत्वा च तत् सर्वं विस्मितश्च बभूव ह ॥ ३७ ॥
यशोदा बालकं नीत्वा क्रोड़े कृत्वा स्तनं ददौ।
मङ्गलं कारयामास विप्रद्वारा शिशोर्मुने ॥ ३८ ॥
ददाह देहं तस्याश्च नन्दः सानन्दपूर्वकम्।
चन्दनागुरुकस्तूरीसमं संप्राप्य सौरभम् ॥ ३९ ॥

नारद उवाच।

सा वा का राक्षसीरूपा कथं पुण्यवती सती।
केन पुण्येन तं दृष्ट्वा जगाम कृष्णमन्दिरम् ॥ ४० ॥

नारायण उवाच।

बलियज्ञे वामनस्य दृष्ट्वा रूपं मनोहरम्।
बलिकन्या रत्नमाला पुत्रस्नेहं चकार तम् ॥ ४१ ॥
मनसा मानसं चक्रे पुत्रस्य सदृशो मम।
भवेद् यदि स्तनं दत्त्वा करोमि तञ्च वक्षसि ॥ ४२ ॥
हरिस्तन्मानसं ज्ञात्वा पपौ जन्मान्तरे स्तनम्।
ददौ मातृगतिं तस्यै कामपूरः कृपानिधिः ॥ ४३ ॥
दत्त्वा विषस्तनं कृष्णं पूतना राक्षसी मुने।

भक्त्या मातृगतिं प्राप कं भजामि विना हरिम् ॥४४॥
इत्येवं कथितं विप्र श्रीकृष्णगुणवर्णनम् ।
पदे पदे सुमधुरं प्रवरं कथयामि ते ॥ ४५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे श्रीकृष्णजन्मखण्डे पूतनामोक्षणं
नाम दशमोऽध्यायः ।

---

## एकादशोऽध्यायः ।

---

श्रीनारायण उवाच ।

एकदा गोकुले साध्वी यशोदा नन्दगेहिनी ।
गृहकर्म्मणि संसक्ता कृत्वा बालं स्ववक्षसि ॥ १ ॥
वात्यारूपं तृणावर्त्तमागच्छन्तञ्च गोकुले ।
श्रीहरिर्म्मनसा ज्ञात्वा भारयुक्तो बभूव ह ॥ २ ॥
भाराक्रान्ता यशोदा च तत्याज बालकं तदा ।
शयनं कारयित्वा च जगाम यमुनां मुने ॥ ३ ॥
एतस्मिन्नन्तरे तत्र वात्यारूपधरोऽसुरः ।
आदाय तं भ्रामयित्वा गत्वा च शतयोजनम् ॥ ४ ॥
बभञ्ज वृक्षशाखाश्च ह्यन्धीभूतञ्च गोकुलम् ।
चकार सद्यो मायावी पुनस्तत्र पपात ह ॥ ५ ॥
असुरोऽपि हरिस्पर्शाज्जगाम हरिमन्दिरम् ।
सुन्दरं रथमारुह्य कृत्वा कर्म्मक्षयं स्वकम् ॥ ६ ॥

पाण्डुदेशोद्भवो राजा शापाद् दूर्वाससोऽसुरः ।
श्रीकृष्णचरणस्पर्शाद् गोकुलं स जगाम ह ॥ ७ ॥
वात्यारूपे गते गोपा गोप्यश्च भयविह्वलाः ।
न दृष्ट्वा बालकं तत्र शयानं शयने मुने ॥ ८ ॥
सर्वे निजघ्नुः स्वं वक्षःस्थलं शोकाकुला भयात् ।
केचिन्मूर्च्छामवापुश्च रुरुदुश्चापि केचन ॥ ९ ॥
अन्वेषणं प्रकुर्वन्तो ददृशुर्बालकं व्रजे ।
धूलिधूसरसर्वाङ्गं पुष्पोद्यानान्तरस्थितम् ॥ १० ॥
वाप्येकदेशे सरसस्तीरे नीरसमन्विते ।
पश्यन्तं गगनं शश्वद् वदन्तं भयकातरम् ॥ ११ ॥
गृहीत्वा बालकं नन्दः कृत्वा वक्षसि सत्वरम् ।
दर्शं दर्शं मुखं तस्य रुरोद च शुचान्वितः ॥ १२ ॥
यशोदा रोहिणी शीघ्रं दृष्ट्वा बालं रुरोद च ।
कृत्वा वक्षसि तद्वक्त्रं चुचुम्ब च मुहुर्मुहुः ॥ १३ ॥
मङ्गलं कारयामास स्नापयामास बालकम् ।
स्तनं ददौ यशोदा च प्रसन्नवदनेक्षणा ॥ १४ ॥

नारद उवाच ।

कथं शशाप दुर्वासाः पाण्डुदेशोद्भवं नृपम् ।
सुविचार्य्य वद ब्रह्मन्नितिहासं पुरातनम् ॥ १५ ॥

नारायण उवाच ।

पाण्डुदेशोद्भवो राजा सहस्राक्षः प्रतापवान् ।
स्त्रीसहस्रं समादाय कामबाणप्रपीड़ितः ॥ १६ ॥
मनोहरे निर्जने च पर्वते गन्धमादने ।
विजहार नदीतीरे पुष्पोद्याने मनोरमे ॥ १७ ॥

नानाप्रकारश्रृङ्गारं विपरीतादिकं नृपः ।
नखदन्तक्षताङ्गञ्च कामिनीनां चकार सः ॥ १८ ॥
कृत्वा मूर्त्तिसहस्रञ्च योगीन्द्रो नृपतीश्वरः ।
कृत्वा स्थले विहारञ्च जलक्रीड़ां चकार सः ॥ १९ ॥
नार्य्यो विवसनाः सर्वा नग्नाश्च नृपयोषितः ।
विजह्रुश्च पुष्पभद्रानदीतीरे मनोरमे ॥ २० ॥
एतस्मिन्नन्तरे तत्र समायातो महामुनिः ।
शिष्यलक्षैः परिवृतः गच्छन् वै शङ्करं प्रति ॥ २१ ॥
दृष्ट्वा मुनिं महामत्तो नोत्तस्थौ न ननाम च ।
वाचा हस्तेन राजा तु सम्भाषां न चकार ह ॥ २२ ॥
दृष्ट्वा चुकोप नृपतिं शशाप स्फुरिताधरः ।
असुरो भव पापिष्ठ योगाद् भ्रष्टो भुवं व्रज ॥ २३ ॥
भारते लक्षवर्षञ्च स्थातव्यं ते नराधम ।
ततो हरिपदस्पर्शाद् गोलोकं यास्यसि ध्रुवम् ॥ २४ ॥
स्थाने स्थाने हे महिष्यो जनिं लभत भारते ।
राजेन्द्रगेहे राजेन्द्रात् भविष्यथ मनोहराः ॥ २५ ॥
इत्युक्त्वा तु मुनीन्द्रश्च जगाम शङ्करालयम् ।
हाहाशब्दं विचक्रुश्च शिष्यसङ्घाः कृपालवः ॥ २६ ॥
गते मुनीन्द्रे राजेन्द्रो रुरोद च सरित्तटे ।
रुरुदू रमणीयाश्च रमण्यो विरहातुराः । २७ ॥
हे नाथ रमणश्रेष्ठेत्युच्चार्य्य च पुनः पुनः ।
त्वां विना वा क्व यास्यामो वयं त्वं वा क्व यास्यसि ॥२८॥
वयं न विहरिष्यामस्त्वया सार्द्धं सुनिर्जने ।
न करिष्यसि राज्यं त्वं न यास्यामो गृहं वयम् ॥२९ ॥

शरच्चन्द्रप्रभामुष्टं न द्रक्ष्यामो मुखं तव।
प्रसारिताभ्यां बाहुभ्यां नानयिष्याम इत्यतः॥ ३०॥
इत्युक्त्वा रुरुदुः सर्वाः पुरस्कृत्य नराधिपम्।
मूर्च्छामवापुश्चरणं धृत्वा राज्ञः सरित्तटे॥ ३१॥
राजाग्निकुण्डं निर्माय नारीभिः सह नारद।
स्मृत्वा हरिपदाम्भोजं ज्वलदग्निं विवेश ह॥ ३२॥
हाहाकारं सुराः सर्वे प्रचक्रुर्गगनस्थिताः।
इत्यूचुर्मुनयश्चैव दैवञ्च बलवत्तरम्॥ ३३॥
स च राजा तृणावर्त्तो जगाम हरिमन्दिरम्।
महिष्यो भारते वर्षे लेभिरे जन्म वाञ्छितम्॥ ३४॥
इत्येवं कथितं सर्वं हरेर्माहात्म्यमुत्तमम्।
मोचणं नृपतेश्चैव मुनीन्द्रशापहेतुकम्॥ ३५॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे श्रीकृष्णजन्मखण्डे तृणावर्त्तबधो
नामैकादशोऽध्यायः।

---

## द्वादशोऽध्यायः।

---

नारायण उवाच।

एकदा मन्दिरे नन्दपत्नी सानन्दपूर्वकम्।
कृत्वा वक्षसि गोविन्दं क्षुधितञ्च स्तनं ददौ॥ १॥
एतस्मिन्नन्तरे गोप्य आजग्मुर्नन्दमन्दिरम्।

स्थविराश्च वयस्याश्च बालिकाबालकान्विताः ॥ २ ॥
अवहं बालकं शीघ्रं संन्यस्य शयने सती ।
प्रणनाम समुत्थाय कर्म्मण्यौत्थानिके मुदा ॥ ३ ॥
तैलसिन्दूरताम्बूलं ददौ ताभ्यो मुदान्विता ।
मिष्टवस्तूनि वस्त्राणि भूषणानि च गोपिका ॥ ४ ॥
एतस्मिन्नन्तरे कृष्णो रुरोद क्षुधितस्तदा ।
प्रेरयित्वा तु चरणं मायेशो मायया विभुः ॥ ५ ॥
पपात चरणं तस्य प्रवीणे शकटे मुने ।
विश्वम्भरपदाघातात्तच्च चूर्णं बभूव ह ॥ ६ ॥
बभञ्ज शकटं पेतुर्भग्नकाष्ठानि तत्र वै ।
पपात दधि दुग्धञ्च नवनीतं घृतं मधु ॥ ७ ॥
दृष्ट्वाश्चर्य्यं गोपिकाश्च दुद्रुवुर्बालकं भयात् ।
ददृशुर्भग्नशकटमिन्धनाभ्यन्तरे शिशुम् ॥ ८ ॥
भग्नभाण्डसमूहञ्च पतितं बहुगोरसम् ।
प्रेरयित्वा तु काष्ठानि जग्राह बालकं भिया ॥ ९ ॥
मायारक्षितसर्वाङ्गं रुदितं क्षुधितं क्षुधा ।
स्तनं ददौ यशोदा तं रुरोद च भृशं शुचा ॥ १० ॥
पप्रच्छुर्बालकान् गोपा बभञ्ज शकटं कथम् ।
किञ्चिद्धेतुं न पश्यामि सहसेति किमद्भुतम् ॥ ११ ॥
इत्यूचुर्बालकाः सर्वे गोपाः शृणुत तद्वचः ।
श्रीकृष्णस्य पदाघाताद्बभञ्ज शकटं ध्रुवम् ॥ १२ ॥
श्रुत्वा तद्वचनं गोपा गोप्यश्च जहसुर्मुदा ।
न हि जग्मुः प्रतीतिञ्च मिथ्येत्यूचुर्व्रजे प्रजाः ।
शिशोः स्वस्त्ययनं तूर्णं चक्रुर्ब्राह्मणपुङ्गवाः ॥ १३ ॥

हस्तं दत्त्वा शिशोर्गात्रे पपाठ कवचं द्विजः।
वदामि तत्ते विप्रेन्द्र कवचं सर्वलक्षणम्॥ १४॥
यद्दत्तं मायया पूर्वं ब्रह्मणे नाभिपङ्कजे॥ १५॥
निद्रिते जगतीनाथे जले च जलशायिनि।
भीताय स्तुतिकर्त्रे च मधुकैटभयोर्भयात्॥ १६॥

योगनिद्रोवाच।

दूरीभूतं कुरु भयं भयं किन्ते हरौ स्थिते।
स्थितायां मयि च ब्रह्मन् सुखं तिष्ठ जगत्पते॥ १७॥
श्रीहरिः पातु ते वक्त्रं मस्तकं मधुसूदनः।
श्रीकृष्णश्चक्षुषी पातु नासिकां राधिकापतिः॥ १८॥
कर्णयुग्मञ्च कण्ठञ्च कपालं पातु माधवः।
कपोलं पातु गोविन्दः केशांश्च केशवः स्वयम्॥ १९॥
अधरौष्ठं हृषीकेशो दन्तपंक्तिं गदाग्रजः।
रासेश्वरश्च रसनां तालुकं वामनो विभुः॥ २०॥
वक्षः पातु मुकुन्दस्ते जठरं पातु दैत्यहा।
जनार्द्दनः पातु नाभिं पातु विष्णुश्च ते हनुम्॥ २१॥
नितम्बयुग्मं गुह्यञ्च पातु ते पुरुषोत्तमः।
जानुयुग्मं जानकीशः पातु ते सर्वदा विभुः॥ २२॥
हस्तयुग्मं नृसिंहश्च पातु सर्वत्र सङ्कटे।
पादयुग्मं वराहश्च पातु ते कमलोद्भवः॥ २३॥
ऊर्द्ध्वं नारायणः पातु ह्यधस्तात् कमलापतिः।
पूर्वस्यां पातु गोपालः पातु वह्नौ दशास्यहा॥ २४॥
वनमाली पातु याम्यां वैकुण्ठः पातु नैर्ऋतौ।
वारुण्यां वासुदेवश्च सतोरक्षाकरः स्वयम्॥ २५॥

पातु ते सन्ततमजो वायव्यां विष्टरश्रवाः ।
उत्तरे च सदा पातु तेजसा जलजासनः ॥ २६ ॥
ऐशान्यामीश्वरः पातु सर्वत्र पातु शत्रु जित् ।
जले स्थले चान्तरीक्षे निद्रायां पातु राघवः ॥ २७ ॥
इत्येवं कथितं ब्रह्मन् कवचं परमाद्भुतम् ।
कृष्णेन कृपया दत्तं स्मृतेनैव पुरा मया ॥ २८ ॥
शुम्भेन सह संग्रामे निर्लक्ष्ये घोरदारुणे ।
गगनेस्थितया सद्यः प्राप्तिमात्रेण सोजितः ॥ २९ ॥
कवचस्य प्रभावेण धरण्यां पतितो मृतः ।
पूर्वं वर्षशतं खे च कृत्वा युद्धं भयावहम् ॥ ३० ॥
मृते शुम्भे च गोविन्दः कृपालुर्गगनस्थितः ।
माल्यञ्च कवचं दत्त्वा गोलोकं स जगामह ॥ ३१ ॥
कल्पान्तरस्य वृत्तान्तं कृपया कथितं मुने ।
अभ्यन्तरभयं नास्ति कवचस्य प्रभावतः ॥ ३२ ॥
कोटिशः कोटिशो नष्टा मया दृष्टाश्च वेधसः ।
अहञ्च हरिणा सार्द्धं कल्पे कल्पे स्थिरा सदा ॥ ३३ ॥
इत्युक्त्वा कवचं दत्त्वा सान्तर्द्धानं चकारह ।
निःशङ्को नाभिकमले तस्थौ स कमलोद्भवः ॥ ३४ ॥
सुवर्णगुटिकायान्तु कृत्वेदं कवचं परम् ।
कण्ठे वा दक्षिणे बाहौ बध्नीयाद यः सुधीः सदा ॥३५
विषाग्निसर्पशत्रुभ्यो भयं तस्य न विद्यते ।
जले स्थले चान्तरिक्षे निद्रायां रक्षतीश्वरः ॥ ३६ ॥
संग्रामे वज्रपाते च विपत्तौ प्राणसङ्कटे ।
कवचस्मरणादेव सद्यो निःशङ्कतां व्रजेत् ॥ ३७ ॥

बद्ध्वेदं कवचं कण्ठे शङ्करस्त्रिपुरं पुरा ।
जघान लीलामात्रेण दुरन्तमसुरेश्वरम् ॥ ३८ ॥
बद्ध्वेदं कवचं काली रक्तबीजं चखाद सा ।
सहस्रशीर्षा धृत्वेदं विश्वं धत्ते तिलं यथा ॥ ३९ ॥
आवां सनत्कुमारश्च धर्म्मसाक्षी च कर्म्मणाम् ।
कवचस्य प्रसादेन सर्वत्र जयिनो वयम् ॥ ४० ॥
तस्य नन्दशिशोः कण्ठे चकार कवचं द्विजः ।
आत्मनः कवचं कण्ठे दधार च स्वयं हरिः ॥ ४१ ॥
प्रभावः कथितः सर्वः कवचस्य हरेस्तथा ।
अनन्तस्याच्युतस्यैव प्रभावमतुलं मुने ॥ ४२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे शकटभञ्जनकवचन्यासो
नाम द्वादशोऽध्यायः ।

---

# त्रयोदशोऽध्यायः ।

---

नारायण उवाच ।

अपरं कृष्णमाहात्म्यं शृणु किञ्चिन्महामुने ।
विघ्ननिघ्नं पापहरं महापुण्यकरं परम् ॥ १ ॥
एकदा नन्दपत्नी सा कृत्वा कृष्णं स्ववक्षसि ।
स्वर्णसिंहासनस्था च क्षुधितं तं स्तनं ददौ ॥ २ ॥

एतस्मिन्नन्तरे तत्र विप्रेन्द्रैकः समागतः।
वृतः शिष्यसमूहैश्च प्रज्वलन् ब्रह्मतेजसा ॥ ३ ॥
प्रजपन् परमं ब्रह्म शुद्धस्फटिकमालया।
दण्डी छत्री शुक्लवासा दन्तपङ्क्तिविराजितः।
ज्योतिर्ग्रन्थो मूर्त्तिमांश्च वेदवेदाङ्गपारगः ॥ ४ ॥
परिबिभ्रज्जटाभारं तप्तकाञ्चनसन्निभम्।
शरत्पार्वणचन्द्रास्यो गौराङ्गः पद्मलोचनः ॥ ५ ॥
योगीन्द्रो धूर्जटेः शिष्यः शुद्धभक्तो गदाभृतः।
व्याख्यामुद्राकरः श्रीमान् शिष्यानध्यापयन् मुदा ॥६॥
वेदव्याख्यां कतिविधां प्रकुर्वन्नवलीलया।
एकीभूय चतुर्वेदतेजसा मूर्त्तिमानिव ॥ ७ ॥
साक्षात् सरस्वतीकण्ठः सिद्धान्तैकविशारदः।
ध्यानैकनिष्ठः श्रीकृष्णपादाम्भोजे दिवानिशम् ॥८॥
जीवन्मुक्तो हि सिद्धेशः सर्वज्ञः सर्वदर्शनः।
तं दृष्ट्वा सा समुत्तस्थौ यशोदा प्रणनाम च। ९ ॥
पाद्यं गां मधुपर्कञ्च स्वर्णसिंहासनं ददौ।
बालकं वन्दयामास मुनीन्द्रं सस्मितं मुदा ॥१०॥
मुनिश्च मनसा चक्रे प्रणामशतकं हरिम्।
आशिषं प्रददौ प्रीत्या वेदमन्त्रोपयोगिकम् ॥ ११ ॥
प्रणनाम च शिष्यांश्च ते तां युयुजुराशिषम्।
शिष्यान् पाद्यादिकं भक्त्या प्रददौ च पृथक् पृथक् ॥१२॥
सशिष्योऽङ्घ्री च प्रक्षाल्य समुवास सुखासने।
समुद्यता गतिं प्रष्टुं पुटाञ्जलियुता सती ॥ १३ ॥
स्वक्रोड़े बालकं कृत्वा भक्तिनम्रास्यकन्धरा।

स्वात्मारामं मङ्गलञ्च प्रष्टुं यद्यपि न चमा। १४।
तथापि भवतो नाम शिवं पृच्छामि साम्प्रतम्।
अबला बुद्धिहीना या दोषं चन्तुं सदार्हसि।१५।
मूढ़स्य सततं दोषचमां कुर्वन्ति साधवः॥ १६॥
अङ्गिरा वाथवात्रिर्वा मरीचिर्गौतमोऽथवा।
क्रतुः किं वा प्रचेता वा पुलस्त्यः पुलहोऽथवा॥१७।
दुर्वासाः कर्दमस्त्वं वा वशिष्ठो गर्ग एव वा।
जैगीषव्यो देवलो वा कपिलो वा स्वयं विभुः॥ १८॥
सनत्कुमारः सनकः सनन्दो वा सनातनः।
वोढुः पञ्चशिखो वा त्वमासुरिः सौभरिः किमु॥१९॥
विश्वामित्रोऽथ वाल्मीको वामदेवोऽथ कश्यपः।
संवर्त्तः किमुतथ्यो वा किं कचो वा बृहस्पतिः॥२०॥
भृगुः शुक्रश्च च्यवनो नरनारायणोऽथवा।
शक्त्रिः पराशरो व्यासः शुकदेवोऽथ जैमिनिः॥२१॥
मार्कण्डेयो लोमशश्च कण्वः कात्यायनस्तथा।
आस्तीको वा जरत्कारु ऋष्यशृङ्गो विभाण्डकः॥२२॥
पौलस्त्यस्त्वमगस्त्यो वा शरद्वान् मिहिरेव च।
शमीकोऽरिष्टनेमिश्च माण्डव्यः पैल एव च॥ २३॥
पाणिनिर्वा कणादो वा शाकल्यः शाकटायनः।
अष्टावक्रो भागुरिर्वा सुमन्तुर्वत्स एव वा॥ २४॥
जाबालिर्याज्ञवल्क्यश्च वैशम्पायन एव वा।
यतिर्हंसी पिप्पलादो मैत्रेयः करुषस्तथा॥ २५॥
उपमन्युर्गौरमुखोऽरुणिरौर्वोऽथ कच्चिवान्।
भरद्वाजो वेदशिराः शङ्कुः कर्णोऽथ शौनकः। २६

एतेषां पुण्यश्लोकानां को भवान् वद मे प्रभो।
प्रत्युत्तरार्हा नाहं चेत्तथापि वक्तुमर्हसि ॥ २७ ॥
किङ्करः किङ्करी वापि समर्था प्रष्टुमीश्वरम्।
यो यस्य सेवानिरतः स कं पृच्छति तं विना ॥२८॥
धन्याहं कृतकृत्याहं सफलं जीवनं मम।
त्वत्पादाब्जरजःस्पर्शाज्जन्मकोट्यंहसां चयः ॥ २९ ॥
त्वत्पादोदकसंस्पर्शात् सद्यः पूता वसुन्धरा।
तवागमनमात्रेण तीर्थीभूतो ममाश्रमः ॥ ३० ॥
ये ये श्रुताः श्रुतौ ब्रह्मन् श्रुतिसारा महाजनाः।
तेषामेको मया दृष्टः पूर्वपुण्यफलोदयात् ॥ ३१ ॥
शिष्या वेदा मूर्त्तिमन्तो ग्रीष्ममध्याह्नभास्कराः।
गोकुलं मत्कुलं सद्यः पुनन्ति पादरेणुना ॥ ३२ ॥
आशिषं कर्त्तुमर्हन्ति प्रसन्नमनसा शिशुम्।
पूर्णं स्वस्त्ययनं सद्यो विप्राशीर्वचनं ध्रुवम् ॥ ३३ ॥
इत्येवमुक्त्वा नन्दस्त्री भक्त्या तस्थौ मुनेः पुरः।
चरं प्रस्थापयामास नन्दमानयितुं सती ॥ ३४ ॥
यशोदावचनं श्रुत्वा जहास मुनिपुङ्गवः।
जहसुः शिष्यसंघाश्च भासयन्तो दिशो दश ॥ ३५ ॥
हितं तथ्यं नीतियुक्तं महत्प्रीतिकरं परम्।
तामुवाच मुदा युक्तः शुद्धबुद्धिर्महामुनिः ॥ ३६ ॥

श्रीगर्ग उवाच।

सुधामयं ते वचनं लौकिकं समयोचितम्।
यस्य यत्र कुले जन्म स एव तादृशो भवेत् ॥ ३७ ॥
सर्वेषां गोपपद्मानां गिरिभानुश्च भास्करः।

पत्नी पद्मासमा तस्य नाम्ना पद्मावती सती ॥ ३८ ॥
तस्याः कन्या यशोदा त्वं यशोवर्द्धनकारिणी ॥३९॥
नन्दो यस्त्वञ्च या भद्रे बालोऽयं येन वागतः ।
जानामि निर्जने सर्वं वक्ष्यामि नन्दसन्निधिम् ॥ ४० ॥
गर्गोऽहं यदुवंशानां चिरकालं पुरोहितः ।
प्रस्थापितोऽहं वसुना नाम्यसाध्ये च कर्म्मणि ॥ ४१ ॥
एतस्मिन्नन्तरे नन्दः श्रुतमात्र जगाम ह ।
ननाम दण्डवद् भूमौ मूर्ध्ना तं मुनिपुङ्गवम् ।
शिष्यान्ननाम मूर्ध्ना च ते त ययुजुराशिषम् ॥ ४२ ॥
समुत्थायासनात् तूर्णं यशोदां नन्दमेव च ।
गृहीत्वाभ्यन्तरं रम्यं जगाम विदुषां वरः ॥ ४३ ॥
गर्गो नन्दो यशोदा च सपुत्त्रा समुदान्विता ।
गर्ग उवाच तौ वाक्य निगूढ निर्जने मुने ॥ ४४ ॥

श्रीगर्ग उवाच ।

अयि नन्द प्रवक्ष्यामि वचनं ते शुभावहम् ।
प्रस्थापितोऽहं वसुना येन तच्छ्रूयतामिति ॥ ४५ ॥
वसुना सूतिकागारे शिशुः प्रत्यर्पणीकृतः ।
पुत्त्रोऽयं वसुदेवस्य ज्येष्ठश्च तस्य च ध्रुवम् ।
कन्या ते तेन नीता च मथुरां कंसभीरुणा ॥ ४६ ॥
अस्यान्नप्राशनायाहं नामानुकरणाय च ।
गूढ़ेन प्रेषितस्तेन तस्योद्योगं कुरु व्रजे ॥ ४७ ॥
पूर्णब्रह्मस्वरूपोऽयं शिशुस्ते मायया महीम् ।
आगत्य भारहरणं कर्त्ता धात्रा च सेवितः ॥ ४८ ॥
गोलोकनाथो भगवान् श्रीकृष्णो राधिकापतिः ।

नारायणो यो वैकुण्ठे कमलाकान्त एव च ॥ ४९ ॥
श्वेतद्वीपनिवासी यः पाता विष्णुश्च सोऽप्यजः ।
कपिलोऽन्ये तदंशाश्च नरनारायणावृषी ॥ ५० ॥
सर्वेषां तेजसां राशिर्मूर्त्तिमानागतः किमु ।
स वसुं दर्शयित्वा च शिशुरूपो बभूव ह ॥ ५१ ॥
साम्प्रतं सूतिकागारादाजगाम तवालयम् ।
अयोनिसम्भवश्चायमाविर्भूतो महीतले ॥ ५२ ॥
वायुपूर्णं मातृगर्भं कृत्वा च मायया हरिः ।
आविर्भूय वसुं मूर्त्तिं दर्शयित्वा जगाम ह ॥ ५३ ॥
युगे युगे वर्णभेदो नामभेदोऽस्य वल्लव ।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ ५४ ॥
शुक्लवर्णः सत्ययुगे सुतीव्रस्तेजसावृतः ।
त्रेतायां रक्तवर्णोऽयं पीतोऽयं द्वापरे विभुः ॥ ५५ ॥
कृष्णवर्णः कलौ श्रीमान् तेजसां राशिरेव च ।
परिपूर्णतमं ब्रह्म तेन कृष्ण इति स्मृतः ॥ ५६ ॥
ब्रह्मणो वाचकः कोऽयमृकारोऽनन्तवाचकः ।
शिवस्य वाचकः षश्च णकारो धर्मवाचकः ॥ ५७ ॥
अकारो विष्णोर्वचनः श्वेतद्वीपनिवासिनः ।
नरनारायणार्थस्य विसर्गो वाचकः स्मृतः ॥ ५८ ॥
सर्वेषां तेजसां राशिः सर्वमूर्त्तिस्वरूपकः ।
सर्वाधारः सर्ववीजस्तेन कृष्ण इति स्मृतः ॥ ५९ ॥
कृषिर्निर्वाणवचनो णकारो मोक्ष एव च ।
अकारो दातृवचनस्तेन कृष्ण इति स्मृतः ॥ ६० ॥
कृषिर्निश्चेष्टवचनो णकारो भक्तिवाचकः ।

अकारो दातृवचनस्तेन कृष्ण इति स्मृतः ॥ ६१ ॥
कर्म्मनिर्मूलवचनः कृषिर्णो दास्यवाचकः।
अकारो प्राप्तिवचनस्तेन कृष्ण इति स्मृतः ॥ ६२ ॥
नाम्ना भगवतो नन्द कोटीनां स्मरणे च यत्।
तत् फलं लभते नूनं कृष्णेति स्मरणे नरः॥ ६३ ॥
यद्विधं स्मरणे पुण्यं वचनाच्छ्रवणात्तथा।
कोटिजन्मांहसो नाशो भवेद्व यत्स्मरणादिकात् ॥६४॥
विष्णोर्नाम्नाञ्च सर्वेषां सर्वात्सारं परात्परम्।
कृष्णेति मङ्गलं नाम सुन्दरं भक्तिदायकम् ॥ ६५ ॥
ककारोच्चारणाद्भक्तः कैवल्यं जन्ममृत्युहम्।
ऋकाराद् दास्यमतुलं षकाराद्भक्तिमीप्सिताम् ॥ ६६ ॥
णकारात् सहवासञ्च तत्समं कालमेव च।
तत्सारूप्यं विसर्गाच्च लभते नात्र संशयः ॥ ६७ ॥
ककारोच्चारणादेव वेपन्ते यमकिङ्कराः।
ऋकारोक्तेर्न तिष्ठन्ति षकारात्पातकानि च ॥ ६८ ॥
णकारोच्चारणाद्रोगा अकारान्मृत्युरेव च।
ध्रुवं सर्वे पलायन्ते नामोच्चारणभीरवः ॥ ६९ ॥
मृत्युक्तिश्रवणाद्योगात् कृष्णनाम्नो व्रजेश्वर।
रथं गृहीत्वा धावन्ति गोलकात् कृष्णकिङ्कराः ॥७०॥
पृथिव्या रजसः संख्यां कर्त्तुं शक्ता विपश्चितः।
नाम्नः प्रभावसंख्यानं सन्तो वक्तुं न च क्षमाः ॥ ७१ ॥
पुरा शङ्करवक्त्रेण नाम्नोऽस्य महिमा श्रुतः।
गुणनामप्रभावञ्च किञ्चिज्जानाति मद्गुरुः ॥ ७२ ॥
ब्रह्मानन्तश्च धर्म्मश्च सुरर्षिर्मनुमानवाः।

वेदाः सन्तो न जानन्ति महिम्नः षोड़शीं कलाम् ॥७३॥
इत्येवं कथितो नन्द महिमा ते सुतस्य च।
यथामति यथाज्ञानं गुरुवक्त्रान्मया श्रुतम् ॥ ७४ ॥
कृष्णः पीताम्बरः कंसध्वंसी च विष्टरश्रवाः।
देवकीनन्दनः श्रीशो यशोदानन्दनो हरिः ॥ ७५ ॥
सनातनोऽच्युतो विष्णुः सर्वेशः सर्वरूपधृक्।
सर्वाधारः सर्वगतिः सर्वकारणकारणम् ॥ ७६ ॥
राधाबन्धूराधिकात्मा राधिकाजीवनः स्वयम्।
राधिकासहचारी च राधामानसपूरकः ॥ ७७ ॥
राधाधनो राधिकाङ्गो राधिकासक्तमानसः।
राधाप्राणो राधिकेशो राधिकारमणः स्वयम् ॥ ७८ ॥
राधिकाचित्तचोरश्च राधाप्राणाधिकः प्रभुः।
परिपूर्णतमं ब्रह्म गोविन्दो गरुड़ध्वजः ॥ ७९ ॥
नामान्येतानि कृष्णस्य श्रुतानि साम्प्रतं व्रज।
जन्ममृत्युहराण्येव रच नन्द शुभक्षणे ॥ ८० ॥
कृतं निरूपितं नाम्नां कनिष्ठस्य यथा श्रुतम्।
ज्येष्ठस्य हलिनो नाम्नः सङ्केतं शृणु मे मुखात् ॥ ८१ ॥
गर्भसङ्कर्षणादेव नाम्ना सङ्कर्षणः स्मृतः ॥ ८२ ॥
नास्यन्तोऽस्त्येव वेदेषु तेनानन्त इति स्मृतः।
बलदेवो बलोद्रेकाद्धली च हलधारणात् ॥ ८३ ॥
शितिबासा नीलवासान्मुषली मुषलायुधात्।
रेवत्या सह सम्भोगाद्रेवतीरमणः स्वयम्।
रोहिणीगर्भवासाच्च रौहिणेयो महामतिः ॥ ८४ ॥
इत्येवं ज्येष्ठपुत्रस्य श्रुतं नाम निवेदितम्।

यास्याम्यहं गृहं नन्द सुखं तिष्ठ स्वमन्दिरे ॥ ८५ ॥
ब्राह्मणस्य वचः श्रुत्वा नन्दः स्तब्धो बभूव ह ।
निश्चेष्टा नन्दपत्नी च जहास बालकः स्वयम् ॥ ८६ ॥
प्रणम्योवाच नन्दस्तं वाक्यं विनयपूर्वकम् ।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ ८७ ॥

नन्द उवाच ।

गतश्चेत्त्वं तदा कर्म्म करिष्यत्येव को महान् ।
स्वयं शुभेक्षणं कृत्वा कुरु नामान्नप्राशनम् ॥ ८८ ॥
यन्नामौघश्च कथितो राधाप्राणादिको द्विज ।
तस्यापि का वा राधेति कन्यका कस्य च ध्रुवम् ॥ ८९ ॥
नन्दस्य वचनं श्रुत्वा जहास मुनिपुङ्गवः ।
निगूढं परमं तत्त्वं रहस्यं कथयामि ते ॥ ९० ॥

श्रीगर्ग उवाच ।

शृणु नन्द प्रवक्ष्यामि इतिहासं पुरातनम् ।
पुरा गोलोकवृत्तान्तं श्रुतं शङ्करवक्त्रतः ॥ ९१ ॥
श्रीदाम्नो राधया सार्द्धं बभूव कलहो महान् ।
श्रीदामशापाद्दैवेन गोपो राधा च गोकुले ॥ ९२ ॥
वृषभानुसुता सा च माता तस्याः कलावती ।
कृष्णस्यार्द्धाङ्गसम्भूता नार्थस्य सदृशी सती ॥ ९३ ॥
गोलोकवासिनी सेयमत्र कृष्णाज्ञयाधुना ।
अयोनिसम्भवा देवी मूलप्रकृतिरीश्वरी ॥ ९४ ॥
मातुर्गर्भं वायुपूर्णं कृत्वा च मायया सती ।
वायुनिःसरणे काले धृत्वा च [illegible]विग्रहम् ॥ ९५ ॥

आविर्बभूव मायेयं पृथ्व्यां कृष्णोपदेशतः ।
वर्धते सा व्रजे राधा शुक्ले चन्द्रकला यथा ॥ ९६ ॥
श्रीकृष्णतेजसोऽर्द्धेन सा च मूर्त्तिमती सती ।
एका मूर्त्तिर्द्विधाभूता भेदो वेदे निरूपितः ॥ ९७ ॥
इयं स्त्री सा पुमान् किं वा सा वा कान्ता पुमानयम् ।
द्वे रूपे तेजसा तुल्ये रूपेण च गुणेन च ।
पराक्रमेण बुद्ध्या वा ज्ञानेन सम्पदापि च ॥ ९८ ॥
पुरतो गमनेनैव किन्तु सा वयसाधिका ।
ध्यायते तामयं शश्वदिमं सा स्मरति प्रियम् ॥ ९९ ॥
रचिता सास्य प्राणैश्च तत्प्राणैर्मूर्त्तिमानयम् ।
अस्य राधानुसारेण गोकुलागमनं परम् ॥ १०० ॥
स्वीकारं सार्थकं कर्त्तुं गोलोके यत् कृतं पुरा ।
कंसभीतिच्छलेनैव गोकुलागमनं हरेः ॥ १०१ ॥
प्रतिज्ञापालनार्थाय भयेशस्य भयं कुतः ।
राधाशब्दस्य व्युत्पत्तिः सामवेदे निरूपिता ॥१०२॥
नारायणस्तामुवाच ब्रह्माणं नाभिपङ्कजे ।
ब्रह्मा तां कथयामास ब्रह्मलोके च शङ्करम् ॥ १०३ ॥
पुरा कैलासशिखरे मामुवाच महेश्वरः ।
देवानां दुर्लभां नन्द निशामय वदामि ते ॥ १०४ ॥
सुरासुरमुनीन्द्राणां वाञ्छितां मुक्तिदां पराम् ।
रेफो हि कोटिजन्माघं कर्मभोगं शुभाशुभम् ॥ १०५ ॥
आकारो गर्भवासञ्च मृत्युञ्च रोगमुत्सृजेत् ।
धकार आयुषो हानिमाकारो भवबन्धनम् ॥ १०६ ॥
श्रवणस्मरणोक्तिभ्यः प्रणश्यति न संशयः ।

रक्तो हि निश्चलां भक्तिं दास्यं कृष्णपदाम्बुजे ॥१०७॥
सर्वेप्सितं सदानन्दं सर्वसिद्धौघमीश्वरम्।
धकारः सहवासञ्च तत्तुल्यकालमेव च ॥ १०८ ॥
ददाति सार्ष्टिं सारूप्यं तत्त्वज्ञानं हरिः समम्।
आकारस्तेजसां राशिं दानशक्तिं हरौ यथा ॥ १०९ ॥
योगशक्तिं योगमतिं सर्वकालं हरिस्मृतिम्।
श्रुत्युक्तिस्मरणाद्योगान्मोहजालञ्च किल्बिषम् ॥११०॥
रोगशोकमृत्युयमा वेपन्ते नात्र संशयः।
राधामाधवयोः किञ्चिद् व्याख्यानञ्च यतः श्रुतम् ॥१११॥
तदुक्तञ्च यथाज्ञानं साकल्यं वक्तुमक्षमः।
आराद् वृन्दावने नन्द विवाहो भवितानयोः ॥११२॥
पुरोहितो जगद्धाता कृत्वाग्निं साक्षिणं मुदा।
कुवेरपुत्रमोक्षञ्च गव्यस्याहृत्य भक्षणम् ॥ ११३ ॥
हिंसनं धेनुकस्यैव कानने तालभोजनम्।
वककेशिप्रलम्बानां हिंसनञ्चाथ लीलया ॥ ११४ ॥
मोक्षणं द्विजपत्नीनां मिष्टान्नपानभोजनम्।
भञ्जनं शक्रयागस्य शक्राद्गोकुलरक्षणम् ॥ ११५ ॥
गोपीनां वस्त्रहरणं व्रतसम्पादनन्तथा।
ताभ्यः पुनर्वस्त्रदानं वरदानं यथेप्सितम् ॥ ११६ ॥
चेतसां हरणं तासामयं वश्याः करिष्यति।
रासोत्सवं महारम्यं सर्वेषां हर्षवर्द्धनम् ॥ ११७ ॥
पूर्णचन्द्रोदये नक्तं वसन्ते रासमण्डले।
गोपीनां नवसम्भोगात् कृत्वा पूर्णं मनोरथम् ॥११८॥
ताभिः सह जलक्रीड़ां करिष्यति कुतूहलात्।

विच्छेदोऽस्य वर्षशतं श्रीदामशापहेतुकम् ॥ ११९॥
गोपालैर्गोपिकाभिश्च भविता राधया सह ।
मथुरागमनं तत्र गोपीनां शोकवर्द्धनम् ॥ १२० ॥
पुनः प्रबोधनं तासां दानमाध्यात्मिकस्य च ।
स्यन्दनाक्रूरयो रक्षां सद्यस्ताभ्यां करिष्यति ॥१२१॥
रथस्यारोहणं कृत्वा मथुरागमनं पुनः ।
पितृभ्रातृव्रजैः सार्द्धं विलङ्घ्य यमुनां व्रजे ॥ १२२॥
अक्रूराय ज्ञानदानं दर्शयित्वा स्वकं जले ।
कौतुकेन च सायाह्ने नगरात्सर्वदर्शनम् ॥ १२३॥
मालाकारतन्तुवायकुब्जानां बन्धमोचणम् ।
धनुर्भङ्गं शङ्करस्य यागस्थानप्रदर्शनम् ॥ १२४ ॥
हिंसनं गजमल्लानां दर्शनं नृपतेः पुरः ।
कंसस्य हिंसनं सद्यः पित्रोर्निगड़मोचणम् ॥ १२५ ॥
प्रबोधनञ्च युष्माकमुग्रसेनाभिषेचनम् ।
तस्य तस्य बधूनाञ्च ज्ञानाच्छोकापनोदनम् ॥१२६॥
भ्रातुः स्वस्योपनयनं विद्यादानं गुरोर्मुखात् ।
गुरुपुत्रप्रदानञ्च पुनरागमनं गृहे ॥ १२७ ॥
छलनं नृपसैन्यानां यवनस्य दुरात्मनः ।
निर्माणं द्वारकायाश्च मुचुकुन्दस्य मोचणम् ॥१२८॥
द्वारकागमनञ्चैव यादवैः सह कौतुकात् ।
स्त्रीसंघानां विहरणं ताभिः सार्द्धञ्च क्रीड़नम् ॥१२९॥
सौभाग्यवर्धनन्तासां पुत्रपौत्रादिकस्य च ।
मणिसम्बन्धिनो मिथ्याकलङ्कस्य च मोचणम् ॥१३०॥
साहाय्यं पाण्डवानाञ्च भारावतरणादिकम् ।

निष्पन्नं राजसूयस्य धर्मपुत्रस्य लीलया ॥ १३१ ॥
पारिजातस्य हरणं शक्राहङ्कारमर्दनम् ।
व्रतपूर्णञ्च सत्याया बाणस्य भुजकृन्तनम् ॥ १३२ ॥
मर्दनं शिवसैन्यानां हरस्य जृम्भणं परम् ।
हरणं बाणपुत्र्याश्चैवानिरुद्धस्य मोक्षणम् ॥ १३३ ॥
वाराणस्याश्च दहनं विप्रदारिद्र्यभञ्जनम् ।
विप्रपुत्रप्रदानञ्च दुष्टानां दमनादिकम् ॥ १३४ ॥
तीर्थयात्राप्रसङ्गेन युष्माभिः सह दर्शनम् ।
कृत्वा च राधया सार्धं व्रजमागमिता पुनः ॥ १३५ ॥
प्रस्थापयित्वा द्वाराञ्च परं नारायणांशकम् ।
सर्वं निष्पादनं कृत्वा गोलोकं राधया सह ॥ १३६ ॥
गमिष्यत्येव गोलोकं नाथोऽयं जगताम्पतिः ।
नारायणश्च वैकुण्ठं गमिता स्म त्वया सह ॥ १३७ ॥
धर्म्मगेहमृषी द्वौ च विष्णुः क्षीरोदमेव च ।
इत्येवं कथितं नन्द भविष्यं वेदनिर्णयम् ॥ १३८ ॥
श्रूयतां साम्प्रतं कर्म यदर्थं गमनं मम ।
माघशुक्लचतुर्दश्यां कुरु कर्म्म शुभे क्षणे ॥ १३९ ॥
गुरुवारे च रेवत्यां विशुद्धे चन्द्रतारके ।
चन्द्रस्थे मीनलग्ने च लग्नेशपूर्णदर्शने ॥ १४० ॥
वणिजे करणोत्कृष्टे शुभयोगे मनोहरे ।
सुदुर्लभे दिने तत्र सर्वोत्कृष्टोपयोगिके ॥ १४१ ॥
आलोच्य पण्डितैः सार्द्धं कुरु कर्म्म मुदान्वितः ।
इत्युक्त्वा बहिरागत्य समुवास मुनीश्वरः ॥ १४२ ॥
हृष्टो नन्दो यशोदा च कर्म्मोद्योगं चकार ह ।

एतस्मिन्नन्तरे द्रष्टुं गर्गं गोपाश्च गोपिकाः ॥ १४३ ॥
बालका बालिकाश्चैव आजग्मुर्नन्दमन्दिरम् ।
दद्दृशुस्ते मुनिश्रेष्ठं ग्रीष्ममध्याह्नभास्करम् ॥ १४४ ॥
शिष्यसङ्घैः परिवृतं ज्वलन्तं ब्रह्मतेजसा ।
गूढ़योगं प्रवोचन्तं सिद्धाय पृच्छते मुदा ॥ १४५ ॥
पश्यन्तं सस्मितं नन्दभवनानां परिच्छदम् ।
स्वर्णसिंहासनस्थञ्च योगमुद्राधरं वरम् ॥ १४६ ॥
भूतं भव्यं भविष्यञ्च पश्यन्तं ज्ञानचक्षुषा ।
हृदीश्वरं प्रपश्यन्तं सिद्धं मन्त्रप्रभावतः ॥ १४७ ॥
बहिर्यशोदा क्रोड़स्थं तादृशं सस्मितं शिशुम् ।
महेशदत्तध्यानेन यद्रूपञ्च निरूपितम् ॥ १४८ ॥
तं दृष्ट्वा परमप्रीत्या पूर्णभूतमनोरथम् ।
साश्रुनेत्रं पुलकितं निमग्नं भक्तिसागरे ॥ १४९ ॥
हृदि पूजां प्रणामञ्च कुर्वन्तं योगचर्य्यया ।
मूर्ध्ना प्रणेमुस्ते तञ्च स च तानाशिषं ददौ ॥ १५० ॥
आसनस्थो मुनिस्तस्थौ ते जग्मुः स्वालयं मुदा ।
नन्दः सानन्दयुक्तश्च बन्धून् मङ्गलपत्रिकाः ॥ १५१ ॥
प्रस्थापयामास शीघ्रमाराद् दूरस्थितान् मुदा ।
दधिकुल्यां दुग्धकुल्यां घृतकुल्यां प्रपूरिताम् ॥ १५२ ॥
गुड़कुल्यां तैलकुल्यां मधुकुल्याञ्च विस्तृताम् ।
नवनीतकुल्यां पूर्णाञ्च तक्रकुल्यां यदृच्छया ॥ १५३ ॥
शर्करोदककुल्याञ्च परिपूर्णाञ्च लीलया ।
तण्डुलानाञ्च शालीनामुच्चैश्च शतपर्वतान् ॥ १५४ ॥
पृथुकानां शैलशतं लवणानाञ्च सप्त च ।

सप्त शैलान् शर्कराणां लड्डुकानाञ्च सप्त च ॥ १५५ ॥
परिपक्वफलानाञ्च तत्र षोड़श पर्वतान् ।
यवगोधूमचूर्णानां पक्वलड्डुकपिण्डकान् ॥ १५६ ॥
मोदकानाञ्च शैलञ्च स्वस्तिकानाञ्च पर्वतान् ।
कपर्दकानामत्युच्चैः शैलान् सप्त च नारद ॥ १५७ ॥
कर्पूरादिकयुक्तानां ताम्बूलानाञ्च मन्दिरम् ।
विस्तृतं द्वारहीनञ्च वासितोदकसंयुतम् ॥ १५८ ॥
चन्दनागुरुकस्तूरीकुङ्कुमेन समन्वितम्
नानाविधानि रत्नानि स्वर्णानि विविधानि च ॥१५९॥
मुक्ताफलानि रम्याणि प्रवालानि मुदान्वितः ।
नानाविधानि चारूणि वासांसि भूषणानि च ॥१६०॥
पुत्रान्नप्राशने नन्दः कारयामास कौतुकात् ।
संस्कारयुक्तं रुचिरं चन्दनद्रवचर्चितम् ॥ १६१ ॥
प्राङ्गणं कदलीस्तम्भै रसालनवपल्लवैः ।
ग्रथितैः सूक्ष्मवस्त्रेण वेष्टयामास कौतुकात् ॥ १६२ ॥
युक्तं मङ्गलकुम्भैश्च फलपल्लवसंयुतैः ।
चन्दनागुरुकस्तूरीपुष्पमालाविराजितैः ॥ १६३ ॥
माल्यानां वरवस्त्राणां राशिभिश्च विराजितम् ।
गवाञ्च मधुपर्काणामासनानाञ्च नारद ॥ १६४ ॥
फलानां जलकुम्भानां समूहैश्च समन्वितम् ।
नानाप्रकारैर्वाद्यैश्च दुर्लभैः सुमनोहरैः ॥ १६५ ॥
ढक्कानां दुन्दुभीनाञ्च पटहानां तथैव च ।
मृदङ्गमुरजादीनामानकानां समूहकैः ॥ १६६ ॥
वंशीसन्नहनीकांस्यसरयन्त्रैश्च शब्दितम् ।

विद्याधरीणां नृत्येन भङ्गिमाभ्रमणेन च ॥ १६७ ॥
गन्धर्वनायकानाञ्च सङ्गीतैर्मूर्च्छनायुतैः ।
स्वर्णसिंहासनानाञ्च रथानां निःस्वनैर्युतम् ॥ १६८ ॥
एतस्मिन्नन्तरे नन्दमुवाच वाचको मुदा ।
आजग्मुर्वल्लवेन्द्राश्च बान्धवा वल्लवास्तथा ॥ १६९ ॥
अश्वस्थाश्च गजस्थाश्च रथस्थाश्चेति सत्वरम् ।
आजग्मू राजपुत्राश्च रत्नालङ्कारभूषिताः ॥ १७० ॥
आगतो गिरिभानुश्च सस्त्रीकश्च सकिङ्करः ।
रथानाञ्च चतुर्लक्षं गजानाञ्च तथैव च ॥ १७१ ॥
तुरङ्गमाणां कोटिश्च शिविकानां तथैव च !
ऋषीन्द्राणां मुनीन्द्राणां विप्राणाञ्च विपश्चिताम् ॥१७२॥
वन्दिनां भिक्षुकाणाञ्च समूहैश्च समीपतः ।
गोपानां गोपिकानाञ्च संख्यां कर्त्तुञ्च कः क्षमः ॥१७३॥
पश्चागत्य बहिर्भूयेत्युवाच प्राङ्गणे स्थितः ।
श्रुत्वेवं तानुपव्रज्य समानीय व्रजेश्वरः ॥ १७४ ॥
प्राङ्गणे वासयामास पूजयामास सत्वरम् ।
ऋष्यादिकसमूहञ्च प्रणम्य शिरसा भुवि ।
पाद्यादिकञ्च तेभ्यश्च प्रददौ सुसमाहितः ॥ १७५ ॥
वस्तुभिर्बन्धुभिः पूर्णं बभूव नन्दगोकुलम् ।
न कोऽपि कस्य शब्दं च श्रोतुं शक्तश्च तत्र वै ॥१७६॥
त्रिमुहूर्त्तं कुवेरश्च श्रीकृष्णप्रीतये मुदा ।
चकार स्वर्णवृष्ट्या च परिपूर्णञ्च गोकुलम् ॥१७७॥
कौतुकापह्नवञ्चक्रुर्बन्धुवर्गाश्च क्रीड़या ।
म्लानस्त्रकन्धराः सर्वे दृष्ट्वा नन्दस्य सम्पदम् ॥ १७८ ॥

नन्दः कृताह्निकः पूतो धृत्वा धौते च वाससी ।
चन्दनागुरुकस्तूरीकुङ्कुमेनैव भूषितः ॥ १७९ ॥
उवास पादौ प्रक्षाल्य स्वर्णपीठे मनोहरे ।
गर्गस्य च मुनीन्द्राणां गृहीत्वाज्ञां व्रजेश्वरः ॥१८०॥
संस्मृत्य विष्णुमाचान्तः स्वस्तिवाचनपूर्वकम् ।
कृत्वा कर्म च वेदोक्तं भोजयामास बालकम् ॥१८१॥
गर्गवाक्यानुसारेण बालकस्य मुदान्वितः ।
कृष्णेति मङ्गलं नाम ररक्ष च शुभे क्षणे ॥ १८२ ॥
स घृतं भोजयित्वा च कृत्वा नाम जगत्पतिः ।
वाद्यानि वादयामास कारयामास मङ्गलम् ॥१८३॥
नानाविधानि स्वर्णानि धनानि विविधानि च ।
भक्ष्यद्रव्याणि वासांसि ब्राह्मणेभ्यो ददौ मुदा ॥१८४॥
वन्दिभ्यो भिक्षुकेभ्यश्च सुवर्णं विपुलं ददौ ।
भाराक्रान्ताश्च ते सर्वे न शक्ता गन्तुमेव च ॥१८५॥
ब्राह्मणान् बन्धुवर्गांश्च भिक्षुकांश्च विशेषतः ।
मिष्टान्नं भोजयामास परिपूर्णं मनोहरम् ॥ १८६ ॥
दीयतां दीयताञ्चैव खाद्यतां खाद्यतामिति ।
बभूव शब्दोऽप्युच्चैश्च सततं नन्दगोकुले ॥ १८७ ॥
रत्नानि परिपूर्णानि वासांसि भूषणानि च ।
प्रवालानि सुवर्णानि मणिसाराणि यानि च ॥१८८॥
चारूणि स्वर्णपात्राणि कृतानि विश्वकर्मणा ।
गत्वा गर्गाय विनयं चकार व्रजपुङ्गवः ॥ १८९ ॥
शिष्येभ्यः स्वर्णभारांश्च प्रददौ विनयान्वितः ।
द्विजेभ्योऽप्यवशिष्टेभ्यः परिपूर्णानि नारद ॥ १९० ॥

श्रीनारायण उवाच ।

गृहीत्वा श्रीहरिं गर्गो जगाम निभृतं मुदा ।
तुष्टाव परया भक्त्या प्रणम्य च तमीश्वरम् ॥१९१॥
साश्रुनेत्रः सपुलको भक्तिनम्रात्मकन्धरः ।
पुटाञ्जलियुतो भूत्वोवाच कृष्णपदाम्बुजे ॥ १९२ ॥

गर्ग उवाच ।

हे कृष्ण जगतां नाथ भक्तानां भयभञ्जन ।
प्रसन्नो भव मामीश देहि दास्यं पदाम्बुजे ॥ १९३ ॥
त्वत्पिता मे धनं दत्तं तेन मे किं प्रयोजनम् ।
देहि मे निश्चलां भक्तिं भक्तानामभयप्रद ॥ १९४ ॥
अणिमादिकसिद्धिषु योगेषु मुक्तिषु प्रभो ।
ज्ञानतत्त्वेऽमरत्वे वा किञ्चिन्नास्ति स्पृहा मम ॥१९५॥
इन्द्रत्वे वा मनुत्वे वा स्वर्गलोकफले चिरम् ।
नास्ति मे मनसो वाञ्छा त्वत्पादसेवनं विना ॥१९६॥
सालोक्यं सार्ष्टिसारूप्ये सामीप्यैकत्वमीप्सितम् ।
नाहं गृह्णामि ते ब्रह्मन् त्वत्पादसेवनं विना ॥१९७॥
गोलोके वापि पाताले वासे नास्ति मनोरथः ।
किन्तु ते चरणाम्भोजे सन्ततं स्मृतिरस्तु मे ॥ १९८ ॥
त्वन्मन्त्रं शङ्करात् प्राप्य कतिजन्मफलोदयात् ।
सर्वज्ञोऽहं सर्वदर्शी सर्वत्र गतिरस्तु मे ॥ १९९ ॥
कृपां कुरु कृपासिन्धो दीनबन्धो पदाम्बुजे ।
रक्ष माम भयं दत्त्वा मृत्युर्मे किं करिष्यति ॥ २०० ॥
सर्वेषामीश्वरः शर्वस्त्वत्पादाम्भोजसेवया ।
मृत्युञ्जयोऽन्तकारश्च बभूव योगिनां गुरुः ॥ २०१ ॥

ब्रह्मा विधाता जगतां त्वत्पादाम्भोजसेवया।
यस्यैकदिवसे ब्रह्मन् पतन्तीन्द्राश्चतुर्दश ॥ २०२ ॥
त्वत्पादसेवया धर्मः साक्षी च सर्व्वकर्म्मणाम्।
पाता च फलदाता च जित्वा कालं सुदुर्जयम् ॥२०३॥
सहस्रवदनः शेषो यत्पादाम्बुजसेवया।
धत्ते सिद्धार्थवद्विश्वं शिवः कण्ठे विषं यथा ॥ २०४ ॥
सर्व्वसम्पद्विधात्री या देवीनाञ्च परात्परा।
करोति सततं लक्ष्मीः केशैस्त्वत्पादमार्ज्जनम् ॥२०५॥
प्रकृतिर्व्वीजरूपा सा सर्व्वेषां शक्तिरूपिणी।
स्मारं स्मारं त्वत्पदाब्जं बभूव तत्परा वरा ॥ २०६ ॥
पार्व्वती सर्व्वरूपा सा सर्व्वेषां बुद्धिरूपिणी।
त्वत्पादसेवया कान्तं ललाभ शिवमीश्वरम् ॥२०७॥
विद्याधिष्ठात्री देवी या ज्ञानमाता सरस्वती।
पूज्या बभूव सर्व्वेषां संपूज्य त्वत्पदाम्बुजम् ॥२०८॥
सावित्री वेदजननी पुनाति भुवनत्रयम्।
ब्रह्मणो ब्राह्मणानाञ्च मतिस्त्वत्पादसेवया ॥२०९॥
क्षमा जगद्बिभर्त्तुञ्च रत्नगर्भा वसुन्धरा।
प्रसूतिः सर्व्वशस्यानां त्वत्पादपद्मसेवया ॥२१०॥
राधा समांशसम्भूता तव तुल्या च तेजसा।
स्थित्वा वक्षसि ते पादं सेवतेऽन्यस्य का कथा ॥२११॥
यथा शर्व्वादयो देवा देव्यः पद्मादयो यथा।
सनाथं कुरु मामीश ईश्वरस्य समा कृपा ॥२१२॥
न यास्यामि गृहं नाथ न गृह्णामि धनं तव।
कृत्वा मां रक्ष पादाब्जसेवायां सेवकं रतम् ॥ २१३ ॥

इति स्तुत्वा साश्रुनेत्रः पपात चरणे हरेः ।
रुरोद च भृशं भक्त्या पुलकाञ्चितविग्रहः ॥२१४॥
गर्गस्य वचनं श्रुत्वा जहास भक्तवत्सलः ।
उवाच तं स्वयं कृष्णो मयि ते भक्तिरस्त्विति ॥२१५॥
इदं गर्गकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः ।
दृढां भक्तिं हरेर्दास्यं स्मृतिञ्च लभते ध्रुवम् ॥ २१६ ॥
जन्ममृत्युजरारोगशोकमोहादिसङ्कटात् ।
तीर्णो भवति श्रीकृष्णदाससेवनतत्परः ॥२१७॥
कृष्णस्य सह कालञ्च कृष्णसार्द्धञ्च मोदते ।
कदाचिन्न भवेत् तस्य विच्छेदो हरिणा सह ॥२१८॥

श्रीनारायण उवाच ।

हरिं मुनिः स्तवं कृत्वा ददौ नन्दाय तं मुदा ।
उवाच तं गृहं यामि कुर्वाज्ञामिति वल्लभ ॥२१९॥
अहो विचित्रं संसारो मोहजालेन वेष्टितः ।
सम्मीलनञ्च विरहो नराणां सिन्धुफेनवत् ॥२२०॥
गर्गस्य वचनं श्रुत्वा रुरोद नन्द एव च ।
सद्विच्छेदो हि साधूनां मरणादतिरिच्यते ॥ २२१ ॥
सर्वशिष्यैः परिवृतं मुनीन्द्रं गन्तुमुद्यतम् ।
सर्वे नन्दादयो गोपा रुदन्तो गोपिकास्तदा ॥२२२॥
प्रणेमुः परमप्रीत्या चक्रुस्तं विनयं मुने ।
दत्त्वाशिषं मुनिश्रेष्ठो जगाम मथुरां मुदा ॥२२३॥
ऋषयो मुनयश्चैव बन्धुवर्गाश्च वल्लवाः ।
सर्वे जग्मुर्धनैः पूर्णाः स्वालयं हृष्टमानसाः ॥२२४॥
प्रजग्मुर्वन्दिनः सर्वे परिपूर्णमनोरथाः ।

मिष्टद्रव्यांशुकोत्कृष्टतुरगस्वर्णभूषणैः ॥२२५॥
आकण्ठपूर्णा भुक्त्वा च भिक्षुका मत्तमध्यमाः।
स्वर्णवस्त्रभरोद्रेकपरिश्रान्ता मुदान्विताः ॥२२६॥
सुमन्दगामिनः केचित् केचिद्भूमौ च शेरते।
केचिद्वर्त्मनि तिष्ठन्तश्चोत्तिष्ठन्तश्च केचन ॥ २२७ ॥
केचिदूषुः प्रमुदिता हसन्तस्तत्र केचन।
कपर्दकानां वस्तूनां शेषांश्चोर्वरितान् बहून् ॥ २२८ ॥
केचित्तानाददुः स्थित्वा दर्शयन्तश्च केचन।
केचिन्नृत्यं प्रकुर्वन्तो गायन्तस्तत्र केचन ॥ २२९ ॥
केचिद्बहुविधा गाथाः कथयन्तः पुरातनाः।
मरुतश्वेतसगरमान्धातॄणाञ्च भूभृताम् ॥ २३० ॥
उत्तानपादनहुषनलादीनाञ्च थाः कथाः।
श्रीरामस्याश्वमेधस्य रन्तिदेवस्य कर्मणाम् ॥ २३१ ॥
येषां येषां नृपाणाञ्च श्रुत्वा वृद्धमुखात् कथाः।
कथयन्तश्च ताः केचित् श्रुतवन्तश्च केचन ॥२३२॥
स्थायं स्थायं गताः केचित् स्वापं स्वापञ्च केचन।
एवं सर्वे प्रमुदिताः प्रजग्मुः स्वालयं मुदा ॥ २३३ ॥
हृष्टो नन्दो यशोदा च बालं कृत्वा च वक्षसि।
तस्थौ स्वमन्दिरे रम्ये कुवेरभुवनोपमे ॥ २३४ ॥
एवं प्रवर्द्धितौ बालौ शुक्लचन्द्रकलोपमौ।
गवां पुच्छञ्च भित्तिञ्च धृत्वा चोत्तस्थतुर्मुदा ॥२३५॥
शब्दार्द्धं वा तदर्द्धं वा चमौ वक्तुं दिने दिने।
पित्रोर्हर्षञ्च वर्द्धन्तौ गच्छन्तौ प्राङ्गणे मुने ॥२३६॥
बालौ द्विपादं पादं वा गन्तुं शक्तौ बभूव ह।

गन्तुं शक्तौ हि जानुभ्यां प्राङ्गणे वा गृहे हरिः ॥२३७॥
वर्षाधिको हि वयसा कृष्णात्सङ्कर्षणः स्वयम् ।
ततो मुदं वर्द्धयन्तौ वर्द्धितौ च दिने दिने ॥२३८॥
व्रजन्तौ गोकुले बालौ प्रकृष्टगमने क्षमौ ।
उक्तवन्तौ स्फुटं वाक्यं मायाबालकविग्रहौ ॥२३९॥
गर्गो जगाम मथुरां वसुदेवाश्रमं मुने ।
स तं ननाम पप्रच्छ पुत्रयोः कुशलं तयोः ॥२४०॥
मुनिस्तं कथयामास कुशलं सुमहोत्सवम् ।
आनन्दाश्रुनिमग्नश्च श्रुतमात्राद्बभूव ह ॥२४१॥
देवकी परमप्रीत्या पप्रच्छ च पुनः पुनः ।
आनन्दाश्रुनिमग्ना सा रुरोद च मुहुर्मुहुः ॥२४२॥
गर्गस्तावाशिषं दत्त्वा जगाम स्वालयं मुदा ।
स्वगृहे तस्थतुस्तौ च कुवेरभवनोपमे ॥ २४३॥
यत्र कल्पे कथा चेयं तत्र त्वमुपवर्हणः ।
पञ्चाशत्कामिनीनाञ्च पतिर्गन्धर्वपुङ्गवः ॥२४४॥
तासां प्राणाधिकस्त्वञ्च शृङ्गारनिपुणो युवा ।
ततोऽभूर्ब्रह्मणः शापाद्दासीपुत्रो द्विजस्य च ॥२४५॥
ततोऽधुना ब्रह्मपुत्रो वैष्णवोच्छिष्टभोजनात् ।
सर्वदर्शी च सर्वज्ञः स्मारको हरिसेवया ॥२४६॥
कथितं कृष्णचरितं नामान्नप्राशनादिकम् ॥
जन्ममृत्युजरानिघ्नमपरं कथयामि ते ॥ २४७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे कृष्णान्नप्राशनं नामकरण-
प्रस्तावो नाम त्रयोदशोऽध्यायः ।

# चतुर्दशोऽध्यायः ।

---

श्रीनारायण उवाच ।

एकदा नन्दपत्नी च स्नानार्थं यमुनां ययौ ।
गव्यपूर्णं गृहं दृष्ट्वा जहास मधुसूदनः ॥ १ ॥
दधिदुग्धाज्यतक्रञ्च नवनीतं मनोरमम् ।
गृहस्थितञ्च यत्किञ्चिच्चखाद मधुसूदनः ॥ २ ॥
मधु हैयङ्गवीनं यत् स्वस्तिकं शकटस्थितम् ।
भुक्त्वा पीत्वांशुकैर्वक्त्रसंस्कारं कर्त्तुमुद्यतम् ॥ ३ ॥
ददर्श बालकं गोपी स्नात्वागत्य स्वमन्दिरम् ।
गव्यशून्यं भग्नभाण्डं मध्वादिरिक्तभाजनम् ॥ ४ ॥
दृष्ट्वा पप्रच्छ बालांश्च अहो कर्मेदमद्भुतम् ।
यूयं वदत सत्यञ्च कृतं केन सुदारुणम् ॥ ५ ॥
यशोदावचनं श्रुत्वा सर्वमूचुश्च बालकाः ।
चखाद सत्यं बालस्ते नास्मभ्यं दत्तमेव च ॥ ६ ॥
बालानां वचनं श्रुत्वा चुकोप नन्दगेहिनी ।
वेत्रं गृहीत्वा दुद्राव रक्तपङ्कजलोचना ॥ ७ ॥
पलायमानं गोविन्दं गृहीतुं न शशाक ह ।
ध्यानासाध्यं शिवादीनां दुरापमपि योगिनाम् ॥ ८ ॥
यशोदा भ्रमणं कृत्वा विश्रान्ता घर्मसंयुता ।
तस्थौ कोपपरीतात्मा शुष्ककण्ठोष्ठतालुका ॥ ९ ॥
विश्रान्तां मातरं दृष्ट्वा कृपालुः पुरुषोत्तमः ।

सन्तस्थौ पुरतो मातुः सस्मितो जगदीश्वरः ॥ १० ॥
करे धृत्वा च तं देवी समानीय स्वमालयम्।
बध्वा वस्त्रेण वृक्षे च तताड़ मधुसूदनम् ॥ ११ ॥
बध्वा कृष्णं यशोदा सा जगाम स्वालयं प्रति।
हरिस्तस्थौ वृक्षमूले जगतां पतिरीश्वरः ॥ १२ ॥
श्रीकृष्णस्पर्शमात्रेण सहसा तत्र नारद।
पपात वृक्षः शैलाभः शब्दं कृत्वा भयानकम् ॥ १३ ॥
सुवेशः पुरुषो दिव्यो वृक्षादाविर्बभूव ह।
दिव्यस्यन्दनमारुह्य जगाम स्वालयं पुरः ॥ १४ ॥
प्रणम्य जगतीनाथं शातकुम्भपरिच्छदम्।
किशोरः सस्मितो गौरो रत्नालङ्कारभूषितः ॥ १५ ॥
सा वृक्षपतनं दृष्ट्वा भिया त्रस्ता व्रजेश्वरी।
क्रोड़े चकार बालं तं रुदन्तं श्यामसुन्दरम् ॥ १६ ॥
आजग्मुर्गोकुलस्थाश्च गोपा गोप्यश्च तद्गृहम्।
यशोदां भर्त्सयामासुः शान्तिं चक्रुः शिशोर्मुदा ॥ १७ ॥
अत्यन्तस्थविरे काले तनयोऽयं बभूव ह।
धनं धान्यञ्च रत्नं वा तत्सर्वं पुत्रहेतुकम् ॥ १८ ॥
सुमतिर्नास्ति ते सत्यं ज्ञातं नन्दव्रजेश्वरि।
न भक्षितं यत् पुत्रेण तत् सर्वं निष्फलं भुवि ॥ १९ ॥
पुत्रं बद्धा गव्यहेतोर्वृक्षमूले च निष्ठुरे।
गृहकर्मणि व्यग्रायां दैवाद् वृक्षः पपात ह ॥ २० ॥
वृक्षस्य पतनाद्गोपीभाग्याद् बालोऽपि जीवितः।
प्रनष्टे बालके मूढ़े वस्तूनां किं प्रयोजनम् ॥ २१ ॥
आशिषं युयुजुर्विप्रा वन्दिनश्च शुभावहाम्।

द्विजेन कारयामासुर्नामसङ्कीर्त्तनं हरेः ॥ २२ ॥
एवं कृत्वा जनाः सर्वे प्रययुर्निजमन्दिरम्।
उवाच पत्नीं नन्दश्च रक्तपङ्कजलोचनः ॥ २३

नन्द उवाच।

यास्यामि तीर्थमद्यैव कण्ठे कृत्वा तु बालकम्।
अथवा त्वं गृहाद्गच्छ त्वया मे किं प्रयोजनम् ॥ २४ ॥
शतकूपाधिका वापी शतवापीसमं सरः।
सरःशताधिको यज्ञः पुत्त्रो यज्ञशताधिकः ॥ २५ ॥
तपोदानोद्भवं पुण्यं जन्मान्तरसुखप्रदम्।
सुखप्रदोऽपि सत्पुत्र इहैव च परत्र च।
पुत्रादपि परो बन्धुर्न भूतो न भविष्यति ॥ २६ ॥
एवमुक्त्वा स्वभार्य्याञ्च तस्थौ नन्दः स्वमन्दिरे।
यशोदा रोहिणी चैव नियुक्ते गृहकर्मणि ॥ २७ ॥

नारद उवाच।

सुवेशः पुरुषः को वा वृक्षरूपी च गोकुले।
भगवन् हेतुना केन वृक्षत्वं समवाप ह ॥ २८ ॥

नारायण उवाच।

कुवेरतनयः श्रीमान्नाम्ना यो नलकूवरः।
जगाम नन्दनवनं क्रीड़ार्थं सह रम्भया ॥ २९ ॥
निर्जने सरसस्तीरे पुष्पोद्याने मनोहरे।
वटवृक्षसमीपे च सौरभे पुष्पवायुना ॥ ३० ॥
विधाय पुष्पशयनं रत्नदीपैश्च दीपितम्।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् ॥ ३१ ॥
परितः पुष्पमाल्यैश्च चौमवस्त्रैश्च वेष्टितम्।

तत्र रम्भां समानीय विजहार यथेच्छया ॥ ३२ ॥
शृङ्गाराष्टप्रकारञ्च विपरीतादिकं सुखम् ।
चुम्बनं षट्प्रकारञ्च यथास्थानं निरूपितम् ॥ ३३ ॥
अङ्गप्रत्यङ्गसंयोगत्रिविधाश्लेषणं मुदा ।
नखदन्तकरक्रीड़ां चकार रसिकेश्वरः ॥ ३४ ॥
जलात् स्थले स्थलात्तोये कामशास्त्रविशारदः ।
रतिभोगं प्रकुर्वन्तं ददर्श देवलो मुनिः ॥ ३५ ॥
नग्नां रम्भां मुक्तकेशीं पीनश्रोणिपयोधराम् ।
नखदन्तक्षताङ्गीञ्च पुलकाञ्चितविग्रहाम् ॥ ३६ ॥
पश्यन्तीं प्राणनाथञ्च पश्यन्तं सस्मितं मुदा ।
वक्रभ्रूभङ्गयुक्ताञ्च कामुकीञ्च ददर्श ताम् ॥ ३७ ॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम् ।
विचित्ररत्नमाल्यैश्च पुष्पमाल्यैश्च भूषिताम् ॥ ३८ ॥
किङ्किणीजालसंयुक्तां सिन्दूरविन्दुसंयुताम् ।
तया युक्तं पुलकितं नोत्तिष्ठन्तं स्मरान्वितम् ॥ ३९ ॥
वृक्षत्वं याहि पापिष्ठेत्युवाच मुनिपुङ्गवः ।
शशाप रम्भां कामार्त्तां मानुषी त्वं भवेति च ॥ ४० ॥
जन्मेजयस्य सुभोग्या भविता कामिनीति च ।
त्वमेव गोकुलं गच्छ वृक्षरूपी भवेति च ॥ ४१ ॥
श्रीकृष्णस्पर्शमात्रेण पुनरायास्यसि गृहम् ।
रम्भे त्वमिन्द्रसंयोगात् पुनरायास्यसि ध्रुवम् ॥ ४२ ॥
इत्येवमुक्त्वा स मुनिर्जगाम निजमन्दिरम् ।
कुवेरतनयः श्रीमान् स जगाम निजालयम् ॥ ४३ ॥
इत्येवं कथितं विप्र रम्भाख्यानं वदामि ते ।

सुचन्द्रस्य गृहे रम्भा ललाभ जन्म भारते ॥ ४४ ॥
कन्या लक्ष्मीस्वरूपा च बभूव सुन्दरी वरा।
ताञ्च सालङ्कृतां कृत्वा सुचन्द्रो नृपतीश्वरः ॥ ४५ ॥
नानाकौतुकसंयुक्तां ददौ जन्मेजयाय च।
जन्मेजयस्य सुभगा बभूव महिषी वरा ॥ ४६ ॥
स्थाने स्थाने निर्जने च राजा रेमे तया सह।
एकदा नृपतिश्रेष्ठ अश्वमेधेन दीक्षितः ॥ ४७ ॥
अश्वसङ्गोपनं कृत्वा तस्थौ शक्रश्च मन्दिरे।
यज्ञाश्वं रुचिरं मत्वा कौतुकेन च सुन्दरी ॥ ४८ ॥
द्रष्टुं जगाम सा साध्वी चाश्वमेकाकिनी मुदा।
शक्रोऽश्वनिकटे भूत्वा धर्षयामास तां सतीम् ॥४९॥
तया निवार्यमाणश्च रेमे तत्र तया सह।
मूर्च्छामवाप शक्रश्च बुबुधे न दिवानिशम् ॥ ५० ॥
सा च सम्भोगमात्रेण देहं तत्याज योगतः।
नृपस्य लज्जया भीत्या शक्रः स्वर्गं जगाम ह ॥ ५१ ॥
राजा श्रुत्वा मृतां दृष्ट्वा विललाप भृशं मुहुः।
यज्ञं समाप्य विप्रेभ्यो ददौ पूर्णाञ्च दक्षिणाम् ॥५२॥
रम्भा च मानवं देहं त्यक्त्वा स्वर्गं जगाम ह।
इत्येवं कथितं सर्वं वृक्षार्जुनविभञ्जनम्।
नलकूवरमोक्षञ्च रम्भायाश्च महामुने ॥ ५३ ॥
पुण्यदं कृष्णचरितं जन्ममृत्युजरापहम्।
इत्येवं कथितं सर्वमपरं कथयामि ते ॥ ५४ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्ण-
जन्मखण्डे वृक्षार्जुनभञ्जनं नाम चतुर्दशोऽध्यायः।

# पञ्चदशोऽध्यायः ।

श्रीनारायण उवाच ।

एकदा कृष्णसहितो नन्दो वृन्दावनं ययौ ।
तत्रोपवनभाण्डीरे चारयामास गोधनम् ॥ १ ॥
सरःसुस्वादुतोयञ्च पाययामास तत् पपौ ।
उवास वृक्षमूले च बालं कृत्वा स्ववक्षसि ॥ २ ॥
एतस्मिन्नन्तरे कृष्णो मायामानुषविग्रहः ।
चकार मायया कस्मान्मेघाच्छन्नं नभो मुने ॥ ३ ॥
मेघावृतं नभो दृष्ट्वा श्यामलं काननान्तरम् ।
झञ्झावातं महाशब्दं वज्रशब्दञ्च दारुणम् ॥ ४ ॥
वृष्टिधारामतिस्थूलां कम्पमानांश्च पादपान् ।
दृष्ट्वैवं पतितस्कन्धान्नन्दो भयमवाप ह ॥ ५ ॥
कथं यास्यामि गोवत्सान् विहाय स्वाश्रमं वत ।
गृहं यदि न यास्यामि भविता बालकस्य किम् ॥६॥
एवं नन्दे प्रवदति रुरोद श्रीहरिस्तदा ।
पयोभिया हरिश्चैव पितुः कण्ठं दधार सः ॥ ७ ॥
एतस्मिन्नन्तरे राधा जगाम कृष्णसन्निधिम् ।
गमनं कुर्वती राजहंसखञ्जनगञ्जनम् ॥ ८ ॥
शरत्पार्वणचन्द्राभामुष्टवक्त्रा मनोहरा ।
शरन्मध्याह्नपद्मानां शोभामोचनलोचना ॥ ९ ॥

परितस्तारकापङ्क्तिविचित्रकज्जलोज्ज्वला ।
खगेन्द्रचञ्चुचारुश्रीध्वंसानाग्रकनासिका ॥ १० ॥
तन्मध्यस्थलशोभार्हस्थूलमुक्ताफलोज्ज्वला ।
कवरीवेशसंयुक्ता मालतीमाल्यवेष्टिता ॥ ११ ॥
ग्रीष्ममध्याह्नमार्तण्डप्रभामुष्टककुण्डला ।
पक्वबिम्बफलानाञ्च श्रीमुष्टाधरयुग्मका ॥ १२ ॥
मुक्तापङ्क्तिप्रभान्तैकदन्तपङ्क्तिसमुज्ज्वला ।
ईषत्प्रफुल्लकुन्दानां सुप्रभानाशकस्मिता ॥ १३ ॥
कस्तूरीबिन्दुसंयुक्तसिन्दूरबिन्दुभूषिता ।
कपालं मल्लिकायुक्तं बिभ्रती श्रीयुतं सती ॥ १४ ॥
सुचारुवर्तुलाकारकपोलपुलकान्विता ।
मणिरत्नेन्द्रसाराणां हारोरःस्थलभूषिता ॥ १५ ॥
सुचारुश्रीफलयुगकठिनस्तनसङ्गता ।
पत्रावलीश्रिया युक्ता दीप्ता सद्रत्नतेजसा ॥ १६ ॥
सुचारुवर्तुलाकारमुदरं सुमनोहरम् ।
विचित्रत्रिवलीयुक्तं निम्ननाभिञ्च बिभ्रती ॥ १७ ॥
सद्रत्नसाररचितमेखलाजालभूषिता ।
कामास्त्रसारभ्रूभङ्ग्योगीन्द्रचित्तमोहिनी ॥ १८ ॥
कठिनश्रोणियुगलं धरणीधरनिन्दितम् ।
स्थलपद्मप्रभामुष्टचरणं दधती मुदा ॥ १९ ॥
रत्नभूषणसंयुक्तं यावकद्रवसंयुतम् ।
मणीन्द्रशोभासंमुष्टसालक्तकपुनर्भवम् ॥ २० ॥
सद्रत्नसाररचितक्वणन्मञ्जीररञ्जितम् ।
रत्नकङ्कणकेयूरचारुशङ्खविभूषिता ॥ २१ ॥

रत्नाङ्गुलीयनिकरं वह्निशुद्धांशुकोज्ज्वला ।
चारुचम्पकपुष्पाणां प्रभामुष्टकलेवरा ॥ २२ ॥
सहस्रदलसंयुक्तक्रीड़ाकमलमुज्ज्वलम् ।
श्रीमुखश्रीदर्शनार्थं विभ्रती रत्नदर्पणम् ॥ २३ ॥
दृष्ट्वा तां निर्जने नन्दो विस्मयं परमं ययौ ।
चन्द्रकोटिप्रभामुष्टां भासयन्तीं दिशो दश ॥ २४ ॥
ननाम तां साश्रुनेत्रो भक्तिनम्रात्मकन्धरः ।
जानामि त्वां गर्गमुखात् पद्माधिकप्रियां हरेः ॥२५॥
जानामीमं महाविष्णोः परं निर्गुणमच्युतम् ।
तथापि मोहितोऽहञ्च मानवो विष्णुमायया ॥ २६ ॥
गृहाण प्राणनाथञ्च गच्छ भद्रे यथासुखम् ।
पश्चाद्दास्यसि मत्पुत्रं कृत्वा पूर्णमनोरथम् ॥ २७ ॥
इत्युक्त्वा प्रददौ तस्यै रुदन्तं बालकं भिया ।
जग्राह बालकं राधा जहास मधुरं सुखात् ॥ २८ ॥
उवाच नन्दं सा यत्नान्न प्रकाश्यं रहस्यकम् ।
अहं दृष्टा त्वया नन्द कतिजन्मफलोदयात् ॥ २९ ॥
प्राज्ञस्त्वं गर्गवचनात्सर्वं जानासि कारणम् ।
अकथ्यमावयोर्गोप्यं चरित्रं गोकुले व्रज ॥ ३० ॥
वरं वृणु व्रजेश त्वं यत्ते मनसि वाञ्छितम् ।
ददामि लीलया तुभ्यं देवानामपि दुर्लभम् ॥ ३१ ॥
राधिकावचनं श्रुत्वा तामुवाच व्रजेश्वरः ।
युवयोश्चरणे भक्तिं देहि नान्यत्र मे स्पृहा ॥ ३२ ॥
युवयोः सन्निधौ वासं दास्यसि त्वं सुदुर्लभम् ।
आवाभ्यां देहि जगतामम्बिके परमेश्वरि ॥ ३३ ॥

श्रुत्वा नन्दस्य वचनमुवाच परमेश्वरी ।
दास्यामि दास्यमतुलमिदानीं भक्तिरस्तु ते ॥ ३४ ॥
आवयोश्चरणाम्भोजे युवयोश्च दिवानिशम् ।
प्रफुल्लहृदये शश्वत् स्मृतिरस्तु सुदुर्लभा ॥ ३५ ॥
मायायुवाञ्च प्रच्छन्नौ न करिष्यति मद्वरात् ।
गोलोके यास्यथान्ते च विहाय मानवीं तनुम् ॥ ३६ ॥
एवमुक्त्वा तु सानन्दं कृत्वा कृष्णं स्ववक्षसि ।
दूरं निनाय श्रीकृष्णं बाहुभ्याञ्च यथेप्सितम् ॥३७॥
कृत्वा वक्षसि तं कामात् श्लेषं श्लेषं चुचुम्ब च ।
पुलकाङ्कितसर्वाङ्गी सस्मार रासमण्डलम् ॥ ३८ ॥
एतस्मिन्नन्तरे राधा मायासद्रत्नमण्डपम् ।
ददर्श रत्नकलशशतेन च समन्वितम् ॥ ३९ ॥
नानाविचित्रचित्राढ्यं चित्रकाननशोभितम् ।
सिन्दूराकारमणिभिः स्तम्भसंघैर्विराजितम् ॥ ४० ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवयुक्तया ।
संयुक्तं मालतीमालासमूहपुष्पशय्यया ॥ ४१ ॥
नानाभोगसमायुक्तं दिव्यदर्पणसंयुतम् ।
मणीन्द्रमुक्तामाणिक्यमालाजालैर्विभूषितम् ॥ ४२ ॥
मणीन्द्रसाररचितकपाटेन समन्वितम् ।
भूषितं भूषितैर्वस्त्रैः पताकानिकरैर्वरैः ।
कुङ्कुमाकारमणिभिः सप्तसोपानसंयुतम् ॥ ४३ ॥
युक्तं षट्पदसंयुक्तैः पुष्पोद्यानश्च पुष्पितैः ।
सा देवी मण्डपं दृष्ट्वा जगामाभ्यन्तरं मुदा ॥ ४४ ॥
ददर्श तत्र ताम्बूलं कर्पूरादिसमन्वितम् ।

रासेश्वरस्य पत्नीयं तेन रासेश्वरी स्मृता।
रासे च वासो यस्याश्च तेन सा रासवासिनी ॥२२४॥
सर्वासां रसिकानाञ्च देवीनामीश्वरी परा।
प्रवदन्ति पुरा सन्तस्तेन तां रसिकेश्वरीम् ॥२२५॥
प्राणाधिका प्रेयसी सा कृष्णस्य परमात्मनः।
कृष्णप्राणाधिका सा च कृष्णेन परिकीर्त्तिता ॥२२६॥
कृष्णस्यातिप्रिया कान्ता कृष्णो वास्याः प्रियः सदा।
सर्व्वैर्द्देवगणैरुक्ता तेन कृष्णप्रिया स्मृता ॥ २२७ ॥
कृष्णरूपं सन्निधातुं या शक्ता चावलीलया।
सर्वांशैः कृष्णसदृशी तेन कृष्णस्वरूपिणी ॥२२८॥
वामाङ्गार्द्धेन कृष्णस्य या सम्भूता परा सती।
कृष्णवामाङ्गसम्भूता तेन कृष्णेन कीर्त्तिता ॥२२९॥
परमानन्दराशिश्च स्वयं मूर्तिमती सती।
श्रुतिभिः कीर्तिता तेन परमानन्दरूपिणी ॥ २३० ॥
कृषिर्मोक्षार्थवचनो न एवोत्कृष्टवाचकः।
आकारो दातृवचनस्तेन कृष्णा प्रकीर्त्तिता ॥२३१॥
अस्ति वृन्दावनं यस्यास्तेन वृन्दावनी स्मृता।
वृन्दावनस्याधिदेवी तेन वाथ प्रकीर्तिता ॥ २३२॥
सङ्घः सखीनां वृन्दस्यादकारोऽप्यस्तिवाचकः।
सखिवृन्दोऽस्ति यस्याश्च सा वृन्दा परिकीर्त्तिता ॥२३३॥
वृन्दावने विनोदश्च सोऽस्या ह्यस्ति च तत्र वै।
वेदा वदन्ति तां तेन वृन्दावनविनोदिनीम् ॥२३४॥
नखचन्द्रावलीवक्त्र चन्द्रोऽस्ति यत्र सन्ततम्।
तेन चन्द्रावली सा च कृष्णेन परिकीर्त्तिता ॥२३५॥

नारायणो यो वैकुण्ठे कमलाकान्त एव च ॥ ४८ ॥
श्वेतद्वीपनिवासी यः पाता विष्णुश्च सोऽप्यजः ।
कपिलोऽन्ये तदंशाश्च नरनारायणावृषी ॥ ५० ॥
सर्वेषां तेजसां राशिर्मूर्त्तिमानागतः किमु ।
स वसुं दर्शयित्वा च शिशुरूपो बभूव ह ॥ ५१ ॥
साम्प्रतं सूतिकागारादाजगाम तवालयम् ।
अयोनिसम्भवश्चायमाविर्भूतो महीतले ॥ ५२ ॥
वायुपूर्णं मातृगर्भं कृत्वा च मायया हरिः ।
आविर्भूय वसुं मूर्त्तिं दर्शयित्वा जगाम ह ॥ ५३ ॥
युगे युगे वर्णभेदो नामभेदोऽस्य वल्लव ।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ ५४ ॥
शुक्लवर्णः सत्ययुगे सुतीव्रस्तेजसावृतः ।
त्रेतायां रक्तवर्णोऽयं पीतोऽयं द्वापरे विभुः ॥ ५५ ॥
कृष्णवर्णः कलौ श्रीमान् तेजसां राशिरेव च ।
परिपूर्णतमं ब्रह्म तेन कृष्ण इति स्मृतः ॥ ५६ ॥
ब्रह्मणो वाचकः कोऽयमृकारोऽनन्तवाचकः ।
शिवस्य वाचकः षकारो णकारो धर्मवाचकः ॥ ५७ ॥
अकारो श्वेतद्वीपनिवासिनः ।
नरनारीतियुक्तं मन्त्रसर्गो वाचकः स्मृतः ॥ ५८ ॥
सर्वेषां तेजसां युक्तः शाश्वः सर्वमूर्त्तिस्वरूपकः ।
सर्वाधारः सर्वबीजस्तेन कृष्ण इति स्मृतः ॥ ५९ ॥
कृषिर्निर्वाणवचनो णकारो मोक्ष एव च ।
अकारो दातृवचनस्तेन कृष्ण इति स्मृतः ॥ ६० ॥
कृषिर्निश्चेष्टवचनो णकारो भक्तिवाचकः ।

अकारो दातृवचनस्तेन कृष्ण इति स्मृतः ॥ ६१ ॥
कर्म्मनिर्मूलवचनः कृषिर्णो दास्यवाचकः।
अकारो प्राप्तिवचनस्तेन कृष्ण इति स्मृतः ॥ ६२ ॥
नाम्ना भगवतो नन्द कोटीनां स्मरणे च यत्।
तत् फलं लभते नूनं कृष्णेति स्मरणे नरः ॥ ६३ ॥
यद्विधं स्मरणे पुण्यं वचनाच्छ्रवणात्तथा।
कोटिजन्मांहसो नाशो भवेद् यत्स्मरणादिकात् ॥६४॥
विष्णोर्नाम्नाञ्च सर्वेषां सर्वात्सारं परात्परम्।
कृष्णेति मङ्गलं नाम सुन्दरं भक्तिदायकम् ॥ ६५ ॥
ककारोच्चारणाद्भक्तः कैवल्यं जन्ममृत्युहम्।
ऋकाराद् दास्यमतुलं षकाराद्भक्तिमीप्सिताम् ॥ ६६ ॥
णकारात् सहवासञ्च तत्समं कालमेव च।
तत्सारूप्यं विसर्गाच्च लभते नात्र संशयः ॥ ६७ ॥
ककारोच्चारणादेव वेपन्ते यमकिङ्कराः।
ऋकारोक्तेर्न तिष्ठन्ति षकारात्पातकानि च ॥ ६८ ॥
णकारोच्चारणाद्रोगा अकारान्मृत्युरेव च।
ध्रुवं सर्वे पलायन्ते नामोच्चारणभीरवः ॥ ६९ ॥
मृत्युक्तिश्रवणोद्योगात् कृष्णनाम्नो व्रजेश्वर।
रथं गृहीत्वा धावन्ति गोलकात् कृष्णकिङ्कराः ॥७०॥
पृथिव्या रजसः संख्यां कर्त्तुं शक्ता विपश्चितः।
नाम्नः प्रभावसंख्यानं सन्तो वक्तुं न च क्षमाः ॥ ७१ ॥
पुरा शङ्करवक्त्रेण नाम्नोऽस्य महिमा श्रुतः।
गुणनामप्रभावञ्च किञ्चिज्जानाति मद्गुरुः ॥ ७२ ॥
ब्रह्मानन्तश्च धर्म्मश्च सुरर्षिर्मनुमानवाः।

वेदाः सन्तो न जानन्ति महिम्नः षोड़शीं कलाम् ॥७३॥
इत्येवं कथितो नन्द महिमा ते सुतस्य च।
यथामति यथाज्ञानं गुरुवक्त्रान्मया श्रुतम् ॥ ७४ ॥
कृष्णः पीताम्बरः कंसध्वंसी च विष्टरश्रवाः।
देवकीनन्दनः श्रीशो यशोदानन्दनो हरिः ॥ ७५ ॥
सनातनोऽच्युतो विष्णुः सर्वेशः सर्वरूपधृक्।
सर्वाधारः सर्वगतिः सर्वकारणकारणम् ॥ ७६ ॥
राधाबन्धूराधिकात्मा राधिकाजीवनः स्वयम्।
राधिकासहचारी च राधामानसपूरकः ॥ ७७ ॥
राधाधनो राधिकाङ्गो राधिकासक्तमानसः।
राधाप्राणो राधिकेशो राधिकारमणः स्वयम् ॥ ७८ ॥
राधिकाचित्तचोरश्च राधाप्राणाधिकः प्रभुः।
परिपूर्णतमं ब्रह्म गोविन्दो गरुड़ध्वजः ॥ ७९ ॥
नामान्येतानि कृष्णस्य श्रुतानि साम्प्रतं व्रज।
जन्ममृत्युहराण्येव रच नन्द शुभक्षणे ॥ ८० ॥
कृतं निरूपितं नाम्नां कनिष्ठस्य यथा श्रुतम्।
ज्येष्ठस्य हलिनो नाम्नः सङ्केतं शृणु मे मुखात् ॥ ८१ ॥
गर्भसङ्कर्षणादेव नाम्ना सङ्कर्षणः स्मृतः ॥ ८२ ॥
नास्त्यन्तोऽस्यैव वेदेषु तेनानन्त इति स्मृतः।
बलदेवो बलोद्रेकाद्धली च हलधारणात् ॥ ८३ ॥
शितिवासा नीलवासान्मुषली मुषलायुधात्।
रेवत्या सह सम्भोगाद्रेवतीरमणः स्वयम्।
रोहिणीगर्भवासाच्च रौहिणेयो महामतिः ॥ ८४ ॥
इत्येवं ज्येष्ठपुत्रस्य श्रुतं नाम निवेदितम्।

यास्याम्यहं गृहं नन्द सुखं तिष्ठ स्वमन्दिरे ॥ ८५ ॥
ब्राह्मणस्य वचः श्रुत्वा नन्दः स्तब्धो बभूव ह ।
निश्चेष्टा नन्दपत्नी च जहास बालकः स्वयम् ॥ ४६ ॥
प्रणम्योवाच नन्दस्तं वाक्यं विनयपूर्वकम् ।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ ८७ ॥

नन्द उवाच ।

गतश्चेत्त्वं तदा कर्म्म करिष्यत्येव को महान् ।
स्वयं शुभेक्षणं कृत्वा कुरु नामान्नप्राशनम् ॥ ८८ ॥
यन्नामौघश्च कथितौ राधाप्राणादिकौ द्वय ।
तस्यापि का वा राधेति कन्यका कस्य च ध्रुवम् ॥ ८९ ॥
नन्दस्य वचनं श्रुत्वा जहास मुनिपुङ्गवः ।
निगूढं परमं तत्त्वं रहस्यं कथयामि ते ॥ ९० ॥

श्रीगर्ग उवाच ।

शृणु नन्द प्रवक्ष्यामि इतिहासं पुरातनम् ।
पुरा गोलोकवृत्तान्तं श्रुतं शङ्करवक्त्रतः ॥ ९१ ॥
श्रीदाम्नो राधया सार्द्धं बभूव कलहो महान् ।
श्रीदामशापाद्दैवेन गोपी राधा च गोकुले ॥ ९२ ॥
वृषभानुसुता सा च माता तस्याः कलावती ।
कृष्णस्यार्द्धाङ्गसम्भूता नाथस्य सदृशी सती ॥ ९३ ॥
गोलोकवासिनी सेयमत्र कृष्णाज्ञयाधुना ।
अयोनिसम्भवा देवी मूलप्रकृतिरीश्वरी ॥ ९४ ॥
मातुर्गर्भं वायुपूर्णं कृत्वा च मायया सती ।
वायुनिःसरणे काले धृत्वा च [illegible]विग्रहम् ॥ ९५ ॥

आविर्बभूव मायेयं पृथ्व्यां कृष्णोपदेशतः ।
वर्धते सा व्रजे राधा शुक्ले चन्द्रकला यथा ॥ ९६ ॥
श्रीकृष्णतेजसोऽर्द्धेन सा च मूर्त्तिमती सती ।
एका मूर्त्तिर्द्विधाभूता भेदो वेदे निरूपितः ॥ ९७ ॥
इयं स्त्री सा पुमान् किं वा सा वा कान्ता पुमानयम् ।
द्वे रूपे तेजसा तुल्ये रूपेण च गुणेन च ।
पराक्रमेण बुद्ध्या वा ज्ञानेन सम्पदापि च ॥ ९८ ॥
पुरतो गमनेनैव किन्तु सा वयसाधिका ।
ध्यायते तामयं शश्वदिमं सा स्मरति प्रियम् ॥ ९९ ॥
रचिता सास्य प्राणैश्च तत्प्राणैर्मूर्त्तिमानयम् ।
अस्य राधानुसारेण गोकुलागमनं परम् ॥ १०० ॥
स्वीकारं सार्थकं कर्त्तुं गोलोके यत् कृतं पुरा ।
कंसभीतिच्छलेनैव गोकुलागमनं हरेः ॥ १०१ ॥
प्रतिज्ञापालनार्थाय भयेशस्य भयं कुतः ।
राधाशब्दस्य व्युत्पत्तिः सामवेदे निरूपिता ॥१०२॥
नारायणस्तामुवाच ब्रह्माणं नाभिपङ्कजे ।
ब्रह्मा तां कथयामास ब्रह्मलोके च शङ्करम् ॥ १०३ ॥
पुरा कैलासशिखरे मामुवाच महेश्वरः ।
देवानां दुर्लभां नन्द निशामय वदामि ते ॥ १०४ ॥
सुरासुरमुनीन्द्राणां वाञ्छितां मुक्तिदां पराम् ।
रेफो हि कोटिजन्माघं कर्मभोगं शुभाशुभम् ॥ १०५ ॥
आकारो गर्भवासञ्च मृत्युञ्च रोगमुत्सृजेत् ।
धकार आयुषो हानिमाकारो भवबन्धनम् ॥ १०६ ॥
श्रवणस्मरणोक्तिभ्यः प्रणश्यति न संशयः ।

रेफो हि निश्चलां भक्तिं दास्यं कृष्णपदाम्बुजे ॥१०७॥
सर्वेप्सितं सदानन्दं सर्वसिद्धौघमीश्वरम् ।
धकारः सहवासञ्च तत्तुल्यकालमेव च ॥ १०८ ॥
ददाति सार्ष्टिं सारूप्यं तत्त्वज्ञानं हरेः समम् ।
आकारस्तेजसां राशिं दानशक्तिं हरौ यथा ॥ १०९ ॥
योगशक्तिं योगमतिं सर्वकालं हरिस्मृतिम् ।
श्रुत्युक्तिस्मरणाद्योगान्मोहजालञ्च किल्बिषम् ॥११०॥
रोगशोकमृत्युयमा वेपन्ते नात्र संशयः ।
राधामाधवयोः किञ्चिद् व्याख्यानञ्च यतः श्रुतम् ॥१११॥
तदुक्तञ्च यथाज्ञानं साकल्यं वक्तुमक्षमः ।
आराद् वृन्दावने नन्द विवाहो भवितानयोः ॥११२॥
पुरोहितो जगद्धाता कृत्वाग्निं साक्षिणं मुदा ।
कुवेरपुत्रमोक्षञ्च गव्यस्याहृत्य भक्षणम् ॥ ११३ ॥
हिंसनं धेनुकस्यैव कानने तालभोजनम् ।
वककेशिप्रलम्बानां हिंसनञ्चाथ लीलया ॥ ११४ ॥
मोक्षणं द्विजपत्नीनां मिष्टान्नपानभोजनम् ।
भञ्जनं शक्रयागस्य शक्राद्गोकुलरक्षणम् ॥ ११५ ॥
गोपीनां वस्त्रहरणं व्रतसम्पादनन्तथा ।
ताभ्यः पुनर्वस्त्रदानं वरदानं यथेप्सितम् ॥ ११६ ॥
चेतसां हरणं तासामयं वश्याः करिष्यति ।
रासोत्सवं महारम्यं सर्वेषां हर्षवर्द्धनम् ॥ ११७ ॥
पूर्णचन्द्रोदये नक्तं वसन्ते रासमण्डले ।
गोपीनां नवसम्भोगात् कृत्वा पूर्णं मनोरथम् ॥११८॥
ताभिः सह जलक्रीड़ां करिष्यति कुतूहलात् ।

विच्छेदोऽस्य वर्षशतं श्रीदामशापहेतुकम् ॥ ११९॥
गोपालैर्गोपिकाभिश्च भविता राधया सह ।
मथुरागमनं तत्र गोपीनां शोकवर्द्धनम् ॥ १२० ॥
पुनः प्रबोधनं तासां दानमाध्यात्मिकस्य च ।
स्यन्दनाक्रूरयो रच्चां सद्यस्ताभ्यां करिष्यति ॥१२१॥
रथस्यारोहणं कृत्वा मथुरागमनं पुनः ।
पितृभ्रातृव्रजैः सार्द्धं विलङ्घ्य यमुनां व्रजे ॥ १२२॥
अक्रूराय स्नानदानं दर्शयित्वा स्वकं जले ।
कौतुकेन च सायाह्ने नगरात्सर्वदर्शनम् ॥ १२३॥
मालाकारतन्तुवायकुब्जानां बन्धमोचणम् ।
धनुर्भङ्गं शङ्करस्य यागस्थानप्रदर्शनम् ॥ १२४ ॥
हिंसनं गजमल्लानां दर्शनं नृपतेः पुरः ।
कंसस्य हिंसनं सद्यः पित्रोर्निगड़मोचणम् ॥ १२५ ॥
प्रबोधनञ्च युष्माकमुग्रसेनाभिषेचनम् ।
तस्य तस्य बधूनाञ्च ज्ञानाच्छोकापनोदनम् ॥१२६॥
भ्रातुः स्वस्योपनयनं विद्यादानं गुरोर्मुखात् ।
गुरुपुत्रप्रदानञ्च पुनरागमनं गृहे ॥ १२७ ॥
कृन्तनं नृपसैन्यानां यवनस्य दुरात्मनः ।
निर्माणं द्वारकायाश्च मुचुकुन्दस्य मोचणम् ॥१२८॥
द्वारकागमनञ्चैव यादवैः सह कौतुकात् ।
स्त्रीसंघानां विहरणं ताभिः सार्द्धञ्च क्रीड़नम् ॥१२९॥
सौभाग्यवर्धनन्तासां पुत्रपौत्रादिकस्य च ।
मणिसम्बन्धिनो मिथ्याकलङ्कस्य च मोचणम् ॥१३०॥
साहाय्यं पाण्डवानाञ्च भारावतरणादिकम् ।

निष्पन्नं राजसूयस्य धर्मपुत्रस्य लीलया ॥ १३१ ॥
पारिजातस्य हरणं शक्राहङ्कारमर्दनम्।
व्रतपूर्णञ्च सत्याया बाणस्य भुजकृन्तनम् ॥ १३२ ॥
मर्दनं शिवसैन्यानां हरस्य जृम्भणं परम्।
हरणं बाणपुत्रायाश्चैवानिरुद्धस्य मोचणम्। १३३ ॥
वाराणस्याश्च दहनं विप्रदारिद्र्यभञ्जनम्।
विप्रपुत्रप्रदानञ्च दुष्टानां दमनादिकम् ॥ १३४ ॥
तीर्थयात्राप्रसङ्गेन युष्माभिः सह दर्शनम्।
कृत्वा च राधया सार्धं व्रजमागमिता पुनः ॥ १३५ ॥
प्रस्थापयित्वा द्वाराञ्च परं नारायणांशकम्।
सर्वं निष्पादनं कृत्वा गोलोकं राधया सह ॥ १३६ ॥
गमिष्यत्येव गोलोकं नाथोऽयं जगताम्पतिः।
नारायणश्च वैकुण्ठं गमिता स्म त्वया सह ॥ १३७ ॥
धर्म्मगृहमृषी द्वौ च विष्णुः क्षीरोदमेव च।
इत्येवं कथितं नन्द भविष्यं वेदनिर्णयम् ॥ १३८ ॥
श्रूयतां साम्प्रतं कर्म यदर्थं गमनं मम।
माघशुक्लचतुर्दश्यां कुरु कर्म्म शुभे क्षणे ॥ १३९ ॥
गुरुवारे च रेवत्यां विशुद्धे चन्द्रतारके।
चन्द्रस्थे मीनलग्ने च लग्नेशशुभदर्शने ॥ १४० ॥
वणिजे करणोत्कृष्टे शुभयोगे मनोहरे।
सुदुर्लभे दिने तत्र सर्वोत्कृष्टोपयोगिके ॥ १४१ ॥
आलोच्य पण्डितैः सार्द्धं कुरु कर्म मुदान्वितः।
इत्युक्त्वा बहिरागत्य समुवास मुनीश्वरः ॥ १४२ ॥
हृष्टो नन्दो यशोदा च [illegible] चकार ह।

एतस्मिन्नन्तरे द्रष्टुं गर्गं गोपाश्च गोपिकाः ॥ १४३ ॥
बालका बालिकाश्चैव आजग्मुर्नन्दमन्दिरम् ।
ददृशुस्ते मुनिश्रेष्ठं ग्रीष्ममध्याह्नभास्करम् ॥ १४४ ॥
शिष्यसङ्घैः परिवृतं ज्वलन्तं ब्रह्मतेजसा ।
गूढ़योगं प्रवोचन्तं सिद्धाय पृच्छते मुदा ॥ १४५ ॥
पश्यन्तं सस्मितं नन्दभवनानां परिच्छदम् ।
स्वर्णसिंहासनस्थञ्च योगमुद्राधरं वरम् ॥ १४६ ॥
भूतं भव्यं भविष्यञ्च पश्यन्तं ज्ञानचक्षुषा ।
हृदीश्वरं प्रपश्यन्तं सिद्धं मन्त्रप्रभावतः ॥ १४७ ॥
बहिर्यशोदा क्रोड़स्थं तादृशं सस्मितं शिशुम् ।
महेशदत्तध्यानेन यद्रूपञ्च निरूपितम् ॥ १४८ ॥
तं दृष्ट्वा परमप्रीत्या पूर्णभूतमनोरथम् ।
साश्रुनेत्रं पुलकितं निमग्नं भक्तिसागरे ॥ १४९ ॥
हृदि पूजां प्रणामञ्च कुर्वन्तं योगचर्य्यया ।
मूर्ध्ना प्रणेमुस्ते तञ्च स च तानाशिषं ददौ ॥ १५० ॥
आसनस्थो मुनिस्तस्थौ ते जग्मुः स्वालयं मुदा ।
नन्दः सानन्दयुक्तश्च बन्धून् मङ्गलपत्रिकाः ॥ १५१ ॥
प्रस्थापयामास शीघ्रमाराद् दूरस्थितान् मुदा ।
दधिकुल्यां दुग्धकुल्यां घृतकुल्यां प्रपूरिताम् ॥ १५२ ॥
गुड़कुल्यां तैलकुल्यां मधुकुल्याञ्च विस्तृताम् ।
नवनीतकुल्यां पूर्णाञ्च तक्रकुल्यां यदृच्छया ॥ १५३ ॥
शर्करोदककुल्याञ्च परिपूर्णाञ्च लीलया ।
तण्डुलानाञ्च शालीनामुच्चैश्च शतपर्वतान् ॥ १५४ ॥
पृथुकानां शैलशतं लवणानाञ्च सप्त च ।

सप्त शैलान् शर्कराणां लड्डुकानाञ्च सप्त च ॥ १५५ ॥
परिपक्कफलानाञ्च तत्र षोड़श पर्वतान्।
यवगोधूमचूर्णानां पक्कलड्डुकपिण्डकान् ॥ १५६ ॥
मोदकानाञ्च शैलञ्च स्वस्तिकानाञ्च पर्वतान्।
कपर्दकानामत्युच्चैः शैलान् सप्त च नारद ॥ १५७ ॥
कर्पूरादिकयुक्तानां ताम्बूलानाञ्च मन्दिरम्।
विस्तृतं द्वारहीनञ्च वासितोदकसंयुतम् ॥ १५८ ॥
चन्दनागुरुकस्तूरीकुङ्कुमेन समन्वितम्।
नानाविधानि रत्नानि स्वर्णानि विविधानि च ॥१५९॥
मुक्ताफलानि रम्याणि प्रवालानि मुदान्वितः।
नानाविधानि चारूणि वासांसि भूषणानि च ॥१६०॥
पुत्रान्नप्राशने नन्दः कारयामास कौतुकात्।
संस्कारयुक्तं रुचिरं चन्दनद्रवचर्चितम् ॥ १६१ ॥
प्राङ्गणं कदलीस्तम्भै रसालनवपल्लवैः।
ग्रथितैः सूक्ष्मवस्त्रेण वेष्टयामास कौतुकात् ॥ १६२ ॥
युक्तं मङ्गलकुम्भैश्च फलपल्लवसंयुतैः।
चन्दनागुरुकस्तूरीपुष्पमालाविराजितैः ॥ १६३ ॥
माल्यानां वरवस्त्राणां राशिभिश्च विराजितम्।
गवाञ्च मधुपर्काणामासनानाञ्च नारद ॥ १६४ ॥
फलानां जलकुम्भानां समूहैश्च समन्वितम्।
नानाप्रकारैर्वाद्यैश्च दुर्लभैः सुमनोहरैः ॥ १६५ ॥
ढक्कानां दुन्दुभीनाञ्च पटहानां तथैव च।
मृदङ्गमुरजादीनामानकानां समूहकैः ॥ १६६ ॥
वंशीसन्नहनीकांस्यसरयन्त्रैश्च शब्दितम्।

विद्याधरीणां नृत्येन भङ्गिमाभ्रमणेन च ॥ १६७ ॥
गन्धर्वनायकानाञ्च सङ्गीतैर्मूर्च्छनायुतैः ।
स्वर्णसिंहासनानाञ्च रथानां निःस्वनैर्युतम् ॥ १६८ ॥
एतस्मिन्नन्तरे नन्दमुवाच वाचको मुदा ।
आजग्मुर्व्रजवेन्द्राश्च बान्धवा व्रजवास्तथा ॥ १६९ ॥
अश्वस्थाश्च गजस्थाश्च रथस्थाश्चेति सत्वरम् ।
आजग्मू राजपुत्राश्च रत्नालङ्कारभूषिताः ॥ १७० ॥
आगतो गिरिभानुश्च सस्त्रीकश्च सकिङ्करः ।
रथानाञ्च चतुर्लक्षं गजानाञ्च तथैव च ॥ १७१ ॥
तुरङ्गमाणां कोटिश्च शिविकानां तथैव च ।
ऋषीन्द्राणां मुनीन्द्राणां विप्राणाञ्च विपश्चिताम् ॥१७२॥
वन्दिनां भिक्षुकाणाञ्च समूहैश्च समीपतः ।
गोपानां गोपिकानाञ्च संख्यां कर्त्तुञ्च कः क्षमः ॥१७३॥
पश्चागत्य बहिर्भूयेत्युवाच प्राङ्गणे स्थितः ।
श्रुत्वैवं तानुपव्रज्य समानीय व्रजेश्वरः ॥ १७४ ॥
प्राङ्गणे वासयामास पूजयामास सत्वरम् ।
ऋष्यादिकसमूहञ्च प्रणम्य शिरसा भुवि ।
पाद्यादिकञ्च तेभ्यश्च प्रददौ सुसमाहितः ॥ १७५ ॥
वस्तुभिर्बन्धुभिः पूर्णं बभूव नन्दगोकुलम् ।
न कोऽपि कस्य शब्दं च श्रोतुं शक्तश्च तत्र वै ॥१७६॥
त्रिमुहूर्त्तं कुवेरश्च श्रीकृष्णप्रीतये मुदा ।
चकार स्वर्णवृष्ट्या च परिपूर्णञ्च गोकुलम् ।१७७॥
कौतुकात्पङ्कवच्चक्रुर्बन्धुवर्गाश्च क्रीड़या ।
म्लानस्वकन्धराः सर्वे दृष्ट्वा नन्दस्य सम्पदम् ॥ १७८ ॥

नन्दः कृताह्निकः पूतो धृत्वा धौते च वाससी ।
चन्दनागुरुकस्तूरीकुङ्कुमेनैव भूषितः ॥ १७९ ॥
उवास पादौ प्रक्षाल्य स्वर्णपीठे मनोहरे ।
गर्गस्य च मुनीन्द्राणां गृहीत्वाज्ञां व्रजेश्वरः ॥१८०॥
संस्मृत्य विष्णुमाचान्तः स्वस्तिवाचनपूर्वकम् ।
कृत्वा कर्म च वेदोक्तं भोजयामास बालकम् ॥१८१॥
गर्गवाक्यानुसारेण बालकस्य मुदान्वितः ।
कृष्णेति मङ्गलं नाम ररक्ष च शुभे क्षणे ॥ १८२ ॥
स घृतं भोजयित्वा च कृत्वा नाम जगत्पतेः ।
वाद्यानि वादयामास कारयामास मङ्गलम् ॥१८३॥
नानाविधानि स्वर्णानि धनानि विविधानि च ।
भक्ष्यद्रव्याणि वासांसि ब्राह्मणेभ्यो ददौ मुदा ॥१८४॥
वन्दिभ्यो भिक्षुकेभ्यश्च सुवर्णं विपुलं ददौ ।
भाराक्रान्ताश्च ते सर्वे न शक्ता गन्तुमेव च ॥१८५॥
ब्राह्मणान् बन्धुवर्गांश्च भिक्षुकांश्च विशेषतः ।
मिष्टान्नं भोजयामास परिपूर्णं मनोहरम् ॥ १८६ ॥
दीयतां दीयताञ्चैव खाद्यतां खाद्यतामिति ।
बभूव शब्दोऽप्युच्चैश्च सततं नन्दगोकुले ॥ १८७ ॥
रत्नानि परिपूर्णानि वासांसि भूषणानि च ।
प्रवालानि सुवर्णानि मणिसाराणि यानि च ॥१८८॥
चारूणि स्वर्णपात्राणि कृतानि विश्वकर्मणा ।
गत्वा गर्गाय विनयं चकार वल्लपुङ्गवः ॥ १८९ ॥
शिष्येभ्यः स्वर्णभारांश्च प्रददौ विनयान्वितः ।
द्विजेभ्योऽप्यवशिष्टेभ्यः परिपूर्णानि नारद ॥ १९० ॥

श्रीनारायण उवाच ।

गृहीत्वा श्रीहरिं गर्गो जगाम निभृतं मुदा ।
तुष्टाव परया भक्त्या प्रणम्य च तमीश्वरम् ॥१९१॥
साश्रुनेत्रः सपुलको भक्तिनम्रात्मकन्धरः ।
पुटाञ्जलियुतो भूत्वोवाच कृष्णपदाम्बुजे ॥ १९२ ॥

गर्ग उवाच ।

हे कृष्ण जगतां नाथ भक्तानां भयभञ्जन ।
प्रसन्नो भव मामीश देहि दास्यं पदाम्बुजे ॥ १९३ ॥
त्वत्पित्रा मे धनं दत्तं तेन मे किं प्रयोजनम् ।
देहि मे निश्चलां भक्तिं भक्तानामभयप्रद ॥ १९४ ॥
अणिमादिकसिद्धिषु योगेषु मुक्तिषु प्रभो ।
ज्ञानतत्त्वेऽमरत्वे वा किञ्चिन्नास्ति स्पृहा मम ॥१९५॥
इन्द्रत्वे वा मनुत्वे वा स्वर्गलोकफले चिरम् ।
नास्ति मे मनसो वाञ्छा त्वत्पादसेवनं विना ॥१९६॥
सालोक्यं सार्ष्टिसारूप्ये सामीप्यैकत्वमीप्सितम् ।
नाहं गृह्णामि ते ब्रह्मन् त्वत्पादसेवनं विना ॥१९७॥
गोलोके वापि पाताले वासे नास्ति मनोरथः ।
किन्तु ते चरणाम्भोजे सन्ततं स्मृतिरस्तु मे ॥ १९८ ॥
त्वन्मन्त्रं शङ्करात् प्राप्य कतिजन्मफलोदयात् ।
सर्वज्ञोऽहं सर्वदर्शी सर्वत्र गतिरस्तु मे ॥ १९९ ॥
कृपां कुरु कृपासिन्धो दीनबन्धो पदाम्बुजे ।
रक्ष माम भयं दत्त्वा मृत्युर्मे किं करिष्यति ॥ २०० ॥
सर्वेषामीश्वरः शर्वस्त्वत्पादाम्भोजसेवया ।
मृत्युञ्जयोऽन्तकारश्च बभूव योगिनां गुरुः ॥ २०१ ॥

ब्रह्मा विधाता जगतां त्वत्पादाम्भोजसेवया ।
यस्यैकदिवसे ब्रह्मन् पतन्तीन्द्राश्चतुर्दश ॥ २०२ ॥
त्वत्पादसेवया धर्मः साक्षी च सर्वकर्मणाम् ।
पाता च फलदाता च जित्वा कालं सुदुर्जयम् ॥२०३॥
सहस्रवदनः शेषो यत्पादाम्बुजसेवया ।
धत्ते सिद्धार्थवद्विश्वं शिवः कण्ठे विषं यथा ॥ २०४ ॥
सर्वसम्पद्विधात्री या देवीनाञ्च परात्परा ।
करोति सततं लक्ष्मीः केशैस्त्वत्पादमार्जनम् ॥२०५॥
प्रकृतिर्बीजरूपा सा सर्वेषां शक्तिरूपिणी ।
स्मारं स्मारं त्वत्पदाब्जं बभूव तत्परा वरा ॥ २०६ ॥
पार्वती सर्वरूपा सा सर्वेषां बुद्धिरूपिणी ।
त्वत्पादसेवया कान्तं ललाभ शिवमीश्वरम् ॥२०७॥
विद्याधिष्ठात्री देवी या ज्ञानमाता सरस्वती ।
पूज्या बभूव सर्वेषां संपूज्य त्वत्पदाम्बुजम् ॥२०८॥
सावित्री वेदजननी पुनाति भुवनत्रयम् ।
ब्रह्मणो ब्राह्मणानाञ्च मतिस्त्वत्पादसेवया ॥२०९॥
क्षमा जगद्विभर्त्तुञ्च रत्नगर्भा वसुन्धरा ।
प्रसूतिः सर्वशस्यानां त्वत्पादपद्मसेवया ॥२१०॥
राधा ममांशसम्भूता तव तुल्या च तेजसा ।
स्थित्वा वक्षसि ते पादं सेवतेऽन्यस्य का कथा ॥२११॥
यथा शर्वादयो देवा देव्यः पद्मादयो यथा ।
सनाथं कुरु मामीश ईश्वरस्य समा कृपा ॥२१२॥
न यास्यामि गृहं नाथ न गृह्णामि धनं तव ।
कृत्वा मां रक्ष पादाब्जसेवायां सेवकं रतम् ॥ २१३ ॥

इति श्रुत्वा साश्रुनेत्रः पपात चरणे हरेः ।
रुरोद च भृशं भक्त्या पुलकाञ्चितविग्रहः ॥२१४॥
गर्गस्य वचनं श्रुत्वा जहास भक्तवत्सलः ।
उवाच तं स्वयं कृष्णो मयि ते भक्तिरस्त्विति ॥२१५॥
इदं गर्गकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः ।
दृढां भक्तिं हरेर्दास्यं स्मृतिञ्च लभते ध्रुवम् ॥ २१६ ॥
जन्ममृत्युजरारोगशोकमोहादिसङ्कटात् ।
तीर्णो भवति श्रीकृष्णदाससेवनतत्परः ॥२१७॥
कृष्णस्य सह कालञ्च कृष्णसार्द्धञ्च मोदते ।
कदाचिन्न भवेत् तस्य विच्छेदो हरिणा सह ॥२१८॥

श्रीनारायण उवाच ।

हरिं मुनिः स्तवं कृत्वा ददौ नन्दाय तं मुदा ।
उवाच तं गृहं यामि कुर्वाज्ञामिति वल्लभ ॥२१९॥
अहो विचित्रं संसारो मोहजालेन वेष्टितः ।
सम्मीलनञ्च विरहो नराणां सिन्धुफेनवत् ॥२२०॥
गर्गस्य वचनं श्रुत्वा रुरोद नन्द एव च ।
सद्विच्छेदो हि साधूनां मरणादतिरिच्यते ॥ २२१ ॥
सर्वशिष्यैः परिवृतं मुनीन्द्रं गन्तुमुद्यतम् ।
सर्वे नन्दादयो गोपा रुदन्तो गोपिकास्तदा ॥२२२॥
प्रणेमुः परमप्रीत्या चक्रुस्तं विनयं मुने ।
दत्त्वाशिषं मुनिश्रेष्ठो जगाम मथुरां मुदा ॥२२३॥
ऋषयो मुनयश्चैव बन्धुवर्गाश्च वल्लवाः ।
सर्वे जग्मुर्धनैः पूर्णाः स्वालयं हृष्टमानसाः ॥२२४॥
प्रजग्मुर्वन्दिनः सर्वे परिपूर्णमनोरथाः ।

मिष्टद्रव्यांशुकोत्कृष्टतुरगस्वर्णभूषणैः ॥२२५॥
आकण्ठपूर्णा भुक्त्या च भिक्षुका गन्तुमक्षमाः ।
स्वर्णवस्त्रभरोद्रेकपरिश्रान्ता मुदान्विताः ॥२२६॥
सुमन्दगामिनः केचित् केचिद्भूमौ च शेरते ।
केचिद्वर्त्मनि तिष्ठन्तश्चोत्तिष्ठन्तश्च केचन ॥ २२७ ॥
केचिदूषुः प्रमुदिता हसन्तस्तत्र केचन ।
कपर्दकानां वस्त्रूनां शेषांश्चोर्वरितान् बहून् ॥ २२८ ॥
केचित्तानाददुः स्थित्वा दर्शयन्तश्च केचन ।
केचिन्नृत्यं प्रकुर्वन्तो गायन्तस्तत्र केचन ॥ २२९ ॥
केचिद्बहुविधा गाथाः कथयन्तः पुरातनाः ।
मरुतश्वेतसगरमान्धातॄणाञ्च भूभृताम् ॥ २३० ॥
उत्तानपादनहुषनलादीनाञ्च याः कथाः ।
श्रीरामस्याश्वमेधस्य रन्तिदेवस्य कर्मणाम् ॥ २३१ ॥
येषां येषां नृपाणाञ्च श्रुत्वा वृद्धमुखात् कथाः ।
कथयन्तश्च ताः केचित् श्रुतवन्तश्च केचन ॥२३२॥
स्थायं स्थायं गताः केचित् स्वापं स्वापञ्च केचन ।
एवं सर्वे प्रमुदिताः प्रजग्मुः स्वालयं मुदा ॥ २३३ ॥
हृष्टो नन्दो यशोदा च बालङ्कृत्वा च वक्षसि ।
तस्थौ स्वमन्दिरे रम्ये कुवेरभुवनोपमे ॥ २३४ ॥
एवं प्रवर्द्धतौ बालौ शुक्लचन्द्रकलोपमौ ।
गवां पुच्छञ्च भित्तिञ्च धृत्वा चोत्तस्थतुर्मुदा ॥२३५॥
शब्दार्द्धं वा तदर्द्धं वा क्षमौ वक्तुं दिने दिने ।
पित्रोर्हर्षञ्च वर्द्धन्तौ गच्छन्तौ प्राङ्गणे मुने ॥२३६॥
बालौ द्विपादं पादं वा गन्तुं शक्तौ बभूव ह ।

गन्तुं शक्तो हि जानुभ्यां प्राङ्गणे वा गृहे हरिः ॥२३७॥
वर्षाधिको हि वयसा कृष्णात्सङ्कर्षणः स्वयम् ।
ततो मुदं वर्द्धयन्तौ वर्द्धितौ च दिने दिने ॥२३८॥
व्रजन्तौ गोकुले बालौ प्रकृष्टगमने क्षमौ ।
उक्तवन्तौ स्फुटं वाक्यं मायाबालकविग्रहौ ॥२३९॥
गर्गो जगाम मथुरां वसुदेवाश्रमं मुने ।
स तं ननाम पप्रच्छ पुत्रयोः कुशलं तयोः ॥२४०॥
मुनिस्तं कथयामास कुशलं सुमहोत्सवम् ।
आनन्दाश्रुनिमग्नश्च श्रुतमात्राद्‌ बभूव ह ॥२४१॥
देवकी परमप्रीत्या पप्रच्छ च पुनः पुनः ।
आनन्दाश्रुनिमग्ना सा रुरोद च मुहुर्मुहुः ॥२४२॥
गर्गस्तावाशिषं दत्त्वा जगाम स्वालयं मुदा ।
स्वगृहे तस्थतुस्तौ च कुवेरभवनोपमे ॥ २४३॥
यत्र कल्पे कथा चेयं तत्र त्वमुपवर्हणः ।
पञ्चाशत्कामिनीनाञ्च पतिर्गन्धर्वपुङ्गवः ॥२४४॥
तासां प्राणाधिकस्त्वञ्च शृङ्गारनिपुणो युवा ।
ततोऽभूर्ब्रह्मणः शापाद्‌ दासीपुत्रो द्विजस्य च ॥२४५॥
ततोऽधुना ब्रह्मपुत्रो वैष्णवोच्छिष्टभोजनात् ।
सर्वदर्शी च सर्वज्ञः स्मारको हरिसेवया ॥२४६॥
कथितं कृष्णचरितं नामान्नप्राशनादिकम् ॥
जन्ममृत्युजरानिघ्नमपरं कथयामि ते ॥ २४७ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे कृष्णान्नप्राशनं नामकरण-
प्रस्तावो नाम त्रयोदशोऽध्यायः ।

# चतुर्दशोऽध्यायः ।

---

श्रीनारायण उवाच ।

एकदा नन्दपत्नी च स्नानार्थं यमुनां ययौ ।
गव्यपूर्णं गृहं दृष्ट्वा जहास मधुसूदनः ॥ १ ॥
दधिदुग्धाज्यतक्रञ्च नवनीतं मनोरमम् ।
गृहस्थितञ्च यत्किञ्चिच्चखाद मधुसूदनः ॥ २ ॥
मधु हैयङ्गवीनं यत् स्वस्तिकं शकटस्थितम् ।
भुक्त्वा पीत्वांशुकैर्वक्त्रसंस्कारं कर्त्तुमुद्यतम् ॥ ३ ॥
ददर्श बालकं गोपी स्नात्वागत्य स्वमन्दिरम् ।
गव्यशून्यं भग्नभाण्डं मध्वादिरिक्तभाजनम् ॥ ४ ॥
दृष्ट्वा पप्रच्छ बालांश्च अहो कर्म्मेदमद्भुतम् ।
यूयं वदत सत्यञ्च कृतं केन सुदारुणम् ॥ ५ ॥
यशोदावचनं श्रुत्वा सर्व्वमूचुश्च बालकाः ।
चखाद सत्यं बालस्ते नास्मभ्यं दत्तमेव च ॥ ६ ॥
बालानां वचनं श्रुत्वा चुकोप नन्दगेहिनी ।
वेत्रं गृहीत्वा दुद्राव रक्तपङ्कजलोचना ॥ ७ ॥
पलायमानं गोविन्दं गृहीतुं न शशाक ह ।
ध्यानासाध्यं शिवादीनां दुरापमपि योगिनाम् ॥ ८ ॥
यशोदा भ्रमणं कृत्वा विश्रान्ता घर्म्मसंयुता ।
तस्थौ कोपपरीतात्मा शुष्ककण्ठौष्ठतालुका ॥ ९ ॥
विश्रान्तां मातरं दृष्ट्वा कृपालुः पुरुषोत्तमः ।

सन्तस्थौ पुरतो मातुः सस्मितो जगदीश्वरः ॥ १० ॥
करे धृत्वा च तं देवी समानीय स्वमालयम् ।
बध्वा वस्त्रेण वृक्षे च तताड़ मधुसूदनम् ॥ ११ ॥
बध्वा कृष्णं यशोदा सा जगाम स्वालयं प्रति ।
हरिस्तस्थौ वृक्षमूले जगतां पतिरीश्वरः ॥ १२ ॥
श्रीकृष्णस्पर्शमात्रेण सहसा तत्र नारद ।
पपात वृक्षः शैलाभः शब्दं कृत्वा भयानकम् ॥ १३ ॥
सुवेशः पुरुषो दिव्यो वृक्षादाविर्बभूव ह ।
दिव्यस्यन्दनमारुह्य जगाम स्वालयं पुरः ॥ १४ ॥
प्रणम्य जगतीनाथं शातकुम्भपरिच्छदम् ।
किशोरः सस्मितो गौरो रत्नालङ्कारभूषितः ॥ १५ ॥
सा वृक्षपतनं दृष्ट्वा भिया त्रस्ता व्रजेश्वरी ।
क्रोड़े चकार बालं तं रुदन्तं श्यामसुन्दरम् ॥ १६ ॥
आजग्मुर्गोकुलस्थाश्च गोपा गोप्यश्च तद्गृहम् ।
यशोदां भर्त्सयामासुः शान्तिं चक्रुः शिशोर्मुदा ॥ १७ ॥
अत्यन्तस्थविरे काले तनयोऽयं बभूव ह ।
धनं धान्यञ्च रत्नं वा तत्सर्वं पुत्रहेतुकम् ॥ १८ ॥
सुमतिर्नास्ति ते सत्यं ज्ञातं नन्दव्रजेश्वरि ।
न भक्षितं यत् पुत्रेण तत् सर्वं निष्फलं भुवि ॥ १९ ॥
पुत्रं बद्धा गव्यहेतोर्वृक्षमूले च निष्ठुरे ।
गृहकर्मणि व्यग्रायां दैवाद् वृक्षः पपात ह ॥ २० ॥
वृक्षस्य पतनाद्गोपीभाग्याद् बालोऽपि जीवितः ।
प्रनष्टे बालके मूढ़े वस्तूनां किं प्रयोजनम् ॥ २१ ॥
आशिषं युयुजुर्विप्रा वन्दिनश्च शुभावहाम् ।

द्विजेन कारयामासुर्नामसङ्कीर्त्तनं हरेः ॥ २२ ॥
एवं कृत्वा जनाः सर्वे प्रययुर्निजमन्दिरम् ।
उवाच पत्नीं नन्दश्च रक्तपङ्कजलोचनः ॥ २३

नन्द उवाच ।

यास्यामि तीर्थमद्यैव कण्ठे कृत्वा तु बालकम् ।
अथवा त्वं गृहाद्गच्छ त्वया मे किं प्रयोजनम् ॥ २४ ॥
शतकूपाधिका वापी शतवापीसमं सरः ।
सरःशताधिको यज्ञः पुत्त्रो यज्ञशताधिकः ॥ २५ ॥
तपोदानोद्भवं पुण्यं जन्मान्तरसुखप्रदम् ।
सुखप्रदोऽपि सत्पुत्र इहैव च परत्र च ।
पुत्रादपि परो बन्धुर्न भूतो न भविष्यति ॥ २६ ॥
एवमुक्त्वा स्वभार्य्याञ्च तस्थौ नन्दः स्वमन्दिरे ।
यशोदा रोहिणी चैव नियुक्ते गृहकर्मणि ॥ २७ ॥

नारद उवाच ।

सुवेशः पुरुषः को वा वृक्षरूपी च गोकुले ।
भगवन् हेतुना केन वृक्षत्वं समवाप ह ॥ २८ ॥

नारायण उवाच ।

कुवेरतनयः श्रीमान्नाम्ना यो नलकूवरः ।
जगाम नन्दनवनं क्रीड़ार्थं सह रम्भया ॥ २९ ॥
निर्जने सरसस्तीरे पुष्पोद्याने मनोहरे ।
वटवृक्षसमीपे च सौरभे पुष्पवायुना ॥ ३० ॥
विधाय पुष्पशयनं रत्नदीपैश्च दीपितम् ।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् ॥ ३१ ॥
परितः पुष्पमाल्यैश्च क्षौमवस्त्रैश्च वेष्टितम् ।

तत्र रम्भां समानीय विजहार यथेच्छया ॥ ३२ ॥
शृङ्गाराष्टप्रकारञ्च विपरीतादिकं सुखम् ।
चुम्बनं षट्प्रकारञ्च यथाख्यानं निरूपितम् ॥ ३३ ॥
अङ्गप्रत्यङ्गसंयोगत्रिविधाश्लेषणं मुदा ।
नखदन्तकरक्रीड़ां चकार रसिकेश्वरः ॥ ३४ ॥
जलात् स्थले स्थलात्तोये कामशास्त्रविशारदः ।
रतिभोगं प्रकुर्वन्तं ददर्श देवलो मुनिः ॥ ३५ ॥
नग्नां रम्भां मुक्तकेशीं पीनश्रोणिपयोधराम् ।
नखदन्तक्षताङ्गीञ्च पुलकाञ्चितविग्रहाम् ॥ ३६ ॥
पश्यन्तीं प्राणनाथञ्च पश्यन्तं सस्मितं मुदा ।
वक्रभ्रूभङ्गयुक्ताञ्च कामुकीञ्च ददर्श ताम् ॥ ३७ ॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम् ।
विचित्ररत्नमाल्यैश्च पुष्पमाल्यैश्च भूषिताम् ॥ ३८ ॥
किङ्किणीजालसंयुक्तां सिन्दूरविन्दुसंयुताम् ।
तया युक्तं पुलकितं नोत्तिष्ठन्तं स्मरान्वितम् ॥ ३९ ॥
वृक्षत्वं याहि पापिष्ठेत्युवाच मुनिपुङ्गवः ।
शशाप रम्भां कामार्त्तां मानुषी त्वं भवेति च ॥ ४० ॥
जन्मेजयस्य सुभोग्या भविता कामिनीति च ।
त्वमेव गोकुलं गच्छ वृक्षरूपी भवेति च ॥ ४१ ॥
श्रीकृष्णस्पर्शमात्रेण पुनरायास्यसि गृहम् ।
रम्भे त्वमिन्द्रसंयोगात् पुनरायास्यसि ध्रुवम् ॥ ४२ ॥
इत्येवमुक्त्वा स मुनिर्जगाम निजमन्दिरम् ।
कुवेरतनयः श्रीमान् स जगाम निजालयम् ॥ ४३ ॥
इत्येवं कथितं विप्र रम्भाख्यानं वदामि ते ।

सुचन्द्रस्य गृहे रम्भा ललाभ जन्म भारते ॥ ४४ ॥
कन्या लक्ष्मीस्वरूपा च बभूव सुन्दरी वरा ।
ताञ्च सालङ्कृतां कृत्वा सुचन्द्रो नृपतीश्वरः ॥ ४५ ॥
नानाकौतुकसंयुक्तां ददौ जन्मेजयाय च ।
जन्मेजयस्य सुभगा बभूव महिषी वरा ॥ ४६ ॥
स्थाने स्थाने निर्जने च राजा रेमे तया सह ।
एकदा नृपतिश्रेष्ठ अश्वमेधेन दीक्षितः ॥ ४७ ॥
अश्वसङ्गोपनं कृत्वा तस्थौ शक्रश्च मन्दिरे ।
यज्ञाश्वं रुचिरं मत्वा कौतुकेन च सुन्दरी ॥ ४८ ॥
द्रष्टुं जगाम सा साध्वी चाश्वमेकाकिनी मुदा ।
शक्रोऽश्वनिकटे भूत्वा धर्षयामास तां सतीम् ॥४९॥
तया निवार्य्यमाणश्च रेमे तत्र तया सह ।
मूर्च्छामवाप शक्रश्च बुबुधे न दिवानिशम् ॥ ५० ॥
सा च सम्भोगमात्रेण देहं तत्याज योगतः ।
नृपस्य लज्जया भीत्या शक्रः स्वर्गं जगाम ह ॥ ५१ ॥
राजा श्रुत्वा मृतां दृष्ट्वा विललाप भृशं मुहुः ।
यज्ञं समाप्य विप्रेभ्यो ददौ पूर्णाञ्च दक्षिणाम् ॥५२॥
रम्भा च मानवं देहं त्यक्त्वा स्वर्गं जगाम ह ।
इत्येवं कथितं सर्वं वृक्षार्जुनविभञ्जनम् ।
नलकूवरमोक्षञ्च रम्भायाश्च महामुने ॥ ५३ ॥
पुण्यदं कृष्णचरितं जन्ममृत्युजरापहम् ।
इत्येवं कथितं सर्वमपरं कथयामि ते ॥ ५४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे वृक्षार्जुनभञ्जनं नाम चतुर्दशोऽध्यायः ।

# पञ्चदशोऽध्यायः ।

श्रीनारायण उवाच ।

एकदा कृष्णसहितो नन्दो वृन्दावनं ययौ ।
तत्रोपवनभाण्डीरे चारयामास गोधनम् ॥ १ ॥
सरःसुस्वादुतोयञ्च पाययामास तत् पपौ ।
उवास वृक्षमूले च बालं कृत्वा स्ववक्षसि ॥ २ ॥
एतस्मिन्नन्तरे कृष्णो मायामानुषविग्रहः ।
चकार मायया कस्मान्मेघाच्छन्नं नभो मुने ॥ ३ ॥
मेघावृतं नभो दृष्ट्वा श्यामलं काननान्तरम् ।
झञ्झावातं महाशब्दं वज्रशब्दञ्च दारुणम् ॥ ४ ॥
वृष्टिधारामतिस्थूलां कम्पमानांश्च पादपान् ।
दृष्ट्वैवं पतितस्कन्धान्नन्दो भयमवाप ह ॥ ५ ॥
कथं यास्यामि गोवत्सान् विहाय स्वाश्रमं वत ।
गृहं यदि न यास्यामि भविता बालकस्य किम् ॥६॥
एवं नन्दे प्रवदति रुरोद श्रीहरिस्तदा ।
पयोभिया हरिश्चैव पितुः कण्ठं दधार सः ॥ ७ ॥
एतस्मिन्नन्तरे राधा जगाम कृष्णसन्निधिम् ।
गमनं कुर्वती राजहंसखञ्जनगञ्जनम् ॥ ८ ॥
शरत्पार्वणचन्द्राभामुष्टवक्त्रा मनोहरा ।
शरन्मध्याह्नपद्मानां शोभामोचनलोचना ॥ ९ ॥

परितस्तारकापक्ष्मविचित्रकज्जलोज्ज्वला ।
खगेन्द्रचञ्चुचारुश्रीध्वंसानाशकनासिका ॥ १० ॥
तन्मध्यस्थलशोभार्हस्थूलमुक्ताफलोज्ज्वला ।
कवरीवेशसंयुक्ता मालतीमाल्यवेष्टिता ॥ ११ ॥
ग्रीष्ममध्याह्नमार्तण्डप्रभामुष्टककुण्डला ।
पक्वबिम्बफलानाञ्च श्रीमुष्टाधरयुग्मका ॥ १२ ॥
मुक्तापङ्क्तिप्रभान्तैकदन्तपङ्क्तिसमुज्ज्वला ।
ईषत्प्रफुल्लकुन्दानां सुप्रभानाशकस्मिता ॥ १३ ॥
कस्तूरीविन्दुसंयुक्तसिन्दूरविन्दुभूषिता ।
कपालं मल्लिकायुक्तं बिभ्रती श्रीयुतं सती ॥ १४ ॥
सुचारुवर्तुलाकारकपोलपुलकान्विता ।
मणिरत्नेन्द्रसाराणां हारोरःस्थलभूषिता ॥ १५ ॥
सुचारुश्रीफलयुगकठिनस्तनसङ्गता ।
पत्रावलीश्रिया युक्ता दीप्ता सद्रत्नतेजसा ॥ १६ ॥
सुचारुवर्तुलाकारमुदरं सुमनोहरम् ।
विचित्रत्रिवलीयुक्तं निम्ननाभिञ्च बिभ्रती ॥ १७ ॥
सद्रत्नसाररचितमेखलाजालभूषिता ।
कामास्त्रसारभ्रूभङ्गयोगीन्द्रचित्तमोहिनी ॥ १८ ॥
कठिनश्रोणियुगलं धरणीधरनिन्दितम् ।
स्थलपद्मप्रभामुष्टचरणं दधती मुदा ॥ १९ ॥
रत्नभूषणसंयुक्तं यावकद्रवसंयुतम् ।
मणीन्द्रशोभासंमुष्टसालक्तकपुनर्भवम् ॥ २० ॥
सद्रत्नसाररचितक्वणन्मञ्जीररञ्जितम् ।
रत्नकङ्कणकेयूरचारुशङ्खविभूषिता ॥ २१ ॥

रत्नाङ्गुलीयनिकर वह्निशुद्धांशुकोज्ज्वला ।
चारुचम्पकपुष्पाणां प्रभामुष्टकलेवरा ॥ २२ ॥
सहस्रदलसंयुक्तक्रीड़ाकमलमुज्ज्वलम् ।
श्रीमुखश्रीदर्शनार्थं बिभ्रती रत्नदर्पणम् ॥ २३ ॥
दृष्ट्वा तां निर्जने नन्दो विस्मयं परमं ययौ ।
चन्द्रकोटिप्रभामुष्टां भासयन्तीं दिशो दश ॥ २४ ॥
ननाम तां साश्रुनेत्रो भक्तिनम्रात्मकन्धरः ।
जानामि त्वां गर्गमुखात् पद्माधिकप्रियां हरेः ॥२५॥
जानामीमं महाविष्णोः परं निर्गुणमच्युतम् ।
तथापि मोहितोऽहञ्च मानवो विष्णुमायया ॥ २६ ॥
गृहाण प्राणनाथञ्च गच्छ भद्रे यथासुखम् ।
पश्चाद्दास्यसि मत्पुत्रं कृत्वा पूर्णमनोरथम् ॥ २७ ॥
इत्युक्त्वा प्रददौ तस्यै रुदन्तं बालकं भिया ।
जग्राह बालकं राधा जहास मधुरं सुखात् ॥ २८ ॥
उवाच नन्दं सा यत्नान्न प्रकाश्यं रहस्यकम् ।
अहं दृष्टा त्वया नन्द कतिजन्मफलोदयात् ॥ २९ ॥
प्राप्तस्त्वं गर्गवचनात्सर्वं जानासि कारणम् ।
अकथ्यमावयोर्गोप्यं चरित्रं गोकुले व्रज ॥ ३० ॥
वरं वृणु व्रजेश त्वं यत्ते मनसि वाञ्छितम् ।
ददामि लीलया तुभ्यं देवानामपि दुर्लभम् ॥ ३१ ॥
राधिकावचनं श्रुत्वा तामुवाच व्रजेश्वरः ।
युवयोश्चरणे भक्तिं देहि नान्यत्र मे स्पृहा ॥ ३२ ॥
युवयोः सन्निधौ वासं दास्यसि त्वं सुदुर्लभम् ।
आवाभ्यां देहि जगतामम्बिके परमेश्वरि ॥ ३३ ॥

श्रुत्वा नन्दस्य वचनमुवाच परमेश्वरी।
दास्यामि दास्यमतुलमिदानीं भक्तिरस्तु ते॥ ३४॥
आवयोश्चरणाम्भोजे युवयोश्च दिवानिशम्।
प्रफुल्लहृदये शश्वत् स्मृतिरस्तु सुदुर्लभा॥ ३५॥
मायायुवाञ्च प्रच्छन्नौ न करिष्यति मद्वरात्।
गोलोके यास्यथान्ते च विहाय मानवीं तनुम्॥ ३६॥
एवमुक्त्वा तु सानन्दं कृत्वा कृष्णं स्ववचसि।
दूरं निनाय श्रीकृष्णं बाहुभ्याञ्च यथेप्सितम्॥३७॥
कृत्वा वक्षसि तं कामात् श्लेषं श्लेषं चुचुम्ब च।
पुलकाङ्कितसर्वाङ्गी सस्मार रासमण्डलम्॥ ३८॥
एतस्मिन्नन्तरे राधा मायासद्रत्नमण्डपम्।
ददर्श रत्नकलशशतेन च समन्वितम्॥ ३९॥
नानाविचित्रचित्राढ्यं चित्रकाननशोभितम्।
सिन्दूराकारमणिभिः स्तम्भसंघैर्विराजितम्॥ ४०॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवयुक्तया।
संयुक्तं मालतीमालासमूहपुष्पशय्यया॥ ४१॥
नानाभोगसमायुक्तं दिव्यदर्पणसंयुतम्।
मणीन्द्रमुक्तामाणिक्यमालाजालैर्विभूषितम्॥ ४२॥
मणीन्द्रसाररचितकपाटेन समन्वितम्।
भूषितं भूषितैर्वस्त्रैः पताकानिकरैर्वरैः।
कुङ्कुमाकारमणिभिः सप्तसोपानसंयुतम्॥ ४३॥
युक्तं षट्पदसंयुक्तैः पुष्पोद्यानञ्च पुष्पितैः।
सा देवी मण्डपं दृष्ट्वा जगामाभ्यन्तरं मुदा॥ ४४॥
ददर्श तत्र ताम्बूलं कर्पूरादिसमन्वितम्।

जलञ्च रत्नकुम्भस्थं स्वच्छं शीतं मनोहरम् ॥ ४५ ॥
सुधामधुभ्यां पूर्णानि रत्नकुम्भानि नारद ।
पुरुषं कमनीयञ्च किशोरश्यामसुन्दरम् ॥ ४६ ॥
कोटिकन्दर्पलीलाभं चन्दनेन विभूषितम् ।
शयानं पुष्पशय्यायां सस्मितं सुमनोहरम् ॥ ४७ ॥
पीतवस्त्रपरीधानं प्रसन्नवदनेक्षणम् ।
मणीन्द्रसारनिर्माणं क्वणन्मञ्जीररञ्जितम् ॥ ४८ ॥
सद्रत्नसारनिर्माणकेयूरवलयान्वितम् ।
मणीन्द्रकुण्डलाभ्याञ्च गण्डस्थलविराजितम् ॥ ४९ ॥
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् ।
शरत्पार्वणचन्द्रास्य प्रभामुष्टमुखोज्ज्वलम्॥ ५० ॥
शरत्प्रफुल्लकमलप्रभामोचनलोचनम् ।
मालतीमाल्यसंश्लिष्टशिखिपिच्छसुशोभितम् ॥ ५१ ॥
त्रिवङ्कचूड़ां बिभ्रन्तं पश्यन्तं रत्नमन्दिरम् ।
क्रोड़ं बालकशून्यञ्च दृष्ट्वा तं नवयौवनम् ॥ ५२ ॥
सर्वस्मृतिस्वरूपा सा तथापि विस्मयं ययौ ।
रूपं रासेश्वरी दृष्ट्वा मुमोह सुमनोहरम् ॥ ५३ ॥
कामाच्चक्षुश्चकोराभ्यां मुखचन्द्रं पपौ मुदा ।
निमेषरहिता राधा नवसङ्गमलालसा ॥ ५४ ॥
पुलकाङ्कितसर्वाङ्गी सस्मिता मदनातुरा ।
तामुवाच हरिस्तत्र स्मेराननसरोरुहाम् ॥ ५५ ॥
नवसङ्गमयोग्याञ्च पश्यन्तीं वक्रचक्षुषा ।

श्रीकृष्ण उवाच ।

राधे स्मरसि गोलोकवृत्तान्तं सुरसंसदि ॥ ५६ ॥

अद्य पूर्णं करिष्यामि स्वीकृतं यत् पुरा प्रिये ।
त्वं मे प्राणाधिका राधे प्रेयसी च वरानने ॥ ५७ ॥
यथा त्वञ्च तथाहञ्च भेदो हि नावयोर्ध्रुवम् ।
यथा क्षीरे च धावल्यं यथाग्नौ दाहिका सति ॥५८॥
यथा पृथिव्यां गन्धश्च तथाहं त्वयि सन्ततम् ।
विना मृदा घटं कर्तुं विना स्वर्णेन कुण्डलम् ॥५९॥
कुलालः स्वर्णकारश्च न हि शक्तः कदाचन ।
तथा त्वया विना सृष्टिमहङ्कर्तुं न च क्षमः ॥ ६० ॥
सृष्टेराधारभूता त्वं वीजरूपोऽहमच्युतः ।
आगच्छ शयने साध्वि कुरु वक्षःस्थले हि माम् ॥६१॥
त्वं मे शोभास्वरूपासि देहस्य भूषणं यथा ।
कृष्णं वदन्ति मां लोकास्त्वयैव रहितं यदा ॥ ६२ ॥
श्रीकृष्णञ्च तदा तेऽपि त्वयैव सहितं परम् ।
त्वञ्च श्रीस्त्वञ्च सम्पत्तिस्त्वमाधारस्वरूपिणी ॥ ६३ ॥
सर्वशक्तिस्वरूपासि सर्वरूपोऽहमक्षरः ।
यदा तेजःस्वरूपोऽहं तेजोरूपासि त्वं तदा ॥६४॥
न शरीरी यदाहञ्च तदा त्वमशरीरिणी ।
सर्ववीजस्वरूपोऽहं सदा योगेन सुन्दरि ॥ ६५ ॥
त्वञ्च शक्तिस्वरूपा च सर्वस्त्रीरूपधारिणी ।
ममाङ्गांशस्वरूपा त्वं मूलप्रकृतिरीश्वरी ॥ ६६ ॥
शक्त्या बुद्ध्या च ज्ञानेन मया तुल्या वरानने ।
आवयोर्भेदबुद्धिञ्च यः करोति नराधमः ॥ ६७ ॥
तस्य वासः कालसूत्रे यावच्चन्द्रदिवाकरौ ।
पूर्वान् सप्त परान् सप्त पुरुषान् पातयत्यधः ॥६८॥

कोटिजन्मार्जितं पुण्यं तस्य नश्यति निश्चितम् ।
अज्ञानादावयोर्निन्दां ये कुर्वन्ति नराधमाः ॥६९॥
पच्यन्ते नरके घोरे यावच्चन्द्रदिवाकरौ ।
रा शब्दं कुर्वतस्त्रस्तो ददामि भक्तिमुत्तमाम् ॥७०॥
धा शब्दं कुर्वतः पश्चाद्यामि श्रवणलोभतः ।
ये सेवन्ते च दत्त्वा मामुपचारांश्च षोड़श ।
यावज्जीवनपर्य्यन्तं या प्रीतिर्जायते मम ॥ ७१ ॥
सा प्रीतिर्मम जायेत राधाशब्दात्ततोऽधिका ।
प्रिया न मे तथा राधे राधावक्ता ततोऽधिकः ॥७२॥
ब्रह्मानन्तः शिवो धर्मो नरनारायणावृषी ।
कपिलश्च गणेशश्च कार्त्तिकेयश्च मत्प्रियः ॥७३॥
लक्ष्मीः सरस्वती दुर्गा सावित्री प्रकृतिस्तथा ।
मम प्रियाश्च देवाश्च तास्तथापि न तत्समाः ॥ ७४ ॥
ते सर्वे प्राणतुल्या मे त्वं मे प्राणाधिका सति ।
भिन्नस्थानस्थितास्ते च त्वञ्च वक्षःस्थले स्थिता ॥७५॥
या मे चतुर्भुजा मूर्त्तिर्बिभर्त्ति वक्षसि प्रियाम् ।
सोऽहं कृष्णस्वरूपस्त्वां विवहामि स्वयं सदा ॥७६॥
इत्येवमुक्का श्रीकृष्णस्तस्थौ तल्पे मनोरमे ।
उवाच राधिका नाथं भक्तिनम्रात्मकन्धरा ॥ ७७ ॥

राधिकोवाच ।

स्मरामि सर्वं जानामि विस्मरामि कथं विभो ।
यत्त्वं वदसि सर्वाहं त्वत्पादाब्जप्रसादतः ॥ ७८ ॥
ईश्वरस्याप्रियाः केचित् प्रियाश्च कुत्र केचन ।
ये यथा मां न स्मरन्ति तथा तेषु तवाकृपा ॥ ७९ ॥

तृणञ्च पर्वतं कर्त्तुं समर्थः पर्वतं तृणम् ।
तथापि योग्यायोग्ये च सम्पत्तौ च समा कृपा ॥८०॥
तिष्ठत्यहं यथानस्त्वं कथाभिर्य्येत्क्षणं गतम् ।
तत्क्षणञ्च युगसमं नाहं गणयितुं क्षमा ॥ ८१ ॥
वक्षःस्थले च शिरसि देहि ते चरणाम्बुजम् ।
दुनोति मन्मनः सद्यस्त्वदीयविरहानलात् ॥ ८२ ॥
पुरः पपात मे दृष्टिस्त्वदीयचरणाम्बुजे ।
नीता मया न हि क्लेशाद् द्रष्टुमन्यत् कलेवरम् । ८३ ॥
प्रत्येकमङ्गं दृष्ट्वैव दत्ता शान्ते मुखाम्बुजे ।
दृष्ट्वा मुखारविन्दञ्च नान्यङ्गन्तुं न सा क्षमा ॥ ८४ ॥
राधिकावचनं श्रुत्वा जहास पुरुषोत्तमः ।
तामुवाच हितं तथ्यं श्रुतिस्मृतिनिरूपितम् ॥ ८५॥

श्रीकृष्ण उवाच ।

न खण्डनीयं तत्तत्त्र मया पूर्वं निरूपितम् ।
तिष्ठ भद्रे क्षणं भद्रं करिष्यामि तव प्रिये ॥ ८६ ॥
त्वन्मनोरथपूर्णस्य स्वयङ्कालः समागतः ।
यस्य यल्लिखितं पूर्वं यत्र काले निरूपितम् ॥ ८७
तदेव खण्डितुं राधे क्षमो नाहञ्च को विधिः ।
विधातुश्च विधाताहं येषां यल्लेखनं कृतम् ॥ ८८ ॥
ब्रह्मादीनाञ्च क्षुद्राणां न तत् खण्ड्यं कदाचन ।
एतस्मिन्नन्तरे ब्रह्मा जगाम पुरतो हरेः ॥ ८९ ॥
मालाकमण्डलुकर ईषत्स्मेरचतुर्मुखः ।
गत्वा ननाम तं कृष्णं प्रतुष्टाव यथागमम् ॥ ९० ॥
साश्रुनेत्रः पुलकितो भक्तिनम्रात्मकन्धरः।

स्तुत्वा नत्वा जगद्धाता जगाम हरिसन्निधिम् ॥ ९१ ॥
पुनर्नत्वा प्रभुं भक्त्या जगाम राधिकान्तिकम् ।
मूर्ध्ना ननाम भक्त्या च मातुस्तच्चरणाम्बुजे ॥ ९२ ॥
चकार सम्भ्रमेणैव जटाजालेन वेष्टितम् ।
कमण्डलुजलेनैव शीघ्रं प्रक्षालितं मुदा ॥ ९३ ॥
यथागमं प्रतुष्टाव पुटाञ्जलियुतः पुनः ।

ब्रह्मोवाच ।

हे मातस्त्वत्पदाम्भोजं दृष्टं कृष्णप्रसादतः ॥ ९४ ॥
सुदुर्लभञ्च सर्वेषां भारते च विशेषतः ।
षष्टिवर्षसहस्राणि तपस्तप्तं पुरा मया ॥ ९५ ॥
भास्करे पुष्करे तीर्थे कृष्णस्य परमात्मनः ।
आजगाम वरं दातुं वरदाता हरिः स्वयम् ॥ ९६ ॥
वरं वृणीष्वेत्युक्ते च स्वाभीष्टञ्च वृतं मुदा ।
राधिकाचरणाम्भोजं सर्वेषामपि दुर्लभम् ॥ ९७ ॥
हे गुणातीत मे शीघ्रमधुनैव प्रदर्शय ।
मयेत्युक्तो हरिरयमुवाच मां तपस्विनम् ॥ ९८ ॥
दर्शयिष्यामि काले च वत्सेदानीं क्षमेति च ।
न हीश्वराज्ञा विफला तेन दृष्टं पदाम्बुजम् ॥ ९९ ॥
सर्वेषां वाञ्छितं मातर्गोलोके भारतेऽधुना ।
सर्वा देव्यः प्रकृत्यंशा जन्याः प्राकृतिका ध्रुवम् ॥१००॥
त्वं कृष्णाङ्गार्धसम्भूता तुल्या कृष्णेन सर्वतः ।
श्रीकृष्णस्त्वमयं राधा त्वं राधा वा हरिः स्वयम् ॥१०१॥
न हि वेदेषु मे दृष्ट इति केन निरूपितम् ।
ब्रह्माण्डाद्बहिरूर्ध्वञ्च गोलोकोऽस्ति यथाम्बिके ॥१०२॥

वैकुण्ठश्चाप्यजन्यश्च त्वमजन्या तथाम्बिके।
यथा समस्तब्रह्माण्डे श्रीकृष्णांशांशजीविनः॥ १०३॥
तथा शक्तिस्वरूपा त्वं तेषु सर्वेषु संस्थिता।
पुरुषाश्च हरेरंशास्त्वदंशा निखिलाः स्त्रियः॥ १०४॥
आत्मना देहरूपा त्वमस्याधारस्त्वमेव हि।
अस्यास्तु प्राणैस्त्वं मातस्त्वत्प्राणैरयमीश्वरः॥ १०५॥
किमहो निर्मितः केन हेतुना शिल्पकारिणा।
नित्योऽयञ्च तथा कृष्णस्त्वञ्च नित्या तथाम्बिके॥१०६॥
अस्यांशा त्वं त्वदंशो वाप्ययं केन निरूपितः।
अहं विधाता जगतां वेदानां जनकः स्वयम्॥ १०७॥
तं पठित्वा गुरुमुखाद्भवन्त्येव बुधा जनाः।
गुणानां वा स्तवानां ते शतांशं वक्तुमक्षमः॥ १०८॥
वेदो वा पण्डितो वान्यः को वा त्वां स्तोतुमीश्वरः।
स्तवानां जनकं ज्ञानं बुद्धिर्ज्ञानाम्बिका सदा॥ १०९॥
त्वं बुद्धेर्जननी मातः को वा त्वां स्तोतुमीश्वरः।
यद्वस्तु दृष्टं सर्वेषां तद्धि वक्तुं बुधः क्षमः॥ ११०॥
यददृष्टाश्रुतं वस्तु तन्निर्वक्तुञ्च कः क्षमः।
अहं महेशोऽनन्तश्च स्तोतुं त्वां कोऽपि न क्षमः॥१११॥
सरस्वती च वेदाश्च क्षमः कः स्तोतुमीश्वरि।
यथागमं यथोक्तञ्च न मां निन्दितुमर्हसि॥ ११२॥
ईश्वराणामीश्वरस्य योग्यायोग्ये समा कृपा।
जनस्य प्रतिपाल्यस्य क्षणे दोषः क्षणे गुणः॥ ११३॥
जननी जनको यो वा सर्वं क्षमति स्नेहतः।
इत्युक्त्वा जगतां धाता तस्थौ च पुरतस्तयोः॥ ११४॥

प्रणम्य चरणाम्भोजं सर्वेषां वन्द्यमीप्सितम्।
ब्रह्मणा च कृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः।
राधामाधवयोः पादे भक्तिदास्यं लभेद् ध्रुवम्॥ १०५॥
कर्म्मनिर्मूलनं कृत्वा मृत्युं जित्वा सुदुर्जयम्।
विलङ्घ्य सर्वलोकांश्च याति गोलोकमुत्तमम्॥ ११६॥

श्रीनारायण उवाच।

ब्रह्मणः स्तवनं श्रुत्वा तमुवाच ह राधिका॥ ११७॥
वरं वृणु विधातस्त्वं यत्ते मनसि वर्त्तते।
राधिकावचनं श्रुत्वा तामुवाच जगद्विधिः॥ ११८॥
वरश्च युवयोः पादपद्मभक्तिश्च देहि मे।
इत्युक्ते विधिना राधा तूर्णमोमित्युवाच ह॥ ११९॥
पुनर्ननाम तां भक्त्या विधाता जगतां पतिः।
तदा ब्रह्मा तयोर्मध्ये प्रज्वाल्य च हुताशनम्॥१२०॥
हरिं संस्मृत्य हवनं चकार विधिना विधिः।
उत्थाय शयनात् कृष्ण उवास वह्निसन्निधौ॥ १२१॥
ब्रह्मणोक्तेन विधिना चकार हवनं स्वयम्।
प्रणमय्य पुनः कृष्णं राधां तां जनकः स्वयम्॥१२२॥
कौतुकं कारयामास सप्तधा च प्रदक्षिणम्।
पुनः प्रदक्षिणं राधां कारयित्वा हुताशनम्॥ १२३॥
प्रणमय्य ततः कृष्णं वासयामास तं विधिः।
तस्या हस्तञ्च श्रीकृष्णं ग्राहयामास तं विधिः॥१२४॥
वेदोक्तसप्तमन्त्रांश्च पाठयामास माधवम्।
संस्थाप्य राधिकाहस्तं हरेर्वक्षसि वेदवित्॥ १२५॥
श्रीकृष्णहस्तं राधायाः पृष्ठदेशे प्रजापतिः।

स्थापयामास मन्त्रांस्त्रीन् पाठयामास राधिकाम् ॥ १२६॥
पारिजातप्रसूनानां मालां जानुविलम्बिताम् ।
श्रीकृष्णस्य गले ब्रह्मा राधाद्वारा ददौ मुदा ॥१२७॥
प्रणमय्य पुनः कृष्णं राधाञ्च कमलोद्भवः ।
राधागले हरिद्वारा ददौ मालां मनोहराम् ।
पुनश्च वासयामास श्रीकृष्णं कमलोद्भवः ॥१२८॥
तद्वामपार्श्वे राधाञ्च सस्मितां कृष्णचेतसम् ।
पुटाञ्जलिं कारयित्वा माधवं राधिकां विधिः ॥१२९॥
पाठयामास वेदोक्तान् पञ्चमन्त्रांश्च नारद ।
प्रणमय्य पुनः कृष्णं समर्प्य राधिकां विधिः ॥१३०॥
कन्यकाञ्च यथा तातो भक्त्या तस्थौ हरेः पुरः ।
एतस्मिन्नन्तरे देवा सानन्दपुलकोद्गमाः ॥ १३१ ॥
दुन्दुभिं वादयामासुश्चानकं मुरजादिकम् ।
पारिजातप्रसूनानां पुष्पवृष्टिर्बभूव ह ॥ १३२ ॥
जगुर्गन्धर्वप्रवरा ननृतुश्चाप्सरोगणाः ।
तुष्टाव श्रीहरिं ब्रह्मा तमुवाच ह सस्मितः ॥१३३॥
युवयोश्चरणाम्भोजे भक्तिं मे देहि दक्षिणाम् ।
ब्रह्मणो वचनं श्रुत्वा तमुवाच हरिः स्वयम् ॥१३४॥
मदीयचरणाम्भोजे सुदृढ़ा भक्तिरस्तु ते ।
स्वस्थानं गच्छ भद्रन्ते भविता नात्र संशयः ॥ १३५ ॥
मया नियोजितं कर्म कुरु वत्स ममाज्ञया ।
श्रीकृष्णस्य वचः श्रुत्वा विधाता जगतां मुने ॥१३६॥
प्रणम्य राधां कृष्णञ्च जगाम स्वालयं मुदा ।
गते ब्रह्मणि सा देवी सस्मिता वक्रचक्षुषा ॥ १३७॥

सा ददर्श हरेर्वक्त्रं चच्छाद व्रीड़या मुखम् ।
पुलकाङ्कितसर्वाङ्गी कामबाणप्रपीड़िता ॥ १३८ ॥
प्रणम्य श्रीहरिं भक्त्या जगाम शयनं हरेः ।
चन्दनागुरुपङ्कञ्च कस्तूरीकुङ्कमान्वितम् ॥ १३९ ॥
ललाटे तिलकं कृत्वा ददौ कृष्णस्य वक्षसि ।
सुधापूर्णं रत्नपात्रं मधुपूर्णं मनोहरम् ॥ १४० ॥
प्रददौ हरये भक्त्या बुभुजे जगतीपतिः ।
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम् ॥१४१॥
ददौ कृष्णाय सा राधा सादरं बुभुजे हरिः ।
चखाद सस्मिता राधा हरिदत्तं सुधारसम् ॥१४२॥
ताम्बूलं तेन दत्तञ्च बुभुजे पुरतो हरेः ।
कृष्णचर्वितताम्बूलं राधिकायै मुदा ददौ ॥ १४३ ॥
चखाद परया भक्त्या पपौ तन्मुखपङ्कजम् ।
राधाचर्वितताम्बूलं ययाचे मधुसूदनः ॥ १४४ ॥
जहास न ददौ राधा क्षमेत्युक्तं तया मुदा ।
चन्दनागुरुकस्तूरीकङ्कमद्रवमुत्तमम् ।
राधिकायाश्च सर्वाङ्गे प्रददौ माधवः स्वयम् ॥१४५
यः कामो ध्यायते नित्यं यस्यैकचरणाम्बुजम् ।
बभूव तस्य सवशो राधासन्तोषकारणात् ॥१४६॥
यद्भृत्यभृत्यैर्मदनो जितः सर्वक्षणं मुने ।
स्वेच्छामयो हि भगवान् जितस्तेन कुतूहलात् ।१४७॥
करे धृत्वा च तां कृष्णः स्थापयामास वक्षसि ।
चकार शिथिलं वस्त्रं चुम्बनञ्च चतुर्विधम् ॥१४८॥
बभूव रतियुद्धेन विच्छिन्ना क्षुद्रघण्टिका ।

चुम्बनेनोष्ठरागश्च ह्याश्लेषेण च पत्रकम् ॥ १४९ ॥
शृङ्गारेणैव कबरी सिन्दूरतिलकं मुने ।
जगामालक्तकाङ्कश्च विपरीतादिकेन च ॥ १५० ॥
पुलकाङ्कितसर्वाङ्गी बभूव नवसङ्गमात् ।
मूर्च्छामवाप सा राधा बुबुधे न दिवानिशम् ॥१५१॥
प्रत्यङ्गेनैव प्रत्यङ्ग मङ्गेनाङ्गं समाश्लिषत् ।
शृङ्गाराष्टविधं कृष्णश्चकार कामशास्त्रवित् ॥१५२॥
पुनस्ताञ्च समाश्लिष्य सस्मितां वक्रलोचनाम् ।
क्षतविक्षतसर्वाङ्गीं नखदन्तैश्चकार ह ॥ १५३ ॥
कङ्कणानां किङ्किणीनां मञ्जीराणां मनोहरः ।
बभूव शब्दस्तत्रैव शृङ्गारसमरोद्भवः ॥ १५४ ॥
पुनस्ताञ्च समाकृष्य शय्यायाञ्च निवेश्य च ।
चकार रहितां राधां कवरीबन्धवाससा ॥ १५५ ॥
निर्जने कौतुकात् कृष्णः कामशास्त्रविशारदः ।
चूड़ावेशांशुकैर्हीनञ्चकार तञ्च राधिका ॥ १५६ ॥
न कस्य कस्माज्ज्ञानिश्च तौ द्वौ कार्य्यविशारदौ ।
जग्राह राधा हस्तात्तु माधवो रत्नदर्पणम् ॥१५७॥
मुरलीं माधवकराज्जग्राह राधिका बलात् ।
चित्तापहारं राधायाश्चकार माधवो बलात् ॥१५८॥
जहार राधिका रासान्माधवस्यापि मानसम् ।
निवृत्ते कामयुद्धे च सस्मिता वक्रलोचना ॥ १५९ ॥
प्रददौ मुरलीं प्रीत्या श्रीकृष्णाय महात्मने ।
प्रददौ दर्पणं कृष्णः क्रीड़ाकमलमुज्ज्वलम् ॥१६०॥
चकार कवरीं रम्यां सिन्दूरतिलकं ददौ ।

विचित्रपत्रकं वेश्म चकारैवं विधं हरिः ॥ १६१ ॥
विश्वकर्मा न जानाति सखीनामपि का कथा ।
वेश्मं विधातुं कृष्णस्य यदा राधा समुद्यता ॥ १६२ ॥
बभूव शिशुरूपश्च कैशोरं च विहाय च ।
ददर्श बालरूपं तं रुदन्तं पीड़ितं क्षुधा ॥१६३॥
यादृशं प्रददौ नन्दो भीतं तादृशमच्युतम् ।
विनिश्वस्य च सा राधा हृदयेन विदूयता ॥१६४॥
इतस्ततस्तं पश्यन्ती शोकार्त्ता विरहातुरा ।
उवाच कृष्णमुद्दिश्य काकूक्तिमिति कातरा ॥ १६५ ॥
मायां करोषि मायेश किङ्करीं कथमीदृशीम् ।
इत्येवमुक्त्वा सा राधा पपात च रुरोद च ।१६६॥
रुरोद कृष्णस्तत्रैव वाग् बभूवाशरीरिणी ।
कथं रोदिषि राधे त्वं स्मर कृष्णपदाम्बुजम् ॥ १६७ ॥
आ रासमण्डलं यावन्नक्तमत्रागमिष्यति ।
करिष्यसि रतिं नित्यं हरिणा सार्द्धमीप्सिताम् ॥१६८॥
छायां विधाय स्वगृहे स्वयमागत्य मा रुद ।
कृत्वा क्रोड़े च प्राणेशं मायेशं बालरूपिणम् ॥ १६९ ॥
त्यज शोकं गृहं गच्छ सुन्दरीत्थं प्रबोधिता ।
श्रुत्वेवं वचनं राधा कृत्वा क्रोड़े च बालकम् ॥ १७० ॥
ददर्श पुष्पोद्यानञ्च वनं सद्रत्नमण्डपम् ।
तूर्णं वृन्दावनाद्राधा जगाम नन्दमन्दिरम् ॥ १७१ ॥
सा मनोयायिनी देवी निमिषार्द्धेन नारद ।
संसिक्तस्निग्धमधुररसना रक्तलोचना ॥ १७२ ॥
यशोदायै शिशुं दातुमुद्यता सेत्युवाच ह ।

गृहीत्वैवं शिशुं स्थूलं रुदन्तञ्च क्षुधातुरम् ॥ १७३ ॥
गोष्ठे त्वत्स्वामिना दत्तं प्राप्नोति यातनां पथि ।
संसिक्तं वसनं वत्से मेघाच्छन्नेऽतिदुर्दिने ॥ १७४ ॥
पिच्छिले कर्दमोद्रिक्ते यशोदा वोढुमक्षमा ।
गृहाण बालकं भद्रे स्तनं दत्त्वा प्रबोधय ॥ १७५ ॥
गृहं चिरं परित्यक्तं यामि तिष्ठ सुखं सति ।
इत्युक्त्वा बालकं दत्त्वा जगाम स्वगृहं प्रति ॥ १७६ ॥
यशोदा बालकं नीत्वा चुचुम्ब च स्तनं ददौ ।
बहिर्निविष्टा सा राधा स्वगृहे गृहकर्मणि ॥ १७७ ॥
नित्यं नक्तं रतिं तत्र चकार हरिणा सह ।
इत्येवं कथितं वत्स श्रीकृष्णचरितं शुभम् ।
सुखदं मोक्षदं पुण्यमपरं कथयामि ते ॥ १७८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे राधाकृष्णविवाहनवसङ्गम
प्रस्तावना नाम पञ्चदशोऽध्यायः ॥

---

## षोड़शोऽध्यायः ।

—o—

श्रीनारायण उवाच ।

माधवो बालकैः सार्द्धमेकदा हलिना सह ।
भुक्त्वा पीत्वा च क्रीड़ार्थं जगाम श्रीवनं मुने ॥ १ ॥
तत्र नानाविधां क्रीड़ां चकार मधुसूदनः ।

कृत्वा तां शिशुभिः सार्द्धं चालयामास गोधनम् ॥ २
ययौ मधुवनं तस्माच्छ्रीकृष्णो गोधनैः सह ।
तत्र स्वादु जलं पीत्वा वने च स महाबलः ॥ ३ ॥
तत्रैकदैत्यो बलवान् श्वेतवर्णो भयङ्करः ।
विकृताकारवदनो वकाकारश्च शैलवत् ॥ ४ ॥
दृष्ट्वा च गोकुलं गोष्ठे शिशुभिर्बलकेशवौ ।
यथा ह्यगस्त्यो वातापिं सर्वं जग्रास लीलया ॥ ५ ॥
वकग्रस्तं हरिं दृष्ट्वा सर्वे देवा भयान्विताः ।
चक्रुर्हाहेति सन्त्रस्ता धावन्तः शस्त्रपाणयः ॥ ६ ॥
शक्रश्चिक्षेप वज्रञ्च मुनेरस्थिविनिर्मितम् ।
न ममार वकस्तस्मात्पक्षमेकं ददाह च ॥ ७ ॥
नीहारास्त्रं शशधरः शीतार्तस्तेन दानवः ।
यमदण्डं सूर्य्यपुत्रस्तेन कुण्ठो बभूव ह ॥ ८ ॥
वायव्यास्त्रञ्च वायुश्च तेन स्थानान्तरं ययौ ।
वरुणश्च शिलावृष्टिं चकार तेन पीड़ितः ॥ ९ ॥
हुताशनश्च वाह्नेन पक्षांश्चैव ददाह सः ।
कुवेरस्यार्धचन्द्रेण छिन्नपादो बभूव ह ॥ १० ॥
ईशानस्य च शूलेन बभूव मूर्च्छितोऽसुरः ।
ऋषयो मुनयश्चैव कृष्णञ्चक्रुर्भियाशिषम् ॥ ११ ॥
एतस्मिन्नन्तरे कृष्णः प्रज्ज्वलन् ब्रह्मतेजसा ।
ददाह दैत्यसर्वाङ्गं बाह्याभ्यन्तरमीश्वरः ॥ १२ ॥
तत्सर्वं वमनं कृत्वा प्राणांश्चत्याज दानवः ।
वकं निहत्य बलवान् शिशुभिर्गोधनैः सह ॥ १३ ॥
ययौ केलिकदम्बानां काननं सुमनोहरम् ।

एतस्मिन्नन्तरे तत्र वृषरूपधरो सुरः ॥ १४ ॥
नाम्ना प्रलम्बो बलवान् महाधूर्त्तश्च शैलवत् ।
शृङ्गाभ्याञ्च हरिं धृत्वा भ्रामयामास तत्र वै ॥ १५ ॥
दुद्रुवुर्बालकाः सर्वे रुरुदुश्च भयातुराः ।
बलो जहास बलवान् ज्ञात्वा भ्रातरमीश्वरम् ॥ १६ ॥
बालकान् बोधयामास भयं किमित्युवाच ह ।
तद्विषाणं गृहीत्वा च स्वयं श्रीमधुसूदनः ॥ १७ ॥
भ्रामयित्वा च गगने पतयामास भूतले ।
प्राणांस्तत्याज दैत्येन्द्रो निपत्य च महीतलम् ॥ १८ ॥
जहसुर्बालकाः सर्वे नन्नृतुश्च जगुर्मुदा ।
हत्वा प्रलम्बं श्रीकृष्णो बलेन सह सत्वरम् ॥ १९ ॥
गोधनं चारयामास ययौ भाण्डीरमीश्वरः ।
गच्छन्तं माधवं दृष्ट्वा केशी दैत्येश्वरो बली ॥ २० ॥
वेष्टयामास तं शीघ्रं खुरेण विलिखन्महीम् ।
मूर्ध्नि कृत्वा हरिं तुष्टो गगनं शतयोजनम् ॥ २१ ॥
उत्पात्य भ्रामयामास पपात च महीतले ।
जग्राह स हरिं पापी चर्वयामास कोपतः ॥ २२ ॥
स भग्नदन्तो दैत्यश्च वज्राङ्गचर्वणाद्धठो ।
श्रीकृष्णतेजसा दग्धः प्राणांस्तत्याज भूतले ॥ २३ ॥
स्वर्गे दुन्दुभयो नेदुः पुष्पवृष्टिर्बभूव ह ।
एतस्मिन्नन्तरे तत्र पार्षदा दिव्यरूपिणः ॥ २४ ॥
तत्राजग्मुः स्यन्दनस्था द्विभुजाः पीतवाससः ।
किरीटिनः कुण्डलिनो वनमालाविभूषिताः ॥ २५ ॥
विनोदमुरलीहस्ताः क्वणन्मञ्जीररञ्जिताः ।

चन्दनोच्चितसर्वाङ्गा गोपवेशधरा वराः ॥ २६ ॥
ईषद्धास्यप्रसन्नस्या भक्तानुग्रहकातराः ।
प्रदीप्तं रथमास्थाय रत्नसारविनिर्मितम् ॥ २७ ॥
भाण्डीरवनमाजग्मुर्यत्र सन्निहितो हरिः ।
दिव्यवस्त्रपरीधाना रत्नालङ्कारभूषिताः ॥ २८ ॥
प्रणम्य च हरिं स्तुत्वा जग्मुर्गोलोकमुत्तमम् ।
मुक्ता देहं परित्यज्य वैष्णवाः पुरुषास्त्रयः ॥ २९ ॥
सम्प्राप्य दानवीं योनिं बभूवुः कृष्णपार्षदाः ।

नारद उवाच ।

के ते च दिव्यपुरुषा वैष्णवा दैत्यरूपिणः ॥ ३० ॥
कथयस्व महाभाग श्रुतं किं परमाद्भुतम् ।

नारायण उवाच ।

शृणु ब्रह्मन् प्रवक्ष्येऽहमितिहासं पुरातनम् ॥ ३१ ॥
श्रुतं महेशवदनात् सूर्य्यपर्वणि पुष्करे ।
हरेर्गुणप्रसङ्गेन कथयामास शङ्करः ॥ ३२ ॥
संपृष्टो मुनिसङ्घैश्च मया धर्मेण ब्रह्मणा ।
ब्रह्मपुत्र महाभाग कथाम्भुवनपावनीम् ॥ ३३ ॥
कथयामास विस्तार्य सावधानं निशामय ।
गन्धर्वेशो गन्धवाहः पर्वते गन्धमादने ॥ ३४ ॥
महांस्तपस्वी प्रवरो हरिसेवनतत्परः ।
बभूवुश्चतुरः पुत्रा गन्धर्वप्रवरा मुने ॥ ३५ ॥
सस्मरुः कृष्णपादाब्जं स्वप्ने ज्ञाने दिवानिशम् ।
ते च दुर्वाससः शिष्याः श्रीकृष्णार्चनतत्पराः ॥ ३६ ॥
नित्यं दत्त्वा च कमलं सम्पूज्य तं पपुर्जलम् ।

वसुदेवः सुहोत्रश्च सुदर्शनसुपार्श्वकौ ॥ ३७ ॥
चत्वारो वैष्णवश्रेष्ठास्तेपुस्ते पुष्करे तपः।
चिरकालं तपस्तप्त्वा बभूवुः सिद्धमन्त्रिणः ॥ ३८ ॥
ज्येष्ठो दुर्वाससो योगं सम्प्राप्य योगिनां वरः।
सिद्धश्चाकृतदारश्च प्रज्वलन् ब्रह्मतेजसा ॥ ३९ ॥
सद्यो देहं परित्यज्य बभूव कृष्णपार्षदः।
एकदा भ्रातरस्ते च जग्मुश्चित्रसरोवरम् ॥ ४० ॥
पद्मानि कृष्णपूजार्थमाहर्तुमुदये रवेः।
पद्मानाञ्चयनं कृत्वा गच्छतो वैष्णवान्मुने ॥ ४१ ॥
दृष्ट्वा निबध्य संजग्मुः सर्वे शङ्करकिङ्कराः।
बलिष्ठा दुर्बलान् धृत्वा जग्मुः शङ्करसन्निधिम् ॥ ४२ ॥
ते सर्वे शङ्करं दृष्ट्वा प्रणेमुः शिरसा भुवि।
तानुवाच शिवः शीघ्रं प्रयुज्याशिषमुत्तमाम् ॥ ४३ ॥
ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकातरः।

शिव उवाच।

के यूयं पद्महर्त्तारः पार्वत्याश्च सरोवरे ॥ ४४ ॥
लक्षयक्षै रक्षणीयं पार्वतीव्रतहेतवे।
नित्यं सहस्रकमलं ददाति हरये सती ॥ ४५ ॥
व्रते त्रैमासिके भक्त्या पतिसौभाग्यवर्द्धने।
शिवस्य वचनं श्रुत्वा तमूचुर्वैष्णवा भिया ॥ ४६ ॥
पुटाञ्जलियुताः सर्वे भक्तिनम्रात्मकन्धराः।

गन्धर्वा ऊचुः।

वयं गन्धर्वप्रवरा गन्धवाहसुता विभो ॥ ४७ ॥
हरये कमलं दत्त्वा पिबामो जलमीश्वर।

वयं न विद्मो हे नाथ पर्वत्या रचितं सरः ॥ ४८ ॥
गृहाण कमलं सर्वं युष्माकञ्च फलङ्कुरु ।
न दास्यामोऽद्य कमलं पास्यामोऽद्य जलं हर ॥ ४९ ॥
किंवा कथं न पास्यामस्तुभ्यं दत्तानि तानि च ।
नित्यं ध्यात्वा यत्पदाब्जं पद्मेन पूजयामहे ॥ ५० ॥
साक्षात् तस्मै प्रदत्त्वा च पद्मं पूता वयं प्रभो ।
एकं ब्रह्म ह्यद्वितीयं क्व देहः क्व च रूपवान् ॥ ५१ ॥
भक्तानुग्रहतो देहो रूपभेदश्च मायया ।
किन्तु गृहाण पद्मानि त्वमेव मत्प्रभुः प्रभो ॥ ५२ ॥
यतो नो मानसम्पूर्णं तद्रूपं दर्शयाच्युत ।
द्विभुजं कमनीयञ्च किशोरं श्यामसुन्दरम् ॥ ५३ ॥
विनोदमुरलीहस्तं पीताम्बरधरं परम् ।
एकवक्त्रं द्विनयनं चन्दनागुरुचर्चितम् ॥ ५४ ॥
ईषद्धास्यप्रसन्नास्यं रत्नालङ्कारभूषितम् ।
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् ॥ ५५ ॥
मयूरपिच्छचूड़ञ्च मालतीमाल्यभूषितम् ।
पारिजातप्रसूनानां मालाराजिविभूषितम् ॥ ५६ ॥
कोटिकन्दर्पलावण्यलीलाधाम मनोहरम् ।
गोपीसङ्घैर्वीक्ष्यमानं सस्मितैर्वक्रलोचनैः ॥ ५७ ॥
नवयौवनसम्पन्नं राधावक्षःस्थलस्थितम् ।
ब्रह्मादिभिः स्तूयमानं वन्द्यमध्येयमभीप्सितम् ॥ ५८ ॥
स्वात्मारामं पूर्णकामं भक्तानुग्रहकातरम् ।
इत्युक्त्वा पुरतः शम्भोस्तस्थुर्गन्धर्वपुङ्गवाः ॥ ५९ ॥
श्रीकृष्णरूपश्रवणात् पुलकाङ्कितविग्रहः ।

गन्धर्वाणां वचः श्रुत्वा शिवस्तानित्युवाच ह ॥ ६० ॥
श्रीकृष्णरूपश्रवणात् साश्रुपूर्णविलोचनः ।
मयैव यूयं विज्ञाता वैष्णवप्रवरा महीम् ॥ ६१ ॥
पूतां कर्तुञ्च भ्रमथ चरणाम्भोजरेणुना ।
अहं वाञ्छां करोम्येव श्रीकृष्णभक्तदर्शनम् ॥ ६२ ॥
समागमो हि साधूनां त्रिषु लोकेषु दुर्लभः ।
पार्वत्याश्च सुराणाञ्च सदा यूयं मम प्रियाः ॥ ६३ ॥
आत्मनश्चात्मभक्तेभ्यो वैष्णवाश्च प्रियाश्च नः ।
किन्तु मोघञ्च न भवेन्मया यत् स्वीकृतं पुरा ॥ ६४ ॥
तच्छ्रूयतां महाभागाः पार्वतीव्रतकर्मणि ।
सरस्वत्यैव पद्मानि यैर्हृतानि व्रतान्तरे ॥ ६५ ॥
ते तूर्णमासुरीं योनिं गमिष्यन्ति न संशयः ।
न हि श्रीकृष्णभक्तानामशुभं विद्यते क्वचित् ॥६६ ॥
सम्प्राप्य मानवीं योनिं गोलोकं यास्यथ ध्रुवम् ।
यूयं श्रीकृष्णरूपञ्च प्रत्यक्षं द्रष्टुमुत्सुकाः ॥ ६७ ॥
ध्रुवं द्रक्ष्यथ भो वत्सा वृन्दारण्ये च भारते ।
दृष्ट्वा कृष्णं ततो मृत्युं सम्प्राप्य वैष्णवोत्तमाः ॥ ६८ ॥
दिव्यं स्यन्दनमारुह्य गमिष्यथ हरेर्गृहम् ।
अधुना वाञ्छनीयञ्च रूपं द्रष्टुमिहोत्सुकाः ॥ ६९ ॥
तत्सर्वं पश्यथेत्युक्त्वा दर्शयामास तच्छिवः ।
रूपं दृष्ट्वा साश्रुनेत्राः प्रणम्य सर्वरूपिणम् ॥ ७० ॥
आजग्मुर्दानवीं योनिमिति ते दानवेश्वराः ।
वसुदेवः पुरा मुक्तः सुहोत्रश्च वकासुरः ॥ ७१ ॥
सुदर्शनः प्रलम्बोऽयं स्वयं केशी सुपार्श्वकः ।

हरस्य वरदानेन दृष्ट्वा रूपमनुत्तमम् ॥ ७२ ॥
भृत्यं सम्प्राप्य श्रीकृष्णाज्जग्मुस्ते कृष्णमन्दिरम् ।
इत्येवं कथितं विप्र हरेश्चरितमद्भुतम् ॥ ७३ ॥
बककेशिप्रलम्बानां मोक्षणं मोक्षकारकम् ।

नारद उवाच ।

श्रुतं सर्वं महाभाग त्वत्प्रसादाद्यदद्भुतम् ॥ ७४ ॥
अधुना श्रोतुमिच्छामि पार्वत्या किं कृतं व्रतम् ।
को वाराध्यो व्रतस्यास्य किं फलं नियमश्च कः ॥ ७५ ॥
कानि द्रव्याणि भगवन् व्रतोपयोगिकानि च ।
कतिकालं व्रतं किं वा प्रतिष्ठायां निरूपणम् ॥ ७६ ॥
सुविचार्य्य वद विभो श्रोतुं कौतूहलं मम ।

श्रीनारायण उवाच ।

व्रतं त्रैमासिकं नाम पतिसौभाग्यवर्द्धनम् ॥ ७७ ॥
आराध्यो भगवान् कृष्णो राधिकासहितो मुने ।
विषुवे च समारम्भः समाप्तिर्दक्षिणायने ॥ ७८ ॥
संयम्य पूर्वदिवसे कृत्वावश्यं हविष्यकम् ।
स्नात्वा वैशाखसंक्रान्त्यां सङ्कल्प्य जाह्नवीतटे ॥ ७९ ॥
घटे मणौ शालग्रामे जले वा पूजयेद् व्रती ।
ध्यायेद्भक्त्या च राधेशं सम्पूज्य पञ्च देवताः ॥ ८० ॥
ध्यानञ्च सामवेदोक्तं निबोध कथयामि ते ।
नवीननीरदश्यामं पीतकौशेयवाससम् ॥ ८१ ॥
शरत्पार्वणचन्द्रास्यमीषद्धास्यसमन्वितम् ।
शरत्प्रफुल्लपद्माक्षं मञ्जुलाञ्जनरञ्जितम् ॥ ८२ ॥
मानसं गोपिकानाञ्च मोहयन्तं मुहुर्मुहुः ।

राधया दृश्यमानञ्च राधावक्षःस्थलस्थितम् ॥ ८३ ॥
ब्रह्मानन्तेशधर्माद्यैः स्तूयमानमहं भजे ।
ध्यात्वा कृष्णञ्च ध्यानेन तमावाह्य व्रती मुदा ॥ ८४ ॥
ध्यायेत् तदा राधिकाञ्च ध्यानं मध्यन्दिने रतम् ।
राधां रासेश्वरीं रम्यां रासोल्लासरसोत्सुकाम् ॥ ८५ ॥
रासमण्डलमध्यस्थां राधाधिष्ठातृदेवताम् ।
रासेश्वरोरःस्थलस्थां रसिकां रसिकप्रियाम् ॥ ८५ ॥
रसिकप्रवरां रम्यां रमाञ्च रमणोत्सुकाम् ।
शरद्राजीवराजीनां प्रभामोचनलोचनाम् ॥ ८७ ॥
वक्रभ्रूभङ्गसंयुक्तां मञ्जीरेणैव रञ्जिताम् ।
शरत्पार्वणचन्द्रास्यामीषद्धास्यमनोहराम् ॥ ८८ ॥
चारुचम्पकवर्णाभां चन्दनेन विभूषिताम् ।
कस्तूरीविन्दुना सार्द्धं सिन्दूरविन्दुना युताम् ॥ ८९ ॥
चारुपत्रावलीयुक्तां वह्निशुद्धांशुकोज्ज्वलाम् ।
सद्रत्नकुण्डलाभ्याञ्च सुकपोलस्थलोज्ज्वलाम् ९० ॥
रत्नेन्द्रसारहारेण वक्षःस्थलविराजिताम् ।
रत्नकङ्कणकेयूरकिङ्किणीरत्नरञ्जिताम् ॥ ९१ ॥
सद्रत्नसाररचितक्वणन्मञ्जीररञ्जिताम् ।
ब्रह्मादिभिश्च सेव्येन श्रीकृष्णेनैव सेविताम् ॥ ९२ ॥
सर्वेशेन स्तूयमानां सर्ववीजाम्भजाम्यहम् ।
इति ध्यात्वा च कृष्णेन सहितां ताञ्च पूजयेत् ॥ ९३ ॥
भक्त्या दत्त्वा प्रतिदिनमुपचारांश्च षोड़श ।
प्रत्येकञ्च पृथक् कृत्वा सर्वं दद्याद् व्रती मुदा ॥ ९४ ॥
सहस्रकमलं दिव्यं शतमष्टोत्तरं मुने ।

शतचक्रो वायुवेगो मनोयायी मनोहरः ॥ ५५ ॥
अवरुह्य रथात्तूर्णं श्यामलाः श्यामकिङ्कराः ।
प्रणम्य कृष्णं तां नीत्वा जग्मुर्गोलोकमुत्तमम् ॥५६॥
हरिश्छायां विनिर्माय ददौ सर्पाय तेजसा ।
स च किञ्चिन्न बुबुधे मोहितो विष्णुमायया ॥ ५७ ॥
अवरुह्य सर्पमूर्ध्नः श्रीकृष्णः करुणानिधिः ।
ददौ हस्तञ्च कृपया शीघ्रं कालीयमस्तके ॥ ५८ ॥
सम्प्राप्य चेतनां सद्यो ददर्श पुरतो हरिम् ।
पुटाञ्जलियुतां साश्रुपूर्णाञ्च सुरसां सतीम् ॥ ५९ ॥
प्रणनाम हरिं सद्यो ररोद प्रेमविह्वलः ।
भक्त्युद्रेकात्साश्रुनेत्रां पुलकाङ्कितविग्रहाम् ॥ ६० ॥
तूष्णीम्भूताञ्च तां दृष्ट्वा समुवाच कृपानिधिम् ।
मदीश्वरस्य सततं योग्यायोग्ये समा कृपा ॥ ६१ ॥

श्रीकृष्ण उवाच ।

वरं वृणु त्वं कालीय यस्ते मनसि वर्त्तते ।
त्वं मे प्राणाधिको वत्स सुखं तिष्ठ भयं त्यज ॥६२॥
तस्याहमनुगृह्णामि योऽतिभक्तो ममांशजः ।
किञ्चित्त्वद्दमनं कृत्वा प्रसादं हि करोम्यहम् ॥ ६३ ॥
त्वद्वंशजातान् सर्पांश्च हन्ति यो मानवाधमः ।
ब्रह्महत्यासमं पापं भविता तस्य निश्चितम् ॥ ६४ ॥
मत्पादपद्मचिह्ने यः करोति दण्डताड़नम् ।
द्विगुणं ब्रह्महत्याया भविता तस्य किल्विषम् ॥ ६५ ॥
लक्ष्मीर्यास्यति तद्गेहाच्छापं दत्त्वा सुदारुणम् ।
वंशायुर्यशसां हानिर्भविता तस्य निश्चितम् ।

ध्रुवं वर्षशतं कालसूत्रे यास्यति मन्दिरा ॥ ६६ ॥
त्वत्प्रमाणाः कीटसङ्घा दंशिष्यन्ति च सन्ततम् ।
भोगान्ते जन्म लब्ध्वा च तन्मृत्युर्वै हि दंशनात् ॥६७॥
तस्य वंशोद्भवानाञ्च त्वद्दंशाद्भविता भयम् ।
ये च त्वद्वंशजान् दृष्ट्वा सुपदाङ्कं मदीयकम् ॥ ६८ ॥
प्रणमिष्यन्ति भक्त्या ते मुच्यते सर्वपातकात् ।
गच्छ शीघ्रं रमणकं त्यज भीतिं खगाधिपात् ॥ ६९ ॥
मत्पदाङ्कं मूर्ध्नि दृष्ट्वा त्वां भक्त्या प्रणमिष्यति ।
तव त्वद्वंशजानाञ्च गरुड़ान्न भयं क्वचित् ॥ ७० ॥
सर्वेषां ज्ञातिसर्पाणां वरोऽद्य भव मद्वरात् ।
वरं किं परमं वत्स वाञ्छितं वरयाधुना ॥ ७१ ॥
भयं त्यक्त्वा कथय मां त्वदीयं दुःखभञ्जनम् ।
श्रीकृष्णवचनं श्रुत्वा कालीयः कम्पितो भिया ॥ ७२ ॥
पुटाञ्जलियुतो भूत्वा तमुवाच भुजङ्गमः ।

कालीय उवाच ।

वरोऽन्यस्मिन् मम विभो वाञ्छा नास्ति वरप्रद ॥ ७३ ॥
भक्तिं स्मृतिं त्वत्पदाब्जे देहि जन्मनि जन्मनि ।
जन्म ब्रह्मकुले वापि तिर्य्यग्योनिषु वा समम् ॥ ७४ ॥
तद्भवेत् सफलं यत्र स्मृतिस्त्वच्चरणाम्बुजे ।
तन्निष्फलः स्वर्गवासो नास्ति चेत् त्वत्पदस्मृतिः ॥७५॥
त्वत्पादध्यानयुक्तस्य यत्तत् स्थानञ्च तत्परम् ।
क्षणं वा कोटिकल्पं वा पुरुषायुःक्षयोऽस्तु वा ॥ ७६ ॥
यदि त्वत्सेवया याति सफलो निष्फलोऽथवा ।

तेषाञ्चायुर्व्ययो नास्ति ये त्वत्पादाब्जसेवकाः ॥ ७७ ॥
न सन्ति जन्ममरणरोगशोकार्त्तिभीतयः ।
इन्द्रत्वे वामरत्वे वा ब्रह्मत्वे चातिदुर्लभे ॥ ७८ ॥
वाञ्छा नास्त्येव भक्तानां त्वत्पादसेवनं विना ।
सुजीर्णपटखण्डस्य समं नूतनमेव च ॥ ७९ ॥
पश्यन्ति भक्ताः किञ्चान्यत् सालोक्यादिचतुष्टयम् ।
संप्राप्तस्त्वन्मनुर्ब्रह्मन्ननन्ताद् यावदेव हि ॥ ८० ॥
तावत् त्वद्भावनेनैव त्वद्दर्शोऽहमनुग्रहात् ।
मां च भक्तमपक्कं वा विज्ञाय गरुड़ः स्वयम् ॥ ८१ ॥
देशाद् दूरञ्च न्यक्कारं चकार दृढ़भक्तिमान् ।
भवता च दृढ़ा भक्तिर्दत्ता मे वरदेश्वर ॥ ८२ ॥
स च भक्तश्च भक्तोऽहं न मां त्यक्तुं चमोऽधुना ।
त्वत्पादपद्मचिह्नाक्तं दृष्ट्वा श्रीमस्तकं मम ॥ ८३ ॥
सद्दोषं गुणयुक्तं मां सोऽधुना त्यक्तुमर्हति ।
ममाराध्याश्च नागेन्द्रा न तद्बध्योऽहमीश्वर ॥ ८४ ॥
भयं न केभ्यः सर्वत्र तमनन्तं गुरुं विना ।
यं देवेन्द्राश्च देवाश्च मुनयो मनवो नराः ॥ ८५ ॥
स्वप्ने ध्यानेन पश्यन्ति चक्षुषोर्गोचरः स मे ।
भक्तानुरोधात् साकारः कुतस्ते विग्रहो विभो ॥ ८६ ॥
सगुणस्त्वञ्च साकारो निराकारश्च निर्गुणः ।
स्वेच्छामयः सर्वधाम सर्ववीजं सनातनम् ॥ ८७ ॥
सर्वेषामीश्वरः साक्षी सर्वात्मा सर्वरूपधृक् ।
ब्रह्मेशशेषधर्मेन्द्रा वेदवेदाङ्गपारगाः ॥ ८८ ॥
स्तोतुं यमीशं तेजाद्याः सर्पस्तोष्यति तं विभुम् ।

हे नाथ करुणासिन्धो दीनबन्धो चमाधमम् ॥ ८९ ॥
खलस्वभावादज्ञानात् कृष्ण त्वञ्चर्वितो मया ।
नास्त्यलच्यो यथाकाशो न दृश्यान्तो न लङ्घकः ॥९०॥
न स्पृश्यो हि न चावर्य्यस्तथा तेजस्त्वमेव च ।
इत्येवमुक्त्वा नागेन्द्रः पपात चरणाम्बुजे ॥ ९१ ॥
ओमित्युक्त्वा हरिस्तुष्टः सर्वं तस्मै वरं ददौ ।
नागराजकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ॥ ९२ ॥
तद्वंश्यानाञ्च तस्यैव नागेभ्यो न भयं भवेत् ।
स नागशय्यां कृत्वैव स्वप्तुं शक्तः सदा भुवि ॥ ९३ ॥
विषपीयूषयोर्भेदो नास्त्येव तस्य भक्षणे ।
नागग्रस्ते नागघाते प्राणान्ते विषभोजनात् ॥ ९४ ॥
स्तोत्रश्रवणमात्रेण सुस्थो भवति मानवः ।
भूर्जे कृत्वा स्तोत्रमिदं कण्ठे वा दक्षिणे करे ॥ ९५ ॥
बिभर्त्ति यो भक्तियुक्तो नागेभ्योऽपि न तद्भयम् ।
यत्र गेहे स्तोत्रमिदं नागस्तत्र न तिष्ठति ॥ ९६ ॥
विषाग्निवज्रभीतिश्च न भवेत्तत्र निश्चितम् ।
इह लोके हरेर्भक्तिं स्मृतिञ्च सततं लभेत् ॥ ९७ ॥
अन्ते च स्वकुलं पूत्वा दास्यञ्च लभते ध्रुवम् ।

श्रीनारायण उवाच ।

नागेन्द्राय वरं दत्त्वा पुनस्तं जगदीश्वरः ॥ ९८ ॥
उवाच मधुरं वाक्यं परिणामसुखावहम् ।

श्रीकृष्ण उवाच ।

गच्छ त्वञ्च रमणकं यथेन्द्रनगरं परम् ॥ ९९ ॥
सार्द्धं स्वगोष्ठ्या नागेन्द्र यमुनाजलवर्त्मना ।

श्रुत्वा नागो हरेराज्ञां रुरोद प्रेमविह्वलः ॥ १०० ॥
कदा द्रक्ष्यामि त्वत्पादपद्मं नाथेत्युवाच ह ।
प्रणम्य शतकृत्वश्च स्त्रिया गोष्ठ्या सहेश्वरम् ॥ १०१ ॥
जगाम जलमार्गेण नागेन्द्रो विरहातुरः ।
यमुनाह्रदतोयञ्च बभूवामृतकल्पकम् ॥ १०२ ॥
प्रसन्ना जन्तवः सर्वे बभूवुस्तेन नारद ।
गत्वा ददर्श भवनं यथेन्द्रनगरं परम् ॥ १०३ ॥
आज्ञया च कृपासिन्धोर्निर्मितं विश्वकर्मणा ।
तत्र तस्थौ च नागेन्द्रः स्त्रिया पुत्रगणैः सह ॥ १०४ ॥
निःशङ्को हर्षयुक्तश्च हरिभावनतत्परः ।
इत्येवं कथितं सर्वं हरेश्चरितमद्भुतम् ॥ १०५ ॥
सुखदं मोक्षदं सारं परं किं श्रोतुमिच्छसि ।

सूत उवाच ।

महर्षेर्वचनं श्रुत्वा नारदो हर्षविह्वलः ।
ऋषिं पप्रच्छ सन्देहं सर्वसन्देहभञ्जनम् ॥ १०६ ॥

नारद उवाच ।

कथं विहाय कालीयः स्वपूर्वभवनं परम् ।
जगाम यमुनातीरं तन्मे ब्रूहि जगद्गुरो ॥ १०७ ॥

श्रीनारायण उवाच ।

शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् ॥१०८॥
यच्छ्रुतं धर्मवक्त्रान्मे मलये सूर्य्यपर्वणि ।
कृष्णाख्यानप्रसङ्गेन सुप्रभापश्चिमे तटे ॥१०९॥
पप्रच्छ धर्मं पुलहः कथितं मुनिसंसदि ।
इदमाख्यानमाश्चर्य्यमुवाच तं कृपानिधिः ॥ ११०॥

तत्र श्रुतं मया विप्र निबोध कथयामि ते ।
शेषाज्ञया नागगणाः प्रतिसंवत्सरं भिया ॥ १११ ॥
कार्त्तिकीपूर्णिमायान्तु कुर्वन्ति गरुड़ार्चनम् ।
पुष्पैर्धूपैश्च दीपैश्च नैवेद्यैर्बलिभिर्मुदा ॥ ११२ ॥
पुष्करे च महातीर्थे सुस्नातो भक्तिसंयुतः ।
तस्य पूजाञ्च कालीयो न चकारात्यहङ्कृतः ॥ ११३ ॥
नागपूजोपकरणं बलाद्भक्षितुमुद्यतः ।
चक्रुर्निवारणं नागा नीतिमूचुर्मदोद्धतम् ॥ ११४ ॥
न शक्ता वारणे ते चेत्याविर्भूतः खगेश्वरः ।
दृष्ट्वा खगेश्वरं नागा कालीयप्राणरक्षया ॥ ११५ ॥
प्राणशक्त्या च युयुधुर्यावत्सूर्य्योदयं मुने ।
पक्षीन्द्रतेजसा सर्वे समुद्विग्नाः पलायिताः ॥ ११६ ॥
अनन्तं शरणं जग्मुः सर्वेषामभयप्रदम् ।
पलायनपरान् दृष्ट्वा नागांश्च करुणानिधिः ॥ ११७ ॥
तत्र तस्थौ च निःशङ्कः कालीयस्तं ददर्श ह ।
स्मृत्वा हरिपदाम्भोजं कालीयो युयुधे मुने ॥ ११८ ॥
मुहूर्तञ्च तयोर्युद्धं बभूवातीवदारुणम् ।
पराजितश्च नागेन्द्रस्तेजसा गरुड़स्य च ॥ ११९ ॥
भिया पलायनं कृत्वा जगाम यमुनाह्रदम् ।
न तं सौभरिशापेन खगेन्द्रो गन्तुमीश्वरः ।
तत्र तस्थौ भिया नागो जग्मुः पश्चाच्च तद्गणाः ॥१२०॥

नारद उवाच ।

कथं तु सौभरेः शापो बभूव गरुड़ाय वै ।
कथं न शक्तो गन्तुं तं ह्रदमीश्वरवाहनः ॥ १२१ ॥

श्रीनारायण उवाच ।

दिव्यं वर्षसहस्रञ्च वर्षाणां तत्र सौभरिः ।
तपस्तेपे महासिद्धो दध्यौ कृष्णपदाम्बुजम् ॥ १२२ ॥
समीपे ध्यायमानस्य कूले च यमुनाजले ।
गणेन सार्द्धं निःशङ्कः करोति भ्रमणं मुदा ॥ १२३ ॥
पुच्छमुत्फाल्य बहुधा परितः परमेच्छया ।
मुनिं प्रदक्षिणीकृत्य यात्यायाति मुदान्वितः ॥ १२४ ॥
अकुलं सुमहात्मानं दृष्टं दृष्टं खगाधिपः ।
जग्राह चञ्चुना तूर्णं मुनीन्द्रस्य समीपतः ॥ १२५ ॥
गच्छन्तं तं मीनमुखं ददर्श कोपचक्षुषा ।
प्रकोपतो मुनेर्दृष्ट्वा मीनस्तोये पपात ह ॥ १२६ ॥
तमुवाच मुनीन्द्रश्च पुनरादातुमुद्यतम् ।
मीनश्च गरुड़त्रासात्तस्थौ मुनिसमीपतः ॥ १२७ ॥

सौभरिरुवाच ।

गच्छ दूरं गच्छ दूरं खगेन्द्र मत्समीपतः ।
का योग्यता मत्पुरस्ते ग्रहीतुं जीवमुल्बणम् ॥ १२८ ॥
श्रीकृष्णवाहनं ज्ञात्वा चात्मानं बहु मन्यसे ।
त्वद्विधान् कोटिशः कृष्णः स्रष्टुं शक्तश्च वाहकान् ॥ १२९ ॥
करोमि भस्मसात्तूर्णं त्वाञ्च भ्रूभङ्गलीलया ।
वाहनञ्च त्वमीशस्य न वयं तव किङ्कराः ॥ १३० ॥
अद्यप्रभृति पक्षीन्द्र यद्यागच्छसि मे ह्रदम् ।
मदीयशापात्तूर्णञ्च भस्मसाद्भविता ध्रुवम् ॥ १३१ ॥
मुनीन्द्रस्य वचः श्रुत्वा प्रचचाल खगेश्वरः ।
स्मारं स्मारं कृष्णपादं तं प्रणम्य जगाम ह ॥ १३२ ॥

अद्यप्रभृति विप्रेन्द्र पतगेन्द्रस्य सन्ततम् ।
ह्रदस्य श्रुतिमात्रेण कम्पो भवति निश्चितम् ॥ १३३ ॥
इतिहासश्च कथितो यः श्रुतो धर्मवक्त्रतः ।
सरहस्यं श्रुतिसुखं प्रकृतं शृणु मङ्गलम् ॥ १३४ ॥
विज्ञाय सुचिरं बाला नोत्तस्थौ तज्जलाद्धरिः ।
चक्रुर्विषादं मोहाच्च रुरुदुर्यमुनातटे ॥ १३५ ॥
स्ववक्षोघातनञ्चक्रुः केचिद्बालाः शुचाकुलाः ।
केचिन्निपत्य भूमौ च मूर्च्छां प्रापुर्हरिं विना ॥१३६॥
ह्रदं प्रवेष्टुं केचिच्च विरहेण समुद्यताः ।
केचिद्गोपालबालाश्च चक्रुश्च तन्निवारणम् ॥ १३७ ॥
कृत्वा विलापं केचिच्च प्राणांस्त्यक्तुं समुद्यताः ।
तेषां केचिज्ज्ञानवन्तो रक्षाञ्चक्रुः प्रयत्नतः ॥१३८॥
केचिदूचुश्च हाहेति कृष्ण कृष्णेति केचन ।
केचिद्दत्तुं प्रवृत्तिञ्च प्रययुर्नन्दसन्निधिम् ॥ १३९ ॥
केचित्सम्मीलितास्तत्र शोकमोहभयातुराः ।
इत्यूचुः किं करिष्यामः कुतोऽस्माकं गतो हरिः ॥१४०॥
हे नन्दसूनो हे कृष्ण प्राणेभ्योऽप्यधिकप्रिय ।
हे बन्धो दर्शनं देहीत्यूचुः प्राणाः प्रयान्ति हि ॥१४१॥
एतस्मिन्नन्तरे केचिद् बालका नन्दसन्निधिम् ।
संप्रापुरतिलोलाश्च रुदन्तः शोकविह्वलाः ॥ १४२ ॥
प्रवृत्तिमूचुस्तं शीघ्रं यशोदां मूलतो बलम् ।
गोपान् गोपालिकाश्चैव रक्तपङ्कजलोचनाः ॥ १४३ ॥
श्रुत्वा वार्त्ताञ्च ते सर्वे शीघ्रं जग्मुः शुचान्विताः ।
कलिन्दनन्दिनीतीरं रुरुदुर्बालकैर्युताः ॥ १४४ ॥

गत्वा सम्मीलिताः सर्वे रुरुदुः शोकमूर्च्छिताः ।
रुदं विशन्तीमम्बां तां केचिच्चक्रु र्निवारणम् ॥१४५॥
गोपा गोपालिकाश्चैव जघ्नुरङ्गानि शोकतः ।
केचिद्विललपुस्तत्र मूर्च्छां प्रापुश्च केचन ॥ १४६ ॥
रुदं विशन्तीं तां राधां वारयामास काश्चन ।
मूर्च्छाञ्च प्राप सा शोकान्मृतेव च सरित्तटे ॥१४७॥
विलप्यातिभृशं नन्दो मूर्च्छां प्राप पुनः पुनः ।
भूयोऽपि रोदनं कृत्वा भूयो मूर्च्छामवाप ह ॥१४८॥
विलपन्तं भृशं नन्दं यशोदां शोककर्षिताम् ।
गोपांश्च गोपिकाश्चैव राधिकामतिमूर्च्छिताम् ॥१४९॥
रुदतो बालकान् सर्वान् बालिकाश्च शुचान्विताः ।
सर्वांश्च बोधयामास बलश्च ज्ञानिनां वरः ॥ १५० ॥

श्रीबलदेव उवाच ।

गोपा गोपालिका बालाः सर्वे शृणुत मद्वचः ।
हे नन्द ज्ञानिनां श्रेष्ठ गर्गवाक्यस्मृतिं कुरु ॥ १५१ ॥
जगद्विभर्तुः शेषस्य संहर्तुः शङ्करस्य च ।
विधातुः संविधातुश्च भुवि कस्मात्पराजयः ॥ १५२ ॥
परमाणुः परो व्यूहः स्थूलात् स्थूलः परात्परः ।
विद्यमानोऽप्यविष्टश्यः संयोगो योगिनामपि ॥१५३॥
दिशां नास्ति समाहारः स्पर्शो नाकाश एव च ।
अपि सर्वेश्वरो बाध्य इत्यूचुः श्रुतयः स्फुटम् ॥१५४॥
नात्मा दृश्यो नास्त्रलक्ष्यो न बध्यो न हि दृश्यकः ।
नाग्निग्रस्तो न हिंस्यश्चापीदमाध्यात्मिका विदुः ॥१५५॥
विग्रहोऽस्यैव कृष्णस्य भक्तध्यानार्थमेव च ।

ज्योतिःस्वरूपस्य विभोर्नाद्यन्तमध्यमात्मनः ॥ १५६ ॥
जलप्लुते च ब्रह्माण्डे जलशायी जनार्दनः ।
यत्राभिपद्मजो ब्रह्मा तस्येशस्य कृते विपत् ॥ १५७ ॥
मशकश्चेत् क्षमो ग्रस्तुं ब्रह्माण्डमखिलं पितः ।
न तथापि तदीशं तं ग्रस्तुं सर्पः क्षमो भवेत् ॥ १५८ ॥
इत्येवं कथितं सर्वमाध्यात्मिकमनुत्तमम् ।
निगूढ़ं योगिनां सारं संशयच्छेदकारणम् ॥ १५९ ॥
बलदेववचः श्रुत्वा गर्गवाक्यमनुस्मरन् ।
तत्याज शोकं नन्दश्च व्रजाश्च व्रजयोषितः ॥ १६० ॥
प्रबोधं मेनिरे सर्वे न यशोदा न राधिका ।
बन्धुविच्छेदविषये प्रबोधेन स्थितं मनः॥ १६१ ॥
एतस्मिन्नन्तरे कृष्णमुत्पतन्तं जलाम्बुने ।
ददृशुस्तं सुप्रसन्ना व्रजाश्च व्रजयोषितः ॥ १६२ ॥
शरत्पार्वणचन्द्रास्यं सस्मितं सुमनोहरम् ।
अस्निग्धवस्त्रमस्निग्धमलुप्तचन्दनाञ्जनम् ॥ १६३ ॥
सर्वाभरणसंयुक्तं ज्वलन्तं ब्रह्मतेजसा ।
मयूरपिच्छचूड़ञ्च वंशीवदनमच्युतम् ॥ १६४ ॥
यशोदा बालकं दृष्ट्वा कृत्वा वक्षसि सस्मिता ।
चुचुम्ब वदनाम्भोजं प्रसन्नवदनेक्षणा ॥१६५॥
क्रोड़े चकार नन्दश्च बलश्च रोहिणी मुदा ।
निमेषरहिताः सर्वे ददृशुः श्रीमुखं हरेः ॥ १६६ ॥
प्रेमान्धा बालकाः सर्वे चक्रुरालिङ्गनं हरेः ।
पपुश्चक्षुश्चकोरैश्च मुखचन्द्रञ्च गोपिकाः ॥ १६७ ॥
एतस्मिन्नन्तरे तत्र सहसा काननान्तरम् ।

दावाग्निर्वेष्टयामास तैः सर्वैः सह गोकुलम् ॥ १६८ ॥
दृष्ट्वा शैलप्रमाणाग्निं परितः काननान्तरे।
प्रणाशं मेनिरे सर्वे भयमापुश्च सङ्कटे ॥ १६९ ॥
श्रीकृष्णं तुष्टुवुः सर्वे सम्पुटाञ्जलयो व्रजाः।
बाला गोप्यश्च सन्त्रस्ता भक्तिनम्रात्मकन्धराः ॥ १७० ॥

बाला ऊचुः।

यथा संरक्षितं ब्रह्मन् सर्वापत्स्वेव नः कुलम्।
तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन ॥ १७१ ॥
त्वमिष्टदेवतास्माकं त्वमेव कुलदेवता।
स्रष्टा पाता च संहर्त्ता जगताञ्च जगत्पते ॥ १७२ ॥
वह्निर्वा वरुणो वापि चन्द्रो वा सूर्य्य एव वा।
यमः कुवेरः पवन ईशानाद्याश्च देवताः ॥ १७३ ॥
ब्रह्मेशशेषधर्मेन्द्रा मुनीन्द्रा मनवः स्मृताः।
मानवाश्च तथा दैत्या यक्षराक्षसकिन्नराः ॥ १७४ ॥
ये ये चराचराश्चैव सर्वे तव विभूतयः।
आविर्भावस्तिरोभावः सर्वेषाञ्च तवेच्छया ॥ १७५ ॥
अभयं देहि गोविन्द वह्निसंहरणं कुरु।
वयं त्वां शरणं यामो रक्ष नः शरणागतान् ॥ १७६ ॥
इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा पदाम्बुजम्।
दूरीभूतस्तु दावाग्निः श्रीकृष्णामृतदृष्टितः ॥ १७७ ॥
दूरीभूते च दावाग्नौ ननृतुस्ते मुदान्विताः।
सर्वापदः प्रणश्यन्ति हरिस्मरणमात्रतः ॥ १७८ ॥
इदं स्तोत्रं महापुण्यं प्रातरुत्थाय यः पठेत्।
वह्नितो न भवेत्तस्य भयं जन्मनि जन्मनि ॥ १७९ ॥

अत्र ग्रस्ते च दावाग्नौ विपत्तौ प्राणसङ्कटे।
स्तोत्रमेतत् पठित्वा तु मुच्यते नात्र संशयः॥ १८०॥
शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत्।
इह लोके हरेर्भक्तिमन्ते दास्यं लभेत् ध्रुवम्॥ १८१॥

श्रीनारायण उवाच।

दावाग्निमोचणं कृत्वा तैः सार्द्धं शृणु नारद।
जगाम श्रीहरिर्गेहं कुवेरभवनोपमम्॥ १८२॥
ब्राह्मणेभ्यो धनं नन्दः परिपूर्णं ददौ मुदा।
भोजनं कारयामास ज्ञातिवर्गांश्च बान्धवान्॥ १८३॥
नानाविधं मङ्गलञ्च हरेर्नामानुकीर्त्तनम्।
वेदांश्च पाठयामास विप्रद्वारा मुदान्वितः॥ १८४॥
एवं मुमुदिरे सर्वे वृन्दारण्ये गृहे गृहे।
श्रीकृष्णचरणाम्भोजध्यानैकतानमानसाः॥ १८५॥
इत्येवं कथितं सर्वं हरेश्चरितमङ्गलम्।
कलिकिल्विषकाष्ठानां दहने दहनोपमम्॥ १८६॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे कालीयदमनदावाग्नि-
मोचणं नामैकोनविंशोऽध्यायः।

——

# विंशोऽध्यायः।

---

श्रीनारायण उवाच।

एकदा बालकैः सार्धं बलेन सह माधवः।
भुक्त्वा पीत्वानुलिप्तश्च वृन्दारण्यं जगाम ह ॥ १ ॥
क्रीड़ाञ्चकार भगवान् कौतुकेन च तैः सह।
क्रीड़ानिमग्नचित्तानां दूरं तद्गोकुलं ययौ ॥ २ ॥
तस्य प्रभावं विज्ञातुं विधाता जगताम्पतिः।
जहार गाश्च सर्वाश्च वत्सांश्च बालकानपि ॥ ३ ॥
विज्ञाय तदभिप्रायं सर्वज्ञः सर्वकारकः।
पुनश्चकार तत्सर्वं योगीन्द्रो योगमायया ॥ ४ ॥
जगाम श्रीहरिर्गेहं चारयित्वा च गोकुलम्।
बलेन बालकैः सार्धं क्रीड़ाकौतुकमानसः ॥ ५ ॥
एवं चकार भगवान् वर्षमेकञ्च प्रत्यहम्।
यमुनागमनं गोभिर्बलेन सह बालकैः ॥ ६ ॥
ब्रह्मा प्रभावं विज्ञाय लज्जानम्रात्मकन्धरः।
आजगाम हरेः स्थानं भाण्डीरवटमूलके ॥ ७ ॥
ददर्श कृष्णं तत्रैव गोपालगणवेष्टितम्।
यथा पार्वणचन्द्रञ्च विभान्तं भगणैः सह ॥ ८ ॥
रत्नसिंहासनस्थञ्च हसन्तं सस्मितं मुदा।
पीतवस्त्रपरीधानं ज्वलन्तं ब्रह्मतेजसा ॥ ९ ॥
रत्नकेयूरवलयरत्नमञ्जीररञ्जितम्।
रत्नकुण्डलयुग्माभ्यां स्वकपोलस्थलोज्ज्वलम् ॥ १० ॥

कोटिकन्दर्पलावण्यं लीलाधाम मनोहरम्।
चन्दनागुरुकस्तूरीकुङ्कुमार्चितविग्रहम्॥ ११॥
पारिजातप्रसूनानां मालाजालैर्विभूषितम्।
नवीननीरदश्यामं प्रोद्भिन्ननवयौवनम्॥ १२॥
मालतीमाल्यसंयुक्तं मयूरपिच्छचूड़कम्।
स्वाङ्गसौन्दर्य्यदीप्त्या च कृतभूषणभूषितम्॥ १३॥
शरत्पार्वणचन्द्रस्य प्रभामुष्टास्यसुन्दरम्।
पक्वबिम्बाधरौष्ठञ्च खगेन्द्रचञ्चुनासिकम्॥ १४॥
शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम्।
मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिमनोहरम्॥ १५॥
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम्।
शान्तञ्च राधिकाकान्तं परिपूर्णतमं परम्॥ १६॥
एवंभूतं प्रभुं दृष्ट्वा प्रणनामातिविस्मितः।
दर्शं दर्शमीश्वरं तं प्रणनाम पुनः पुनः॥ १७॥
यद् दृष्टं हृदयाम्भोजे तद्रूपं वहिरेव च।
या मूर्त्तिः पुरतो दृष्टा सा पश्चात्परितस्ततः॥ १८॥
तत्र वृन्दावने सर्वं दृष्ट्वा कृष्णसमं मुने।
ध्यायं ध्यायञ्च तद्रूपं तत्र तस्थौ जगद्गुरुः॥ १९॥
गावो वत्साश्च बालाश्च लता गुल्माश्च वीरुधः।
सर्वं वृन्दावनं ब्रह्मा श्यामरूपं ददर्श ह॥ २०॥
दृष्ट्वैवं परमाश्चर्य्यं पुनर्ध्यानञ्चकार ह।
ददर्श त्रिजगद् ब्रह्मा नान्यत् कृष्णं विना मुने॥ २१॥
क्व च वृक्षः क्व वा शैलः क्व मही क्व च सागराः।
क्व देवाः क्व च गन्धर्वा मुनीन्द्राः क्व च मानवाः॥२२॥

क्व चात्मा क्व जगद्बीजं क्व स्वर्गाः गाव एव च ।
सर्वञ्च स्वद्दशा ब्रह्मा ददर्श मायया हरेः ॥ २३ ॥
क्व कृष्णो जगतां नाथः क्व वा मायाविभूतयः ।
सर्वं कृष्णमयं दृष्ट्वा किञ्चिन्निर्वक्तुमक्षमः ॥ २४ ॥
किं स्तौमि किं करोमीति मनसैवं प्रगृह्य च ।
तत्र स्थित्वा जगद्धाता जपं कर्तुं समुद्यतः ॥ २५ ॥
सुखं योगासनं कृत्वा बभूव सम्पुटाञ्जलिः ।
पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रोऽतिदीनवत् ॥ २६ ॥
ईड़ां सुषुम्नां मध्याञ्च पिङ्गलां नलिनीश्वराम् ।
नाड़ीषट्कञ्च योगेन निबध्य च प्रयत्नतः ॥ २७ ॥
मूलाधारं स्वाधिष्ठानं मणिपूरमनाहतम् ।
विशुद्धं परमाज्ञाख्यं षट्चक्रञ्च निबध्य च ॥ २८ ॥
लङ्घनं कारयित्वा च तं षट्चक्रं क्रमाद्विधिः ।
ब्रह्मरन्ध्रं समानीय वायुपूर्णञ्चकार ह ॥ २९ ॥
निबध्य वायुं मध्यान्तामानीय हृदयाम्बुजम् ।
तं वायुं भ्रमयित्वा च योजयामास मध्यया ॥३०॥
एवं कृत्वा तु निष्पन्दो यो दत्तो हरिणा पुरा ।
जजाप परमं मन्त्रं तस्यैव च दशाक्षरम् ॥ ३१ ॥
मुहूर्त्तञ्च जपं कृत्वा ध्यायं ध्यायं पदाम्बुजम् ।
ददर्श हृदयाम्भोजे सर्वतेजोमयं मुने ॥ ३२ ॥
तत्तेजसोऽन्तरे रूपमतीव सुमनोहरम् ।
द्विभुजं मुरलीहस्तं भूषितं पीतवाससा ॥ ३३ ॥
श्रुतिमूलस्थलन्यस्तज्ज्वलन्मकरकुण्डलम् ।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम ॥ ३४ ॥

यद् दृष्टं ब्रह्मरन्ध्रे च हृदि तद्बहिरेव च ।
दृष्ट्वा च परमाश्चर्य्यं तुष्टाव परमेश्वरम् ॥ ३५ ॥
यत् स्तोत्रञ्च पुरा दत्तं हरिणैकार्णवे मुने ।
तमीशं तेन विधिना भक्तिनम्रात्मकन्धरः ॥ ३६ ॥

ब्रह्मोवाच ।

सर्वस्वरूपं सर्वेशं सर्वकारणकारणम् ।
सर्वानिर्वचनीयं तं नमामि शिवरूपिणम् ॥ ३७ ॥
नवीनजलदाकारं श्यामसुन्दरविग्रहम् ।
स्थितं जन्तुषु सर्वेषु निर्लिप्तं साक्षिरूपिणम् ॥ ३८ ॥
स्वात्मारामं पूर्णकामं जगद्व्यापि जगत्परम् ।
सर्वस्वरूपं सर्वेषां वीजरूपं सनातनम् ॥ ३९ ॥
सर्वाधारं सर्ववरं सर्वशक्तिसमन्वितम् ।
सर्वाराध्यं सर्वगुरुं सर्वमङ्गलकारणम् ॥ ४० ॥
सर्वमन्त्रस्वरूपञ्च सर्वसम्पत्करं वरम् ।
शक्तियुक्तमयुक्तञ्च स्तौमि स्वेच्छामयं विभुम् ॥ ४१ ॥
शक्तीशं शक्तिवीजञ्च शक्तिरूपधरं वरम् ।
संसारसागरे घोरे शक्तिनौकासमन्वितम् ॥ ४२ ॥
कृपालुं कर्णधारञ्च नमामि भक्तवत्सलम् ।
आत्मस्वरूपमेकान्तं लिप्तं निर्लिप्तमेव च ॥ ४३ ॥
सगुणं निर्गुणं ब्रह्म स्तौमि स्वेच्छास्वरूपिणम् ।
सर्वेन्द्रियाधिदेवं तमिन्द्रियालयमेव च ॥ ४४ ॥
सर्वेन्द्रियस्वरूपञ्च विराड्रूपं नमाम्यहम् ।
वेदं च वेदजनकं सर्ववेदाङ्गरूपिणम् ॥ ४५ ॥
सर्वमन्त्रस्वरूपञ्च नमामि परमेश्वरम् ।

साराक्सारतरं द्रव्यमपूर्वमनिरूपिणम् ॥ ४६ ॥
स्वतन्त्रमस्वतन्त्रञ्च यशोदानन्दनं भजे ।
शान्तं सर्वशरीरेषु तमदृष्टमनूहकम् ॥ ४७ ॥
ध्यानासाध्यं विद्यमानं योगीन्द्राणां गुरुं भजे ।
रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम् ॥ ४८ ॥
गोपीभिः सेव्यमानञ्च तं राधेशं नमाम्यहम् ।
सतां सदैव सन्तन्तमसन्तमसतामपि ॥ ४९ ॥
योगीशं योगसाध्यञ्च नमामि शिवसेवितम् ।
मन्त्रवीजं मन्त्रराजं मन्त्रदं फलदं फलम् ॥ ५० ॥
मन्त्रसिद्धिस्वरूपं तं नमामि च परात्परम् ।
सुखं दुःखञ्च सुखदं दुःखदं पुण्यमेव च ॥ ५१ ॥
पुण्यप्रदञ्च शुभदं शुभवीजं नमाम्यहम् ।
इत्येवं स्तवनं कृत्वा दत्त्वा गाश्च सबालकान् ॥५२॥
निपत्य दण्डवद् भूमौ रुरोद प्रणनाम च ।
ददर्श चक्षुरुन्मील्य विधाता जगतां मुने ॥ ५३ ॥
ब्रह्मणा च कृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ।
इह लोके सुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम् ॥५४ ॥
लभते दास्यमतुलं स्थानमीश्वरसन्निधौ ।
लब्ध्वा च कृष्णसान्निध्यं पार्षदप्रवरो भवेत् ॥ ५५ ॥

श्रीनारायण उवाच ।

गते जगत्कारणे च ब्रह्मलोके च ब्रह्मणि ।
श्रीकृष्णो बालकैः सार्धं जगाम स्वालयं विभुः ॥५६॥
गावो वत्साश्च बालाश्च जग्मुर्वर्षान्तरे गृहम् ।
श्रीकृष्णमायया सर्वे मेनिरे ते दिनान्तरम् ॥ ५७ ॥

गोपा गोपालिकाः किञ्चित् तर्कितुं न चमास्तदा ।
योगिनः कृत्रिमं सर्वं किं नूत्नं वा पुरातनम् ॥ ५८ ॥
इत्येवं कथितं सर्वं श्रीकृष्णचरितं शुभम् ।
सुखदं मोचदं पुण्यं सर्वकालसुखावहम् ॥ ५९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे गोवत्सबालकहरणप्रस्तावो
नाम विंशोऽध्यायः ।

---

## एकविंशोऽध्यायः ।

---

श्रीनारायण उवाच ।

एकदानन्दयुक्तश्च नन्दगोपो व्रजे मुने ।
दुन्दुभिं वादयामास शक्रयागकृतोद्यमः ॥ १ ॥
दधि चीरं घृतं तक्रं नवनीतं गुड़ं मधु ।
एतान्यादाय शक्रस्य पूजां कुर्वन्त्विति ब्रुवन् ॥ २ ॥
ये ये सन्त्यत्र नगरे गोपा गोप्यश्च बालकाः ।
बालिकाश्च द्विजा भूयो वैश्याः शूद्राश्च भक्तितः ॥ ३ ॥
इत्येवं श्रावयित्वा च स्वयमेव मुदान्वितः ।
यष्टिमारोपयामास रम्यस्थाने सुविस्तृते ॥ ४ ॥
ददौ तत्र चौमवस्त्रं मालाजालं मनोहरम् ।
चन्दनागुरुकस्तूरीकुङ्कुमद्रवमेव च ॥ ५ ॥

स्नातः कृताह्निको भक्त्या धृत्वा धौते च वाससी ।
उवास स्वर्णपीठे च प्रक्षालितपदाम्बुजः ॥ ६ ॥
नानाप्रकारपात्रैश्च ब्राह्मणैश्च पुरोहितैः ।
गोपालैर्गोपिकाभिश्च बालाभिः सह बालकैः ॥ ७ ॥
एतस्मिन्नन्तरे तत्राजग्मुर्नगरवासिनः ।
महासम्भृतसम्भारा नानोपायनसंयुताः ॥ ८ ॥
आजग्मुर्मुनयः सर्वे ज्वलन्तो ब्रह्मतेजसा ।
शान्ताः शिष्यगणैः सार्द्धं वेदवेदाङ्गपारगाः ॥ ९ ॥
गर्गश्च गालवश्चैव शाकल्यः शाकटायनः ।
गौतमः कण्वः कण्वो वात्स्यः कात्यायनस्तथा ॥ १० ॥
सौभरिर्वामदेवश्च याज्ञवल्क्यश्च पाणिनिः ।
ऋष्यशृङ्गो गौरमुखो भरद्वाजश्च वामनः ॥ ११ ॥
कृष्णद्वैपायनः शृङ्गी सुमन्तुर्जैमिनिः कचः ।
पराशरश्च मैत्रेयो वैशम्पायन एव च ॥ १२ ॥
ब्राह्मणाश्च कतिविधा भिक्षुका वन्दिनस्तथा ।
भूपा वैश्याश्च शूद्राश्च समाजग्मुर्महोत्सवे ॥ १३ ॥
दृष्ट्वा मुनीन्द्रान् नन्दश्च ब्राह्मणान् भूमिपांस्तथा ।
स्वर्णपीठात् समुत्तस्थौ व्रजाश्चोत्तस्थुरेव च ॥ १४ ॥
प्रणम्य वासयामास मुनीन्द्रान् विप्रभूमिपान् ।
तेषामनुमतिं प्राप्य तत्रोवास पुनर्मुदा ॥ १५ ॥
पाकञ्च यष्टिनिकटे कर्त्तुमाज्ञाञ्चकार ह ।
पाकप्राज्ञं ब्राह्मणानां शतमानीय सादरम् ॥ १६ ॥
तत्र रत्नप्रदीपाश्च जज्वलुः परितस्तथा ।
गन्धीभूतञ्च धूपेन स्थानं तत् सुरभीकृतम् ॥ १७ ॥

नानाविधानि पुष्पाणि माल्यानि विविधानि च।
नैवेद्यञ्च बहुविधमपूर्वं सुमनोहरम् ॥ १८ ॥
तिललड्डुकपूर्णञ्च मण्डकानां सहस्रकम्।
स्वस्तिकैः परिपूर्णञ्च यष्टिस्थानञ्च नारद ॥ १९ ॥
कलशानां सहस्रञ्च पूर्णं शर्करया मुने।
यवगोधूमचूर्णानां लड्डुकैर्मधुरैर्वरैः ॥ २० ॥
घृतपक्वैर्विप्रकृतैः पूर्णानि कलशानि च।
वृक्षपक्वानि रम्याणि चारुरम्भाफलानि च ॥ २१ ॥
फलानि परिपक्वानि कालदेशोद्भवानि च।
क्षीराणां कुम्भलक्षाणि दध्नां तावन्ति नारद ॥ २२ ॥
मधूनां कुम्भशतकं सर्पिः कुम्भसहस्रकम्।
कलशानां त्रिलक्षाणि तक्रपूर्णानि निश्चितम् ॥ २३ ॥
घटानां पञ्चलक्षाणि गुड़पूर्णानि निश्चितम्।
विष्णुतैलेन पूर्णञ्च कलशानां सहस्रकम् ॥ २४ ॥
वृषेन्द्राश्च बहुविधा भोगार्हद्रव्यवाहकाः।
नानाविधानि पात्राणि सौवर्णराजतानि च ॥ २५ ॥
स्वर्णपीठानि च ब्रह्मन्नाजन्मुर्यष्टिसन्निधिम्।
वस्त्राणि वरणार्हाणि चारूणि भूषणानि च ॥ २६ ॥
नानाविधानि वाद्यानि चारूणि मधुराणि च।
वादकाः स्वरयन्त्राणि वादयामासुरुत्सवे ॥ २७ ॥
छागलानां सहस्राणि महिषाणां शतानि च।
मेषकाणाञ्च लक्षाणि ह्यानयामास तत्र वै ॥ २८ ॥
शतान्येव गण्डकानामाजग्मुर्यष्टिसन्निधिम्।
प्रोक्षितानि च सर्वाणि रक्षितानि च रक्षकैः ॥२९॥

बालकानां बालिकानां वृद्धाणां वृद्धयोषिताम् ।
युवानां युवतीनाञ्च संख्यां कर्त्तुञ्च कः क्षमः ॥३०॥
गायकानाञ्च सङ्गीतं नर्त्तकानाञ्च नर्त्तनम् ।
श्रुत्वा दृष्ट्वा जनाः सर्वे मुमुहुः सुमहोत्सवे ॥ ३१ ॥
रम्भोर्वशी मेनका च घृताची मोहिनी रती ।
प्रभावती भानुमती विप्रचित्तिस्तिलोत्तमा ॥ ३२ ॥
चन्द्रप्रभा सुप्रभा च रत्नमाला मदालसा ।
रेणुका रमणी ब्रह्मन्नेता आजग्मुरुत्सवे ॥ ३३ ॥
तासां नृत्येन गीतेन स्तनास्यश्रोणिदर्शनात् ।
रूपेण वक्रदृष्ट्या च मूर्च्छां प्रापुश्च मानवाः ॥ ३४ ॥
एतस्मिन्नन्तरे शीघ्रमाजगाम हरिः स्वयम् ।
गोपालबालकैः सार्धं बलेन बलशालिना ॥ ३५ ॥
दृष्ट्वा तञ्च जनाः सर्वे सम्भ्रान्ता हर्षविह्वलाः ।
उत्तस्थुराराङ्गीताश्च पुलकाङ्कितविग्रहाः ॥ ३६ ॥
क्रीड़ास्थानात् समायान्तं शान्तं सुन्दरविग्रहम् ।
विनोदमुरलीवेणुशृङ्गशब्दसमन्वितम् ॥ ३७ ॥
सद्रत्नसारभूषाभिर्भूषितं कौस्तुभेन च ।
चन्दनागुरुपङ्केन चर्चितं श्यामविग्रहम् ॥ ३८ ॥
शरन्मध्याह्नपद्मास्यं पश्यन्तं रत्नदर्पणे ।
चारुचन्दनचन्द्रेण कस्तूरीविन्दुना सह ॥ ३९ ॥
शशाङ्केन यथाकाशं भालमध्यविराजितम् ।
मालतीमालया श्यामकण्ठवक्षःस्थलोज्ज्वलम् ॥ ४० ॥
वकपङ्क्त्या यथाकाशं शारदीयं सुनिर्मलम् ।
चारुणा पीतवस्त्रेण शोभितं श्यामविग्रहम् ॥ ४१ ॥

विभान्तं विद्युता शश्वन्नवीनं नीरदं यथा।
कुन्दप्रसूनैर्गुञ्जाभिर्वेष्टवक्रिमचूडकम्॥ ४२॥
यथेन्द्रधनुषा भाति विभान्तं भगणैर्नभः।
रत्नकुण्डलदीप्त्या च स्मितवक्त्रं सुशोभितम्।
शरत्प्रफुल्लपद्मञ्च द्युमणेः किरणैर्यथा॥ ४३॥
विप्रक्षत्रियवैश्याश्च मुनयो वल्लवा मुने।
प्रणम्य वासयामासू रत्नसिंहासने शुभे॥ ४४॥
उवास रत्नपीठे स तेषां मध्ये जगत्पतिः।
यथा बभौ शरच्चन्द्रो ज्योतिषामन्तरे च खे।
स्तुत्वा तमुचुस्ते सर्वे जगतामीश्वरं परम्॥ ४५॥
स्वेच्छामयं गुणातीतं ज्योतीरूपं सनातनम्।
दृष्ट्वा महोत्सवं शीघ्रमुवाच पितरं हरिः।
सर्वेषां दुर्लभां नीतिं नीतिशास्त्रविशारदः॥ ४६॥

श्रीकृष्ण उवाच।

भो भो वल्लवराजेन्द्र किं करोषीह सुव्रत।
आराध्यः कश्च का पूजा किं फलं पूजने भवेत्॥ ४७॥
फलेन साधनं किं वा कः साध्यः साधनेन च।
देवे रुष्टे भवेत् किं वा पूजायाः प्रतिबन्धके॥ ४८॥
तुष्टो देवः किं ददाति फलमत्र परत्र किम्।
काचिद्ददात्यत्र फलं परत्रे नेह काचन॥ ४९॥
काचिच्च नोभयत्रापि चोभयत्रापि काचन।
अवेदविहिता पूजा सर्वहानिकरण्डिका॥ ५०॥
पूजेयमधुना वा ते किमु वा पुरुषक्रमात्।
दृष्टो देवस्त्वया कस्मिन् पूजेयं चानुसारिणी॥ ५१॥

साक्षात् खादति देवस्ते वा साक्षात् किं न खादति ।
साक्षाद् भुङ्क्ते च यो देवः सुप्रशस्तं तदर्चनम् ॥ ५२ ॥
साक्षात् खादति नैवेद्यं विप्ररूपी जनार्दनः ।
ब्राह्मणे परितुष्टे च सन्तुष्टाः सर्वदेवताः ॥ ५३ ॥
किं तस्य देवपूजायां यो नियुक्तो द्विजार्चने ।
पूजिता ब्राह्मणा येन पूजिताः सर्वदेवताः ॥ ५४ ॥
देवाय दत्त्वा नैवेद्यं द्विजाय न प्रयच्छति ।
भस्मीभूतञ्च नैवेद्यं पूजनं निष्फलं भवेत् ॥ ५५ ॥
विप्राय देवनैवेद्यं दानात् ध्रुवमनन्तकम् ।
तुष्टो देवो वरं दत्त्वा प्रयाति च स्वमन्दिरम् ॥ ५६ ॥
दत्त्वा देवाय नैवेद्यं मूढ़ो भुङ्क्ते स्वयं यदि ।
दत्तापहारी देवस्वं भुक्त्वा च नरकं व्रजेत् ॥ ५७ ॥
देवदत्तं न भोक्तव्यं नैवेद्यञ्च विना हरेः ।
प्रशस्तं सर्वदेवेषु विष्णुनैवेद्यभोजनम् ॥ ५८ ॥
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् ।
सर्वेषाञ्च क्रममिदं ब्राह्मणानां विशेषतः ॥ ५९ ॥
न दत्त्वा वस्तु देवाय दत्तं विप्राय चेत् सुधीः ।
भुक्त्वा विप्रमुखे देवास्तुष्टाः स्वर्गं प्रयान्ति च ॥ ६० ॥
तस्मात् सर्वप्रयत्नेन विप्राणामर्चनं कुरु ।
प्रशस्तफलदातृणामिह लोके परत्र च ॥ ६१ ॥
जपस्तपश्च पूजा वा यज्ञदानं महोत्सवम् ।
सर्वेषां कर्मणां सारं विप्रतुष्टिश्च दक्षिणा ॥ ६२ ॥
ब्राह्मणानां शरीरेषु तिष्ठन्ति सर्वदेवताः ।
पादेषु सर्वतीर्थानि पुण्यानि पादधूलिषु ॥ ६३ ॥

पादोदके च विप्राणां तीर्थतोयानि सन्ति च।
तत्स्पर्शात् सर्वतीर्थेषु स्नानजन्यफलं लभेत् ॥ ६४ ॥
नश्यन्ति भक्षणाद्रोगा भक्तिभावेन वल्लव।
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥ ६५ ॥
पापं पञ्चविधं कृत्वा यो विप्रं प्रणमेद् द्विजः।
स स्नातः सर्वतीर्थेषु सर्वपापात् प्रमुच्यते ॥ ६६ ॥
ब्राह्मणस्पर्शमात्रेण मुक्तो भवति पातकी।
दर्शनान्मुच्यते पापादिति वेदे निरूपितम् ॥ ६७ ॥
अप्राज्ञो वाथ प्राज्ञो वा ब्राह्मणो विष्णुविग्रहः।
प्रियाः प्राणाधिका विष्णोर्ये विप्रा हरिसेविनः ॥६८॥
द्विजानां हरिभक्तानां प्रभावो दुर्लभः श्रुतौ।
येषां पादाब्जरजसा सद्यः पूता वसुन्धरा ॥ ६९ ॥
तेषाञ्च पादचिह्नं यत्तीर्थं तत् परिकीर्त्तितम्।
तेषाञ्च स्पर्शमात्रेण तीर्थपापं प्रणश्यति ॥ ७० ॥
आलिङ्गनात् सदालापात् तेषामुच्छिष्टभोजनात्।
दर्शनात् स्पर्शनाच्चैव सर्वपापात् प्रमुच्यते ॥ ७१ ॥
भ्रमणे सर्वतीर्थानां यत् पुण्यं स्नानतो भवेत्।
हरिदासस्य विप्रस्य तत् पुण्यं दर्शनाल्लभेत् ॥ ७२ ॥
ये विप्रा हरये दत्त्वा नित्यमन्नञ्च भुञ्जते।
उच्छिष्टभोजनात्तेषां हरेर्दास्यं लभेन्नरः ॥ ७३ ॥
न दत्त्वा हरये भक्त्या भुञ्जते चेद् भ्रमादपि।
पुरीषसदृशं वस्तु जलं मूत्रसमं भवेत् ॥ ७४ ॥
शूद्रश्चेद्धरिभक्तश्च नैवेद्यभोजनोत्सुकः।
आमान्नं हरये दत्त्वा पाकं कृत्वा च खादति ॥ ७५ ॥

विप्रक्षत्रियवैश्यानां शालग्रामशिलार्चने ।
अधिकारो न शूद्राणां हरेरप्यर्चने तथा ॥ ७६ ॥
द्रव्याण्येतानि गोपेन्द्र विप्रेभ्यश्चेव दास्यति ।
भस्मीभूतानि सर्वाणि भविष्यन्ति न संशयः ॥ ७७ ॥
अन्नञ्च सर्वजीवेभ्यः पुण्यार्थं दातुमर्हति ।
दत्त्वा विशिष्टजीवेभ्यो विशिष्टं फलमाप्नुयात् ॥ ७८ ॥
अतो दत्त्वा मानुषेभ्यो लभतेऽष्टगुणं फलम् ।
शूद्राणां द्विगुणं पुण्यं वैश्येभ्योऽन्नं प्रदाय च ॥ ७९ ॥
दत्त्वान्नं क्षत्रियेभ्योऽपि वैश्यानां द्विगुणं भवेत् ।
क्षत्रियाणां शतगुणं विप्रेभ्योऽन्नं प्रदाय च ॥ ८० ॥
विप्राणाञ्च शतगुणं शास्त्रज्ञे ब्राह्मणे फलम् ।
शास्त्रज्ञानां शतगुणं भक्ते विप्रे लभेद् ध्रुवम् ॥ ८१ ॥
स चान्नं हरये दत्त्वा भुङ्क्ते भक्त्या च सादरम् ।
विष्णवे विप्रभक्ताय दत्त्वा दातुश्च यत् फलम् ॥ ८२ ॥
तत् फलं लभते नूनं भक्तब्राह्मणभोजने ।
भक्ते तुष्टे हरिस्तुष्टो हरौ तुष्टे च देवताः ॥ ८३ ॥
भवन्ति सिद्धाः शाखाश्च यथा मूलनिषेचनात् ।
द्रव्याण्येतानि देवाय यद्येकस्मै प्रयच्छति ॥ ८४ ॥
सर्वे देवाश्च रुष्टाश्चेद् वैकः किं करिष्यति ।
अथवाद्येञ्च वस्तूनां देहि गोवर्धनाय च ॥ ८५ ॥
गा वर्धयति नित्यं यस्तेन गोवर्धनः स्मृतः ।
गोवर्धनसमस्तात पुण्यवान्न महीतले ॥ ८६ ॥
नित्यं ददाति गोभ्यो यो नवीनानि तृणानि च ।
तीर्थस्नानेषु यत् पुण्यं यत् पुण्यं विप्रभोजने ॥ ८७ ॥

सर्वव्रतोपवासेषु सर्वेष्वेव तपःसु च ।
यत् पुण्यञ्च महादाने यत् पुण्यं हरिसेवने ॥ ८८ ॥
भुवः पर्यटने यत्तु सर्ववाक्येषु यद्भवेत् ।
यत् पुण्यं सर्वयज्ञेषु दीक्षायाञ्च लभेन्नरः ।
तत् पुण्यं लभते प्राज्ञो गोभ्यो दत्त्वा तृणानि च ।८९॥
भुक्तवन्तीं तृणं यश्च गां वारयति कामतः ।
ब्रह्महत्या भवेत्तस्य प्रायश्चित्ताद्विशुध्यति ॥ ९० ॥
सर्वे देवा गवामङ्गे तीर्थानि तत्पदेषु च ।
तद्गुह्येषु स्वयं लक्ष्मीस्तिष्ठत्येव सदा पितः ॥ ९१ ॥
गोष्पदाक्तमृदा यो हि तिलकं कुरुते नरः ।
तीर्थस्नातो भवेत्सद्यो जयस्तस्य पदे पदे ॥ ९२ ॥
गावस्तिष्ठन्ति यत्रैव तत्तीर्थं परिकीर्त्तितम् ।
प्राणांस्त्यक्त्वा नरस्तत्र सद्यो मुक्तो भवेत् ध्रुवम् ॥९३॥
ब्राह्मणानां गवामङ्गं यो हन्ति मानवाधमः ।
ब्रह्महत्यासमं पापं भवेत्तस्य न संशयः ॥९४॥
नारायणांशान् विप्रांश्च गाश्च ये घ्नन्ति मानवाः ।
कालसूत्रञ्च ते यान्ति यावच्चन्द्रदिवाकरौ ।९५॥
इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद ।
आनन्दयुक्तो नन्दश्च तमुवाच स्मिताननः ॥ ९६ ॥

नन्द उवाच ।

पौर्वापरीयं पूजेति महेन्द्रस्य महात्मनः ।
सुवृष्टिसाधनीसाध्यं सर्वशस्यमनोहरम् ॥ ९७ ॥
शस्यानि प्राणिनां प्राणाः शस्याज्जीवन्ति जीविनः ।
पूजयन्ति व्रजस्थाश्च महेन्द्रं पुरुषक्रमात् ॥ ९८ ॥

महोत्सवो वत्सरान्ते निर्विघ्नाय शिवाय च ।
इत्येवं वचनं श्रुत्वा बलेन सह माधवः ।
उच्चैर्जहास स पुनरुवाच पितरं मुदा ॥ ९९

श्रीकृष्ण उवाच ।

अहो श्रुतं विचित्रं ते वचनं परमाद्भुतम् ।
उपहास्यं लोकशास्त्रं वेदेष्वेव विगर्हितम् ॥ १०० ॥
निरूपणं नास्ति कुत्र शक्राद् वृष्टिः प्रजायते ।
अपूर्वं नीतिवचनं श्रुतमद्य मुखात्तव ॥ १०१ ॥
शृणु नीतिं श्रुतिमतां हे तात नानयं वदे ।
वचनं सामवेदोक्तं सन्तो जानन्ति सर्वतः ॥ १०२ ॥
प्रश्नं कुरुष्व मन्त्रांश्च विविधानपि संसदि ।
ब्रुवन्तु परमार्थञ्च किमिन्द्राद् वृष्टिरेव च ॥ १०३ ॥
सूर्य्याद्धि जायते तोयं तोयात् शस्यानि शाखिनः ।
तेभ्योऽन्नानि फलान्येव तेभ्यो जीवन्ति जीविनः ॥१०४॥
सूर्य्यशस्तञ्च नीरञ्च काले तस्मात्समुद्भवः ।
सूर्य्यो मेघादयः सर्वे विधात्रा ते निरूपिताः ॥१०५॥
यत्राब्दे यो जलधरो गजश्च सागरो मतः ।
शस्याधिपो नृपो मन्त्री विधात्रा ते निरूपिताः ॥१०६॥
जलाढ़कानां शस्यानां तृणानाञ्च निरूपितम् ।
अब्देऽब्दे स्थैव तत् सर्वं कल्पे कल्पे युगे युगे ॥१०७॥
हस्ती समुद्रादादाय करेण जलमीप्सितम् ।
दद्याद् घनाय तद् दद्याद्वातेन प्रेरितो घनः ॥१०८॥
स्थाने स्थाने पृथिव्याञ्च काले काले यथोचितम् ।
ईशेच्छयाविर्भूतञ्च न भवेत् प्रतिबन्धकम् ॥ १०९ ॥

भूतं भव्यं भविष्यच्च महत् क्षुद्रञ्च मध्यमम् ।
धात्रा निरूपितं कर्म केन तात निवार्य्यते ॥११०॥
जगच्चराचरं सर्वं कृतं तेनेश्वराज्ञया ।
आदौ विनिर्मितं भव्यं पश्चाज्जीव इति स्मृतः ॥१११॥
अभ्यासात् स स्वभावो हि स्वभावात्कर्म एव च ।
जायते कर्मणाम्भोगो जीविनां सुखदुःखयोः ॥११२॥
यातनाजन्ममरणरोगशोकभयानि च ।
समुत्पत्तिविपद्विद्या कविता वा यशोऽयशः ॥११३॥
पुण्यञ्च स्वर्गवासश्च पापं नरकसंस्थितिः ।
भुक्तिर्मुक्तिर्हरेर्दास्यं कर्मणा घटते नृणाम् ॥११४॥
सर्वेषां जनको ह्यीशश्चाभ्यासः शीलकर्मणाम् ।
भातुश्च फलदाता च सर्वं तस्येच्छया भवेत् ॥११५॥
विनिर्मितो विराटेन तत्त्वानि प्रकृतिर्जगत् ।
कूर्मश्च शेषो धरणी चाब्रह्मस्तम्भ एव च ॥ ११६ ॥
यस्याज्ञया मरुत् कूर्मं धत्ते शेषं बिभर्त्ति सः ।
शेषो वसुन्धरां मूर्ध्ना सा च सर्वञ्चराचरम् ॥११७॥
यस्याज्ञया सदा वाति जगत्प्राणो जगत्त्रये ।
तपति भ्रमणं कृत्वा भूगोलं सुप्रभाकरः ॥ ११८ ॥
दहत्यग्निः सञ्चरते मृत्युश्च सर्वजन्तुषु ।
बिभर्त्ति शाखिनः काले पुष्पाणि च फलानि च ॥११९॥
स्वे स्वे स्थाने समुद्राश्च तूर्णं मज्जन्त्यधोऽधुना ।
तमीशं भज भक्त्या च शक्रः किं कर्तुमीश्वरः ॥१२०॥
ब्रह्माण्डञ्च कतिविधमाविर्भूतं तिरोहितम् ।
विधयश्च कतिविधा यस्य भ्रूभङ्गलीलया ॥ १२१ ॥

मृत्योर्मृत्युः कालकालो विधातुर्विधिरेव सः ।
भज तं शरणं तात स ते रक्षां करिष्यति ॥ १२२ ॥
अहोऽष्टाविंशदिन्द्राणां पतने यदहर्निशम् ।
विधातुरेव जगतामष्टोत्तरशताधिकः ॥ १२३ ॥
निमेषाद्यस्य पतनं निर्गुणस्यात्मनः प्रभोः ।
एवंभूते तिष्ठतीशे शक्रपूजा विड़म्बनम् ॥ १२४ ॥
इत्येवमुक्त्वा श्रीकृष्णो विरराम च नारद ।
प्रशशंसुश्च मुनयो भगवन्तं सभासदः ॥१२५ ॥
नन्दः सपुलको हृष्टः सभायां साश्रुलोचनः ।
आनन्दयुक्ता मनुजा यदि पुत्रैः पराजिताः ॥१२६॥
श्रीकृष्णाज्ञां समाज्ञाय चकार स्वस्तिवाचनम् ।
क्रमेण वरणं तत्र सर्वेषाञ्च चकार ह ॥ १२७ ॥
पर्वतस्य मुनीन्द्राणां चकार पूजनं मुदा ।
बुधानां ब्राह्मणानाञ्च गवां वह्नेश्च सादरम् ॥१२८॥
तत्र पूजासमाप्तौ च क्रतौ च सुमहोत्सवे ।
नानाप्रकारवाद्यानां बभूव शब्द उल्वणः ॥१२९॥
जयशब्दः शङ्खशब्दो हरिशब्दो बभूव ह ।
वेदमङ्गलकाण्डञ्च पपाठ मुनिपुङ्गवः ॥ १३० ॥
वन्दिनां प्रवरो डिण्डी कंसस्य सचिवः प्रियः ।
उच्चैः पपाठ पुरतो मङ्गलं मङ्गलाष्टकम् ॥ १३१ ॥
कृष्णः शैलान्तिकं गत्वा भिन्नां मूर्त्तिं विधाय च ।
वस्तु खादामि शैलोऽस्मि वरं वृणित्युवाच ह ॥ १३२ ॥
उवाच नन्दं श्रीकृष्णः पश्य शैलं पितः पुरः ।
वरं प्रार्थय भद्रं ते भविता चेत्युवाच ह ॥१३३॥

हरेर्दास्यं हरेर्भक्तिं वरं वव्रे स वल्लवः।
द्रव्यं भुक्त्वा वरं दत्त्वा सोऽन्तर्धानञ्चकार ह ॥ १३४ ॥
मुनीन्द्रान् ब्राह्मणांश्चैव भोजयित्वा च गोपपः।
वन्दिभ्यो ब्राह्मणेभ्यश्च मुनिभ्यश्च धनं ददौ ॥ १३५ ॥
मुनिभ्यो ब्राह्मणेभ्योऽपि दत्त्वा नन्दो मुदान्वितः।
रामकृष्णौ पुरस्कृत्य सगणः स्वालयं ययौ ॥ १३६ ॥
रौप्यं वस्त्रं सुवर्णञ्च वरमश्वं मणिं तथा।
भक्ष्यद्रव्यं बहुविधं वन्दिने डिण्डिने ददौ।
स्तुत्वा नत्वा रामकृष्णौ मुनयो ब्रह्मणा ययुः ॥१३७॥
ययुरप्सरसः सर्वा गन्धर्वाः किन्नरास्तथा।
राजानो वल्लवाः सर्वे चागता ये महोत्सवे।
सर्वे प्रणम्य श्रीकृष्णं ययुः सादरपूर्वकम् ॥ १३८ ॥
एतस्मिन्नन्तरे शक्रः कोपप्रस्फुरिताधरः।
मखभङ्गे बहुविधां निन्दां श्रुत्वा सुरेश्वरः।
मरुद्भिर्वारिदैः सार्द्धं रथमारुह्य सत्वरम् ॥ १३९ ॥
जगाम नन्दनगरं वृन्दारण्यं मनोहरम्।
सर्वे देवा ययुः पश्चाद् युद्धशास्त्रविशारदाः ॥ १४० ॥
शस्त्रास्त्रपाणयः कोपाद्रथमारुह्य नारद।
वायुशब्दैर्मेघशब्दैः सैन्यशब्दैर्भयानकैः ॥ १४१ ॥
चकम्पे नगरं सर्वं नन्दो भयमवाप ह।
भार्यां सम्बोध्य स्वगणमुवाच शोककातरः।
रहःस्थलं समानीय नीतिशास्त्रविशारदः ॥ १४२ ॥

नन्द उवाच।

हे यशोदे समागच्छ वचनं शृणु रोहिणि।

रामकृष्णौ समादाय व्रज दूरं व्रजात् प्रिये ॥ १४३ ॥
बालका बालिका नार्यो यान्तु दूरं भयाकुलाः ।
बलवन्तश्च गोपालास्तिष्ठन्तु मत्समीपतः ॥ १४४ ॥
पश्चाच्च निर्गमिष्यामो वयञ्च प्राणसङ्कटात् ।
इत्युक्त्वा वल्लवश्रेष्ठः सस्मार श्रीहरिं भिया ॥ १४५ ॥
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ।
काण्वशाखोक्तस्तोत्रेण तुष्टाव श्री शचीपतिम् ॥ १४६ ॥

नन्द उवाच ।

इन्द्रः सुरपतिः शक्रो दितिजः पवनाग्रजः ।
सहस्राक्षो भगाङ्गश्च कश्यपात्मज एव च ॥ १४७ ॥
विड़ौजाश्च शुनासीरो मरुत्वान् पाकशासनः ।
जयन्तजनकः श्रीमान् शचीशो दैत्यसूदनः ॥ १४८ ॥
वज्रहस्तः कामसखो गौतमीव्रतनाशनः ।
वृत्रहा वासवश्चैव दधीचिदेहभिक्षुकः ॥ १४९ ॥
जिष्णुश्च वामनभ्राता पुरुहूतः पुरन्दरः ।
दिवस्पतिः शतमखः सुत्रामा गोत्रभिद्विभुः ॥ १५० ॥
लेखर्षभो बलारातिर्जम्भभेदी सुराश्रयः ।
संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ॥ १५१ ॥
आखण्डलो हरिहयो नमुचिप्राणनाशनः ।
वृद्धश्रवा वृषश्चैव दैत्यदर्पनिषूदनः ॥१५२ ॥
षट्चत्वारिंशन्नामानि पापघ्नानि विनिश्चितम् ॥१५३॥
स्तोत्रमेतत् कौथुमोक्तं नित्यं यदि पठेन्नरः ।
महाविपत्तौ शक्रस्तं वज्रहस्तश्च रक्षति ॥ १५४ ॥
अतिवृष्टिशिलावृष्टिवज्रपाताच्च दारुणात् ।

कदाचिन्न भयं तस्य रचिता वासवः स्वयम् ॥ १५५ ॥
यत्र गेहे स्तोत्रमिदं यश्च जानाति पुण्यवान् ।
न तत्र वज्रपतनं शिलावृष्टिश्च नारद ॥ १५६ ॥

श्रीनारायण उवाच ।

स्तोत्रं नन्दमुखाच्छ्रुत्वा चुकोप मधुसूदनः ।
उवाच पितरं नीतिं प्रज्वलन् ब्रह्मतेजसा ॥ १५७ ॥
कं स्तौषि भीरो को वेन्द्रस्त्यज भीतिं ममान्तिके ।
क्षणार्द्धे भस्मसात् कर्त्तुं क्षमोऽहमवलीलया ॥ १५८ ॥
गाश्च वत्सांश्च बालांश्च योषितो या भयातुराः ।
गोवर्धनस्य कुहरे संस्थाप्य तिष्ठ निर्भयम् ॥ १५९ ॥
बालस्य वचनं श्रुत्वा तच्चकार मुदान्वितः ।
हरिर्दधार शैलन्तं वामहस्तेन दण्डवत् ॥ १६० ॥
एतस्मिन्नन्तरे तत्र दीप्तोऽपि रत्नतेजसा ।
अन्धीभूतश्च सहसा बभूव रजसावृतम् ॥ १६१ ॥
सवातो मेघनिकरश्चच्छादगगनं मुने ।
वृन्दावने बभूवातिवृष्टिरेव निरन्तरम् ॥ १६२ ॥
शिलावृष्टिर्वज्रवृष्टिरुल्कापातः सुदारुणः ।
समस्तं पर्वतस्पर्शात् पतितं दूरतस्ततः ॥ १६३ ॥
विफलस्तत्समारम्भो यथानीशोद्यमो मुने ।
दृष्ट्वा मोघञ्च तत्सर्वं सद्यः शक्रश्चुकोप ह ॥ १६४ ॥
जग्राहामोघकुलिशं दधीच्यस्थिविनिर्मितम् ।
दृष्ट्वा तं वज्रहस्तञ्च जहास मधुसूदनः ॥ १६५ ॥
सहस्तं स्तम्भयामास वज्रमेवातिदारुणम् ।
सहामरगणैर्मैघञ्चकार स्तम्भनं विभुः ॥ १६६ ॥

सर्वे तस्थुर्निश्चलास्ते भित्तौ पुत्तलिका यथा।
हरिणा जृम्भितः शक्रः सद्यस्तन्द्रामवाप ह ॥ १६७ ॥
ददर्श सर्वं तन्द्रायां तत्र कृष्णमयं जगत्।
द्विभुजं मुरलीहस्तं रत्नालङ्कारभूषितम् ॥ १६८ ॥
पीतवस्त्रपरीधानं रत्नसिंहासनस्थितम्।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ॥ १६९ ॥
चन्दनोच्चितसर्वाङ्गमेतत् सर्वं चराचरम्।
दृष्टाद्भुततमं तत्र सद्यो मूर्च्छामवाप ह ॥ १७० ॥
जजाप मन्त्रं तत्रैव प्रदत्तं गुरुणा पुरा।
सहस्रदलपद्मस्थं ददर्श ज्योतिरुल्वणम् ॥ १७१ ॥
तत्रान्तरे दिव्यरूपमतीवसुमनोहरम्।
नवीनजलदोत्कर्षश्यामसुन्दरविग्रहम् ॥ १७२ ॥
सद्रत्नसारनिर्माणं ज्वलन्मकरकुण्डलम्।
ज्वलन्मणीन्द्रमकरकिरीटोज्ज्वलशेखरम् ॥ १७३ ॥
ज्वलता कौस्तुभेन्द्रेण कण्ठवक्षःस्थलोज्ज्वलम्।
मणिकेयूरवलयमणिमञ्जीररञ्जितम् ॥ १७४ ॥
अन्तर्बहिः समं दृष्ट्वा तुष्टाव परमेश्वरम् ॥ १७५ ॥

इन्द्र उवाच।

अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम्।
गुणातीतं निराकारं स्वेच्छामयमनन्तकम् ॥ १७६ ॥
भक्तध्यानाय सेवायै नानारूपधरं वरम्।
शुक्लरक्तपीतश्यामं युगानुक्रमेण च ॥ १७७ ॥
शुक्लतेजःस्वरूपञ्च सत्ये सत्यस्वरूपिणम्।
त्रेतायां कुङ्कुमाकारं ज्वलन्तं ब्रह्मतेजसा ॥ १७८ ॥

द्वापरे पीतवर्णञ्च शोभितं पीतवाससा ।
कृष्णवर्णं कलौ कृष्णं परिपूर्णतमं प्रभुम् ॥ १७६ ॥
नवधाराधरोत्कृष्टश्यामसुन्दरविग्रहम् ।
नन्दैकनन्दनं वन्दे यशोदानन्दनं प्रभुम् ॥ १८० ॥
गोपिकाचेतनहरं राधाप्राणाधिकं परम् ।
विनोदमुरलीशब्दं कुर्वन्तं कौतुकेन च ॥ १८१ ॥
रूपेणाप्रतिमेनैव रत्नभूषणभूषितम् ।
कन्दर्पकोटिसौन्दर्य्यं बिभ्रन्तं शान्तमीश्वरम् ॥ १८२ ॥
क्रीड़न्तं राधया सार्धं वृन्दारण्ये च कुत्रचित् ।
कुत्रचिन्निर्जनेऽरण्ये राधावक्षःस्थलस्थितम् ॥ १८३ ॥
जलक्रीड़ां प्रकुर्वन्तं राधया सह कुत्रचित् ।
राधिकाकबरीभारं कुर्वन्तं कुत्रचिद्वने ॥ १८४ ॥
कुत्रचिद्राधिकापादे दत्तवन्तमलक्तकम् ।
राधाचर्वितताम्बूलं गृह्णन्तं कुत्रचिन्मुदा ॥ १८५ ॥
पश्यन्तं कुत्रचिद्राधां पश्यन्तीं वक्रचक्षुषा ।
दत्तवन्तञ्च राधायै कृत्वा मालाञ्च कुत्रचित् ॥ १८६ ॥
कुत्रचिद्राधया सार्धं गच्छन्तं रासमण्डलम् ।
राधादत्तां गले मालां धृतवन्तञ्च कुत्रचित् ॥ १८७ ॥
सार्धं गोपालिकाभिश्च विहरन्तञ्च कुत्रचित् ।
राधां गृहीत्वा गच्छन्तं विहाय ताश्च कुत्रचित् ॥१८८॥
विप्रपत्नीदत्तमन्नं भुक्तवन्तञ्च कुत्रचित् ।
भुक्तवन्तं तालफलं बालकैः सह कुत्रचित् ॥ १८९ ॥
वस्त्रं गोपालिकानाञ्च हरन्तं कुत्रचिन्मुदा ।
गवाङ्गणं व्याहरन्तं कुत्रचिद् बालकैः सह ॥ १९० ॥

कालीयमूर्ध्निपादाब्जं दत्तवन्तञ्च कुत्रचित् ।
विनोदमुरलीशब्दं कुर्वन्तं कुत्रचिन्मुदा ॥ १८१ ॥
गायन्तं रम्यसङ्गीतं कुत्रचिद् बालकैः सह ।
स्तुत्वा शक्रस्तवेन्द्रेण प्रणनाम हरिं भिया ॥ १८२ ॥
पुरा दत्तेन गुरुणा रणे वृत्रासुरेण च ।
कृष्णेन दत्तं कृपया ब्रह्मणे च तपस्यते ॥ १८३ ॥
एकादशाक्षरो मन्त्रः कवचं सर्वलक्षणम् ।
दत्तमेतत् कुमाराय पुष्करे ब्रह्मणा पुरा ॥ १८४ ॥
कुमारोऽङ्गिरसे दत्तो गुरवेऽङ्गिरसा मुने ।
इदमिन्द्रकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ॥ १८५ ॥
इह प्राप्य दृढां भक्तिमन्ते दास्यं लभेद् ध्रुवम् ।
जन्ममृत्युजराव्याधिशोकेभ्यो मुच्यते नरः ।
न हि पश्यति स्वप्नेऽपि यमदूतं यमालयम् ॥ १८६ ॥

नारायण उवाच ।

इन्द्रस्य वचनं श्रुत्वा प्रसन्नः श्रीनिकेतनः ।
प्रीत्या तस्मै वरं दत्त्वा स्थापयामास पर्वतम् ।
प्रणम्य च हरिं शक्रः प्रययौ स्वगणैः सह ॥ १८७ ॥
गह्वरस्था जनाः सर्वे प्रजग्मुर्गह्वराद् गृहम् ।
ते सर्वे मेनिरे कृष्णं परिपूर्णतमं विभुम् ।
पुरस्कृत्य व्रजस्थांश्च प्रययौ स्वालयं हरिः ॥ १८८ ॥
तुष्टाव नन्दः पुत्रं तं पूर्णब्रह्म सनातनम् ।
पुलकाञ्चितसर्वाङ्गो भक्तिपूर्णाश्रुलोचनः ॥ १८९ ॥

नन्द उवाच ।

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।

जगद्धिताय कृष्णाय गोविन्दाय नमो नमः।
नमो ब्रह्मण्यदेवाय ब्रह्मणे परमात्मने ॥ २०० ॥
अनन्तकोटिब्रह्माण्डधामधाम्ने नमोऽस्तु ते।
नमो मत्स्यादिरूपाणां जीवरूपाय सच्चिणे।
निर्लिप्ताय निर्गुणाय निराकाराय ते नमः ॥२०१॥
अतिसूक्ष्मस्वरूपाय स्थूलात् स्थूलतमाय च।
सर्वेश्वराय सर्वाय तेजोरूपाय ते नमः ॥ २०२ ॥
अतिसूक्ष्मस्वरूपाय ध्यानासाध्याय योगिनाम।
ब्रह्मविष्णुमहेशानां वन्द्याय नित्यरूपिणे ।२०३॥
धाम्ने चतुर्णां वर्णानां युगेष्वेव चतुर्षु च।
शुक्लरक्तपीतश्यामाभिधानगुणशालिने ॥ २०४ ॥
योगिने योगरूपाय गुरवे योगिनामपि।
सिद्धेश्वराय सिद्धाय सिद्धानां गुरवे नमः ॥२०५॥
यं स्तोतुमक्षमो ब्रह्मा विष्णुर्यं स्तोतुमक्षमः।
यं स्तोतुमक्षमो रुद्रः शेषो यं स्तोतुमक्षमः ॥२०६॥
यं स्तोस्तुमक्षमो धर्मो यं स्तोतुमक्षमो रविः।
यं स्तोतुमक्षमो लम्बोदरश्चापि षड़ाननः ॥२०७॥
यं स्तोतुमक्षमाः सर्वे मुनयः सनकादयः।
कपिलो न क्षमः स्तोतुं सिद्धेन्द्राणां गुरोर्गुरुः ॥२०८॥
न शक्तौ स्तवनं कर्त्तुं नरनारायणावृषी।
अन्ये जड़धियः के वा स्तोतुं शक्ताः परात्परम् ॥२०९॥
वेदा न शक्ता नो वाणी न च लक्ष्मीः सरस्वती।
न राधा स्तवने शक्ता किं स्तुवन्ति विपश्चितः ॥२१०॥
क्षमस्व निखिलं ब्रह्मन्नपराधं क्षणे क्षणे।

रक्ष मां करुणासिन्धो दीनबन्धो भवार्णवे ॥ २११ ॥
पुरा तीर्थे तपस्तप्त्वा पुत्रः प्राप्तः सनातनः ।
स्वकीयचरणाम्भोजे भक्तिं दास्यञ्च देहि मे ॥२१२॥
ब्रह्मत्वममरत्वं वा सालोक्यादिकमेव वा ।
त्वत्पदाम्भोजदास्यस्य कलां नार्हन्ति षोड़शीम् ॥२१३॥
इन्द्रत्वं वा सुरत्वं वा संप्राप्तिं सिद्धिस्वर्गयोः ।
राजत्वं चिरजीवित्वं सुधियो गणयन्ति किम् ॥२१४॥
एतद्यत् कथितं सर्वं ब्रह्मत्वादिकमीश्वर ।
भक्तसङ्गक्षणार्द्धस्य नोपमा ते किमर्हति ॥ २१५ ॥
त्वद्भक्तो यस्त्वत्सदृशः कस्त्वां तर्कितुमीश्वरः ।
क्षणार्द्धालापमात्रेण पारं कर्त्तुं स चेश्वरः ॥२१६॥
भक्तसङ्गाद्भवत्येव भक्तिं कर्त्तुमनेकधा ।
त्वद्भक्तजलदालापजलसेकेन वर्द्धते ॥ २१७ ॥
अभक्तालापतापात्तु शुष्कतां याति तत्क्षणम् ।
तद्गुणस्मृतिसेकाच्च वर्द्धते तत्क्षणे स्फुटम् ॥२१८॥
त्वद्भक्त्यङ्कुरमुद्भूतं स्फीतं मानसजं परम् ।
न नश्यं वर्द्धनीयञ्च नित्यं नित्यं क्षणे क्षणे ॥२१९॥
ततः सम्प्राप्य ब्रह्मत्वं भक्तस्य जीवनाय च ।
ददात्येव फलं तस्मै हरिदास्यमनुत्तमम् ॥ २२० ॥
संप्राप्य दुर्लभं दास्यं यदि दासो बभूव ह ।
सुनिश्चयेन तेनैव जितं सर्वं भयादिकम् ॥ २२१ ॥
इत्येवमुक्त्वा भक्त्या च नन्दस्तस्थौ हरेः पुरः ।
प्रसन्नवदनः कृष्णो ददौ तस्मै तदीप्सितम् ॥ १२२ ॥
एवं नन्दकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ।

सुदृढ़ां भक्तिमाप्नोति सद्यो दास्यं लभेद्धरेः ॥ २२३ ॥
तपस्तप्त्वा यदा द्रोणस्तीर्थे च धरया सह ।
स्तोत्रं तस्मै पुरा दत्तं ब्रह्मणा तत् सुदुर्लभम् ॥२२४॥
हरेः षड़क्षरो मन्त्रः कवचं सर्वरक्षणम् ।
इह सौभरिणा दत्तं तस्मै तुष्टेन पुष्करे ॥ २२५ ॥
तदेव कवचं स्तोत्रं स च मन्त्रः सुदुर्लभः ।
ब्रह्मणोऽंशेन मुनिना नन्दाय च तपस्यते ॥ २२६ ॥
मन्त्रः स्तोत्रञ्च कवचमिष्टदेवो गुरुस्तथा ।
या यस्य विद्या प्राचीना न तां त्यजति निश्चितम् ॥२२७
इत्येवं कथितं स्तोत्रं श्रीकृष्णाख्यानमद्भुतम् ।
सुखदं मोक्षदं सारं भवबन्धविमोचनम् ॥ २२८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे इन्द्रयागभञ्जनं नामैक-विंशतितमोऽध्यायः ।

---

## द्वाविंशोऽध्यायः ।

---

श्रीनारायण उवाच ।

एकदा राधिकानाथो बलेन सह बालकैः ।
जगाम तत्तालवनं परिपक्वफलान्वितम् ॥ १ ॥
वृक्षाणां रक्षिता दैत्यः खररूपी च धेनुकः ।
कोटिसिंहसमबलो देवानां दर्पनाशनः ॥ २ ॥

शरीरं पर्वतसमं कूपतुल्ये च लोचने ।
ईषावङ्क्तिसमा दन्तास्तुण्डं पर्वतगह्वरम् ॥ ३ ॥
शतहस्तपरिमिता जिह्वा लोला भयानका ।
कासारसदृशा नाभिः शब्दस्तस्य भयानकः ॥ ४ ॥
दृष्ट्वा तालवनं बाला हर्षमापुरनिन्दिताः
कौतुकात् कृष्णमूचुस्ते स्मेराननसरोरुहाः ॥ ५ ॥

बाला ऊचुः ।

हे कृष्ण करुणासिन्धो दीनबन्धो जगत्पते ।
महाबलबलभ्रातः समस्तबलिनां वर ॥ ६ ॥
अवधानं कुरु विभो चणाद्यं नो निवेदने ।
क्षुधितानां शिशूनाञ्च भक्तानां भक्तवत्सल ॥ ७ ॥
स्वादूनि सुन्दराण्येव पश्य तालफलानि च ।
भङ्क्तुं चालयितुं वृक्षान् पातितुञ्च फलानि च ॥ ८ ॥
नानावर्णानि पुष्पाणि पक्वानि दुर्लभानि च ।
आज्ञां करोषि चेत् कृष्ण चेष्टां कर्त्तुं वयं क्षमाः ॥ ९ ॥
किन्त्वत्र दैत्यो बलवान् खररूपी च धेनुकः ।
अजितस्त्रिदशैः सर्वैर्महाबलपराक्रमः ॥ १० ॥
दुर्निवार्य्यश्च सर्वेषां कंसस्य सचिवो महान् ।
हिंसकः सर्वजन्तूनां वनानामस्ति रक्षिता ॥ ११ ॥
सुविचार्य्य जगत्कान्त वद नो वदतां वर ।
युक्तं कार्य्यमयुक्तं वा कर्त्तव्यमथवा न वा ॥ १२ ॥
बालकस्य वचः श्रुत्वा भगवान् मधुसूदनः ।
उवाच मधुरं बालान् वचनं तत् सुखावहम् ॥ १३ ॥

श्रीकृष्ण उवाच ।

किं वो दैत्याद्भयं बाला यूयं मन्मङ्गचारिणः ।
वृन्तान् भक्त्वा चालयित्वा फलानि खादता भयम् ॥१४॥
श्रीकृष्णाज्ञां समादाय बालका बलशालिनः ।
उत्पेतुर्वृक्षशिखरं क्षुधिताश्च फलार्थिनः ॥ १५ ॥
नानाप्रकारवर्णानि स्वादूनि सुन्दराणि च ।
फलानि पातयामासुः परिपक्वानि नारद ॥ १६ ॥
केचिद् बभञ्जुर्वृक्षांश्च चालयामासुरेव च ।
केचित् कोलाहलञ्चक्रुर्नृतुस्तत्र केचन ॥ १७ ॥
अवरुह्य तरुभ्यश्च बालका बलशालिनः ।
फलान्यादाय गच्छन्तो ददृशुर्दैत्यपुङ्गवम् ॥ १८ ॥
महाबलं महाकायं घोरं गर्दभरूपिणम् ।
आगच्छन्तं महावेगात् कुर्वन्तं शब्दमुल्बणम् ॥१९॥
तं दृष्ट्वा रुरुदुः सर्वे फलानि तत्यजुर्भिया ।
कृष्ण कृष्णेति शब्दञ्च प्रचक्रुर्बहुधा भयम् ॥ २० ॥
अस्मान् रक्ष समागच्छ हे कृष्ण करुणानिधे ।
हे सङ्कर्षण नो रक्ष प्राणा नो यान्ति दानवात् ॥२१॥
कृष्ण हे कृष्ण हरे मुरारे गोविन्द दामोदर दीनबन्धो ।
[गो]पीश गोपेश भवार्णवेऽस्माननन्त नारायण रक्ष रक्ष ॥२२॥

भयेऽभये वाथ शुभेऽशुभे वा
सुखेषु दुःखेषु च दीननाथ ।
त्वया विनान्यं शरणं भवार्णवे
न नोऽस्ति हे माधव रक्ष रक्ष ॥ २३ ॥
जय जय गुणसिन्धो कृष्णभक्तैकबन्धो

बहुतरभययुक्तान् बालकान् रक्ष रक्ष ।
जहि दनुजकुलानामीशमस्माकमन्तं
सुरकुलबलदर्पं वर्धयेमं निहत्य ॥ २४ ॥
बालानां विक्लवं दृष्ट्वा बलेन सह माधवः ।
आजगाम शिशुस्थानं भयहा भक्तवत्सलः ॥ २५ ॥
भयं नास्ति भयं नास्तीत्युक्त्वा दुद्राव सत्वरम् ।
ईषद्धास्यप्रसन्नास्यो निर्भयं दत्तवान् शिशून् ॥२६॥
दृष्ट्वा कृष्णं बलं बाला ननृतुर्विजहुर्भयम् ।
हरिस्मृतिश्चाभयदा सर्वमङ्गलदायिका ॥ २७ ॥
श्रीकृष्णो दानवं दृष्ट्वा ग्रसन्तं पुरतः शिशून् ।
बलं सम्बोध्य बलिनमुवाच मधुसूदनः ॥ २८ ॥
श्रीकृष्ण उवाच ।
दानवो बलिपुत्रोऽयं नाम्ना साहसिको बली ।
गर्दभो ब्रह्मशापेन शप्तो दुर्वाससा पुरा ॥ २९ ॥
पापिष्ठो मम बध्योऽयं महाबलपराक्रमः ।
अहमेनं बधिष्यामि त्वं रक्ष बालकान् बल ॥ ३० ॥
आदाय बालकान् सर्वान् दूरं गच्छेत्युवाच ह ।
तान् गृहीत्वा बलः शीघ्रं जगाम त्वरयाज्ञया ॥ ३१ ॥
दृष्ट्वा कृष्णं दानवेन्द्रो महाबलपराक्रमः ।
जग्रास लीलया कोपाज्ज्वलदग्निशिखोपमम् ॥३२॥
बभूवातिदाहयुक्तो [illegible]कामोऽतितेजसा ।
उज्जग्रास पुनर्द[illegible]भुं तेजस्विनं भिया ॥ ३३ ॥
उज्झितं स[illegible] दृष्ट्वा दैत्यो मुमोच ह ।
अतीव सुन्द[illegible]लन्तं ब्रह्मतेजसा ॥ ३४ ॥

कृष्णदर्शनमात्रेण बभूवास्य पुरा स्मृतिः ।
आत्मानं बुबुधे कृष्णं जगतां कारणं परम् ॥ ३५ ॥
तेजःस्वरूपमीशन्तं दृष्ट्वा तुष्टाव दानवः ।
यथागमं यथा जन्म गुणातीतं स्तुतेः परम् ॥ ३६ ॥

दानव उवाच ।

वामनोऽसि त्वमंशेन मत्पितुर्यज्ञभिक्षुकः ।
राज्यहर्ता च श्रीहर्ता सुतलस्थलदायकः ॥ ३७ ॥
बलिभक्तिवशो वीरः सर्वेशो भक्तवत्सलः ।
शीघ्रं त्वं हिंस मां पापं शापाद्गर्दभरूपिणम् ॥ ३८ ॥
मुनेर्दुर्वाससः शापादीदृशं जन्म कुत्सितम् ।
मृत्युरुक्तश्च मुनिना त्वत्तो मम जगत्पते ॥ ३९ ॥
षोड़शारेण चक्रेण सुतीक्ष्णेनातितेजसा ।
जहि मां जगतां नाथ सद्गतिं कुरु मोचद ॥ ४० ॥
त्वमंशेन वराहश्च समुद्धर्त्तुं वसुन्धराम् ।
वेदानां रक्षिता नाथ हिरण्याक्षनिषूदनः ॥ ४१ ॥
त्वं नृसिंहः स्वयं पूर्णो हिरण्यकशिपोर्वधे ।
प्रह्लादानुग्रहार्थाय देवानां रक्षणाय च ॥ ४२ ॥
त्वञ्च वेदोद्धारकर्त्ता मीनांशेन दयानिधे ।
नृपस्य ज्ञानदानाय रक्षायै सुरविप्रयोः ॥ ४३ ॥
शेषाधारश्च कूर्मस्त्वमंशेन सृष्टिहेतवे ।
विश्वाधारश्च शेषस्त्वमंशेनापि सहस्रदृक ॥ ४४ ॥
रामो दाशरथिस्त्वञ्च जानक्युद्धारहेतवे ।
दशकन्धनिहन्ता च सिन्धौ सेतुविधायकः ॥ ४५ ॥
कलया पशुरामश्च जमदग्निसुतो महान् ।

त्रिःसप्तकृत्वो भूपानां निहन्ता जगतीपते ॥ ४६ ॥
अंशेन कपिलस्त्वञ्च सिद्धानाञ्च गुरोर्गुरुः ।
मातृज्ञानप्रदाता च योगशास्त्रविधायकः ॥ ४७ ॥
अंशेन ज्ञानिनां श्रेष्ठो नरनारायणावृषी ।
त्वञ्च धर्मसुतो भूत्वा लोकविस्तारकारकः ॥ ४८ ॥
अधुना कृष्णरूपस्त्वं परिपूर्णतमः स्वयम् ।
सर्वेषामवताराणां बीजरूपः सनातनः ॥ ४९ ॥
यशोदाजीवनो नित्यो नन्दैकानन्दवर्धनः ।
प्राणाधिदेवो गोपीनां राधाप्राणाधिकः प्रियः ॥ ५० ॥
वसुदेवसुतः शान्तो देवकीदुःखभञ्जनः ।
अयोनिसम्भवः श्रीमान् पृथिवीभारहारकः ॥ ५१ ॥
पूतनायै मातृगतिं प्रदाता च कृपानिधिः ।
बककेशिप्रलम्बानां ममापि मोक्षकारकः ॥ ५२ ॥
स्वेच्छामय गुणातीत भक्तानां भयभञ्जन ।
प्रसीद राधिकानाथ प्रसीद कुरु मोक्षणम् ॥ ५३ ॥
हे नाथ गार्दभीयोनेः समुद्धर भवार्णवात् ।
मूर्खस्त्वद्भक्तपुत्रोऽहं मामुद्धर्त्तुं त्वमर्हसि ॥ ५४ ॥
वेदा ब्रह्मादयो यञ्च मुनीन्द्रास्तोतुमक्षमाः ।
किं स्तौमि तं गुणातीतं पुरा दैत्योऽधुना खरः ॥ ५५ ॥
एवं कुरु कृपासिन्धो येन मे न भवेज्जनुः ।
दृष्ट्वा पादारविन्दं ते कः पुनर्भवनं व्रजेत् ॥ ५६ ॥
ब्रह्मा स्तोता खरः स्तोता नोपहासितुमर्हसि ।
सदीश्वरस्य विज्ञस्य योग्यायोग्ये समा कृपा ॥ ५७ ॥
इत्येवमुक्त्वा दैत्येन्द्रस्तस्थौ च पुरतो हरेः ।

प्रसन्नवदनः श्रीमानतितुष्टो बभूव ह ॥ ५८ ॥
इदं दैत्यकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ।
सालोक्यसार्ष्टिसामीप्यं लीलया लभते हरेः ॥ ५९ ॥
इह लोके हरेर्भक्तिमन्ते दास्यं सुदुर्लभम् ।
विद्यां श्रियं सुकवितां पुत्रपौत्रान् यशो लभेत् ॥ ६० ॥

श्रीनारायण उवाच ।

श्रुत्वानुमेने दैत्येन्द्रस्तवनं करुणानिधिः ।
कथं करोमि संहारमीदृशं भक्तमित्यहो ॥ ६१ ॥
अनुमन्य स्मृतिं तस्य संजहार हरिः स्वयम् ।
न हि युक्तो बधस्तोतुर्वैकुर्विधिरीश्वरात् ॥ ६२ ॥
दानवो मायया विष्णोर्विसस्मार पुनः स्वकम् ।
दुरुक्तिं कण्ठदेशे तदधिष्ठानं चकार ह ॥ ६३ ॥
उवाच श्रीहरिं दैत्यः कोपात् प्रस्फुरिताधरः ।
सुने सद्यो मर्त्तुकामो दैवग्रस्तो विचेतनः ॥ ६४ ॥

दैत्य उवाच ।

ध्रुवं त्वं मर्त्तुकामोऽसि दुर्बुद्धे मानवार्भक ।
अद्य प्रस्थापयिष्यामि त्वामहं यममन्दिरम् ॥ ६५ ॥
आयासि जीवनाकाङ्क्षी मम तालवनं शिशो ।
न यास्यसि पुनर्गेहं बान्धवं न हि द्रक्ष्यसि ॥ ६६ ॥
न कंसो न जरासन्धो नरको न समो मम ।
देवाः कम्पन्ति मे नित्यं के चान्ये मत्समा भुवि ॥ ६७ ॥
न हि संहारकर्त्ता च मां संहर्त्तुं क्षमः शिवः ।
न च ब्रह्मा न विष्णुश्च न मृत्युः काल एव च ॥ ६८ ॥
मम तालतरून् भङ्क्त्वा पातयित्वा फलानि च ।

अहङ्कारोऽति सहसा किमहो कस्य तेजसा ॥ ६९ ॥
कस्त्वं वद वटो सत्यं कमनीयोऽतिसुन्दरः ।
दुर्लभं जीवनं दातुं मह्यं कथमिहागतः ॥ ७० ॥
इत्युक्त्वा मस्तके कृत्वा प्रेरयित्वा तु तं बली ।
दूरतः पातयामास श्रीकृष्णं मरणोन्मुखः ॥ ७१ ॥
पातयित्वा च तं भूमौ विषाणाभ्यां जघान सः ।
कृष्णाङ्गस्पर्शमात्रेण तद्विषाणौ बभञ्जतुः ॥ ७२ ॥
दैत्यो भग्नविषाणश्च तमीशं कोपतो मुने ।
जग्रास चर्वणं कर्त्तुं भग्नदन्तो बभूव ह ॥ ७३ ॥
तेजसा दग्धवक्त्रश्च तमुज्जग्राह तत्क्षणे ।
जज्वाल व्यथितः कोपाद्ददार खुरतो महीम् ॥ ७४ ॥
घूर्णयित्वा तु लाङ्गूलं शब्दं कृत्वा भयानकम् ।
स जगाम शिशुस्थानं दुद्रुवुर्बालका भिया ॥ ७५ ॥
बलञ्च प्रेरयामास मस्तकेन महाबली ।
बली मुष्टिं ददौ तस्मै मूर्च्छामाप ततोऽसुरः ॥ ७६ ॥
क्षणेन चेतनां प्राप्य जगाम हरिसन्निधिम् ।
वज्रमुष्ट्या च व्यथितः पुनर्मूर्च्छामवाप सः ॥ ७७ ॥
पुनश्च चेतनां प्राप्य समुत्तस्थौ व्यथाकुलः ।
उत्ससर्ज वृहल्लेडं मूत्रञ्च भयमाप ह ॥ ७८ ॥
क्षणात् सन्धिक्षणं प्राप्य महाबलपराक्रमः ।
कृत्वा शिरसि गोविन्दं घूर्णयामास दानवः ॥ ७९ ॥
पातयामास भूमौ तं घूर्णयित्वा पुनः पुनः ।
उत्पाट्य तालवृक्षं तं ताडयामास माधवः ॥ ८० ॥
यथा केशापहारेण मानवस्य भवेद् व्यथा ।

तथा बभूव दैत्यस्य तालवृक्षस्य ताड़नात् ॥ ८१ ॥
गोवर्धनं समुत्पाट्य घातयामास तं विभुः ।
पपात वेगाच्छैलेन्द्रस्तस्योपरि महामुने ॥ ८२ ॥
पर्वतस्य प्रहारेण मूर्च्छामाप महाबलः ।
बभूव पलिताङ्गश्च रुधिरञ्च समुद्वहन् ॥ ८३ ॥
क्षणेन चेतनां प्राप्य समुत्तस्थौ वृषासुरः ।
गृहीत्वा पर्वतश्रेष्ठं प्रेरयामास माधवम् ॥ ८४ ॥
दृष्ट्वा शैलमुत्पतन्तं वेगेन मधुसूदनः ।
जग्राह दक्षिणकरे यथेक्षुदण्डवत्प्रभुः ॥ ८५ ॥
पूर्वस्थाने पर्वतं तं स्थापयामास कौतुकात् ।
गृहीत्वा दैत्यकर्णाग्रं पातयामास दूरतः ॥ ८६ ॥
उत्पत्य च महावेगाच्चकार वेष्टनं हरेः ।
पृथिवीं घर्षयामास तीक्ष्णाग्रेण खुरेण च ॥ ८७ ॥
प्रगृह्य श्रीहरिं वेगात् कृत्वा मूर्ध्नि महासुरः ।
उत्पपात मनोयायी लीलया शतयोजनम् ॥ ८८ ॥
प्रहरञ्च तयोर्युद्धं निर्लक्षे च बभूव ह ।
ततो गृहीत्वा श्रीकृष्णं पपात धरणीतले ॥ ८९ ॥
पुनर्मुहूर्त्तं युद्धञ्च बभूव भूतले तयोः ।
मुदा हरिः प्रशशंस प्रहस्य दानवेश्वरम् ॥ ९० ॥
मङ्गलस्य बलेः पुत्र धन्यं त्वज्जीवनं परम् ।
स्वस्थस्तु तं दानवेन्द्र वत्स निर्वाणतां व्रज ॥ ९१ ॥
मद्दर्शनं स्वस्तिबीजं परं निर्वाणकारणम् ।
सर्वाधिकं सर्वपरं लभ स्थानं मनोहरम् ॥ ९२ ॥
इत्येवमुक्त्वा श्रीकृष्णः सस्मार चक्रमुत्तमम् ॥

सूर्य्यकोटिसमं दीप्त्या जग्राह तत् सुदर्शनम् ॥ ९३ ॥
चिक्षेप भ्रामयित्वा च षोड़शारमनुत्तमम् ।
चिच्छेद लीलया बध्यं ब्रह्मविष्णुमहेश्वरैः ॥ ९४ ॥
पपात मस्तकं भूमौ दानवस्य महात्मनः ।
तेजःसमूह उत्तस्थौ शतसूर्य्यसमप्रभः ॥ ९५ ॥
विलोक्य हरिलोकं संश्लिष्टं कृष्णपदाम्बुजे ।
सम्प्राप्य परमं मोक्षमहो दानवपुङ्गवः ॥ ९६॥
गगनस्थाः सुराः सर्व्वे मनुयश्च भृशं मुदा ।
पारिजातप्रसूनानाञ्चक्रुस्ते पुष्पवर्षणम् ॥ ९७ ॥
नेदुर्दुन्दुभयः स्वर्गे नन्तुश्चाप्सरोगणाः ।
जगुर्गन्धर्व्वनिकरास्तुष्टुवुर्मुनयो मुदा ॥ ९८ ॥
स्तुत्वा जग्मुः सुराः सर्व्वे मुनयो हर्षविह्वलाः ।
धेनुकस्य बधं दृष्ट्वा तत्राजग्मुश्च बालकाः ॥ ९९ ॥
बलश्च बलिनां श्रेष्ठस्तुष्टाव पुरुषोत्तमम् ।
तुष्टुवुर्बालकाः सर्व्वे नन्तुश्च मुदान्विताः ॥ १०० ॥
दत्त्वा कृष्णबलाभ्याञ्च प्रपक्कानि फलानि च ।
सर्व्वाणि भक्षयामासुर्बालाः प्रहृष्टमानसाः ॥१०१॥
भुक्त्वा पीत्वा हरिः शीघ्रं बलेन बालकैः सह ।
जगाम स्वालयं ब्रह्मन्निहत्य दानवेश्वरम् ॥ १०२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे धेनुकबधो नाम
द्वाविंशोऽध्यायः ।

——

## त्रयोविंशोऽध्यायः ।

—

नारद उवाच ।

केन पापेन बलिजो गर्द्दभत्वमवाप ह ।
दुर्वासाः केन दोषेण प्रणाप दानवेश्वरम् ॥ १ ॥
केन पुण्येन वा नाथ बलिनः श्रीहरेः पदम् ।
महसैकत्वमुक्तिञ्च संप्राप दानवाधिपः ॥ २ ॥
मुने सर्वं सुविस्तार्य्य वद सन्देहभञ्जन ।
अहो कविमुखे काव्यं नूतनं नूतनं पदे पदे ॥ ३ ॥

श्रीनारायण उवाच ।

शृणु वत्स प्रवक्ष्येऽहमितिहासं पुरातनम् ।
पुरा श्रुतं धर्मवक्त्रात् पर्वते गन्धमादने ॥ ४ ॥
पाद्मकल्पे च वृत्तान्तं विचित्रं सुमनोहरम् ।
नारायणकथोपेतं कर्णपीयूषमुत्तमम् ॥ ५ ॥
यत्र कल्पे कथा चेयं तत्र त्वमुपबर्हणः ।
आकल्पजीवी सश्रीकः सुन्दरः स्थिरयौवनः ॥ ६ ॥
पञ्चाशत्कामिनीनाञ्च पतिः शृङ्गारतत्परः ।
वरेण ब्रह्मणस्त्वञ्च सुकण्ठो गायनेश्वरः ॥ ७ ॥
अनुक्षणं पपुस्तास्ते सुन्दरं मुखपङ्कजम् ।
निमेषरहिताः सर्वाः कामबाणप्रपीड़िताः ॥ ८ ॥
तासां प्राणैश्च घटितो विधिना त्वमिव श्रुतम् ।
दिवानिशं सहृदरा न जीवन्ति त्वया विना ॥ ९ ॥

पुष्पोद्याने च रहसि स्थाने स्थाने मनोरमे ।
गह्वरेषु च शैलानां कन्दरेषु नदीषु च ॥ १० ॥
काननेषु च रम्येषु श्मशाने जन्तुवर्जिते ।
यथामनोरथं ताश्च क्रीड़ाञ्चक्रुस्त्वया सह ॥ ११ ॥
तदा दैवाद्विधेः शापाद् भूत्वा दासीसुतो भवान् ।
अधुना ब्रह्मणः पुत्रो वैष्णवोच्छिष्टभोजनात् ॥ १२ ॥
असंख्यकल्पजीवी च वैष्णवप्रवरो महान् ।
ज्ञानदृष्ट्या सर्वदर्शी प्रियशिष्यश्च धूर्जटेः ॥ १३ ॥
तस्य कल्पस्य वृत्तान्तं मुने मत्तो निशामय ।
विस्तार्य दैत्यवृत्तान्तं कथयामि सुधोपमम् ॥ १४ ॥
एकदैव बलेः पुत्रो नाम्ना साहसिको बली ।
स्वतेजसा सुरान् जित्वा प्रतस्थौ गन्धमादनम् ॥ १५ ॥
चन्दनोच्चितसर्वाङ्गो रत्नभूषणभूषितः ।
रत्नसिंहासनस्थश्च बहुसैन्यसमन्वितः ॥ १६ ॥
एतस्मिन्नन्तरे तेन पथा याति तिलोत्तमा ।
रूपिणामप्सरसां श्रेष्ठा नानावेशविधायिनी ॥ १७ ॥
चारुचम्पकवर्णाभा रत्नाभरणभूषिता ।
नवयौवनसम्पन्ना कामबाणप्रपीड़िता ॥ १८ ॥
ईषद्धास्यप्रसन्नास्या दिव्यवस्त्रं सुबिभ्रती ।
वक्रभ्रूभङ्गयुक्ता सा गजेन्द्रमन्दगामिनी ॥ १९ ॥
स्तनन्द्वयं मुखेन्दुञ्च दृष्ट्वा साहसिको युवा ।
वायुना मुक्तवस्त्रायास्तस्या मूर्च्छामवाप ह ॥ २० ॥
सा ददर्श बलेः पुत्रमतीवसुमनोहरम् ।
प्रफुल्लमालतीमालां बिभ्रतं नवयौवनम् ॥ २१ ॥

शरत्पार्वणचन्द्रास्यं सस्मितं सुमनोहरम्।
दृष्ट्वा तं विस्मिता कामात् कटाक्षञ्च चकार सा ॥२२॥
क्रीड़ार्थे चन्द्रलोकञ्च गच्छन्ती चन्द्रकामुकी।
तस्थौ केन छलेनैव मत्ता शृङ्गारलालसा ॥ २३ ॥
दर्शं दर्शञ्च तस्यास्यं प्रहस्य वक्रचक्षुषा।
मुखस्याच्छादनं चक्रे वाससा सा पुनः पुनः ॥ २४ ॥
पुलकाङ्कितसर्वाङ्गं घर्मकर्मसमन्वितम्।
बभूव काममत्ताया योनौ कण्डूयनं जलम् ॥ २५ ॥
विसस्मार शशधरं बलिपुत्रमनोरथा।
अहो को वेद भुवने दुर्ज्ञेयं पुंश्चलीमनः ॥ २६ ॥
पुंश्चल्यां यो हि विश्वस्तो विधिना स विड़म्बितः।
बहिष्कृतश्च यशसा धर्मेण स्वकुलेन च ॥ २७ ॥
वाञ्छितं नूतनं प्राप्य विनश्यति पुरातनम्।
[illegible]दा स्वकर्मसाध्या सा को वा तस्याः प्रियोऽप्रियः ॥२८
का[illegible] कर्मणि पैत्रे च पुत्रे बन्धौ न भर्त्तरि।
[illegible]रणं पुंश्चलीचित्तं सदा शृङ्गारकर्मणि ॥२९॥
[illegible]णाधिकं रतिज्ञं साम्रतदृष्ट्या च पुंश्चली।
[illegible]प्रदं रत्नविज्ञं विषदृष्ट्या हि पश्यति ॥ ३० ॥
[illegible]वां स्थलमस्त्येव पुंश्चलीनां न कुत्रचित्।
[illegible] णा पुंश्चलीजातिर्नरघातिन्य एव च ॥ ३१ ॥
[illegible]तिः सर्वभोगान्ते सर्वेषामस्ति निश्चितम्।
[illegible]पुंश्चलीनां विप्रेन्द्र यावच्चन्द्रदिवाकरौ ॥ ३२ ॥
[illegible]यासां कामिनीनाञ्च कीटं हन्तुञ्च या दया।
[illegible] नास्ति पुंश्चलीनान्तु कान्तं हन्ति पुरातनम् ॥३३॥

कान्तं दृष्ट्वा हिनस्त्येव सोपायेनावलीलया ।
रतिज्ञं नूतनं प्राप्य विषतुल्यं पुरातनम् ॥ ३४ ॥
पृथिव्यां यानि पापानि पुंश्चलीष्वेव भारते ।
तिष्ठन्ति ताभ्यो न परः पापिष्ठाः सन्ति येचन ॥३५॥
पुंश्चलीपरिपक्वान्नं सर्वपातक निश्चितम् ।
देवे कर्मणि पैत्रे च न देयञ्च तथा जलम् ॥ ३६ ॥
अन्नं विष्ठा जलं मूत्रं पुंश्चलीनाञ्च निश्चितम् ।
दत्त्वा पितृभ्यो देवेभ्यो भुक्त्वा च नरकं व्रजेत् ३७॥
शतवर्षं कालसूत्रे पचत्येव सुदारुणे ।
घोरान्धकारे कृमयस्तं दशन्ति दिवानिशम् ॥ ३८ ॥
पुंश्चल्यन्नञ्च यो भुङ्क्ते दैवाद्यदि नराधमः ।
सप्तजन्मकृतं पुण्यं तस्य नश्यति निश्चितम् ॥ ३९ ॥
आयुः श्री यशसां हानिरिह लोके परत्र च ।
तस्माद्यत्नाद्वर्जनीयं पाकपात्रं कलत्रकम् ॥ ४० ॥
पुंश्चलीदर्शने पुण्यं यात्रासिद्धिर्भवेद् ध्रुवम् ।
स्पर्शने च महापापं तीर्थस्नानाद्विशुध्यति ॥ ४१ ॥
स्नानं दानं व्रतञ्चैव जपश्च देवपूजनम् ।
निष्फलं पुंश्चलीनाञ्च भारते जीवनं वृथा ॥ ४२ ॥
कथितं कुलटाख्यानं दुर्ज्ञेयञ्च यथागमम् ।
संवादञ्च तयोस्तत्र प्रकृतं शृणु नारद ॥ ४३ ॥
स पुनश्चेतनां प्राप्य तां दृष्ट्वैव बलेः सुतः ।
कामातुरः प्रमत्तश्च जगाम कुलटान्तिकम् ॥ ४४ ॥
उवाच कुटिलापाङ्गीं पीनश्रोणिपयोधराम् ।
क्रीड़या वाससा वक्त्रमाच्छन्नं कुर्वतीं मुदा ॥ ४५ ॥

सारमेय उवाच ।

कासि त्वं कस्य कन्यासि कस्य कान्तासि कामिनि ।
स्वयं क्व यासि कं शुभ्रू पुण्यवन्तं मनोहरम् ॥ ४६ ॥
कल्पान्ते तपसा पूतं भार्य्यां त्वामिव सुन्दरि ।
यं तं यासि याहि सा त्वं भृत्यं मां कर्त्तुमर्हसि ॥४७॥
क्रीणीहि रतिपुण्येन मां भृत्यं रतिलोलुपम् ।
शृङ्गारलोलुपा त्वञ्च शृङ्गारं देहि कामुकि ॥ ४८ ॥
त्वया सह ममाश्लेषो विधिना च विनिर्मितः ।
निरूपितं यत्तेनैव वार्य्यते केन तत् प्रिये ॥ ४९ ॥
वाक्यं पीयूषसदृशं सस्मितं वद सुन्दरि ।
ग्रीवं भुजलतापाशैर्बन्धनं कुरु निर्जने ॥ ५० ॥
आसनं देहि कल्याणि स्वोरुं कनकसन्निभम् ।
स्तनमण्डलकुम्भञ्च यावद्योग्यं प्रदर्शय ॥ ५१ ॥
तीक्ष्णास्त्रेण कटाक्षेण जर्जरं कुरु भामिनि ।
कामसर्पक्षतं पादस्पर्शेन नीरुजं कुरु ॥ ५२ ॥
अधरोष्ठामृतं स्वादु देहि मे क्षुधिताय च ।
पक्वदाड़िमबीजाभं दन्तं दर्शय सुन्दरम् ॥ ५३ ॥
गम्भीरनाभिं त्रिवलीं द्रष्टुमिच्छामि सुन्दरि ।
नीवीप्रमोचणं कर्त्तुमिच्छा मे वर्त्तते सदा ॥ ५४ ॥
श्रोणिं पश्यामि ललितां मुनिमानसमोहिनीम् ।
शरन्मध्याह्नपद्मानां प्रभामोचनलोचनाम् ॥ ५५ ॥
शरत्पार्वणचन्द्रास्यं प्रसन्नञ्च प्रदर्शय ।
सा च तद्वचनं श्रुत्वा तमुवाच स्मरातुरा ।
दृष्ट्वातं कामबाणेन मानसं अच्छकामिनी ॥ ५६ ॥

तिलोत्तमोवाच ।

पतिस्त्वत्सदृशो नाथ कामिनीनां मनीषितः ।
बलिपुत्रोऽसि धर्मिष्ठो रूपवान् गुणवान् युवा ॥ ५७ ॥
शृङ्गारनिपुणः कान्तः कामशास्त्रविशारदः ।
सदा मनोज्ञः स्त्रीणां त्वं सुवेशश्च स्वभावतः ॥ ५८ ॥
सुवेशं सुन्दरं शान्तं कान्तं दान्तमरोगिणम् ।
शृङ्गारज्ञं गुणज्ञं त्वां युवानं रसिकं शुचिम् ॥ ५९ ॥
स्त्रीमनोज्ञं दयालुञ्च वलिष्ठं सन्तमीश्वरम् ।
दातारमनुरक्तञ्च कान्तमिच्छति कामिनी ॥ ६० ॥
एते सर्वे गुणाः कान्त सन्ति कान्ते त्वयि ध्रुवम् ।
त्वां न वाञ्छन्ति याः कान्तास्ता अविज्ञाश्च वञ्चिताः ६१
सन्तोषं ते करिष्यामि समागम्य विधेर्गृहात् ।
वेशं कृत्वा तु चन्द्रार्थं यात्राद्य तस्य कामिनी ॥ ६२ ॥
अन्याश्लेषणमात्रेण भविता धर्मलङ्घना ।
याश्च धर्मान्न रक्षन्ति तासाञ्च जीवनं वृथा ॥ ६३ ॥
चन्द्राश्लेषं न जानन्ति यास्ता मूढ़ाः प्रकीर्त्तिताः ।
ता एव मातृगर्भस्था न प्राज्ञाः पौरुषैरसैः ॥ ६४ ॥
स्ववैद्यौ मदनश्चन्द्रो मरुत्वान्नलकुवरः ।
एभिर्नालिङ्गिता यास्ता वञ्चिता रतिकर्मभिः ॥ ६५ ॥
दिवानिशं मानसं मे तेषां क्रीड़ाञ्च चिन्तयेत् ।
विशेषतः कामदेवो निपुणो रतिकर्मणि ॥ ६६ ॥
चन्द्रशृङ्गारमाश्लेषमालापममृताधिकम् ।
अद्य तस्य रतिदिनं तेन तं चिन्तयेन्मनः ॥ ६७ ॥
तिलोत्तमावचः श्रुत्वा जहास बलिनन्दनः ।

सकामश्च सपुलकस्तामुवाच रहःस्थले ॥ ६८ ॥

साहसिक उवाच ।

ब्रह्मणा निर्मिता त्वञ्च कौतुकेन तिलोत्तमे ।
अतो वरा चाप्सरसां विदग्धरसिकेश्वरी ॥ ६९ ॥
सुन्दोपसुन्दयोर्नाशनिमित्तेन प्रयत्नतः ।
सर्वरूपगुणाधारा विधिना च कृता पुरा ॥ ७० ॥
सर्वं जानासि सर्वज्ञे विज्ञे सुरतकर्मणि ।
हर्षेण श्रोतुमिच्छामि वद यो मानसं वचः ॥ ७१ ॥
अतिप्रियश्च को वा च कः स्वभावो वरानने ।
अवश्यं गोपनीयञ्च श्रोतुमिच्छामि सुन्दरि ॥ ७२ ॥
गन्धर्वाणां सुराणाञ्च राज्ञां पुण्यवतामपि ।
सर्वेषां प्राणतुल्या त्वमेषु ते कः परः प्रियः ॥ ७३ ॥
असुरस्य वचः श्रुत्वा प्रहस्य सा तिलोत्तमा ।
मुखमाच्छादयामास विलोक्य वक्रचक्षुषा ॥ ७४ ॥
सत्यं सारमन्तरस्थमव्यक्तमतिगोपनम् ।
उवाच मानसं वाक्यमज्ञातं विदुषामपि ॥ ७५ ॥

तिलोत्तमोवाच ।

कथनीयं साहसिक पुंश्चलीनां मनोवचः ।
स्त्रीजातीनाञ्च सर्वासामुपहासकरं परम् ॥ ७६ ॥
सर्वेषामपि दुर्ज्ञेयं चरितं योषितामपि ।
विशेषतोऽपि दुर्ज्ञेयं पुंश्चलीनां मनोवचः ॥ ७७ ॥
वेदवेदाङ्गशास्त्रान्तं सर्वं जानाति पण्डितः ।
कान्त नान्तं विजानाति दिशामाकाशयोषिताम् ॥ ७८ ॥

विषादप्यप्रियो वृद्धो रत्नादपि च योषिताम् ।
युवा सर्वस्वहर्त्ता चेत्प्राणेभ्योऽपि परः प्रियः ॥ ७९ ॥
युवानं सुन्दरं दृष्ट्वा ह्यार्त्ता भवति पुंश्चली ।
विशेषतः सुवेशञ्च दृष्ट्वैव हतचेतना ।
निमेषरहिता तस्य लोचनाभ्यां पपौ मुखम् ॥ ८० ॥
योनौ जलं चरेत्तस्याः सद्यः कण्डूयनं भवेत् ।
मनोऽतिलोलमस्थैर्य्यं सर्वाङ्गानि चकम्पिरे ।
जड़ीभूतं शरीरञ्च प्रदग्धं मदनानलात् ॥ ८१ ॥
संप्राप्य तं चेद्रहसि सालापं कुरुते स्फुटम् ।
सकटाक्षं स्मेरवक्त्रं दर्शयित्वा पुनः पुनः ॥ ८२ ॥
तथा यदि वशं कर्त्तुं न शशाक जितेन्द्रियम् ।
स्वमङ्गं दर्शयित्वा तमन्तर्वाक्यं स्फुटं वदेत् ॥ ८३ ॥
दुःसाध्ये नायके दुःखं भवेदाजन्म जन्मनि ।
तत्तुल्यं तत्परं प्राप्य तं विस्मरति पुंश्चली ॥ ८४ ॥
पुंश्चलीनामप्रियः कः कः प्रियो वा महीतले ।
योऽतिशृङ्गारनिपुणः स च प्राणाधिकः प्रियः ॥ ८५ ॥
पूर्वजारं पतिं पुत्रं भ्रातरं पितरं प्रसूम् ।
विशिष्टं नूतनं प्राप्य सर्वं त्यजति लीलया ॥ ८६ ॥
न दानेन न मानेन सत्येन स्तवनेन वा ।
नोपकारेण प्रीत्या वा सा साध्या सुरतिं विना ॥८७॥
शयने भोजने चापि स्वप्ने ज्ञाने दिवानिशम् ।
नित्यं सत्पुरुषाश्लेषं स्मरन्ति कुलटाः स्त्रियः ॥ ८८ ॥
शृङ्गारनिपुणानाञ्च ध्यानसाध्या चिरं परम् ।
दारुणा पुंश्चली जातिः प्रार्थयन्ती नवं नवम् ॥ ८९ ॥

सर्व्वासां कुलटानाञ्च चरितं कथितं मया ।
अकथ्यं गोपनीयञ्च मम हृद्वचनं शृणु ॥ ९० ॥
मम सन्ति प्रियतरा गन्धर्वेषूरगेषु च ।
युवानो रतिशूराश्च कामशास्त्रविशारदाः ॥ ९१ ॥
विशेषतः शशधरे स्नेहो मे विद्यते परः ।
ततोऽतिरिक्तः सर्वस्मादपि कामः प्रियो मम ॥ ९२ ॥
प्रियो मे कामसदृशो न भूतो न भविष्यति ।
स्मरस्य स्मरणात् तूर्णं सुस्निग्धं मानसं मम ॥ ९३ ॥
इत्येवं कथितं सर्वमात्मनो योषितामपि ।
आज्ञां कुरु महाराज यास्यामि चन्द्रसन्निधिम् ॥ ९४ ॥
चन्द्रस्थानात्तव स्थानं समागत्य सुनिश्चितम् ।
सन्तोषं तव दैत्येन्द्र करिष्यामि न संशयः ॥ ९५ ॥
श्रुत्वैवं बलिपुत्रश्च जहासोच्चैः पुनः पुनः ।
सा वक्रचक्षुषालोक्य तं जहास स्मरातुरा ॥ ९६ ॥
छलेन दर्शयामास कठिनं स्तनयोर्युगम् ।
चारुचम्पकवर्णाभं वर्त्तुलं पीनमुच्छ्रितम् ॥ ९७ ॥
श्रोणीं सुकठिनां रम्यां रम्भास्तम्भविनिन्दिताम् ।
सकटाक्षं स्मेरमुखं कपोलं पुलकाञ्चितम् ॥ ९८ ॥
रहःस्थानं समासाद्य कामेन हतचेतसा ।
पुलकाञ्चितसर्वाङ्गी लोचनाभ्यां पपौ मुखम् ॥ ९९ ॥
तस्य रूपञ्च वेशञ्च दर्शं दर्शं पुनः पुनः ।
मुखस्याच्छादनं भावात् कुर्वन्ती सूक्ष्मवाससा ॥१००॥
अतिकामातुरां दृष्ट्वा सुप्राज्ञो बलिनन्दनः ।
पप्रच्छ कामिनीं कामी भावं विज्ञातुमुत्सुकः ॥ १०१ ॥

साहसिक उवाच ।

किं करिष्यसि मां सत्यं वद पङ्कजलोचने ।
कार्य्यान्तरं करिष्यामि सुचिरं स्थातुमक्षमः ॥ १०२ ॥
कामिनीषु बलात्कारो न धर्मो धर्मिणां प्रिये ।
विशेषतोऽतिविदुषां नास्माकं स्वकुलोचितः ॥ १०३ ॥
शृङ्गारं देहि वा गच्छ रतिं कर्त्तुं सुरान्तिके ।
कः क्षमो वा वशीकर्त्तुं पुंश्चलीं बहुगामिनीम् ॥१०४॥
दानवस्य वचः श्रुत्वा शुष्ककण्ठोष्ठतालुका ।
आत्मानमधमंमन्या भिद्यमाना स्मरास्त्रतः ॥ १०५ ॥

तिलोत्तमोवाच ।

कथमेवं ब्रूहि त्वं मे कान्त प्राणाधिकः प्रियः ।
कथं वा कोपयुक्तोऽसि कुरु कार्य्यं मनीषितम् ॥१०६॥
त्वामेवं विमुखं कृत्वा यामि चन्द्रान्तिकं यदि ।
तवाभिशापात्तत्रैव सद्यो विघ्नो भविष्यति ॥ १०७ ॥
विहारं कुरु भद्रं ते करिष्यति हरिः स्वयम् ।
पदे पदे शुभं तस्य यः स्त्रीमानञ्च रक्षति ॥ १०८ ॥
अवमन्य स्त्रियं मूढो यो याति पुरुषाधमः ।
पदे पदे तदशुभं करोति पार्वती सती ॥ १०९ ॥
तिलोत्तमावचः श्रुत्वा जहास बलिनन्दनः ।
कामशास्त्रेषु निष्णातस्तद्भावं बुबुधे सुधीः ॥ ११० ॥
भावं विज्ञाय भावज्ञः कामशास्त्रविशारदः ।
करे धृत्वा समाश्लिष्य चुचुम्ब मुखपङ्कजम् ॥ १११ ॥
जगाम च तया सार्द्धं गन्धमादनगह्वरम् ।
ददर्श तत्र गत्वा च स्थानं जन्तुविवर्जितम् ॥ ११२ ॥

संस्थाप्य रत्नदीपांश्च धूपञ्च सुमनोहरम्।
शय्यां रतिकरीं कृत्वा सुष्वाप च तया सह॥ ११३॥
नानाप्रकारशृङ्गारञ्चकार काममोहितः।
तिलोत्तमा तं बुबुधे सुरादपि विचक्षणम्॥ ११४॥
विपरीतरतौ तुष्टा बभूव रसिकेश्वरी।
दिवानिशं न बुबुधे नवसङ्गममूर्च्छिता॥ ११५॥
तिलोत्तमा कामभावाद् बलिपुत्रमुवाच ह।
कृत्वा वक्षसि प्राणेशं स्तनयोरन्तरे मुदा॥ ११६॥

तिलोत्तमोवाच।

कदा द्रक्ष्याम्यहं कान्त मुखचन्द्रं मनोहरम्।
एवंभूतं शुभदिनं कदा मे भविता पुनः॥ ११७॥
अयि किं रूपमाश्चर्यं गुणो वा तव दानव।
ध्रुवं शृङ्गारनिपुणस्त्वत्परो नास्ति कश्चन॥ ११८॥
मां विस्मरसि कालेन पुरुषः षट्पदो यथा।
स्त्रीणां सत्पुरुषाश्लेष आजीवं मनसि स्थितः॥११९॥
सत्सङ्गमः शुभदिने पुण्यात् पुण्यवतां भवेत्।
सद्विच्छेदो दुःखहेतुर्मरणादतिरिच्यते॥ १२०॥
पीयूषभोजनात् स्वर्गवासादपि च दुर्लभः।
सत्सङ्गमः सुखमयोऽप्यसत्सङ्गो विषाधिकः॥ १२१॥
क्षणं तिष्ठ महाराज पुनरालिङ्गनं कुरु।
त्वया सार्धं मम प्राणा यास्यन्ति चेतसा सह॥ १२२॥
इत्येवमुक्त्वा कुलटा कृत्वा वक्षसि सादरम्।
पुमङ्गसङ्गोत्पुलका मूर्च्छामाप सुखेन च॥ १२३॥
कुलटालिङ्गनालापात् सोऽतिकामी बभूव ह।

यथा दीप्तः कृष्णवर्त्मा वर्धते हविषाधिकम् ॥ १२४ ॥
पुनश्चकार शृङ्गारमसुरोऽष्टविधं मुने ।
चुम्बनञ्च नवविधं यथास्थाने यथोचितम् ॥ १२५ ॥
नखदन्तकरैः क्रीड़ां चकार विविधां पुनः ।
किङ्किणीनां कङ्कणानां बभूव शब्द उल्वणः ॥ १२६ ॥
मुनेर्दुर्वाससस्तेन ध्यानभङ्गो बभूव ह ।
अदृष्टस्य तयोस्तत्र वल्मीकाच्छादितस्य च ॥ १२७ ॥
योगासनं कुर्वतश्च गन्धमादनगह्वरे ।
ध्यायतश्चरणाम्भोजं कृष्णस्य परमात्मनः ॥ १२८ ॥
न पपात तयोर्दृष्टिः समीपस्थे महामुनौ ।
कामात्मनोर्न हि ज्ञानं कामिन हतचेतसोः ॥ १२९ ॥
सहसा चेतनां प्राप्य प्रज्वलन् ब्रह्मतेजसा ।
ददर्श पुरतस्तौ तु मुनिरुन्मील्य लोचने ।
दिवानिशं न जानन्तौ संयुक्तौ काममोहितौ ॥१३०॥
दृष्ट्वा चुकोप तेजस्वी रुद्रांशो भगवान् विभुः ।
उवाच तौ विहारान्ते रक्तपङ्कजलोचनः ।
ध्यानप्राप्तपदाम्भोजविच्छेदोद्विग्नमानसः ॥ १३१ ॥

दुर्वासा उवाच ।

उत्तिष्ठ गर्दभाकार निर्लज्ज पुरुषाधम ।
भक्तप्रधानस्य बलेः पुत्रः पशुसमप्रभः ॥ १३२ ॥
देवो वा मानवो वापि दैत्यगन्धर्वराक्षसाः ।
लज्जां कुर्वन्ति सततं स्वजातौ च पशून् विना ॥१३३॥
ज्ञानलज्जाविहीना च खरजातिर्विशेषतः ।
तस्मात्त्वं दानवश्रेष्ठ खरयोनिं व्रजाधुना ॥ १३४ ॥

तिलोत्तमे त्वमुत्तिष्ठ लज्जाहीना च पुंश्चली।
एतादृशी स्पृहा दैत्ये व्रज योनिञ्च दानवीम्॥ १३५॥
इत्येवमुक्त्वा स मुनिस्तस्थौ तत्र रुषा ज्वलन्।
तौ च तुष्टुवतुर्भीतावुत्थाय व्रीड़ितौ मुनिम्॥ १३६॥

साहसिक उवाच।

त्वं ब्रह्मा त्वञ्च विष्णुश्च त्वञ्च साक्षान्महेश्वरः।
हुताशनस्त्वं सूर्य्यश्च सृष्टिस्थित्यन्तकारकः॥ १३७॥
क्षमापराधं भगवन् कृपां कुरु कृपानिधे।
मूढ़ापराधं सततं यः क्षमेत् स सदीश्वरः॥ १३८॥
इत्येवमुक्त्वा दैत्येन्द्रो रुरोदोच्चैः पुरो मुनेः।
कृत्वा तृणानि दशने पपात चरणाम्बुजे॥ १३९॥

तिलोत्तमोवाच।

हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु।
विधिसृष्टौ च सर्व्वेषां मूढ़ा स्त्रीजातिरेव च॥ १४०॥
ततोऽतिमत्ता कुलटा सदा कामातुरा परा।
लज्जाभीतिचेतनाश्च न सन्ति कामुके विभो॥ १४१॥
इत्युक्त्वा रोदनं कृत्वा जगाम शरणं मुने।
विना विपत्तौ केषाञ्चिज्ज्ञानं भवति भूतले॥ १४२॥
तयोर्दृष्ट्वा च वैकल्यं बभूव करुणा मुनेः।
उवाच ताभ्यामभयं दत्त्वा मुनिवरो मुने॥ १४३॥

दुर्व्वासा उवाच।

अतिशापः प्रसादो वा भवेद्दैवेन दानव।
सत्कीर्त्तिरपकीर्त्तिर्वा प्राक्तनप्रभवा ध्रुवम्॥ १४४॥

विष्णुभक्तबलेः पुत्रः सद्वंशप्रभवो जनः ।
जनकाद्विष्णुभक्तोऽसि जानामि त्वां सुनिश्चितम् ॥१४५॥
जनकस्य स्वभावो हि जन्ये तिष्ठति निश्चितम् ।
यथा श्रीकृष्णपादाङ्कः कालीयवंशमस्तके ॥ १४६ ॥
संप्राप्य गार्द्दभीं योनिं वत्स निर्वाणतां व्रज ।
पूर्वकृष्णार्चनफलं न हि लुप्तं सतां चिरात् ॥ १४७ ॥
वृन्दारण्यं तालवनं व्रज शीघ्रं व्रजान्तिकम् ।
प्राणांस्त्यक्त्वा हरेश्चक्रान्मुक्तिं प्राप्स्यसि निश्चितम् ॥१४८॥
तिलोत्तमे भारते त्वं वाणपुत्री भविष्यसि ।
श्रीकृष्णपौत्राश्लेषेण पुनः पूता भविष्यसि ॥ १४९ ॥
इत्येवमुक्त्वा स मुनिर्विरराम महामुने ।
तौ जग्मतुर्यथास्थानं प्रणम्य मुनिपुङ्गवम् ॥ १५० ॥
इत्युक्तं सर्ववृत्तान्तं दैत्यस्य खरजन्मनः ।
तिलोत्तमा वाणपुत्री ह्यूषानिरुद्धकामिनी ॥ १५१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे तिलोत्तमाबलिपुत्रयोर्ब्रह्म-
शापप्रस्तावो नाम त्रयोविंशोऽध्यायः ।

———

# चतुर्विंशोऽध्यायः ।

---

श्रीनारायण उवाच ।

निगूढं शृणु वृत्तान्तं मुनेर्दुर्वाससो मुने ।
अहोऽस्य दारसंयोगः कथं तदूर्ध्वरेतसः ॥ १ ॥
दृष्ट्वा तयोश्च शृङ्गारं मुनिः कामी बभूव ह ।
जितेन्द्रियोऽसत्संसर्गाद्दोषः सांसर्गिको भवेत् ॥ २ ॥
सहसा तस्य हृदये बभूव सुरते स्पृहा ।
तपस्तत्राज तत्र दध्यौ कामिनीं मदनातुरः ॥ ३ ॥
एतस्मिन्नन्तरे तेन पथा याति मुनीश्वरः ।
प्रार्थयन्त्या पतिं सन्तमौर्वश्च सुतया सह ॥ ४ ॥
ऊरूद्भवो ब्रह्मणश्च पुराकल्पे तपस्यतः ।
ऊर्ध्वरेताश्च योगीन्द्र औौर्वस्तेन इति स्मृतः ॥ ५ ॥
तस्य जानूद्भवा कन्या कदली नाम विश्रुता ।
दुर्वाससं प्रार्थयन्ती नान्यं मनसि रोचते ॥ ६ ॥
ससुतो हि मुनिश्रेष्ठो मुनेर्दुर्वाससः पुरः ।
तस्थौ महाप्रसन्नश्च ज्वलदग्निशिखोपमः ॥ ७ ॥
मुनीन्द्रोऽपि मुनीन्द्रं तं पुरो दृष्ट्वा ससम्भ्रमः ।
प्रजवेन समुत्तस्थौ ननाम च मुदान्वितः ॥ ८ ॥
औौर्वो दुर्वाससं तत्र समाश्लिष्य मुदान्वितः ।
उवाच मुनये सर्वं कन्यकाया मनोरथम् ॥ ९ ॥

औौर्व उवाच ।

विख्याता कदली नाम मम कन्या मनोहरा ।

प्रौढ़ा त्वामेव ध्यायन्ती श्रुत्वा वाचिकवक्कृतः ॥ १० ॥
अयोनिसम्भवा कन्या त्रैलोक्यं मोहितुं चमा।
सर्वरूपगुणाधारा दोषेणैकेन संयुता ॥ ११ ॥
अतीवकलहाविष्टा कोपेन कटुभाषिणी।
नानागुणयुतं द्रव्यं न त्यजेदेकदोषतः ॥ १२ ॥
श्रौर्वस्य वचनं श्रुत्वा हर्षशोकान्वितो मुनिः।
ददर्श कन्यां पुरतो गुणरूपसमन्विताम् ॥ १३ ॥
शरत्पार्वणचन्द्रास्यां शरत्पङ्कजलोचनाम्।
ईषद्धास्यप्रसन्नास्यां पीनश्रोणिपयोधराम् ॥ १४ ॥
नवयौवनसंयुक्तां पश्यन्तीं वक्रचक्षुषा।
रत्नालङ्कारशोभाढ्यां वह्निशुद्धांशुकान्विताम् ॥ १५ ॥
मुनिर्मुमोह तां दृष्ट्वा कामबाणप्रपीड़ितः।
उवाच तं मुनिश्रेष्ठं हृदयेन विदूयता ॥ १६ ॥

दुर्वासा उवाच।

नारीरूपं त्रिभुवने मुक्तिमार्गनिरोधनम्।
व्यवधानं तपस्यायाः सततं मोहकारणम् ॥ १७ ॥
कारागारे च संसारे दुर्वहं निगड़ं परम्।
अच्छेद्यं ज्ञानखड्गैश्च महद्भिः शङ्करादिभिः ॥ १८ ॥
सङ्गिच्छायातिरिक्तञ्च कर्मभोगात् परात्परम्।
इन्द्रियादिन्द्रियाधाराद्दिद्यायाश्च मतेऽपि ॥ १९ ॥
आदेहं सङ्गिनी छाया भोगान्तं भोग एव च।
देहेन्द्रियाणि जीवान्तं विद्या चैवावशीलनम् ॥ २० ॥
मतिश्चैवावशीलान्ता सुस्त्री जन्मनि जन्मनि।
यावज्जीवी च सुस्त्रीको न तावज्जन्मखण्डनम् ॥ २१ ॥

यावच्च जीविनो जन्म तावद्भोगः सुखावहः ।
परं मुनीन्द्र सर्वस्माद्धरिपादाब्जसेवनम् ॥ २२ ॥
ध्यायतः कृष्णपादाब्जं मम विघ्नो बभूव ह ।
न जाने कर्मदोषेण केन वा पूर्वजन्मनः ॥ २३ ॥
पुंश्चल्या सह शृङ्गारं दृष्ट्वा दैत्यस्य मन्मनः ।
बभूव कामसंयुक्तं दत्तं धात्रा च तत्फलम् ॥ २४ ॥
किन्त्वहं तव कन्यायाः कटूक्तिशतकं मुने ।
ध्रुवं क्षमां करिष्यामि दास्यामि च ततः फलम् ॥२५॥
सर्वतोऽपि परा निन्दा स्त्रीकटूक्तिसहिष्णुता ।
अतीवनिन्दितः सत्सु स्त्रीजितो भुवनत्रये ॥ २६ ॥
तवाज्ञां मस्तके कृत्वा ग्रहीष्यामि सुतां तव ।
उपेतां कामिनीं त्यक्त्वा कालसूत्रं व्रजेन्नरः ॥ २७ ॥
रहस्युपस्थितां कामात् पुंश्चलीं चेज्जितेन्द्रियः ।
परित्यजेद्धर्मभयादधर्मान्नरकं व्रजेत् ॥ २८ ॥
इत्येवमुक्त्वा दुर्वासा विरराम हरेः पुरः ।
मुनिर्वेदोक्तविधिना ददौ तस्मै सुतां मुने ॥ २९ ॥
स्वस्तीत्युवाच दुर्वासा मुनिश्च कौतुकं ददौ ।
कन्यासमर्पणं कृत्वा मोहाच्चैव रुरोद ह ॥ ३० ॥
मूर्च्छामवाप स मुनिः स्वकन्याविरहातुरः ।
अपत्यभेदशोकौघः स्वात्मारामं न मुञ्चति ॥ ३१ ॥
क्षणेन चेतनां प्राप्य बोधयामास कन्यकाम् ।
मूर्च्छितां तातविच्छेदाद्रुदन्तीं शोकसंयुताम् ॥३२॥

और्व उवाच ।

शृणु वत्से प्रवक्ष्यामि नीतिसारं सुदुर्लभम् ।

हितं सत्यञ्च वेदोक्तं परिणामसुखावहम् ॥ २३ ॥
स्वकान्तश्च परो बन्धुरिह लोके परत्र च ।
न हि कान्तात् परः प्रेयान् कुलस्त्रीणां परो गुरुः ॥२४
देवपूजाव्रतं दानं तपश्चानशनं जपः ।
स्नानञ्च सर्वतीर्थेषु दीक्षा सर्वमखेषु च ॥ २५ ॥
प्रादक्षिण्यं पृथिव्याश्च ब्राह्मणातिथिसेवनम् ।
सर्वाणि पतिसेवायाः कलां नार्हन्ति षोडशीम् ॥२६॥
किमेतैः पतिभक्ताया अभक्तायाश्च भारते ।
यदा दुःखी सुखारम्भे साकाङ्क्षः प्रथमो भवेत् ॥ २७ ॥
पतिसेवा परो धर्मः सर्वशास्त्रेषु पठ्यते ।
स्वप्नज्ञानेन सततं कान्तं नारायणाधिकम् ।
दृष्ट्वा तच्चरणाम्भोजं सेवां नित्यं करिष्यति ॥ २८ ॥
परिहासेन कोपेन भ्रमेणावज्ञया मुने ।
कटूक्तिं स्वामिनः साक्षात् परोक्षाव्र करिष्यसि ॥२९॥
स्त्रियो वाग्योनिदुष्टायाः कामतो भारते भुवि ।
प्रायश्चित्तं श्रुतौ नास्ति नरकं ब्रह्मणः शतम् ॥ ४० ॥
सर्वधर्मपरीता या कटूक्तिं कुरुते पतिम् ।
शतजन्मकृतं पुण्यं तस्या नश्यति निश्चितम् ॥ ४१ ॥
दत्त्वा कन्यां बोधयित्वा जगाम मुनिपुङ्गवः ।
स्वात्मारामं स्वाश्रमे च तस्थौ स्त्रीसहितो मुदा ॥४२॥
सम्भोगेच्छावृते चित्ते कामी संप्राप कामिनीम् ।
अहो सुकृतिनां कामो वाञ्छामात्रेण सिध्यति ॥४३॥
शय्यां रतिकरीं कृत्वा मुनिश्रेष्ठो महामुने ।
शुभे क्षणे तां गृहीत्वा सुष्वाप निर्जने प्रियाम् ॥ ४४ ॥

नारीरसानभिज्ञः स्यादाजन्म मुनिपुङ्गवः ।
तथापि सुरतौ विज्ञः कामशास्त्रविशारदः ॥ ४५ ॥
नानाप्रकारशृङ्गारञ्चकार विधिपूर्वकम् ।
नवसङ्गममात्रेण मूर्च्छां संप्राप कन्दली ॥ ४६ ॥
मूर्च्छां प्राप मुनिश्रेष्ठो बुबुधे न दिवानिशम् ।
एवं प्रतिदिनं तत्र चकार सुरतिं मुने ॥ ४७ ॥
विदग्धाया विदग्धेन बभूव सङ्गमः समः ।
संबभूव गृहासक्तस्तपस्त्यक्त्वा मुनीश्वरः ॥ ४८ ॥
करोति कलहं नित्यं कन्दली स्वामिना सह ।
मुनीन्द्रो बोधयामास नीतिवाक्येन कामिनीम् ॥ ४९ ॥
सा तत्र बुबुधे किञ्चित् करोति कलहे स्पृहाम् ।
तातप्रदत्तज्ञानेन सा न शान्ता बभूव ह ॥ ५० ॥
न जहाति प्रबोधेन स्वभावो दुरतिक्रमः ।
नित्यं कटूक्तिं कान्तं सा करोति हेतुना विना ॥५१॥
जगत् प्रकम्पितं येन तया कोपात् स कम्पितः ।
तया कृतां कटूक्तिञ्च चमसंख्या चकार ह ॥ ५२ ॥
बोधयामास तां नित्यं सयो मोहाद्दयानिधिः ।
कटूक्तिशतकं पूर्णं तत्कालेन बभूव ह ॥ ५३ ॥
क्षमां चकार कृपया कटूक्तिञ्च शताधिकाम् ।
पत्नीकटूक्तया नियतं प्रदग्धं मानसं मुनेः ॥ ५४ ॥
तस्याः कटूक्तिकारिण्याः कर्म पूर्णं बभूव ह ।
स्वात्मारामो दयालुश्च कोपं त्यक्तुं न सक्षमः ॥ ५५ ॥
शशाप कामिनीं मोहाद्भस्मराशिर्भवेति च ।
मुनेरिङ्गितमात्रेण भस्मसात् सा बभूव ह ॥ ५६ ॥

एवमत्युच्छ्रितानाञ्च न कल्याणं जगत्त्रये ।
शरीरे भस्मसाद्भूते प्रतिबिम्बः स चात्मनः ॥ ५७ ॥
जीवस्तदान्तरिक्षस्थो ह्युवाच विनयात् प्रभुम् ॥ ५८ ॥

जीव उवाच ।

हे नाथ सर्वदर्शी त्वं सततं ज्ञानचक्षुषा ।
सर्वं जानासि सर्वज्ञ किमहं बोधयामि ते ॥ ५९ ॥
सदुक्तिर्वा कटूक्तिर्वा कोपः सन्ताप एव च ।
लोभो मोहश्च कामश्च क्षुत्पिपासादिकञ्च यत् ॥ ६० ॥
स्थौल्यं कार्श्यञ्च नाशश्च दृश्यादृश्यं समुद्भवम् ।
सर्वं शरीरधर्मञ्च न जीवस्य न चात्मनः ॥ ६१ ॥
सत्त्वं रजस्तम इति शरीरं त्रिगुणात्मकम् ।
तच्च नानाप्रकारञ्च निबोध कथयामि ते ॥ ६२ ॥
किञ्चित्सत्त्वातिरिक्तञ्च किञ्चिदेव रजोऽधिकम् ।
तमोऽतिरिक्तं किञ्चिच्च न समं कुत्रचिन्मुने ॥ ६३ ॥
सत्त्वोदयाच्च मुक्तीच्छा कर्मेच्छा च रजोगुणात् ।
तमोगुणाज्जीवहिंसा कोपोऽहङ्कार एव च ॥ ६४ ॥
कोपात्कटूक्तिर्नियतं कटूक्त्या शत्रुता भवेत् ।
तया चाप्रियता सद्यः शत्रुः कः कस्य भूतले ॥ ६५ ॥
को वा प्रियोऽप्रियः कः किं मित्रं को रिपुर्भवेत् ।
इन्द्रियाणि च बीजानि सर्वत्र शत्रुमित्रयोः ॥ ६६ ॥
प्राणाधिकः प्रियः स्त्रीणां भर्त्तुः प्राणाधिका प्रिया ।
बभूव शत्रुता सद्यो दुरुक्त्या च क्षणाद् द्वयोः ॥ ६७ ॥
यद्भूतं तद्भूतं सर्वं कामदोषेण वै प्रभो ।

क्षमापराधं निखिलं किं कर्त्तव्यं वदाधुना ॥ ६८ ॥
किं करोमि क्व यामीति भविता कुत्र जन्म मे ।
तत्र नान्यस्य जायाहं भविष्यामि जगत्त्रये ॥ ६९ ॥
इत्येवमुक्त्वा जीवश्च मौनीभूतो बभूव ह ।
मूर्च्छामवाप स मुनिः शोकेन हतचेतनः ॥ ७० ॥
स्वात्मारामो महाज्ञानी जहार चेतनामहो ।
स्त्रीविच्छेदो विदग्धानां सर्वशोकात्परात्परः ॥७१॥
क्षणेन चेतनां प्राप्य प्राणांस्त्यक्तुं समुद्यतः ।
तत्र योगासनं कृत्वा चकार वायुधारणम् ॥ ७२ ॥
एतस्मिन्नन्तरे तत्र जगाम ब्राह्मणोऽर्भकः ।
दण्डी चक्री रक्तवासा बिभ्रत्तिलकमुत्तमम् ॥ ७३ ॥
सस्मितः श्यामवर्णश्च प्रज्वलन् ब्रह्मतेजसा ।
वयसातिशिशुः शान्तो ज्ञानी वेदविदां वरः ॥७४॥
दृष्ट्वा तं सम्भ्रमेणैव दुर्वासाः प्रणनाम ह ।
वासयामास तत्रैव पूजयामास भक्तितः ॥ ७५ ॥
उवाच ब्राह्मणवटुर्दत्त्वा तस्मै सदाशिषम् ।
तद्दर्शनादाशिषा च सर्वं दुःखं गतं मुने ॥ ७६ ॥
शिशुरूपं क्षणं स्थित्वा तमुवाच विचक्षणः ।
पीयूषतुल्यं नित्योऽयं नीतिशास्त्रविशारदः ॥ ७७ ॥

शिशुरुवाच ।

सर्वं जानासि सर्वज्ञ गुरोर्मन्त्रप्रसादतः ।
किं तत्त्वं त्वामहं विप्र पृच्छामि शोककातरम् ॥७८॥
ब्राह्मणानां तपो धर्मस्तपःसाध्यं जगत्त्रयम् ।

स्वधर्मं वै परित्यज्य किमिदानीं करोषि भो ॥७९॥
का कस्य पत्नी कः कान्तः कस्या वा भुवनत्रये।
मूर्खाणां वञ्चनां कर्त्तुं करोति मायया हरिः ॥ ८० ॥
मिथ्या पत्नी तवेयञ्च यथात्तेन गताधुना।
न हि सत्यमदृश्यञ्च मिथ्या सर्वाचिरस्थितिः ॥ ८१ ॥
एकानंशा च भगिनी वसुदेवसुता हरेः।
पार्वत्यंशसमुद्भूता सुशीला चिरजीविनी ॥ ८२ ॥
कल्पे कल्पे सुन्दरी सा तव पत्नी भविष्यति।
मनो देहि तपस्यायां मुदा कतिपयं दिनम् ॥८३॥
कन्दली कन्दलीजातिर्भविष्यति महीतले।
शुभदा फलदा कान्ता सत्प्रसूता सुदुर्लभा ॥ ८४ ॥
कल्पान्तरे शान्तरूपा तव पत्नी भविष्यति ।
सत्युच्छ्रितस्य दमनमुचितञ्च श्रुतौ श्रुतम् ॥ ८५ ॥
इत्येवमुक्त्वा शीघ्रञ्च विप्ररूपी जनार्दनः।
दत्त्वा ज्ञानञ्च विप्राय सोऽन्तर्धानञ्चकार ह ॥ ८६ ॥
मुनिः सर्वं भ्रमं त्यक्त्वा तपस्यायां मनो दधे।
कन्दली कन्दलीजातिर्बभूव धरणीतले ॥ ८७ ॥
दैत्यस्तालवनं गत्वा बभूव गर्दभाकृतिः।
तिलोत्तमा बाणपुत्री बभूव समये मुने ॥ ८८ ॥
दैत्येन्द्रो विष्णुचक्रेण प्राणांस्त्यक्त्वा सुवाञ्छितम्।
संप्राप चरणाम्भोजं मुनेरपि सुदुर्लभम् ॥ ८९ ॥
काले तिलोत्तमा भूत्वा जगाम स्वालयं पुनः।
कृष्णपौत्रालिङ्गनेन परिपूर्णमनोरथा ॥ ९० ॥
इत्येवं कथितं श्रुत्वा श्रीकृष्णाख्यानमुत्तमम्।

पदे पदे सुन्दरञ्च किं भूयः श्रोतुमिच्छसि ॥ ८१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे
तालभक्षणप्रसङ्गे बलिपुत्रमोक्षणं नाम
चतुर्विंशतितमोऽध्यायः ।

---

## पञ्चविंशोऽध्यायः ।

---

नारद उवाच ।

श्रुतं किमद्भुतं ब्रह्मन् हरेश्चरितमङ्गलम् ।
विशेषतस्तव मुखे ह्यतीव सुमनोहरम् ॥ १ ॥
मृतायां मुनिकन्यायां शापाद् दुर्वाससो मुनेः ।
समागत्य किं चकार तस्मै ब्रूहि तपोधन ॥ २ ॥

श्रीनारायण उवाच ।

सरस्वतीनदीतीरे तपस्यां कुर्वतो मुनेः ।
पपात धौतमूर्ध्वञ्च धार्यमाणञ्च वायुना ॥ ३ ॥
पृथिव्यां पतितं वस्त्रं तपस्यक्ता मुनीश्वरः ।
ध्यानेन बुबुधे सर्वं कन्यासम्बन्धिसङ्कटम् ॥ ४ ॥
जगाम शोकाविष्टोऽपि तूर्णं जामातुराश्रमम्
सिषेच पृथिवीं रेणून् शश्वन्नयनबिन्दुना ॥ ५ ॥
गत्वालयसमीपञ्च विप्रः कातरमानसः ।
हे वत्से कन्दलीत्येवमुवाच च पुनः पुनः ॥ ६ ॥

श्वशुरस्य स्वरं ज्ञात्वा दुर्वासा भयविह्वलः ।
बहिर्बभूव शीघ्रञ्च पपात चरणाम्बुजे ॥ ७ ॥
प्रणम्य श्वशुरं शोकाद्विललाप भृशं पुनः ।
संप्राप्य चेतनां शीघ्रमुवाच तं पुरस्थितम् ॥ ८ ॥
जामातरं शोकयुक्तं भीतं प्रणतकन्धरम् ।
महाशोकादश्रुपूर्णरक्तपङ्कजलोचनः ।
कोपात् कम्पितवान् शश्वत् संत्रस्तः स्फुरिताधरः ॥९॥

और्व उवाच ।

अत्र ब्रह्मन्नत्रिवंश्य पौत्रस्त्वं जगतीपतेः ।
स्वल्पदोषे बहुतरः कृतो दण्डस्त्वया कथम् ॥ १० ॥
त्वज्जन्म शङ्करांशेन शिष्यस्तस्य जगद्गुरोः ।
वेदवेदाङ्गविज्ञश्च सर्वज्ञो गुणवान् स्वयम् ॥ ११ ॥
अनुसूया महासाध्वी कमलांशा तव प्रसूः ।
न जाने केन दोषेण तव चेतादृशी मतिः ॥ १२ ॥
गुणवान् जनको यस्य माता गुणवती सती ।
तयोः पुत्रो दयाहीनो गतिः सूक्ष्मा श्रुतेरहो ॥ १३ ॥
मम प्राणाधिका कन्या मुदा त्वयि समर्पिता ।
महागुणान्विता स्वल्पदोषेण परिमिश्रिता ॥ १४ ॥
वाग्दुष्टायाश्च दण्डो हि परित्यागः श्रुतौ श्रुतः ।
त्वया यदि परित्यक्ता पित्रा यत्नेन पालिता ॥१५॥
मदंशश्च स्वल्पदोषे यतो भस्मीकृतं त्वया ।
पराभवस्तव महान् भविष्यति न संशयः ॥ १६ ॥
महतां क्षुद्रजन्तूनां सर्वेषां जीविनां सदा ।
स्रष्टा पाता च शास्ता च भगवान् करुणानिधिः ॥१७॥

इत्युक्त्वा च मुनिश्रेष्ठो विलप्य च पुनः पुनः।
हे वत्से वत्स इत्युक्त्वा जगाम स्वालयं रुषा ॥१८॥
गते मुनीन्द्रे दुर्वासा विललाप भृशं पुनः।
ज्ञानेन विस्मृतः शोको बभूव द्विगुणः पुनः ॥ १९ ॥
शोकानलो हि कालेन संच्छन्नो ज्ञानभस्मना।
बन्धुदर्शनशुष्केन्धदानेन वर्द्धितां पुनः । २० ॥
स्मारं स्मारं प्रियां तत्र विलप्य च पुनः पुनः।
बोधयित्वा भ्रमं सर्वं तपस्यायां मनो ददौ ॥२१॥
इत्येवं कथितं सर्वं मुनेः शापस्य कारणम्।
बभूव तस्य कालेन दुःसहश्च पराभवः ॥ २२ ॥

नारद उवाच।

दुर्वासाः शङ्करस्यांशः शिवतुल्यश्च तेजसा।
तेजस्वी को महानेव चकार तत्पराभवम् ॥ २३ ॥

नारायण उवाच।

अम्बरीषो हि राजेन्द्रः सूर्य्यवंशसमुद्भवः।
श्रीकृष्णचरणाम्भोजे तन्मनः सन्ततं मुने ॥ २४ ॥
न राज्येषु न भार्य्यासु न पुत्त्रेषु प्रजासु च।
न संसत्सु च्यणं चित्तं पूर्वकर्मार्जितासु च ॥ २५ ॥
ध्यायतेऽहर्निशं धर्मी स्वप्ने ज्ञाने हरिं मुदा।
महान् जितेन्द्रियः शान्तो विष्णुव्रतपरायणः ॥२६॥
एकादशीव्रतरतः कृष्णपूजासु तत्परः।
सर्वकर्मसु लिप्तश्च कर्त्ता कृष्णार्पितेषु च ॥ २७ ॥
सुतीक्ष्णं षोड़शारं तच्चक्रं नाम सुदर्शनम्।
तेजसा हरितुल्यञ्च सूर्य्यकोटिसमप्रभम् ॥ २८ ॥

ब्रह्मादिभिः स्तूयमानं पूजितञ्च सुरासुरैः ।
प्रभुणा रचितं शश्वद्रक्षार्थं नृपसन्निधौ ॥ २९ ॥
एकादशीव्रतं कृत्वा द्वादशीदिवसे सति ।
स्नात्वा विधाय पूजाञ्च कालेन विधिपूर्वकम् ।
ब्राह्मणान् भोजयित्वा तु भोजनार्थमुवास ह ॥ ३० ॥
एतस्मिन्नन्तरे विप्रस्तपस्वी क्षुधितो मुने ।
दण्डी छत्री शुक्लवासा बिभ्रत्तिलकमुज्ज्वलम् ॥ ३१ ॥
जटिलोऽतिकृशस्त्रस्तः शुष्ककण्ठोष्ठतालुकः ।
तत्राजगाम भगवान् दुर्वासा नृपतेः पुरः ॥ ३२ ॥
स च दृष्ट्वा मुनीन्द्रञ्च तमुत्थाय प्रणम्य च ।
दत्त्वा पाद्यञ्च संप्रीत्या स्वर्णसिंहासनं ददौ ॥ ३३ ॥
तस्मै दत्त्वाशिषं विप्रः समुवास सुखासने ।
पप्रच्छ राजा तं भीतः काज्ञा ते वद मामिति ॥ ३४ ॥
नृपस्य वचनं श्रुत्वा प्रोवाच मुनिपुङ्गवः ।
मां भोजय नृपश्रेष्ठ क्षुधार्त्तोऽहमुपागतः ॥ ३५ ॥
किन्त्वघमर्षणस्नानं जप्त्वा यास्याचरण इह ।
क्षणं प्रतीक्ष्यतां राजन्नित्युवाच गतो मुनिः ॥ ३६ ॥
गते विप्रे तु राजर्षिश्चिन्तां प्राप दुरत्ययाम् ।
विलोक्य विगतप्रायां द्वादशीं भयसंयुतः ॥ ३७ ॥
एतस्मिन्नन्तरे तत्र समायान्तं गुरुं मुदा ।
नत्वा निवेद्य सर्वन्तु नृपतिः समुवाच ह ॥ ३८ ॥
नायाति मुनिशार्दूलः प्रयाति द्वादशीतिथिः ।
सङ्कटेऽस्मिन् विधेयञ्च विविच्य विधिपूर्वकम् ।
[illegible] वद मुनिश्रेष्ठ भद्राभद्रञ्च मामिति ॥ ३९ ॥

श्रुत्वा नृपोक्तिं त्वरितमुवाच मुनिपुङ्गवः ।
हितं तथ्यञ्च वेदोक्तं परिणामसुखावहम् ॥ ४० ॥

वशिष्ठ उवाच ।

द्वादश्यां समतीतायां त्रयोदश्यान्तु पारणम् ।
उपवासफलं हत्वा व्रतिनं हन्ति निश्चितम् ॥ ४१ ॥
ब्रह्महत्यासमं पापं भवेत्तस्य श्रुतौ श्रुतम् ।
भक्ष्यद्रव्यं सुरातुल्यमित्याह कमलोद्भवः ॥ ४२ ॥
न भोजयित्वा मूढ़श्चेदतिथिं समुपस्थितम् ।
स वत्स: क्षुधितो भुङ्क्ते कुम्भीपाके व्रजेत् ध्रुवम् ॥४३॥
शतवर्षं तत्र तिष्ठन्नरश्चाण्डालतां व्रजेत् ।
व्याधियुक्तो दरिद्रश्च भवेज्जन्मनि जन्मनि ॥ ४४ ॥
अतोऽतिसूक्ष्मं किं ब्रूमोऽधुना परमसंकटे ।
रक्षां कुरु द्वयोर्धर्मं समालोक्य वदामि ते ॥ ४५ ॥
उपवासफलं रक्ष कृष्णस्य चरणोदकम् ।
भुक्त्वा शीघ्रमपो राजंस्तद्रक्षणमभक्षणम् ॥ ४६ ॥
इत्युक्त्वा ब्रह्मणः पुत्रो विरराम महामुने ।
बुभुजे तज्जलं किञ्चित् कृष्णपादाम्बुजं स्मरन् ॥४७॥
एतस्मिन्नन्तरे ब्रह्मन्नाजगाम मुनीश्वरः ।
चिच्छेद कोपात्सर्वज्ञः स्वजटां नृपतेः पुरः ॥ ४८॥
ततः समुत्थितः शीघ्रं पुरुषोऽग्निशिखोपमः ।
खड्गहस्तो महाभीमो राजेन्द्रं हन्तुमुद्यतः ॥ ४९ ॥
हरेश्चक्रञ्च तं दृष्ट्वा सूर्य्यकोटिसमप्रभम् ।
चिच्छेद कृत्यापुरुषं ब्राह्मणं छेत्तुमुद्यतम् ॥ ५० ॥
दृष्ट्वा सुदर्शनं विप्रो दुद्राव भयविह्वलः ।

द्विजः पश्चात्तं ददर्श ज्वलदग्निशिखोपमम् ॥५१॥
ब्रह्माण्डभ्रमणं कृत्वा निर्विण्णोऽतिभयाकुलः ।
तत्त्वं मत्वा जगन्नाथं ब्रह्माणं शरणं ययौ ॥ ५२ ॥
त्राहि त्राहीत्येवमुक्त्वा विवेश ब्रह्मणः सभाम् ।
उत्थाय ब्रह्मा विप्रेन्द्रं पप्रच्छ कुशलं मुने ॥ ५३ ॥
सर्वं स कथयामास वृत्तान्तं मूलतोऽधिकम् ।
श्रुत्वा ब्रह्मा निश्श्वास तमुवाच भयाकुलः ॥ ५४ ॥

ब्रह्मोवाच ।

हरिदासं वत्स शप्तुं गतोऽसि कस्य तेजसा ।
रचिता यस्य भगवान् तत्को हन्ता जगत्त्रये ॥ ५५ ॥
क्षुद्राणां महतां चैव भक्तानां रक्षणाय च ।
ररक्ष सन्ततं चक्रं श्रीहरिर्भक्तवत्सलः ॥ ५६ ॥
यो मूढो वैष्णवं द्वेष्टि विष्णुप्राणसमं द्विज ।
तस्य संहारकर्तारं संहर्तुमीश्वरो हरिः ॥ ५७ ॥
शीघ्रं स्थानान्तरं गच्छ वत्स त्राणं न वाधुना ।
अन्यथा त्वां मया सार्धं हनिष्यति सुदर्शनम् ॥ ५८ ॥
किं ब्रह्मलोकं ब्रह्माण्डं दग्धुं शक्तं क्षणेन यत् ।
तेजसा विष्णुतुल्यं यत् केनान्येन निवार्यते ॥ ५९ ॥
ब्रह्मणो वचनं श्रुत्वा ततो दुद्राव ब्राह्मणः ।
त्रस्तो जगाम कैलासं शङ्करं शरणं भिया ॥ ६० ॥
कृपानिधान मां रक्षेत्युवाच शङ्करं भिया ।
न हि पप्रच्छ कुशलं सर्वज्ञो ब्राह्मणं शिवः ॥ ६१ ॥
उवाच दीनदीनेशः संहर्ता जगतां क्षणात् ।
स्थिरो भव द्विजश्रेष्ठ मदीयं वचनं शृणु ॥ ६२ ॥

शङ्कर उवाच ।

पौत्रस्त्वं जगतां धातुरत्रेश्च तनयो मुने ।
वेदज्ञातासि सर्वज्ञ मूर्खतुल्यन्तु कर्म ते ॥ ६३ ॥
वेदेषु च पुराणेषु चेतिहासेषु सर्वतः ।
निरूपितो यः सर्वेशस्तं न जानासि मूढवत् ॥ ६४ ॥
अहं ब्रह्मा च रुद्रश्च आदित्या वसवस्तथा ।
धर्मेन्द्रौ च सुराः सर्वे मुनीन्द्रा मनवस्तथा ॥ ६५ ॥
आविर्भूतास्तिरोभूता यस्य भ्रूभङ्गलीलया ।
तस्य प्राणाधिकं भक्तं हंसि त्वं कस्य तेजसा ॥ ६६ ॥
अहं ब्रह्मा च कमला दुर्गा वाणी च राधिका ।
न हि भक्तात्पराः प्रेम्णा भक्ताश्च सर्वतः प्रियाः ॥ ६७ ॥
क्षुद्रांश्च महतो भक्तान् शश्वद्रक्षति यत्नतः ।
सर्वान्तरात्मा भगवान् चक्रेण दुःसहेन च ॥ ६८ ॥
नियुज्य चक्रं दुर्वार्य्यं स्वात्मतुल्यञ्च तेजसा ।
तथापि न प्रतीतिश्च स्वयं गच्छति रक्षितुम् ॥ ६९ ॥
स्वकीयगुणनाम्नाञ्च श्रवणादतिसंभ्रमः ।
भक्तसङ्गे भ्रमत्येव छायेव सन्ततं हरिः ॥ ७० ॥
कान्ता प्राणाधिका शश्वन्न हि कोऽपि ततोऽधिकः ।
भक्तान् द्वेष्टि स्वयं सा चेत्तूर्णं त्यजति तां प्रभुः ॥ ७१ ॥
सर्वेषाञ्च प्रिया विप्राः स्वशरीरादपि द्विज ।
ब्राह्मणेभ्यः प्रिया भक्ताः प्राणेभ्यश्च हरेरपि ॥ ७२ ॥
ईश्वरस्य प्रियः को वाप्रियः को वा जगत्त्रये ।
यः शिष्टस्तं भजेच्छश्वद् ध्यायते सततं सदा ॥ ७३ ॥
महति प्रलये ब्रह्मन् ब्रह्माण्डौघे जलप्लुते ।

न तत्र नाशो भक्तानां सर्वेषाञ्च भविष्यति ॥ ७४ ॥
भज ब्राह्मण गोविन्दं स्मर तस्य पदाम्बुजम् ।
सर्वापदो विनश्यन्ति श्रीहरेः स्मरणादपि ॥ ७५ ॥
भज शीघ्रञ्च वैकुण्ठं वैकुण्ठः शरणं तव ।
दास्यत्येवाभयं तुभ्यं करुणासागरो विभुः ॥ ७६ ॥
एतस्मिन्नन्तरे व्याप्तं कैलासं चक्रतेजसा ।
यथा च सूर्य्यकिरणैः सुप्रदीप्तं महीतलम् ॥ ७७ ॥
दग्धा ज्वालाकरालैश्च सर्वे कैलासवासिनः ।
त्राहि त्राहीत्येवमुक्त्वा शङ्करं शरणं ययुः ॥ ७८ ॥
दृष्ट्वा चक्रं दुर्विषहं शङ्करः करुणानिधिः ।
पार्वत्या सह संप्रीत्या ब्राह्मणायाशिषं ददौ ॥ ७९ ॥
तेजः सत्यं तपः सत्यं यदि चेच्चिर सञ्चितम् ।
कृतापराधी भीतश्च द्विजो भवतु विज्वरः ॥ ८० ॥

पार्वत्युवाच ।

यत् प्रभोर्मम पुण्येषु ब्राह्मणः शरणागतः ।
ममाशिषा मद्वाभीत्याः शीघ्रं भवतु विज्वरः ॥८१॥
इत्येवमुक्त्वा कृपया विरराम शिवा शिवः ।
मुनिः प्रणम्य देवेशं वैकुण्ठं शरणं ययौ ॥ ८२ ॥
गत्वा वैकुण्ठभवनं मनोयायी मुनीश्वरः ।
दृष्ट्वा सुदर्शनं पश्चाद्विवेशान्तःपुरं हरेः ॥ ८३ ॥
ददर्श श्रीहरिं विप्रो रत्नसिंहासनस्थितम् ।
शङ्खचक्रगदापद्मधरं पीताम्बरं परम् ॥ ८४ ॥
श्यामं चतुर्भुजं शान्तं लक्ष्मीकान्तं मनोहरम् ।
रत्नालङ्कारशोभाढ्यं रत्नमालाविभूषितम् ॥ ८५ ॥

ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ।
सद्रत्नसाररचितं किरीटोज्ज्वलशेखरम् ॥ ८६ ॥
पार्षदप्रवरेन्द्रैश्च सेवितं श्वेतचामरैः ।
पद्मासेवितपादाब्जं सरस्वत्या स्तुतं पुरः ॥ ८७ ॥
सुनन्दनन्दकुमुदप्रचण्डादिभिरावृतम् ।
गुणानुवादं गायन्तं तन्त्रैः पश्यन्तमीप्सितम् ॥ ८८ ॥
एवम्भूतं प्रभुं दृष्ट्वा दण्डवत्प्रणनाम च ।
तुष्टाव सामवेदोक्तस्तोत्रेण परमेश्वरम् ॥ ८९ ॥

दुर्वासा उवाच ।

त्राहि मां कमलाकान्त त्राहि मां करुणानिधे ।
दीनबन्धोऽतिदीनेश करुणासागर प्रभो ॥ ९० ॥
वेदवेदाङ्ग संस्रष्टुर्विधातुश्च स्वयं विधे ।
मृत्योर्मृत्युः कालकाल त्राहि मां सङ्कटार्णवे ॥ ९१ ॥
संहारकर्तुः संहारः सर्वेशः सर्वकारण ।
महाविष्णुतरोर्बीज रक्ष मां भवसागरे ॥ ९२ ॥
शरणागतशोकार्तभयत्राणपरायण ।
भगवन्नव मां भीतं नारायण नमोस्तु ते ॥ ९३ ॥
वेदेष्वाद्यश्च यद्वस्तु वेदाः स्तोतुं न च क्षमाः ।
सरस्वती जड़ीभूता किं स्तुवन्ति विपश्चितः ॥ ९४ ॥
शेषः सहस्रवक्त्रेण यं स्तोतुं जड़तां व्रजेत् ।
पञ्चवक्त्रो जड़ीभूतो जड़ीभूतश्चतुर्मुखः ॥ ९५ ॥
श्रुतयः स्मृतिकर्तारो वाणी चेत् स्तोतुमक्षमा ।
कोऽहं विप्रश्च वेदज्ञः शिष्यः किं स्तौमि मानद ॥९६॥

मनूनाञ्च महेन्द्राणामष्टाविंशतिमे गते ।
दिवानिशं यस्य विधेरष्टोत्तरशतायुषः ॥ ९७ ॥
तस्य पातो भवेद्यस्य चक्षुरुन्मीलनेन च ।
तमनिर्वचनीयञ्च किं स्तौमि पाहि मां प्रभो ॥ ९८ ॥
इत्येवं स्तवनं कृत्वा पपात चरणाम्बुजे ।
नयनाम्बुजनीरेण सिषेच भयविह्वलः ॥ ९९ ॥
दुर्वाससा कृतं स्तोत्रं हरेश्च परमात्मनः ।
पुण्यदं सामवेदोक्तं जगन्मङ्गलनामकम् ॥ १०० ॥
यः पठेत् संकटग्रस्तो भक्तियुक्तश्च संयुतः ।
नारायणस्तं कृपया शीघ्रमागत्य रक्षति ॥ १०१ ॥
राजद्वारे श्मशाने च कारागारे भयाकुले ।
शत्रुग्रस्ते दस्युभीते हिंस्रजन्तुसमन्विते ॥ १०२ ॥
वेष्टिते राजसैन्येन मग्नपोते महार्णवे ।
स्तोत्रस्मरणमात्रेण मुच्यते नात्र संशयः ॥ १०३ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे
दुर्वाससा कृतं श्रीकृष्णस्तोत्रं समाप्तम् ।

नारायण उवाच ।

मुनेश्च स्तवनं श्रुत्वा भगवान् भक्तवत्सलः ।
प्रहस्योवाच मधुरं पीयूषदृष्टिवन्मुदा ॥ १०४ ॥

श्रीभगवानुवाच ।

उत्तिष्ठोतिष्ठ भद्रन्ते भविष्यति वरेण मे ।
किन्तु मे वचनं नित्यं शृणु सत्यं सुखावहम् ॥ १०५ ॥
अन्येषाञ्च भवेज्ज्ञानं श्रुत्वा शास्त्रं सतां मुखात् ।
स्वमूर्त्तिमन्ति शास्त्राणि भवेत् सन्तश्चरन्ति हि ॥१०६॥

कर्मवेदविरुद्धञ्च सर्वेषामतिगर्हितम्।
करोति विद्वांश्चेत् ज्ञात्वा स च जीवन्मृताधिकः ॥१०७॥
पुराणेषु च वेदेषु चेतिहासेषु ब्राह्मण।
वैष्णवानाञ्च महिमा श्रुतः सर्वैश्च सर्वतः ॥ १०८ ॥
अहं प्राणा वैष्णवानां मम प्राणाश्च वैष्णवाः।
तानेव द्वेष्टि यो मूढ़ो ममासूनाञ्च हिंसकः ॥ १०९ ॥
पुत्रात् पौत्रान् कलत्रांश्च राज्यं लक्ष्मीं विहाय च।
ध्यायन्ते सततं ये मां को मे तेभ्यः परः प्रियः ॥११०॥
परा भक्ता न मे प्राणा न च लक्ष्मीर्न शङ्करः।
न भारती न च ब्रह्मा न दुर्गा न गणेश्वरः ॥ १११ ॥
न ब्राह्मणो न वेदाश्च न वेदजननी परा।
न गोपी न च गोपाला न राधा प्राणतः प्रिया ॥११२॥
इत्येवं कथितं सर्वं सत्यं सारञ्च वास्तवम्।
न प्रशंसापरं तेषां ते च प्राणाधिकाः प्रियाः ॥११३॥
मां द्विषन्ति च ये मूढ़ा ज्ञानहीनाश्च वञ्चिताः।
आत्मानं ये न जानन्ति ते यान्ति निरयञ्चिरम् ॥११४॥
ये द्विषन्ति च मद्भक्तान् प्राणानामधिकं प्रियान्।
तेषां शास्ता त्वहं तूर्णं परत्र निरयञ्चिरम् ॥ ११५ ॥
प्रभावोऽहञ्च सर्वेषामीश्वरः परिपालकः।
न च व्यापी स्वतन्त्रोऽहं भक्ताधीनो दिवानिशम् ॥११६॥
गोलोके वाथ वैकुण्ठे द्विभुजञ्च चतुर्भुजम्।
रूपमात्रमिदं शश्वत् प्राणा मे भक्तसन्निधौ ॥ ११७ ॥
यदुक्तं भक्तदत्तञ्च भक्षणीयञ्च तन्मम।
अभक्ष्यं द्रव्यमन्येन दत्तञ्चेदमृतोपमम् ॥ ११८ ॥

अम्बरीषं नृपश्रेष्ठं निरीहं तमहिंसकम् ।
कथं हंसि दयाशीलं सर्वप्राणिहिते रतम् ॥ ११९ ॥
दयां कुर्वन्ति ये सन्तः सततं सर्वजन्तुषु ।
तान् द्विषन्ति च ये मूढ़ास्तेषां हन्ताहमेव च ॥१२०॥
भक्तानां हिंसकं शत्रुमहं रचितुमक्षमः ।
अम्बरीषालयं गच्छ स त्वां रचितुमीश्वरः ॥ १२१ ॥

नारायण उवाच ।

इदं वाक्यञ्च तच्छ्रुत्वा ब्राह्मणो भयविह्वलः ।
विषसमानसस्तस्थौ स्मरन् कृष्णपदाम्बुजम् ॥ १२२ ॥
एतस्मिन्नन्तरे ब्रह्मा भवान्या सह शङ्करः ।
धर्मश्चेन्द्रादयो देवा आजग्मुर्मुनिपुङ्गवाः ॥ १२३ ॥
प्रणम्य तुष्टुवुः सर्वे परमात्मानमीश्वरम् ।
पुलकाञ्चितसर्वाङ्गा भक्तिनम्रात्मकन्धराः ॥ १२४ ॥

ब्रह्मोवाच ।

स्वात्मस्वरूप निर्लिप्त भक्तानुग्रहकातर ।
भक्तापराधजनकं रच ब्राह्मणपुङ्गवम् ॥ १२५ ॥

महादेव उवाच ।

दीनबन्धो जगन्नाथ नायं विप्रो जगद्बहिः ।
कृतापराधं दीनञ्च पाहीमं शरणागतम् ॥ १२६ ॥

पार्वत्युवाच ।

भक्त एवाम्बरीषस्ते न द्विजा न सुरा वयम् ।
सर्वेषामीश्वरस्त्वञ्च रच विप्रं कृतागसम् । १२७ ॥

धर्म उवाच ।

सर्वेषां जनकस्त्वञ्च पाता दण्डकृदीश्वरः ।
शिशुहेतोः शिशुं हन्ति पितेत्येवं कुतः प्रभो ॥ १२८ ॥

इन्द्र उवाच ।

कृपया समता शश्वत्सर्वेषु जीवेषु प्रभो ।
अपराधफलं भूतमधुना पातुमर्हसि ॥ १२९ ॥

रुद्र उवाच ।

शान्तिं कर्तुं समुचितमुचितं साम्प्रतं कुरु ।
कृतकुण्ठस्य मूलस्य पालनं कर्तुमर्हसि ॥ १३० ॥

दिक्पाल उवाच ।

कृतापराधं विप्रञ्च छेत्तुमर्हसि न श्रुतौ ।
अपराधशमं कृत्वा सदा पाति सदीश्वरः ॥ १३१ ॥

ग्रहा ऊचुः ।

यो द्वेष्टि वैष्णवं मूढ़स्तं रुष्टाः सर्वदेवताः ।
पीड़ां कुर्मो वयं शश्वत्पश्चात्त्वं पातुमर्हसि ॥ १३२ ॥

मुनय ऊचुः ।

नाथ विप्रे पराभूते सर्वे जीवन्मृता वयम् ।
दण्डं विधातुमेकस्य भवेल्लज्जा स्वजातिषु ॥ १३३ ॥

अत्रिरुवाच ।

त्वयैव दत्तः पुत्रो मे क्रोधी त्वत्सेवकः सदा ।
न कं बिभेति त्रैलोक्ये तेजस्वी तेजसा तव ॥ १३४ ॥

लक्ष्मीरुवाच ।

क्षमापराधं भगवन् ब्राह्मणं शरणागतम् ।
स्तुवन्ति देवा विप्राश्च न विप्रं हन्तुमर्हसि ॥ १३५ ॥

सरस्वत्युवाच ।

बोधयिष्यामि देवानां जनकं कामहं श्रुतिम् ।
भगवान् स्वामी सर्वेषां सर्वांश्च पातुमर्हसि ॥ १३६ ॥

पार्षदा ऊचुः ।

भवतः स्मृतिमात्रेण सर्वेषां सर्वमङ्गलम् ।
भवेत्सर्वापदो यान्ति पाहीमं शरणागतम् ॥ १३७ ॥

नर्त्तका ऊचुः ।

दारिद्र्यं भञ्जन वयं भिक्षुकास्तव सन्ततम् ।
भिक्षां नो साम्प्रतं देहि परित्राणं द्विजस्य च ॥१३८॥
एतेषां स्तवनं श्रुत्वा प्रभुः शरणवत्सलः ।
प्रहस्योवाच वचनं सर्वसन्तोषकारणम् ॥ १३९ ॥

श्रीभगवानुवाच ।

सर्वे शृणुत मद्वाक्यं नीतियुक्तं सुखावहम् ।
विप्ररक्षां करिष्यामि युष्माकमाज्ञया ध्रुवम् ॥ १४० ॥
किं त्वयं यातु वैकुण्ठादम्बरीषालयं पुनः ।
करोतु पारणं तत्र राज्ञः सुप्रीतये मुनिः ॥ १४१ ॥
विप्रस्तस्यातिथिर्भूत्वा निर्दोषं शप्तुमुद्यतः ।
सुदर्शनन्तु तं रक्ष्यं ब्राह्मणं हन्तुमुद्यतम् ॥ १४२ ॥
पूर्णं वर्षमयं भीतो भ्रमत्येव भुवं मुदा ।
उपवासी स राजेन्द्रः सस्त्रीकश्च शुचान्वितः ॥ १४३ ॥
तत्रोऽहमुपवासी च भक्तोपवासकारणात् ।
स्तनान्धं बालकं दृष्ट्वा न भुङ्क्ते जननी यथा ॥ १४४ ॥
ममाशिषा मुनिश्रेष्ठः सद्यो भवतु विज्वरः ।
पथि तत्रास्य हिंसाञ्च मच्चक्रं न करिष्यति ॥ १४५ ॥

अहमेवाद्य निश्चिन्तः सुखं भोच्यामि निश्चितम्।
भक्तदत्तञ्च यद्वस्तु प्रीत्या कृत्वा सुधोपमम्॥ १४६॥
लक्ष्मीदत्तञ्च यद् द्रव्यं न चाहं भोक्तुमीश्वरः।
विना भक्तप्रदानेन न तृप्तिं दातुमीश्वरः॥ १४७॥
हे मुनीन्द्र महाप्राज्ञ गच्छ वत्स नृपालयम्।
सर्वे देवाश्च देव्यश्च गच्छन्तु मुनयो गृहम्॥ १४८॥
इत्युक्त्वा श्रीहरिस्तूर्णं ययौ स्वान्तःपुरं मुदा।
ययुः सर्वे मुदा युक्ताः प्रणम्य जगदीश्वरम्॥ १४९॥
ब्राह्मणश्च मनोयायी जगाम हरिमन्दिरम्।
सुदर्शनञ्च तच्चक्रं सूर्य्यकोटिसमप्रभम्॥ १५०॥
उपोष्य वत्सरं राजा शुष्ककण्ठोष्ठ तालुकः।
सिंहासनस्थो ददर्श पुरतो मुनिपुङ्गवम्॥ १५१॥
उत्थाय सम्भ्रमात् सद्यः प्रणम्य सादरं मुदा।
भोजयित्वा तु मिष्टान्नं ब्राह्मणं बुभुजे स्वयम्॥ १५२॥
भुक्त्वा तुष्टो द्विजश्रेष्ठो युयुजे परमाशिषम्।
जगाम स्वालयं तूर्णं प्रशशंस पुनः पुनः॥ १५३॥
उवाच पथि विप्रेन्द्रो मनसा विस्मयाकुलः॥ १५३॥
माहात्म्यं दुर्लभमहो वैष्णवानामिति द्विजः॥ १५४॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे मुनिमोचणप्रस्तावो नाम
पञ्चविंशोऽध्यायः॥ २५॥

---

## षड्विंशोऽध्यायः ।

नारद उवाच ।

द्वादशीलङ्घने दोषः श्रुतस्त्वन्मुखतो मुने ।
पराभवो मुनेश्चैव नृप त्राणं हरेरहो ॥ १ ॥
अधुना श्रोतुमिच्छामि सर्वेषामीप्सितञ्च मे ।
एकादशीव्रतस्यास्य विधानं वद निश्चितम् ॥ २ ॥
अहो श्रुतौ श्रुतं किञ्चिन्मतभेदान्न निश्चितम् ।
श्रुतीनां कारणमुखाच्छ्रोतुं कौतूहलं मम ॥ ३ ॥

नारायण उवाच ।

एकादशीव्रतमिदं देवानामपि दुर्लभम् ।
श्रीकृष्णप्रीतिजनकं तपः श्रेष्ठं तपस्विनाम् ॥ ४ ॥
देवानाञ्च यथा कृष्णो देवीनां प्रकृतिर्यथा ।
आश्रमाणां यथा विप्रो वैष्णवानां यथा शिवः ॥ ५ ॥
यथा गणेशः पूज्यानां यथा वाणी विपश्चिताम् ।
शास्त्राणाञ्च यथा वेदास्तीर्थानां जाह्नवी यथा ॥ ६ ॥
तैजसानां यथा स्वर्णं प्राणिनां वैष्णवो यथा ।
धनानाञ्च यथा विद्या रङ्गिनाञ्च यथा प्रिया ॥ ७ ॥
प्रमथानां यथा रुद्रः श्रेयसाञ्च यथा मतिः ।
आत्मा यथेन्द्रियाणाञ्च चञ्चलानां यथा मनः ॥ ८ ॥
गुरुस्त्रीणां यथा माता बन्धूनाञ्च यथा पतिः ।
बलिष्ठानां यथा दैवं कालः कलयतां यथा ॥ ९ ॥

सुशीलश्चैव मित्राणां शत्रूणां दुर्यथा मुने ।
यथा कीर्तिः कीर्तिमतां गृहिणाञ्च यथा गृहम् ॥१०॥
यथा खलो हिंसकानां दुष्टानाञ्चैव पुंश्चली ।
तेजस्विनां ग्रहेशश्च सहिष्णूनां यथा चितिः ॥ ११ ॥
यथामृतं भक्षणानां दाहकानां यथानलः ।
यथा श्रीधनदातॄणां सतीनाञ्च यथा सती ॥ १२ ॥
प्रजेशानां यथा ब्रह्मा सरितां सागरो यथा ।
यथा साम श्रुतीनाञ्च गायत्री छन्दसां यथा ॥ १३ ॥
वृक्षाणाञ्च यथाश्वत्थः पुष्पाणां तुलसी यथा ।
यथा मार्गो हि मासानामृतूनाञ्च यथा मधुः ॥ १४ ॥
आदित्यानां यथा सूर्य्यो रुद्राणां शङ्करो यथा ।
यथा भीष्मो वसूनाञ्च वर्षाणां भारतं यथा ॥ १५ ॥
देवर्षीणां यथा त्वञ्च ब्रह्मर्षीणां यथा भृगुः ।
नृपाणाञ्च यथा रामः सिद्धानां कपिलो यथा ॥१६॥
यथा सनत्कुमारश्च योगिनां ज्ञानिनां वरः ।
ऐरावतो गजेन्द्राणां पशूनां शरभो यथा ॥ १७ ॥
यथा हिमाद्रिः शैलानां मणीनां कौस्तुभो यथा ।
सरस्वती नदीनाञ्च यथा पुण्यस्वरूपिणी ॥ १८ ॥
गन्धर्वाणां चित्ररथो यथा श्रेष्ठश्च नारद ।
यथा कुवेरो यक्षाणां सुमाली रक्षसां यथा ॥ १९ ॥
यथा श्रेष्ठा च नारीणां शतरूपा वरापरा ।
मनूनाञ्च यथा श्रेष्ठः स्वयं स्वायम्भुवो मनुः ॥ २० ॥
सुन्दरीणां यथा रम्भा यथा माया च मायिनाम् ।
एकादशीव्रतमिदं व्रतानाञ्च वरं यथा ॥ २१ ॥

कर्त्तव्यञ्च चतुर्णाञ्च वर्णानां नित्यमेव च ।
यतीनां वैष्णवानाञ्च ब्राह्मणानां विशेषतः ॥ २२ ॥
सत्यं सर्वाणि पापानि ब्रह्महत्यादिकानि च ।
सन्त्योदनमाश्रित्य श्रीकृष्णव्रतवासरे ॥ २३ ॥
भुक्तैतानि च पापानि यो भुङ्क्ते तत्र मन्दधीः ।
इहातिपातकी सोऽपि यात्यन्ते नरकं ध्रुवम् ॥२४॥
एकादशीप्रमाणानि युगसंख्याकृतानि च ।
कुम्भीपाके महाघोरे स्थित्वा चाण्डालतां व्रजेत् ॥२५॥
गलितव्याधियुक्तश्च ततः सप्तसु जन्मसु ।
पश्चान्मुक्तो भवेत्पापादित्याह कमलोद्भवः ॥ २६ ॥
इत्येवं कथितं ब्रह्मन् यो दोषस्तत्र भोजने ।
द्वादशीलङ्घने दोषो मयोक्तश्च श्रुतः पुरा ॥ २७ ॥
दशमीलङ्घने दोषं निबोध कथयामि ते ।
पुरा श्रुतो धर्मवक्त्रादिदसारोद्धृतोऽपि च ॥ २८ ॥
दशमीं यः कलामात्रां मूढो ज्ञानेन लङ्घयेत् ।
याति श्रीस्तद्गृहात्तूर्णं शापं दत्त्वा तु दारुणम् ॥२९॥
इह तद्वंशहानिश्च यशोहानिर्भवेद् ध्रुवम् ।
अन्ते मन्वन्तरशतमन्धकूपे वसेद् द्विज ॥ ३० ॥
दशम्येकादशी वापि द्वादशी यत्र वासरे ।
तत्र भुक्त्वा परदिने उपोष्य व्रतमाचरेत् ॥ ३१ ॥
द्वादश्याञ्च व्रतं कृत्वा त्रयोदश्याञ्च पारणम् ।
द्वादशीलङ्घने दोषो व्रतिनां तत्र विद्यते ॥३२॥
सम्पूर्णैकादशी यत्र प्रभाते किञ्चिदेव सा ।
तत्रोपोष्या द्वितीया च परा चेद्यदि वर्धते ॥ ३३ ॥

षष्टिदण्डात्मिका यत्र प्रभाते च तिथिद्वयम् ।
कुर्वन्ति गृहिणः पूर्वस्मेव यत्यादयस्तथा ॥३४॥
परत्रानशनं कृत्वा नित्यकृत्यं समाचरेत् ।
व्रतं जागरणं सर्वं पूर्वत्रैवाचरेद् बुधः ॥ ३५ ॥
तत्पूर्वदिवसे नित्यं व्रतं कृत्वा परेऽहनि ।
एकादश्यां व्यतीतायां पारणन्तु समाचरेत् ॥ ३६ ॥
वैष्णवानां यतीनाञ्च विधवानां तथैव च ।
सर्वाः समा उपोष्यास्ता भिक्षूणां ब्रह्मचारिणाम् ॥३७॥
शुक्लामेव तु कुर्वन्ति गृहिणो वैष्णवेतराः ।
न कृष्णालङ्घने दोषस्तेषां वेदेषु नारद ॥ ३८ ॥
शयनी बोधिनी मध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥३९॥
इत्येवं कथितो ब्रह्मन्निर्णयो यः श्रुतौ श्रुतः ।
व्रतस्यास्य विधानञ्च निबोध कथयामि ते ॥ ४० ॥
कृत्वा हविष्यं पूर्वाह्णे न च भुङ्क्ते पुनर्जलम् ।
एकाकी कुशशय्यायां नक्तं शयनमाचरेत् ॥ ४१ ॥
ब्राह्मे मुहूर्त्ते चोत्थाय प्रातःकृत्यं विधाय च ।
नित्यकृत्यं विधायाथ ततः स्नानं समाचरेत् ॥४२॥
व्रतोपवासं सङ्कल्प्य श्रीकृष्णप्रीतिपूर्वकम् ।
कृत्वा सन्ध्यातर्पणञ्च विधायाह्निकमाचरेत् ॥ ४३ ॥
नित्यपूजादिने कृत्वा व्रतद्रव्यं समाहरेत् ।
कृत्वा षोड़शोपचारं प्रहृष्टं विधिबोधितः ॥ ४४ ॥
आसनं वसनं पाद्यमर्घ्यं पुष्पानुलेपनम् ।
धूपं दीपञ्च नैवेद्यं यज्ञसूत्रञ्च भूषणम् ॥ ४५ ॥

गन्धस्नानीयताम्बूलं मधुपर्कं पुनर्जलम् ।
एतान्याहृत्य दिवसे व्रतं नक्तं समाचरेत् ॥ ४६ ॥
उपविश्यासने पूतो धृत्वा धौतेयवाससी ।
आचम्य श्रीहरिं नत्वा स्वस्तिवाचनमाचरेत् ॥ ४७ ॥
आरोप्य मङ्गलघटं धान्याधारे शुभे चखे ।
फलशाखाचन्दनाक्तं वेदोक्तं मुनिभिर्मुदा ॥ ४८ ॥
वेदषट्कं समावाह्य पृथक् धान्यैः समाचरेत् ।
पूजां पञ्चोपचारैश्च प्रकृष्टैश्च विचक्षणः ॥ ४९ ॥
गणेश्वरं दिनकरं वह्निं विष्णुं शिवं शिवाम् ।
सम्पूज्यैतान् प्रणम्याथ व्रतं कुर्य्याद्धरिं स्मरन् ॥ ५० ॥
नाराध्य वेदषट्कञ्च यदि कर्म समाचरेत् ।
नित्यं नैमित्तिकञ्चापि तत्सर्वं निष्फलं भवेत् ॥ ५१ ॥
इत्येवं कथितं सर्वं व्रताङ्गभूतमेव च ।
कण्वशाखोक्तमिष्टञ्च व्रतं शृणु महामुने ॥ ५२ ॥
सामवेदोक्तध्यानेन ध्यात्वा कृष्णं परात्परम् ।
पुष्पञ्च शिरसि न्यस्य पुनर्ध्यानं समाचरेत् ॥ ५३ ॥
ध्यानं शृणु निगूढञ्च सर्वेषामपि वाञ्छितम् ।
न प्रकाश्यमभक्ताय भक्तप्राणाधिकं परम् ॥ ५४ ॥
नवीननीरदो यद्वत् श्यामसुन्दरविग्रहम् ।
शरत्पार्वणचन्द्राभाविनिन्द्यास्यमनुत्तमम् ॥ ५५ ॥
शरत्सूर्य्योदयाब्जानां प्रभामोचनलोचनम् ।
स्वाङ्गसौन्दर्य्यशोभाभी रत्नभूषणभूषितम् ॥ ५६ ॥
गोपीलोचनकोणैश्च प्रसन्नैरतिसूचकैः ।
शश्वन्निरीक्ष्यमाणं तत्प्राणैरिव विनिर्मितम् ॥ ५७ ॥

रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम्।
राधावक्त्रशरच्चन्द्रसुधापानचकोरकम्॥ ५८॥
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम्।
पारिजातप्रसूनानां मालाजालैर्विराजितम्॥ ५९॥
सद्रत्नसारनिर्माणं कीरीटोज्ज्वलशेखरम्।
विनोदमुरलीहस्तन्यस्तं पूज्यं सुरासुरैः॥६०॥
ध्यानासाध्यं दुराराध्यं ब्रह्मादीनाञ्च वन्दितम्।
कारणं कारणानां यं तमीश्वरमहं भजे॥ ६१॥
ध्यात्वानेन तमावाह्य चोपहाराणि षोड़श।
दत्त्वा संपूजयेद्भक्त्या मन्त्रैरेभिश्च नारद॥ ६२॥
आसनं स्वर्णनिर्माणं रत्नसारपरिच्छदम्।
नानाचित्रविचित्राढ्यं गृह्यतां परमेश्वर॥ ६३॥
वह्निप्रक्षालितं वस्त्रं निर्मितं विश्वकर्मणा।
मूल्यानिर्वचनीयञ्च गृह्यतां राधिकापते॥ ६४॥
पादप्रक्षालनार्हञ्च सुवर्णपात्रसंस्थितम्।
सुवासितं शीतलञ्च गृह्यतां करुणानिधे॥ ६५॥
इदमर्घ्यं पवित्रञ्च शङ्खतोयसमन्वितम्।
पुष्पं दूर्वाचन्दनाक्तं गृह्यतां भक्तवत्सल॥ ६६॥
सुवासितं शुक्लपुष्पं चन्दनागुरुसंयुतम्।
सद्यस्ते प्रीतिजनकं गृह्यतां सर्वकारण॥ ६७॥
चन्दनागुरुकस्तूरीकुङ्कुमोशीरसुन्दरम्।
सर्वेप्सितमिदं कृष्ण गृह्यतामनुलेपनम्॥ ६८॥
रसो वृक्षविशेषस्य नानाद्रव्यसमन्वितः।
सुगन्धियुक्तः सुखदो धूपोऽयं प्रतिगृह्यताम्॥ ६९॥

दिवानिशं सुप्रदीप्तो रत्नसारविनिर्मितः ।
पुनर्ध्वान्तनाशबीजं दीपोऽयं प्रतिगृह्यताम् ॥ ७० ॥
नानाविधानि द्रव्याणि स्वादूनि सुरभीणि च ।
चोष्यादीनि पवित्राणि स्वात्माराम प्रगृह्यताम् ॥७१॥
सावित्रीग्रन्थिसंयुक्तं स्वर्णतन्तुविनिर्मितम् ।
गृह्यतां देवदेवेश रचितं चारुकारुणा ॥ ७२ ॥
अमूल्यरत्नरचितं सर्वावयवभूषणम् ।
त्विषा जाज्वल्यमानञ्च गृह्यतां नन्दनन्दन ॥ ७३ ॥
प्रधानो वर्णनीयश्च सर्वमङ्गलकर्मणि ।
प्रगृह्यतां दीनबन्धो गन्धोऽयं मङ्गलप्रदः ॥ ७४ ॥
धात्रीश्रीफलपत्रोत्थं विष्णुतैलं मनोहरम् ।
वाञ्छितं सर्वलोकानां भगवन् प्रतिगृह्यताम् ॥ ७५ ॥
वाञ्छनीयञ्च सर्वेषां कर्पूरादिसुवासितम् ।
मया निवेदितं नाथ ताम्बूलं प्रतिगृह्यताम् ॥ ७६ ॥
सर्वेषां प्रीतिजनकं सुमिष्टं मधुरं मधु ।
सद्रत्नसारपात्रस्थं गोपीकान्त प्रगृह्यताम् ॥ ७७ ॥
निर्मलं जाह्नवीतोयं सुपवित्रं सुवासितम् ।
पुनराचमनीयञ्च गृह्यतां मधुसूदन ॥ ७८ ॥
इति षोड़शोपचारान् दत्त्वा भक्तो मुदान्वितः ।
मन्त्रेणानेन पुष्पाणि माल्यं दत्त्वा प्रयत्नतः ॥ ७९ ॥
नानाप्रकारपुष्पैश्च ग्रथितं शुक्लतन्तुना ।
प्रवरं भूषणानाञ्च माल्यञ्च गृह्यतां प्रभो ॥ ८० ॥
इति पुष्पाञ्जलिं दद्यान्मूलमन्त्रेण च व्रती ।
कुर्य्यात्ततस्तवनं भक्त्या पुटाञ्जलियुतः सुधीः ॥ ८१ ॥

भक्त उवाच ।

हे कृष्ण राधिकानाथ करुणासागर प्रभो ।
संसारसागरे घोरे मामुद्धर भयानके ॥ ८२ ॥
शतजन्मकृतायाससादुद्विग्नस्य मम प्रभो ।
स्वकर्मपाशनिगडैर्बद्धस्य मोचनं कुरु ॥ ८३ ॥
प्रणतं पादपद्मे ते पश्य मां शरणागतम् ।
भवपाशभयाद्भीतं पाहि त्वं शरणागतम् ॥ ८४ ॥
भक्तिहीनं क्रियाहीनं विधिहीनञ्च वेदतः ।
वस्तु मन्त्रविहीनं यत्तत् सम्पूर्णं कुरु प्रभो ॥ ८५ ॥
वेदोक्तविहिताज्ञानात् स्वाङ्गहीने च कर्मणि ।
त्वन्नामोच्चरणेनैव सर्वं पूर्णं भवेद्धरे ॥ ८६ ॥
इति स्तुत्वा तं प्रणम्य दत्त्वा विप्राय दक्षिणाम् ।
महोत्सवं विधायाथ कुर्य्याज्जागरणं व्रती ॥ ८७ ॥
कृत्वा व्रतोपवासञ्च यदि निद्रां निषेवते ।
पुनरेव जलं भुङ्क्ते व्रतार्धफलभाग्भवेत् ।
यत्नेन च हविष्यान्नं सकृदेव समाचरेत् ।
मन्त्रेणानेन विप्रेन्द्र श्रीकृष्णचरणं स्मरन् ॥ ८८ ॥
अन्नं हि प्राणिनां प्राणा ब्रह्मणा निर्मितं पुरा ।
देहि मे विष्णुरूपं त्वं व्रतोपवासयोः फलम् ॥ ९० ॥
एवं यः कुरुते भक्त्या भारते व्रतमुत्तमम् ।
पूर्वान् सप्त परान् सप्त स्वात्मानमुद्धरेद् ध्रुवम् ॥ ९१ ॥
मातरं भ्रातरञ्चैव श्वश्रूञ्च श्वशुरं सुताम् ।
जामातरं तथा भृत्यमुद्धरेन्निश्चितं नरः ॥ ९२ ॥
इत्येवं कथितं विप्र श्रीकृष्णचरितव्रतम् ।

सुखदं मोक्षदं सारमपरं कथयामि ते ॥ ८१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
एकादशीव्रतनिरूपणं नाम
षड्विंशोऽध्यायः ।

---

## सप्तविंशोऽध्यायः ।

---

श्रीनारायण उवाच ।

शृणु नारद वक्ष्यामि श्रीकृष्णचरितं पुनः ।
गोपीनां वस्त्रहरणं वरदानं मनीषितम् ॥ १ ॥
हेमन्ते प्रथमे मासि गोपिकाः काममोहिताः ।
कृत्वा हविष्यं भक्त्या च यावन्मासं सुसंयुताः ॥ २ ॥
स्नात्वा सूर्य्यसुतातीरे पार्वतीं वालुकामयीम् ।
कृत्वावाह्य च मन्त्रेण पूजां कुर्वन्ति नित्यशः ॥ ३ ॥
चन्दनागुरुकस्तूरीकुङ्कुमैश्च मनोहरैः ।
नानाप्रकारपुष्पैश्च माल्यैर्बहुविधैरपि ॥ ४ ॥
धूपैर्दीपैश्च नैवेद्यैर्वस्त्रैर्नानाफलैर्मुने ।
मणिमुक्ताप्रवालैश्च वाद्यैर्नानाविधैरपि ॥ ५ ॥
हे देवि जगतां मातः सृष्टिस्थित्यन्तकारिणि ।
नन्दगोपसुतं कान्तमस्मभ्यं देहि सुव्रते ॥ ६ ॥
मन्त्रेणानेन देवेशीपरिहारं विधाय च ।
ततः कृत्वा तु संकल्पं पूजयन्मूलमन्त्रतः ॥ ७ ॥

मन्त्रस्तु सामवेदोक्तोऽयातयामः सवीजकः ।
ओं श्रीदुर्गायै सर्वविघ्नविनाशिन्यै नम इति ॥ ८ ॥
पुष्पं माल्यञ्च नैवेद्यं धूपं दीपं तथांशुकम् ।
मन्त्रेणानेन तां भक्त्या ददुः सर्वा मुदान्विताः ॥ ९ ॥
प्रवालमालया भक्त्या चेमं मन्त्रं सहस्रधा ।
जपं कृत्वा च स्तुत्वा च प्रणेमुः शिरसा भुवि ॥ १० ॥
सर्वमङ्गलमङ्गल्ये सर्वकामप्रदे शिवे ।
देहि मे वाञ्छितं देवि नमस्ते शङ्करप्रिये ॥ ११ ॥
इत्युक्त्वा च नमस्कारं कृत्वा दत्त्वा च दक्षिणाम् ।
नैवेद्यानि च सर्वाणि ब्राह्मणेभ्यो ययुर्गृहम् ॥ १२ ॥

श्रीनारायण उवाच ।

स्तवराजं शृणु मुने तुष्टुवुर्येन पार्वतीम् ।
भक्त्या गोपाङ्गनाः सर्वाः सर्वाभीष्टफलप्रदाम् ॥ १३ ॥
जगत्येकार्णवे घोरे चन्द्रसूर्य्यविवर्जिते ।
अञ्जनाकारतोयेन संप्लुते च चराचरे ॥ १४ ॥
दत्तं पुरा ब्रह्मणे च हरिणा जलशायिना ।
तस्मै दत्त्वा सर्वमिदं निद्रां भेजे जगत्पतिः ॥ १५ ॥
नाभिपद्मे जगत्स्रष्टा मधुना कैटभेन च ।
पीड़ितः परितुष्टाव मूलप्रकृतिमीश्वरीम् ॥ १६ ॥

ओं नमो जयदुर्गायै ।

ब्रह्मोवाच ।

दुर्गे शिवेऽभये माये नारायणि सनातनि ।
जये मे मङ्गलं देहि नमस्ते सर्वमङ्गले ॥ १७ ॥
दैत्यनाशार्थवचनो दकारः परिकीर्तितः ।

उकारो विघ्ननाशार्थवाचको वेदसम्मतः ॥ १८ ॥
रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः ।
भयशत्रुघ्नवचनश्चाकारः परिकीर्त्तितः ॥ १९ ॥
स्मृत्युक्तिस्मरणाद्यस्या एते नश्यन्ति निश्चितम् ।
अतो दुर्गा हरेः शक्तिर्हरिणा परिकीर्त्तिता ॥ २० ॥
विपत्तिवाचको दुर्गश्चाकारो नाशवाचकः ।
दुर्गं नश्यति या नित्यं सा दुर्गा परिकीर्त्तिता ॥ २१ ॥
दुर्गो दैत्येन्द्रवचनोऽप्याकारो नाशवाचकः ।
तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्त्तिता ॥ २२ ॥
शश्च कल्याणवचन इकारोत्कृष्टवाचकः ।
समूहवाचकश्चैव वाकारो दातृवाचकः ॥ २३ ॥
श्रेयःसंघोत्कृष्टदात्री शिवा तेन प्रकीर्त्तिता ।
शिवराशिर्मूर्त्तिमती शिवा तेन प्रकीर्त्तिता ॥ २४ ॥
शिवो हि मोक्षवचनश्चाकारो दातृवाचकः ।
स्वयं निर्वाणदात्री या सा शिवा परिकीर्त्तिता ॥२५॥
अभयो भयनाशोक्तश्चाकारो दातृवाचकः ।
प्रददात्यभयं सद्यः साभया परिकीर्त्तिता ॥ २६ ॥
राजश्रीवचनो माश्च याश्च प्रापणवाचकः ।
तां प्रापयति या सद्यः सा माया परिकीर्त्तिता ॥२७॥
माश्च मोक्षार्थवचनो याश्च प्रापणवाचकः ।
तं प्रापयति या नित्यं सा माया परिकीर्त्तिता ॥२८॥
नारायणार्धाङ्गभूता तेन तुल्या च तेजसा ।
तदा तस्य शरीरस्था तेन नारायणी स्मृता ॥ २९ ॥
निर्गुणस्य च नित्यस्य वाचकश्च सनातनः ।

सदा नित्या निर्गुणा या कीर्त्तिता सा सनातनी ॥३०॥
जयः कल्याणवचनो याकारो दातृवाचकः ।
जयं ददाति या नित्यं सा जया परिकीर्त्तिता ॥३१॥
सर्वमङ्गलशब्दश्च संपूर्णैश्वर्य्यवाचकः ।
आकारो दातृवचनस्तद्दात्री सर्वमङ्गला ॥ ३२ ॥
नामाष्टकमिदं सारं नामार्थसहसंयुतम् ।
नारायणेन यद्दत्तं ब्रह्मणे नाभिपङ्कजे ॥ ३३ ॥
तस्मै दत्त्वा निद्रितश्च बभूव जगतां पतिः ।
मधुकैटभौ दुर्गान्तौ ब्रह्माणं हन्तुमुद्यतौ ॥ ३४ ॥
स्तोत्रेणानेन स ब्रह्मा स्तुतिं नत्वा चकार ह ।
साक्षात् स्तुता तदा दुर्गा ब्रह्मणे कवचं ददौ ॥ ३५ ॥
श्रीकृष्णकवचं दिव्यं सर्वरक्षणनामकम् ।
दत्त्वा तस्मै महामाया सान्तर्धानं चकार ह ॥३६॥
स्तोत्रं कुर्वन्ति निद्राञ्च संरक्ष्य कवचेन वै ।
निद्रानुग्रहतः सद्यः स्तोत्रस्यैव प्रभावतः ॥ ३७ ॥
तत्राजगाम भगवान् वृषरूपी जनार्दनः ।
शक्त्या च दुर्गया सार्धं शङ्करस्य जयाय च ॥ ३८ ॥
सरथं शङ्करं मूर्ध्नि कृत्वा च निर्भयं ददौ ।
अत्यूर्ध्वं प्रापयामास जया तस्मै जयं ददौ ॥ ३९ ॥
स्तोत्रस्यैव प्रभावेन संप्राप्य कवचं विधिः ।
वरञ्च कवचं प्राप्य निर्भयं प्राप निश्चितम् ॥ ४० ॥
ब्रह्मा ददौ महेशाय स्तोत्रञ्च चवचं वरम् ।
त्रिपुरस्य च संग्रामे सरथे पतिते हरौ ॥ ४१ ॥
ब्रह्मास्त्रञ्च गृहीत्वा स सनिद्रं श्रीहरिं स्मरन् ।

स्तोत्रञ्च कवचं प्राप्य जघान त्रिपुरं हरः ॥ ४२ ॥
स्तोत्रेणानेन तां दुर्गां कृत्वा गोपालिकाः स्तुतिम् ।
लेभिरे श्रीहरिं कान्तं स्तोत्रस्यास्य प्रभावतः ॥ ४३ ॥
गोपकन्याकृतं स्तोत्रं सर्वमङ्गलनामकम ।
वाञ्छितार्थप्रदं सद्यः सर्वविघ्नविनाशनम् ॥ ४४ ॥
त्रिसन्ध्यं यः पठेन्नित्यं भक्तियुक्तश्च मानवः ।
शैवो वा वैष्णवो वापि शाक्तो दुर्गात् प्रमुच्यते ॥ ४५॥
राजद्वारे श्मशाने च दावाग्नौ प्राणसङ्कटे ।
हिंस्रजन्तुभयग्रस्तो मग्नः पोते महार्णवे ॥ ४६ ॥
शत्रुग्रस्ते च संग्रामे कारागारे विपद्गते ।
गुरुशापे ब्रह्मशापे बन्धुभेदे च दुस्तरे ॥ ४७ ॥
स्थानभ्रष्टे धनभ्रष्टे जातिभ्रष्टे शुचान्विते ।
पतिभेदे पुत्रभेदे खलसर्पविषान्विते ॥ ४८ ॥
स्तोत्रस्मरणमात्रेण सद्यो मुच्येत निर्भयः ।
वाञ्छितं लभते सद्यः सर्वैश्वर्य्यमनुत्तमम् ॥ ४९ ॥
इहलोके हरेर्भक्तिं दृढाञ्च सततं स्मृतिम् ।
अन्ते दास्यञ्च लभते पार्वत्याश्च प्रसादतः ॥ ५० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे
गोपकन्याकृतं सर्वमङ्गलस्तोत्रं समाप्तम् ।

---

अनेन स्तवराजेन तुष्टुवुर्नित्यमीश्वरीम् ।
प्रणेमुः परया भक्त्या यावन्मासं व्रजाङ्गनाः ॥५१॥
एवं पूर्णे च मासे च समाप्तिदिवसे तथा ।
स्नातुं प्रजग्मुर्गोप्यश्च वस्त्राण्याधाय तत्तटे ॥ ५२ ॥

नानाविधानि द्रव्याणि रत्नमूल्यानि नारद ।
पीतलोहितशुक्लानि चारूणि मिश्रितानि च ॥५३॥
तीरावृतान्यसंख्यानि तैश्च तीरं सुशोभनम् ।
चन्दनागुरुकस्तूरीवायुना सुरभीकृतम् ॥ ५४ ॥
नैवेद्यैश्च बहुविधैः कालदेशोद्भवैः फलैः ।
धूपैः प्रदीपैः सिन्दूरैः कुङ्कुमैश्च विराजितम् ॥ ५५ ॥
जले क्रीडोन्मुखा गोप्यो बभूवुः कौतुकेन च ।
नग्नाः क्रीडाभिरासक्ताः श्रीकृष्णार्पितमानसाः ॥५६॥
दृष्ट्वा कृष्णश्च वस्त्राणि द्रव्याणि विविधानि च ।
वासांस्यादाय वस्तूनि चखाद शिशुभिः सह ॥ ५७ ॥
गत्वा दूरञ्च गोपालास्तस्थुः सर्वे मुदान्विताः ।
वस्त्राणि पुञ्जीकृत्यादौ ऊचुः स्कन्धेऽतिलोलुपाः ।५८॥
श्रीदामा च सुदामा च वसुदामा तथैव च ।
सुबलश्च सुपार्श्वश्च शुभाङ्गः सुन्दरस्तथा ॥ ५९ ॥
चन्द्रभानो वीरभानः सूर्य्यभानस्तथैव च ।
वसुभानो रत्नभानो गोपाला द्वादश स्मृताः ॥ ६० ॥
श्रीकृष्णो बलदेवश्च प्रधानाश्च चतुर्दश ।
गोपा हरेर्वयस्याश्च कोटिशः कोटिशो मुने । ६१ ॥
वस्त्राण्यादाय ते सर्वे तस्थुरेकत्र दूरतः ।
शतशः पुञ्जिकास्तत्र स्थापयामासुरुन्मुखाः ॥ ६२ ॥
किञ्चिद्वस्त्रं समादाय कृत्वा च पुञ्जिकां मुदा ।
समारुह्य कदम्बाग्रमुवाच गोपिकां हरिः ॥ ६३ ॥

श्रीकृष्ण उवाच ।

भो भो गोपालिकाः सर्वा विनष्टा व्रतकर्म्मणि ।

कृत्वा विधानं महाक्यं श्रुत्वा क्रीड़त मन्मथात् ॥६४॥
सङ्कल्पिते व्रतार्हे च मासे मङ्गलकर्मणि ।
यूयं नग्नाः कथं ताये व्रताङ्गहानिकारिकाः ॥६५॥
परिधेयानि वासांसि पुष्पमाल्यानि यानि च ।
व्रतार्हाणि च वस्तूनि केन नीतानि वोऽधुना ।६६॥
व्रते तु नग्ना यास्नाति तां रुष्टो वरुणः स्वयम् ।
वरुणानुचरा वासश्चक्रुर्वस्तुविनिर्हृतिम् ॥ ६७ ॥
कथं यास्यथ नग्नाश्च व्रतस्य किं भविष्यति ।
व्रताराध्या कथं सा च वस्तूनि किं न रक्षति ॥६८॥
चिन्तां कुरुत तां पूज्यां तुष्टाव बलिरीश्वरीम् ।
युष्माकमीदृशी देवी न शक्ता वसुरक्षणे ॥ ६९ ॥
कथं व्रतफलं सा वो दातुं शक्ता सुरेश्वरी ।
फलं प्रदातुं या शक्ता सा शक्ता सर्वकर्मणि ॥७०॥
श्रीकृष्णस्य वचः श्रुत्वा चिन्तामापुर्व्रजस्त्रियः ।
दृदृशुर्यमुनातीरं वस्त्रवस्तुविहीनकम् ॥ ७१ ॥
चक्रुर्विषादं तोये च नग्नास्ता रुरुदुर्भृशम् ।
क्व गतानि च वस्त्राणि वस्तूनीत्यूचुरत्र नः ॥ ७२ ॥
कृत्वा विषादं तत्रैव तमूचुर्गोपकन्यकाः ।
पुटाञ्जलियुताः सर्वा भक्त्या विनयपूर्वकम् ॥ ७३ ॥

गोपालिका ऊचुः ।

परिधेयानि वस्त्राणि किंकरीणां सदीश्वर ।
निबोधयात्मानमेव स्पर्शं कर्त्तुं त्वमर्हसि ॥ ७४ ॥
व्रतार्हाणि च वस्तूनि देवस्वानि च साम्प्रतम् ।
अदत्तानि नोचितानि गृहीतुं वेदविद्वद ॥ ७५ ॥

देहि धौतानि धृत्वा च करिष्यामो व्रतं वयम् ।
रम्भुनान्येन गोविन्द वस्तूनां भक्षणं कुरु ॥ ७६ ॥
एतस्मिन्नन्तरे तत्र श्रीदामा वस्त्रपुञ्जिकाम् ।
दर्शयित्वा च ताः सर्वा दूरं दुद्राव तत्पुरः ॥ ७७ ॥
दृष्ट्वा सवस्त्रं गोपालं सर्वासामीश्वरी परा ।
सर्वा वयस्याश्चोवाच कोपयुक्ता जलप्लुता ॥ ७८ ॥

श्रीराधिकोवाच ।

हे सुशीले शशिकले हे चन्द्रमुखि माधवि ।
कदम्बमाले हे कुन्ति यमुने सर्वमङ्गले ॥ ७९ ॥
हे पद्ममुखि सावित्रि पारिजाते च जाह्नवि ।
सुधामुखि शुभे पद्मे हे गौरि हे स्वयंप्रभे ॥ ८० ॥
कालिके कमले दुर्गे हे सरस्वति भारति ।
अपर्णे रति हे गङ्गे चाम्बिके सति सुन्दरि ॥ ८१ ॥
कृष्णप्रिये मधुमति चम्पे चन्दननन्दिनि ।
यूयं सर्वाः समुत्थाय बध्वानयत वल्लभम् ॥ ८२ ॥
सर्वा राधाज्ञया तूर्णं समुत्थाय जलात् क्रुधा ।
प्रजग्मुर्गोपिका नग्ना योनिमाच्छाद्य पाणिना ॥८३॥
एतासां सहचारिण्यो गोप्यस्तूर्णं सहस्रशः ।
प्रजग्मुस्तेन रूपेण कोपादारक्तलोचनाः ॥ ८४ ॥
वेगेन दुद्रुवुः सर्वाः श्रीदामानञ्च बालिकाः ।
वेगेन च प्रधावन्तं बिभ्रन्तं वस्त्रपुञ्जिकाम् ॥ ८५॥
जगाम शीघ्रं श्रीदामा यत्र गोपाः सहांशुकाः ।
जवेन दुद्रुवुर्गोप्यस्तत्पश्चाद्दलसंयुताः ॥ ८६ ॥
वस्त्रचोरांश्च गोपांश्च वेष्टयामासुराशु ताः ।

भिया प्रदुद्रुवुर्बाला यत्र कृष्णः सहांशुकः ॥ ८७ ॥
श्रीकृष्णसहितान् बालान् वरयामासुराशु च ।
गोपिकानां भिया गोपा ददुर्वस्त्राणि माधवम् ॥८८॥
माधवः स्थापयामास स्कन्धे स्कन्धे तरोस्तथा ।
कदम्बवृक्षः शुशुभे वस्त्रैर्नानाविधैरपि ॥ ८९ ॥
वस्त्राणां पुञ्जिकाः सर्वाः स्कन्धेषु विनिधाय च ।
उवाच गोपिकाः कृष्णः परिहासपरं वचः ॥ ९० ॥

श्रीकृष्ण उवाच ।

भो भो गोपालिका नग्ना इदानीं किं करिष्यथ ।
वस्त्रयाच्ञां प्रकर्तुञ्च कुरुताशु पुटाञ्जलिम् ॥ ९१ ॥
गत्वा वदत युष्माकमीश्वरीमद्य राधिकाम् ।
करोतु शीघ्रं वस्त्राणि याच्ञां कृत्वा पुटाञ्जलिम् ॥९२॥
अन्यथाहं न दास्यामि युष्मभ्यमंशुकानि च ।
युष्माकमीश्वरी राधा किं करिष्यति मेऽधुना ॥ ९३ ॥
मताराध्या च या देवी सा वा मे किं करिष्यति ।
इत्येवं कथितं सर्वं ब्रूत यूयञ्च राधिकाम् । ९४ ।
श्रीकृष्णवचनं श्रुत्वा ताः सर्वा गोपकन्यकाः ।
वीक्ष्य लोचनकोणेन प्रजग्मू राधिकान्तिकम् । ९५ ॥
चक्रुर्निवेदनं गत्वा यदुवाच हरिः स्वयम् ।
श्रुत्वा जहास सा राधा बभूव कामपीड़िता ॥ ९६ ॥
श्रुत्वा तासाञ्च वचनं पुलकाञ्चितविग्रहा ।
न जगाम हरेः स्थानं व्रीड़या सस्मिता सती ॥ ९७ ॥
जले योगासनं कृत्वा दध्यौ कृष्णपदाम्बुजम् ।
ब्रह्मेशानन्तु धर्माणां वन्द्यमीप्सितदं परम् ॥ ९८ ॥

स्मारं स्मारं पदाम्भोजं साश्रुसम्पूर्णलोचना ।
भावातिरेकात्प्राणेशन्तुष्टाव निर्गुणं परम् ॥ ९९ ॥

राधिकोवाच ।

गोलोकनाथ गोपीश मदीश प्राणवल्लभ ।
हे दीनबन्धो दीनेश सर्वेश्वर नमोऽस्तु ते ॥ १०० ॥
गोपेश गोसमूहेश यशोदानन्दवर्धन ।
नन्दात्मज सदानन्द नित्यानन्द नमोऽस्तु ते ॥ १०१ ॥
शतमन्योर्मन्युभग्न ब्रह्मदर्पविनाशक ।
कालीयदमन प्राणनाथ कृष्ण नमोऽस्तु ते ॥ १०२ ॥
शिवानन्तेश ब्रह्मेश ब्राह्मणेश परात्पर ।
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मबीज नमोऽस्तु ते ॥ १०३ ॥
चराचरतरोर्बीज गुणातीत गुणात्मक ।
गुणबीज गुणाधार गुणेश्वर नमोऽस्तु ते ॥ १०४ ॥
अणिमादिकसिद्धीश सिद्धेसिद्धिस्वरूपक ।
तपस्तपस्विन्तपसां बीजरूप नमोऽस्तु ते ॥ १०५ ॥
यदनिर्वचनीयञ्च वस्तुनिर्वचनीयकम् ।
तत्स्वरूप तयोर्बीज सर्वबीज नमोस्तु ते ॥ १०६ ॥
अहं सरस्वती लक्ष्मीर्दुर्गा गङ्गा श्रुतिप्रसूः ।
यस्य पादार्चनान्नित्यं पूज्या तस्मै नमो नमः ॥१०७॥
स्पर्शने यस्य भृत्यानां ध्यानेन च दिवानिशम् ।
पवित्राणि च तीर्थानि तस्मै भगवते नमः ॥ १०८ ॥
इत्येवमुक्त्वा सा देवी जले संन्यस्य विग्रहम् ।
मनः प्राणांश्च श्रीकृष्णे तस्थौ स्थाणुसमा सती ॥१०९॥

राधाकृतं हरेः स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः ।
हरिभक्तिञ्च दास्यञ्च लभेद्राधागतिं ध्रुवम् ॥ ११० ॥
विपत्तौ यः पठेद्भक्त्या सद्यः सम्पत्तिमाप्नुयात् ।
चिरकालगतं द्रव्यं हृतं नष्टञ्च लभ्यते ॥ १११ ॥
बन्धुवृद्धिर्भवेत्तस्य प्रसन्नं मानसं परम् ।
चिन्ताग्रस्तः पठेद्भक्त्या परां निर्वृतिमाप्नुयात् ॥११२॥
पतिभेदे पुत्रभेदे मित्रभेदे च सङ्कटे ।
मासं भक्त्या यदि पठेत्सद्यः स दर्शनं लभेत् ॥११३॥
भक्त्या कुमारी स्तोत्रञ्च शृणुयाद्वत्सरं यदि ।
श्रीकृष्णसदृशं कान्तं गुणवन्तं लभेद् ध्रुवम् ॥११४॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे
राधाकृतं श्रीकृष्णस्तोत्रं समाप्तम् ।

जलस्था राधिका ध्यात्वा श्रीकृष्णचरणाम्बुजम् ।
स्तुत्वैवञ्चक्षुरुन्मील्य दृष्ट्वा कृष्णमयं जगत् ॥ ११५ ॥
ददर्श यमुनातीरं वस्त्रद्रव्यमयं मुने ।
दृष्ट्वा तन्द्राथवा स्वप्नमिति मेने च राधिका ॥ ११६ ॥
यत्र स्थाने यदाधारे यद् द्रव्यं संस्थितं पुरा ।
वस्त्रैश्च सहितं सर्वं तत्रापुर्गोपकन्यकाः ॥ ११७ ॥
जलादुत्थाय ताः सर्वा व्रतं कृत्वा मनीषितम् ।
संप्राप्य च वरं देव्यस्ताः सर्वाः स्वालयं ययुः ॥ ११८ ॥

नारद उवाच ।

व्रतस्य किं विधानञ्च किं नाम किं फलं प्रभो ।
कानि द्रव्याणि देयानि का देया तत्र दक्षिणा ॥११९॥

व्रतान्ते किं रहस्यञ्च बभूव सुमनोहरम्।
व्यासं कृत्वा महाभाग वद नारायणीं कथाम् ॥१२०॥

सूत उवाच।

नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः।
कथां कथितुमारेभे कवीन्द्राणां गुरोर्गुरुः॥ १२१ ॥

नारायण उवाच।

सर्वं व्रतविधानञ्च मत्तो वत्स निशामय।
ख्यातं गौरीव्रतं नाम मार्गे मासि कृतं स्त्रिया ॥१२२॥
पुंसाञ्च धर्मकामार्थमोक्षदं कृष्णभक्तिदम्।
देशभेदे प्रसिद्धञ्च व्रतं पौर्वापरं स्मृतम्॥ १२३ ॥
कामदं कामुकानाञ्च फलं कान्तनिमित्तकम्।
उपोष्य पूर्वदिवसे वस्त्रं प्रक्षाल्य संयता॥ १२४ ॥
प्रातश्च मार्गसंक्रान्त्यां भक्त्या गत्वा सरित्तटम्।
धृत्वा धौते च स्नात्वा च नानाद्रव्येण कन्यका ॥१२५॥
देवषट्कञ्च सम्पूज्य कृत्वा चावाहनं घटे।
गणेशञ्च दिनेशञ्च वह्निं नारायणं शिवम्॥ १२६ ॥
दुर्गां पञ्चोपचारैश्च सम्पूज्य व्रतमारभेत्।
घटाधः पिण्डिकां कृत्वा चतुरस्रां सुविस्तृताम्।
चन्दनागुरुकस्तूरीकुङ्कुमैश्च सुसंस्कृताम्॥ १२७ ॥
निर्माय वालुकानाञ्च दुर्गां दशभुजां पराम्।
धृत्वा कपाले सिन्दूरं तदधश्चन्दनेन्दुकम्॥ १२८ ॥
तां ध्यात्वावाहयेद्देवीं ततो भूत्वा पुटाञ्जलिः।
इमं मन्त्रं पठित्वादौ ततः पूजां समारभेत्॥ १२९ ॥

हे गौरि शङ्कराधाङ्गि यथा त्वं शङ्करप्रिया।
तथा मां कुरु कल्याणि कान्तकान्तां सुदुर्लभाम् ॥१३०॥
इमं मन्त्रं पठित्वा तु ध्यायेद्देवीं जगत्प्रसूम्।
ध्यानं तत्सामवेदोक्तं निगूढ़ं सर्वकामदम् ॥ १३१ ॥
शृणु नारद वक्ष्यामि मुनीन्द्राणाञ्च दुर्लभम्।
ध्यायन्त्यनेन सिद्धाश्च दुर्गां दुर्गतिनाशिनीम् ॥ १३२ ॥
शिवां शिवप्रियां शैवां शिववक्षःस्थलस्थिताम्।
ईषद्धास्यप्रसन्नास्यां सुप्रतिष्ठां सुलोचनाम् ॥ १३३ ॥
नवयौवनसम्पन्नां रत्नाभरणभूषिताम्।
रत्नकङ्कणकेयूररत्ननूपुरभूषिताम् ॥ १३४ ॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम्।
मालतीमाल्यसंसक्तकवरीं भ्रमरान्विताम् ॥ १३५ ॥
सिन्दूरतिलकं चारु कस्तूरीबिन्दुना सह।
वह्निशुद्धांशुकां रत्नकिरीटां सुमनोहराम् ॥ १३६ ॥
मणीन्द्रसारसंसक्तरत्नमालासमुज्ज्वलाम्।
पारिजातप्रसूनानां मालाजालानुलम्बिताम् ॥१३७॥
सुपीनकठिनश्रोणीं बिभ्रतीञ्च स्तनानताम्।
नवयौवनभारोघाद्दीषन्नम्रां मनोहराम् ॥ १३८ ॥
ब्रह्मादिभिस्तूयमानां सूर्य्यकोटिसमप्रभाम्।
पक्वबिम्बाधरोष्ठीञ्च चारुचम्पकसन्निभाम् ॥ १३९ ॥
मुक्तापङ्क्तिविनिन्द्यैकदन्तराजिविराजिताम्।
मुक्तिकामप्रदां देवीं शरच्चन्द्रमुखीं भजे ॥ १४० ॥
ध्यात्वैवं मस्तके पुष्पं विन्यस्य च व्रती मुदा।
पुष्पं गृहीत्वा भक्त्या च पुनर्ध्यात्वा च पूजयेत् ॥१४१॥

दत्त्वा षोड़शोपचारान् प्रहृष्टं तत्र नित्यशः।
पूर्वोक्तेनैव मन्त्रेण मुदा भक्त्या व्रते व्रती ॥ १४२ ॥
पूर्वोक्तेनैव स्तोत्रेण स्तुत्वा च प्रणमेत्तदा।
कृत्वा प्रणामं भक्त्या च संयतः शृणुयात्कथाम् ॥१४३॥

नारद उवाच।

व्रतं व्रतविधानञ्च फलञ्च स्तोत्रमद्भुतम्।
अधुना श्रोतुमिच्छामि गौरीव्रतकथां शुभाम् ॥१४४॥
व्रतं केन कृतं पूर्वं भूमौ केन प्रकाशितम्।
एतत्सर्वं सुविस्तार्य्य व्रतसन्देहभञ्जन ॥ १४५ ॥

श्रीनारायण उवाच।

कुशध्वजस्य हि सुता नाम्ना वेदवती सती।
तया कृतं व्रतमिदं महातीर्थे च पुष्करे ॥ १४६ ॥
समाप्तिदिवसे साक्षाद्बभूव जगदम्बिका।
योगिनीलक्षसंयुक्ता सूर्य्यकोटिसमप्रभा ॥ १४७ ॥
शातकुम्भविनिर्माणरथस्था परमेश्वरी।
ईषद्धास्यप्रसन्नास्या तामुवाच सुसंयताम् ॥ १४८ ॥

पार्वत्युवाच।

हे वेदवति भद्रन्ते वरं वृणु यथेप्सितम्।
तव व्रतेन तुष्टाहन्तुभ्यं दास्यामि वाञ्छितम् ॥ १४९ ॥
पार्वतीवचनं श्रुत्वा दृष्ट्वा तां हृष्टमानसाम्।
पुटाञ्जलियुता साध्वी प्रणम्योवाच नारद ॥ १५० ॥

वेदवत्युवाच।

देवि नारायणं कान्तं मह्यं देहि मनीषितम्।
वरेऽन्यस्मिन् स्पृहा नास्ति दृढ़ां भक्तिञ्च तत्पदे ॥१५१॥

श्रुत्वा वेदवतीवाक्यं प्रहस्य जगदम्बिका ।
अवरुह्य रथात्तूर्णं तामुवाच हरिप्रियाम् ॥ १५२ ॥

पार्वत्युवाच ।

ज्ञातं सर्वं जगन्मातस्त्वञ्च लक्ष्मीः स्वयं सती ।
भारतं पादरजसा पूतं कर्तुं समागता ॥ १५३ ॥
त्वत्पादरजसा साध्वी सद्यः पूता वसुन्धरा ।
निखिलानि च तीर्थानि पूतानि परमेश्वरि ॥ १५४ ॥
व्रतन्ते लोकशिक्षार्थं तपश्चर तपस्विनि ।
नारायणस्य कान्ता त्वं प्रिया जन्मनि जन्मनि ॥१५५॥
भारावतरणे विष्णुर्वसुधामागमिष्यति ।
रामो दाशरथिः पूर्णः कर्तुं दस्युविनिग्रहम् ॥ १५६ ॥
ब्रह्मशापाच्च तयोर्मोक्षणाय च भक्तयोः ।
अयोध्यायाञ्च त्रेतायामाविर्भावो हरेरपि ॥ १५७ ॥
त्वमेव मिथिलां गच्छ विधाय शिशुविग्रहम् ।
त्वामिमां प्राप्य जनकोऽप्ययोनिसम्भवां सुताम् ॥१५८॥
पालयिष्यति यत्नेन सीता त्वञ्च भविष्यसि ।
गत्वा रामोऽपि मिथिलां त्वां विवाहं करिष्यति ॥१५९
नारायणस्य कान्ता त्वं कल्पे कल्पे भविष्यसि ।
इत्युक्ता तां समालिङ्ग्य पार्वती स्वालयं ययौ ॥१६०॥
गत्वा सा मिथिलां साध्वी शिशुरूपं विधाय च ।
लाङ्गलस्य च रेखायां सुखात्तस्थौ च मायया ॥१६१॥
विलोक्य जनकस्ताञ्च नग्नां मुद्रितलोचनाम् ।
तप्तकाञ्चनवर्णाञ्च रुदन्तीं तेजसान्विताम् ॥ १६२ ॥
दृष्ट्वा ताञ्च गृहीत्वा च कृत्वा वक्षसि नारद ।

गच्छन्तं प्रति तत्रैव वाग् बभूवाशरीरिणी ॥ १६३ ॥
अयोनिसम्भवां कन्यां कमलाग्रहणं कुरु ।
नारायणस्ते जामाता भवितत्येवमेव च ॥१६४॥
श्रुत्वा तदा देववाणीं गृहीत्वा कन्यकामृषिः ।
गत्वा ददौ स्वकान्तायै पालनाय मुदान्वितः ॥१६५॥
सा लब्धयौवना प्राप रामं दाशरथिं सती ।
व्रतस्यास्य प्रभावेन कान्तं त्रिजगतां पतिम् ॥१६६॥
प्रकाशितं वशिष्ठेन पृथिव्यां भक्तिभावतः ।
राधा कृत्वा व्रतमिदं श्रीकृष्णप्राणवल्लभम् ॥१६७॥
गोपाङ्गनाश्च तं प्रापुर्व्रतस्यास्य प्रभावतः ।
इत्येवं कथिता विप्र कथा गौरीव्रतस्य च ॥१६८॥
भारते च व्रतमिदं या करोति कुमारिका ।
स्वामिनं कृष्णतुल्यञ्च सा प्राप्नोति न संशयः ॥ १६९ ॥

इति गौरीव्रतकथा समाप्ता ।

श्रीनारायण उवाच ।

एवं व्रतञ्च चक्रुस्ता यावन्मासञ्च गोपिकाः ।
पूर्वस्तोत्रेण तां देवीं तुष्टुवुश्च दिने दिने ॥ १७० ॥
समाप्तिदिवसे गोप्यो व्रतं कृत्वा मुदान्विताः ।
कण्वशाखोक्तस्तोत्रेण तुष्टुवुः परमेश्वरीम् ॥ १७१ ॥
येन स्तोत्रेण तां स्तुत्वा सीता सत्यपरायणा ।
सद्यः संप्राप कान्तञ्च रामं राजीवलोचनम् ॥१७२॥

जानक्युवाच ।

शक्तिस्वरूपे सर्वेषां सर्वाधारे गुणाश्रये ।
सदा शङ्करयुक्ते च पतिं देहि नमोऽस्तु ते ॥ १७३ ॥

सृष्टिस्थित्यन्तरूपेण सृष्टिस्थित्यन्तरूपिणि ।
सृष्टिस्थित्यन्तवीजानां वीजरूपे नमोऽस्तु ते ॥ १७४ ॥
हे गौरि पतिमर्म्मज्ञे पतिव्रतपरायणे ।
पतिव्रते पतिरते पतिं देहि नमोऽस्तु ते ॥ १७५ ॥
सर्वमङ्गलमङ्गल्ये सर्वमङ्गलसंयुते ।
सर्वमङ्गलवीजे च नमस्ते सर्वमङ्गले ॥ १७६ ॥
सर्वप्रिये सर्ववीजे सर्वाशुभविनाशिनि ।
सर्वेशे सर्वजनके नमस्ते शङ्करप्रिये ॥ १७७ ॥
परमात्मस्वरूपे च नित्यरूपे सनातनि ।
साकारे च निराकारे सर्वरूपे नमोऽस्तु ते ॥ १७८ ॥
क्षुत्तृष्णेच्छा दया श्रद्धा निद्रा तन्द्रा स्मृतिः क्षमा ।
एतास्तवकलाः सर्वा नारायणि नमोऽस्तु ते ॥ १७९ ॥
लज्जामेधातुष्टिपुष्टिशान्तिसम्पत्तिवृद्धयः ।
एतास्तव कलाः सर्वाः सर्वरूपे नमोऽस्तु ते ॥ १८० ॥
दृष्टादृष्टस्वरूपे च तयोर्वीजफलप्रदे ।
सर्वानिर्वचनीये च महामाये नमोऽस्तु ते ॥ १८१ ॥
शिवे शङ्करसौभाग्ययुक्ते सौभाग्यदायिनि ।
हरिं कान्तञ्च सौभाग्यं देहि देवि नमोऽस्तु ते ॥१८२॥
स्तोत्रेणानेन याः स्तुत्वा समाप्तिदिवसे शिवाम् ।
नमन्ति परया भक्त्या ता लभन्ति हरिं पतिम् ॥१८३॥
इह कान्तसुखं भुक्त्वा पतिं प्राप्य परात्परम् ।
दिव्यं स्यन्दनमारुह्य यान्त्यन्ते कृष्णसन्निधिम् ॥१८४॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे श्रीकृष्णजन्मखण्डे
राधाकृतं पार्वतीस्तोत्रं समाप्तम् ।

समाप्तिदिवसे राधा गोपीभिः सह संयुता।
देवीं प्रणम्य स्तुत्वा च व्रतं पूर्णञ्चकार ह ॥ १८५ ॥
गोसहस्रं ब्राह्मणाय सुवर्णशतकं मुदा।
विप्राय दक्षिणां दत्त्वा स्वगृहं गन्तुमुद्यताः ॥ १८६ ॥
ब्राह्मणानां सहस्रञ्च भोजयामास सादरम्।
वाद्यानि वादयामास भिक्षुकाय धनं ददौ ॥१८७॥
एतस्मिन्नन्तरे तत्र दुर्गा दुर्गतिनाशिनी।
आविर्बभूव गगनाज्ज्वलन्ती ब्रह्मतेजसा ॥ १८८ ॥
ईषद्धास्यप्रसन्नास्या योगिनीशतसंयुता।
सिंहस्था च दशभुजा रत्नालङ्कारभूषिता ॥ १८९ ॥
शातकुम्भमयाद्दिव्याद्रत्नसारपरिच्छदात्।
अवरुह्य रथात्तूर्णमालिलिङ्गोरसि राधिकाम् ॥ १९० ॥
दृष्ट्वा गोपाङ्गना देवीं प्रणेमुश्च मुदान्विताः।
आशिषं युयुजे दुर्गा वाञ्छासिद्धिर्भविष्यति ॥ १९१
गोपिकाभ्यो वरं दत्त्वा ताः सम्भाष्य च सादरम्।
उवाच राधिकां दुर्गा स्मेराननसरोरुहा ॥ १९२ ॥

पार्वत्युवाच।

राधे सर्वेश्वरप्राणादधिके जगदम्बिके।
व्रतन्ते लोकशिक्षार्थं मायामानुषरूपिणी ॥ १९३ ॥
गोलोकनाथं गोलोकं श्रीशैलं गिरिजातटम्।
श्रीरासमण्डलं दिव्यं वृन्दावनमनोहरम् ॥ १९४ ॥
चरितं रतिचोरस्य स्त्रीणां मानसहारकम्।
विदुषः कामशास्त्राणां किञ्चित् स्मरसि सुन्दरि ।१९५॥
श्रीकृष्णार्धाङ्गसम्भूता कृष्णतुल्या च तेजसा।

तवांशकलया देव्य: कथं त्वं मानुषी सती ॥१९६॥
भवती च हरे: प्राणा भवत्याश्च हरि: स्वयम्।
वेदे नास्ति द्वयोर्भेद: कथं त्वं मानुषी सती ॥ १९७ ॥
षष्टिवर्षसहस्राणि ब्रह्मा तप्ता तप: पुरा।
न ते ददर्श पादाब्जं कथं त्वं मानुषी सती ॥ १९८ ॥
कृष्णाज्ञया च त्वं देवी गोपीरूपं विधाय च।
आगतासि महीं शान्ते कथं त्वं मानुषी सती ॥१९९॥
सुयज्ञो हि नृपश्रेष्ठो मनुवंशसमुद्भव:।
त्वत्तो जगाम गोलोकं कथं त्वं मानुषी सती ॥२००॥
त्रि:सप्तकृत्वो निर्भूपां चकार पृथिवीं भृगु:।
तव मन्त्रेण कवचात्कथं त्वं मानुषी सती ॥ २०१ ॥
शङ्करात्प्राप्य त्वन्मन्त्रं सिद्धं कृत्वा च पुष्करे।
जघान कार्त्तवीर्य्यञ्च कथं त्वं मानुषी सती ॥ २०२ ॥
बभञ्ज दर्पाद्दन्तञ्च गणेशस्य महात्मन:।
त्वत्तो नाम भयं चक्रे कथं त्वं मानुषी सती॥ २०३ ॥
मय्युद्यतायां कोपेन भस्मसात्कर्तुमीश्वर:।
ररक्षागत्य मत्प्रीत्या कथं त्वं मानुषी सती ॥ २०४ ॥
कल्पे कल्पे तव पति: कृष्णो जन्मनि जन्मनि।
व्रतं लोकहितार्थाय जगन्मातस्त्वया कृतम् ॥ २०५ ॥
अहो श्रीदामशापेन भारावतरणेन च।
भूमौ तवाधिष्ठानञ्च कथं त्वं मानुषी सती ॥ २०६ ॥
अयोनिसम्भवा त्वञ्च जन्ममृत्युजरापहा।
कलावतीसुता पुण्या कथं त्वं मानुषी सती ॥ २०७
त्रिषु मासेष्वतीतेषु मधुमासे मनोहरे।

निर्जने निर्मले रात्रौ सुयोग्ये रासमण्डले ॥ २०८ ॥
सर्वाभिर्गोपिकाभिश्च सार्धं वृन्दावने वने।
हर्षेण हरिणा सार्धं क्रीड़ा ते भविता सति॥ २०९ ॥
विधात्रा लिखिता क्रीड़ा कल्पे कल्पे महीतले।
तव श्रीहरिणा सार्धं केन राधे निवार्य्यते॥ २१० ॥
यथा सौभाग्ययुक्ताहं हरस्य श्रीहरिप्रिये।
तथा सौभाग्ययुक्ता त्वं भव कृष्णस्य सुन्दरि॥ २११ ॥
यथा क्षीरेषु धावल्यं यथा वह्नौ च दाहिका।
भुवि गन्धो जले शैत्यं तथा कृष्णे स्थितिस्तव॥ २१२ ॥
दैवी वा मानुषी वापि गान्धर्वी राक्षसी तथा।
त्वत्तः परा च सौभाग्या न भूता न भविष्यति ॥२१३॥
परात्परो गुणातीतो ब्रह्मादीनाञ्च वन्दितः।
स्वयं कृष्णस्तवाधीनो मद्वरेण भविष्यति॥ २१४ ॥
ब्रह्मानन्ताद्यैराराध्यो भविता त्वद्वशः सति।
ध्यानासाध्यो दुराराध्यः सर्वेषामपि योगिनाम् ॥२१५॥
त्वञ्च भाग्यवती राधे स्त्रीजातिषु न ते परा।
कृष्णेन सार्द्धं पश्चात् त्वं गोलोकञ्च गमिष्यसि॥ २१६ ॥
इत्युक्त्वा पार्वती सद्यस्तत्रैवान्तर्दधे मुने।
सार्धं गोपालिकाभिश्च राधिका गन्तुमुद्यता ॥ २१७ ॥
एतस्मिन्नन्तरे कृष्णो जगाम राधिकापुरः।
राधा ददर्श श्रीकृष्णं किशोरं श्यामसुन्दरम् ॥ २१८ ॥
पीतवस्त्रपरीधानं नानालङ्कारभूषितम्।
आजानुमालतीमालावनमालाविभूषितम् ॥ २१९ ॥
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम्।

चन्दनोचितसर्वाङ्गं शरत्पङ्कजलोचनम् ॥ २२० ॥
शरत्पार्वणचन्द्रास्यं सद्रत्नमुकुटोज्ज्वलम् ।
पक्वदाड़िमबोजाभ दशनं सुमनोहरम् ॥ २२१ ॥
विनोदमुरलीहस्तन्यस्तलीलासरोरुहम् ।
कोटिकन्दर्पलावण्यलीलाधाम मनोहरम् ॥ २२२ ॥
गुणातीतं स्तूयमानं ब्रह्मानन्तशिवादिभिः ।
ब्रह्मस्वरूपं ब्राह्मण्यं श्रुतिभिश्च निरूपितम् ॥२२३॥
अव्यक्तमक्षरं व्यक्तं ज्योतीरूपं सनातनम् ।
मङ्गल्यं मङ्गलाधारं मङ्गलं मङ्गलप्रदम् ॥ २२४ ॥
दृष्ट्वा तदद्भुतं रूपं संभ्रमात् प्रणनाम तम् ।
तं दृष्ट्वा मूर्च्छिता राधा कामबाणप्रपीड़िता ॥२२५॥
दर्शं दर्शं मुखाम्भोजं सस्मिता वक्रलोचना ।
मुखमाच्छादयामास व्रीड़या च पुनः पुनः ॥२२६॥
दृष्ट्वा हरिस्तामुवाच प्रसन्नवदनेक्षणः ।
गोपालिकासमूहानां सर्वेषां पुरतः स्थितः ॥२२७॥

श्रीकृष्ण उवाच ।

प्राणाधिके राधिके त्वं वरं वृणु मनीषितम् ।
भो भो गोपालिकाः सर्वा वरं वृणुत वाञ्छितम् ॥२२८॥
कृष्णस्य वचनं श्रुत्वा वरं वव्रे च राधिका ।
गोपालिकाश्च प्रहृष्टाः सर्वशः कल्पपादपम् ॥२२९॥

राधिकोवाच ।

त्वत्पादाब्जे मन्मनोऽलिः सततं भ्रमतु प्रभो ।
पातु भक्तिरसं पद्मे मधुपश्च यथा मधु ॥ २३० ॥
मदीयप्राणनाथस्त्वं भव जन्मनि जन्मनि ।

त्वदीयचरणाम्भोजे देहि भक्तिं सुदुर्लभाम् ॥२३१॥
तव स्मृतौ गुणे चित्तं स्वप्ने ध्याने दिवानिशम् ।
भवेन्निमग्नं सततमेतन्मम मनीषितम् ॥ २३२ ॥

गोपालिका ऊचुः ।

यथा राधा तथा नश्च प्राणबन्धो दिवानिशम् ।
भविष्यसि प्राणनाथो रक्ष्यसि प्रतिजन्मनि ॥ २३३ ॥
आसाञ्च वचनं श्रुत्वा तथास्त्वेवमुवाच ह ।
प्रसन्नवदनः श्रीमान् यशोदानन्दवर्धनः ॥ २३४ ॥
क्रीड़ापद्मं राधिकायै सहस्रदलसंयुतम् ।
ललितां मालतीमालां ददौ प्रीत्या जगत्पतिः ॥२३५॥
मालासमूहं पुष्पाणि गोपीभ्यो गोपिकापतिः ।
प्रहस्य परमप्रीत्या प्रददावित्युवाच ह ॥ २३६ ॥

श्रीकृष्ण उवाच ।

त्रिषु मासेष्वतीतेषु यूयं क्रीड़ां मया सह ।
रासमण्डलरम्ये च वृन्दारण्ये करिष्यथ ॥ २३७ ॥
यथाहञ्च तथा यूयं न हि भेदः श्रुतौ श्रुतः ।
प्राणा अहञ्च युष्माकं यूयं प्राणा मम प्रभो ॥ २३८ ॥
व्रतं वो लोकरक्षार्थं न हि स्वार्थमिदं प्रियाः ।
सहागताश्च गोलोकाद्गमनञ्च मया सह ॥ २३९ ॥
गच्छत स्वालयं शीघ्रं वोऽहं जन्मनि जन्मनि ।
प्राणेभ्योऽपि गरीयस्यो यूयं मे नात्र संशयः ॥२४०॥
इत्युक्त्वा श्रीहरिस्तत्र तस्थौ सूर्य्यसुतातटे ।
तस्थुर्गोपालिकाः सर्वा वीक्ष्य कृष्णं पुनः पुनः ॥२४१॥
सर्वाः प्रहृष्टवदनाः सस्मिता वक्रलोचनाः ।

प्रीत्या चक्षुश्चकोराभ्यां मुखचन्द्रं पपुर्हरेः ॥ २४२ ॥
ताः शीघ्रं प्रययुर्गेहं नयं दत्त्वा पुनः पुनः ।
हरिश्च शिशुभिः सार्धं प्रसन्नः स्वालयं ययौ ॥२४३॥
इत्येवं कथितं सर्वं हरेश्चरितमङ्गलम् ।
गोपीनां वस्त्रहरणं सर्वलोकसुखावहम् ॥ २४४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे गोपिकावस्त्रहरणं नाम
सप्तविंशोऽध्यायः ।

---

## अष्टाविंशोऽध्यायः ।

---

नारद उवाच ।

त्रिषु मासेष्वतीतेषु तासाञ्च हरिणा सह ।
वद केन प्रकारेण बभूव तनुसङ्गमः ॥ १ ॥
वृन्दावनं किंप्रकारं किंविधं रासमण्डलम् ।
हरिरेकस्ताश्च बह्वाः केन क्रीड़ा बभूव ह ॥ २ ॥
कुतूहलं भवति मे इदं श्रोतुं नवं नवम् ।
कथयस्व महाभाग पुण्यश्रवणकीर्त्तन ॥ ३ ॥
कथा पुराणसाराणां रासयात्रा हरेरहो ।
हरिलीलाः पृथिव्यान्तु सर्वाः श्रुतिमनोहराः ॥ ४ ॥

सूत उवाच ।

नारदस्य वचः श्रुत्वा ऋषिर्नारायणः स्वयम्

प्रहस्य सुप्रसन्नास्यः प्रवक्तुमुपचक्रमे ॥ ५ ॥

श्रीनारायण उवाच।

एकदा श्रीहरिर्नक्तं वनं वृन्दावनं ययौ।
शुभे शुक्लत्रयोदश्यां पूर्णे चन्द्रोदये मुने ॥ ६ ॥
यूथिकामालतीकुन्दमाधवीपुष्पवायुना।
वासितं कलनादेन मधुभ्राणां मनोहरम् ॥ ७ ॥
नवपल्लवसंयुक्तं पुंस्कोकिलरुतश्रुतम्।
नवलचरासवासमसंयुक्तं सुमनोहरम् ॥ ८ ॥
चन्दनागुरुकस्तूरीकुङ्कुमेन सुवासितम्।
कर्पूरान्विततास्बूलभोगद्रव्यसमन्वितम् ॥ ९ ॥
प्रसूनैश्चम्पकानाञ्च कस्तूरीचन्दनान्वितैः।
रतियोग्यैर्विरचितैर्नानातल्पैः सुशोभितम् ॥ १० ॥
दीप्तं रत्नप्रदीपैश्च धूपेन सुरभीकृतम्।
नानापुष्पैश्च रचितं मालाजालैर्विराजितम् ॥११॥
परितो वर्त्तुलाकारं तत्रैव रासमण्डलम्।
चन्दनागुरुकस्तूरीकुङ्कुमेन सुसंस्कृतम् ॥ १२ ॥
पुष्पोद्यानैः पुष्पितैश्च युक्तं क्रीड़ासरोवरैः।
हंसकारण्डवाकीर्णैर्जलकुक्कुटकूजितैः ॥ १३ ॥
क्रीड़नीयैः सुन्दरैश्च सुरतश्रमहारिभिः।
शुद्धस्फटिकसंकाशतोयपूर्णैः सुनिर्मलैः ॥ १४ ॥
दधिपूर्णशुक्लधान्यजलैर्निर्मञ्छनीकृतम्।
रम्भास्तम्भसमूहेन सुन्दरेण सुशोभितम् ॥ १५ ॥
आम्रपल्लवयुक्तेन सूत्रबन्धेन चारुणा।
भूषितं मङ्गलघटैः सिन्दूरचन्दनान्वितैः ॥ १६ ॥

मालतीमाल्यसंयुक्तैर्नारिकेरफलान्वितैः ।
स रासमण्डलं दृष्ट्वा जहास मधुसूदनः ॥ १७ ॥
चकार तत्र कुतुकाद्विनोदमुरलीरवम् ।
गोपीनां कामुकीनाञ्च कामवर्धनकारणम् ॥ १८ ॥
तच्छ्रुत्वा राधिका सद्यो मुमोह मदनातुरा ।
बभूव स्थाणुवद्देहा ध्यानैकतानमानसा ॥ १९ ॥
क्षणेन चेतनां प्राप्य पुनः शुश्राव सा ध्वनिम् ।
उवास सा समुत्तस्थौ समुद्विग्ना पुनः पुनः ॥ २० ॥
त्यक्त्वा चावश्यकं कर्म निःससाराङ्गतं गृहात् ।
ययौ तदनुसारेण प्रसमीक्ष्य चतुर्दिशम् ॥ २१ ॥
ध्यायन्ती चरणाम्भोजं श्रीकृष्णस्य महात्मनः ।
तेजसा च द्योतयन्ती सद्रत्नसारभूषणैः ॥ २२ ॥
बहिर्बभूवुस्तास्तास्ता वरेण हृतचेतनाः ।
कुलधर्मं परित्यज्य निःशङ्काः काममोहिताः ॥२३॥
त्रयस्त्रिंशद्वयस्याश्च ताः सुशीलादयः स्मृताः ।
राधिकायाः प्रियतमा गोपीनां प्रवरा ययुः ॥२४॥
तासां पश्चाद्ययुर्गोप्यस्तासां संख्यां निबोध मे ।
समावेशेन वयसा रूपेण च गुणेन च ॥ २५ ॥
ययुः सुशीलासङ्गेन सहस्राणि च षोडश ।
ययुश्चन्द्रमुखीपश्चात्सहस्राणि च षोडश ॥ २६ ॥
एकादशसहस्राणि माधव्याश्च निर्ययुः ।
जग्मुः कदम्बमालायाः सहस्राणि त्रयोदश ॥ २७ ॥
ययुः कुन्तीवयस्याश्च सहस्राणि दश स्मृताः ।
चतुर्दश सहस्राणि युयुस्ता यमुनानुगाः ॥ २८ ॥

जाह्नवीसहचारिण्यः सहस्राणि ययुर्नव।
ययुर्नव सहस्राणि पद्ममुख्याश्च एव च ॥ २९ ॥
सावित्र्याश्च: पञ्चदश सहस्राणि ययुर्व्रजात्।
पारिजाताश्वयस्याश्च सहस्राणि ययुर्दश ॥ ३० ॥
स्वयं प्रभानुगाः सप्त सहस्राणि ययुर्व्रजात्।
ययुः सुधामुखीगोप्यः सहस्राणि चतुर्दश ॥ ३१ ॥
शुभानुगा ययुर्गोप्यः सहस्राणि चतुर्दश।
पद्मानुगा ययुर्गोप्यः सहस्राणि चतुर्दश ॥ ३२ ॥
गौरी पद्मा ययुर्गोप्यः सहस्राणि चतुर्दश।
ययुः सर्वमङ्गलाश्च: सहस्राणि च षोड़श ॥ ३३ ॥
कालिकाश्चो ययुर्गोप्यः सहस्राणि च षोड़श।
निर्ययुः कमलाश्चाश्च सहस्राणि त्रयोदश ॥ ३४ ॥
दुर्गानुगा ययुर्गोप्यः सहस्राणि च षोड़श।
ययुः सरस्वतीपश्चात्सहस्राणि त्रयोदश ॥ ३५ ॥
प्रजग्मुर्भारतीपश्चात्सहस्राणि दश व्रजात्।
अपर्णासहचारिण्यः सहस्राणि चतुर्दश ॥ ३६ ॥
रतिपश्चाद्वयस्याश्च सहस्राणि ययुर्दश।
गङ्गावयस्याः प्रययुः सहस्राणि चतुर्दश ॥ ३७ ॥
प्रजग्मुरम्बिका पश्चात्सहस्राणि च षोड़श।
सतीपश्चाद्ययुर्गोप्यः सहस्राणि त्रयोदश ॥ ३८ ॥
नन्दिनीसहचारिण्यः सहस्राणि ययुर्दश।
प्रययुः सुन्दरीपश्चात्सहस्राणि त्रयोदश ॥ ३९ ॥
ययुः कृष्णप्रियापश्चात्सहस्राणि च षोड़श।
ययुर्मधुमती पश्चात्सहस्राणि च षोड़श ॥ ४० ॥

ययुश्चम्पानुगा गोप्यः सहस्राणि त्रयोदश ।
चन्दनाख्यो ययुः पश्चात्सहस्राणि च षोड़श ॥ ४१ ॥
सर्वा बभूवुरेकत्र तत्र तस्थुः पलं मुदा ।
तत्राययुर्गोपिकाश्च मालाहस्ताश्च काश्चन ॥ ४२ ॥
चारुचन्दनहस्ताश्च काश्चित्तत्राययुर्व्रजात् ।
श्वेतचामरहस्ताश्च काश्चित्तत्राययुर्मुदा ॥ ४३ ॥
तत्राययुर्गोपकन्याः काश्चित्कस्तूरिकाकराः ।
तत्राययुर्गोपकन्याः काश्चित् कुङ्कुमवाहिकाः ॥ ४४ ॥
काश्चित् तत्राययुर्गोप्यस्ताम्बूलपात्रवाहिकाः ।
यावत्काञ्चनवस्त्राणां वाहिका गोपकन्यकाः ॥ ४५ ॥
काश्चित्तत्रायुः शीघ्रं यत्र चन्द्रावली मुदा ।
सर्वाश्चैकत्र संभूय सस्मिताश्च मुदान्विताः ॥ ४६ ॥
विधाय राधिकावेशं स्थानाच्च प्रययुर्मुदा ।
चक्रुः पुनःपुनस्ताश्च हरिशब्दं जयं पथि ॥ ४७ ॥
प्रापुर्वृन्दावनं रम्यं ददृशू रासमण्डलम् ।
स्वर्गेभ्यः सुन्दरं दृश्यं राकापतिकरान्वितम् ॥ ४८ ॥
सुनिर्जनं कुसुमितं वासितं पुष्पवायुना ।
नारीणां कामजननं मुनिमोहनकारणम् ॥ ४९ ॥
शुश्रुवुस्तत्र ताः सर्वाः पुंस्कोकिलकलध्वनिम् ।
अतिसूक्ष्म कलञ्चापि भ्रमराणां मनोहरम् ॥ ५० ॥
प्रसूनमधुमत्तानां भ्रमरीसङ्गसङ्गिनाम् ।
शुभे क्षणे प्रविवेश राधिका रासमण्डलम् ॥ ५१ ॥
सर्वाभिरालिभिः सार्धं ध्यात्वा कृष्णपदाम्बुजम् ।
राधामारात्तु संवीक्ष्य कृष्णस्तत्र मुदान्वितः ॥ ५२ ॥

जगामानु व्रजं प्रीत्या सस्मितो मदनातुरः।
मध्यस्थां सखिसङ्घानां रत्नालङ्कारभूषिताम्॥ ५३॥
दिव्यवस्त्रपरीधानां सस्मितां वक्रलोचनाम्।
गजेन्द्रगामिनीं रम्यां मुनिमानसमोहिनीम्॥ ५४॥
नवीनवेशवयसा रूपेणातिमनोहराम्।
तलश्रोणिनितम्बानां भारशेषान्वितां पराम्॥ ५५॥
चारुचम्पकवर्णाभां शरच्चन्द्रनिभाननाम्।
बिभ्रन्तीं कवरीभारं मालतीमाल्यसंयुताम्॥ ५६॥
राधा ददर्श श्रीकृष्णं किशोरं श्यामसुन्दरम्।
नवयौवनसम्पन्नं रत्नाभरणभूषितम्॥ ५७॥
कन्दर्पकोटिलावण्यलीलाधाममनोहरम्।
प्राणाधिकां तां पश्यन्तं पश्यन्तीं वक्रचक्षुषा॥ ५८॥
परमाद्भुतरूपञ्च सर्वत्रानुपमं परम्।
विचित्रवेशं चूड़াञ्च बिभ्रन्तं सस्मितं मुदा॥ ५९॥
वक्रलोचनकोणेन दर्शं दर्शं पुनः पुनः।
मुखमाच्छादयामास व्रीड़या सस्मिता सती॥ ६०॥
मूर्च्छामवाप सा सद्यः कामबाणप्रपीड़िता।
पुलकाञ्चितसर्वाङ्गी बभूव हृतचेतना॥ ६१॥
कटाक्षकामबाणैश्च विद्धः क्रीड़ारसोन्मुखः।
मूर्च्छां प्राप्य न पपात तस्थौ स्थाणुसमो हरिः॥ ६२॥
पपात मुरली तस्य क्रीड़ाकमलमुज्ज्वलम्।
द्वितीयं पीतवस्त्रञ्च शिखिपिच्छं शरीरतः॥ ६३॥
क्षणेन चेतनां प्राप्य ययौ राधान्तिकं मुदा।
कृत्वा वक्षसि तां प्रीत्या समाश्लिष्य चुचुम्ब सः॥६४॥

श्रीकृष्णस्पर्शमात्रेण संप्राप्य चेतनां सती ।
प्राणाधिकं प्राणनाथं समाश्लिष्य चुचुम्ब ह ॥६५॥
मनो जहार राधायाः कृष्णस्तस्य च सा मुने ।
जगाम राधया सार्धं रसिको रतिमन्दिरम् ॥ ६६ ॥
रत्नप्रदीपसंयुक्तं रत्नदर्पणसंयुतम् ।
चारुचम्पकशय्याभिश्चन्दनाक्ताभी राजितम् ॥ ६७ ॥
कर्पूरान्विततांम्बूलैर्भोगद्रव्यैः समन्वितम् ।
उवास राधया सार्धं कृष्णस्तत्र मुदान्वितः ॥ ६८ ॥
राधाप्रदत्तताम्बूलं चखाद मधुसूदनः ।
रासेश्वरी कृष्णदत्तं ताम्बूलं बुभुजे मुदा ॥६९॥
दत्तं चर्विततांम्बूलं राधायै प्रभुणा मुदा ।
चखाद भक्त्या सा तूर्णं प्रहस्य मदनातुरा ॥ ७० ॥
राधाचर्विततांम्बूलं ययाचे माधवो मुदा ।
न ददौ राधिका भीता पपात चरणाम्बुजे ॥ ७१ ॥
एतस्मिन्नन्तरे तत्र सकामः सुरतोन्मुखः ।
सुष्वाप राधया सार्धं रतितल्पे मनोहरे ॥ ७२ ॥
शृङ्गाराष्टप्रकारश्च विपरीतादिकं विभुः ।
नखदन्तकराणाञ्च प्रहारश्च यथोचितम् ॥ ७३ ॥
कामशास्त्रेषु यद्गोप्यं चुम्बनाष्टविधं परम् ।
कामिनीनां मनोहारि चकार रसिकेश्वरः ॥७४॥
अङ्गैरङ्गानि प्रत्यङ्गैः प्रत्यङ्गानि स्मरातुरः ।
चकाराश्लेषणं तत्र कामुकीनां सुखावहम् ॥७५॥
शृङ्गारकुशलौ तौ तु कामशास्त्रसुपण्डितौ ।
रतियुद्धविरामश्च न बभूव द्वयोरपि ॥ ७६ ॥

एवं गृहे गृहे रम्ये नानामूर्तिं विधाय च ।
रेमे गोपाङ्गनाभिश्च सुरम्ये रासमण्डले ॥ ७७ ॥
गोपीनां नवलक्षाणि गोपानाञ्च तथैव च ।
लक्षाण्यष्टादश मुने युक्तानि रासमण्डले ॥ ७८ ॥
मुक्तकेशानि नग्नानि विच्छिन्नभूषणानि च ।
वेशोच्छिन्नानि मत्तानि मूर्च्छितानि स्मरेण च ॥७९॥
कङ्कणानां किङ्किणीनां वलयानाञ्च नारद ।
सद्रत्ननूपुराणाञ्च शब्दयुक्तानि सन्ततम् ॥ ८० ॥
एवं कृत्वा स्थलक्रीड़ां ययुस्तानि जलं मुदा ।
कृत्वा तत्र जलक्रीड़ां परिश्रान्तानि साम्प्रतम् ॥८१॥
तूर्णं जलात्समुत्थाय वासांसि परिधाय च ।
ददृशुर्मुखपद्मानि सद्रत्नदर्पणेषु च ॥ ८२ ॥
चन्दनागुरुकस्तूरीद्रव्याणि पुष्पमालिकाः ।
मुदा परिदधुस्तानि सम्प्रापुश्चेतनानि च ॥ ८३ ॥
सकर्पूरञ्च ताम्बूलं भुक्त्वा सर्वाणि कौतुकात् ।
ददृशुर्मुखपद्मानि सद्रत्ने दर्पणेऽमले ॥ ८४ ॥
काचित्कामातुरा कृष्णं बलादाकृष्य कौतुकात् ।
हस्ताद्वंशीं निजग्राह वसनञ्च चकर्ष ह ॥ ८५ ॥
काचित्कामप्रमत्ता च नग्नं कृत्वा तु माधवम् ।
निजग्राह पीतवस्त्रं परिहास्य पुनर्ददौ ॥ ८६ ॥
यत्किं शृण्वित्येवमुक्त्वा काचित्संगृह्य स्वामिनम् ।
चुचुम्ब गण्डे बिम्बोष्ठे समाश्लिष्य पुनः पुनः ॥८७॥
सस्मितं सकटाक्षञ्च मुखचन्द्रं स्तनोन्नतम् ।
काचिच्छ्रोणिं सुललितां दर्शयामास कामतः ॥८८॥

काचित्कान्तं करे कृत्वा संस्थाप्य श्रोणिदेशतः ।
चकार चूड़ानिर्माणं मालतीमाल्यसंयुतम् ॥८९॥
काचिच्चूड़ां समाकृष्य मयूरपिच्छकं ददौ ।
गुञ्जां माल्यञ्च चूड़ायां वेष्टयामास काचन ॥ ९० ॥
प्रददौ स्वामिने कामात् प्रेमवर्धनहेतवे ।
काचित्काञ्चित्समाकृष्य नग्नां कृत्वा तु कामतः ॥९१॥
प्रेषयामास कृष्णस्य क्रोड़े चन्दनचर्चिते ।
ननृतुश्च जगुः काश्चित् कान्तं कृत्वा तु कामतः ॥९२॥
नर्तनं कारयामास तञ्च काचिद्बलेन च ।
कृष्णश्च वस्त्रं कस्याश्च विचकर्ष कुतूहलात् ॥९३॥
काञ्चित् कृत्वा तु नग्नाञ्च कस्यैचिदंशुकं ददौ ।
कृष्णो राधां समाकृष्य वासयामास वक्षसि ॥९४॥
तस्याश्च कवरीं रम्यां सुनिर्माणञ्चकार ह ।
सिन्दूरञ्च ददौ भाले कस्तूरीविन्दुभिः सहः ॥९५॥
अतिसूक्ष्मं चन्दनेन्दुं कौतुकात्तदधो ददौ ।
पत्रावलीं सुललितां सुकपोले चकार ह ॥ ९६ ॥
वह्निशुद्धांशुकं चारु परिधाप्यप्रयत्नतः ।
ददौ सद्रत्नमञ्जीरे गृहीत्वा चरणाम्बुजे ॥ ९७ ॥
नखनिर्माजनं कृत्वा सुन्दरं यावकं ददौ ।
भूषणैर्भूषितां कृत्वा सम्प्रलिप्यानुलेपनैः ॥ ९८ ॥
दत्त्वा च मालतीमालां चुचुम्ब च पुनः पुनः ।
चारुलोचनपद्मे च चकाराञ्जनसंयुते ॥ ९९ ॥
प्रददौ नासिकामध्ये दुर्लभं गजमौक्तिकम् ।
श्रोणिदेशे च स्तनयोर्नखच्छिद्रं चकार ह ॥ १०० ॥

चकार दन्तदलनं पक्वबिम्बाधरे वरे ।
सरसश्च तटे रम्ये पुष्पोद्याने सुनिर्जने ॥ १०१ ॥
वहिश्चन्द्रोदये रम्ये पुष्पचन्दनचर्चिते ।
अगुरुचन्दनाक्तेन वायुना सुरभीकृते ॥ १०२ ॥
भ्रमरध्वनिसंयुक्ते पुंस्कोकिलरुतश्रुते ।
बहुमूर्त्तीः संविधाय योगिनां परमो गुरुः ॥ १०३ ॥
पुनश्चकार शृङ्गारं गोपीनां चित्तहारकः ।
किङ्किणीनां कङ्कणानां नूपुराणाञ्च नारद ॥ १०४ ॥
शृङ्गारोद्रेकतस्तत्र बभूव सुन्दरो वरः ।
मूर्च्छामवापुस्ताः सर्वा नवसङ्गमभावतः ॥ १०५ ॥
बभूवुरचलास्पन्दाः पुलकाञ्चितविग्रहाः ।
शृङ्गारविरते भूते संप्रापुश्चेतनां पुनः ॥ १०६ ॥
नखदन्तप्रहारञ्च प्रचकार परस्परम् ।
कृष्णः कररुहाघातं ददौ तासां कुचोपरि ॥ १०७ ॥
श्रोणीदेशे सुकाठिने नखचित्रं चकार ह ।
नीवीविस्रंसिता तासां कवरी क्षुद्रघण्टिका ॥ १०८ ॥
दूरीभूतं सुवसनं सुवेशं सुमनोहरम् ।
आलिङ्गनं नवविधं चुम्बनाष्टविधं मुदा ॥ १०९ ॥
शृङ्गारं षोड़शविधं चकार रसिकेश्वरः ।
अङ्गैरङ्गानि प्रत्यङ्गैः प्रत्यङ्गानि च योषिताम् ॥ ११० ॥
चकारालिङ्गनं प्रीत्या कामुकीनाञ्च कामुकः ।
नारीणां षोड़श कलाः शृङ्गारस्तत्प्रमाणकः ॥ १११ ॥
कलाभेदेन तद्भेदं कामशास्त्रविदो विदुः ।
प्रकृतं द्वादशविधं चकार रसिकेश्वरः ॥ ११२ ॥

निरूपितं कामशास्त्रे चकारेशस्ततोऽधिकम्।
क्रीड़ारम्भे च मध्ये च विरतौ कर्म योषिताम् ॥११३॥
प्रीत्यर्थमपि कर्त्तव्यं चकारेशस्ततोऽधिकम्।
गोपीकङ्कणरेखाभिः पादालक्तकचिह्नितः ॥ ११४ ॥
शुशुभे कृष्णदेहश्च यथाद्रिर्गैरिकेण च।
एवम्भूते पूर्णरासंसंभूते रासमण्डले ॥ ११५ ॥
समाजग्मुः सुराः सर्वे सकलत्राश्च सानुगाः।
सुवर्णस्यन्दनस्थाश्च कौतुकात् स्वगणावृताः ॥ ११६ ॥
पुलकाञ्चितसर्वाङ्गाः कामबाणप्रपीड़िताः।
ऋषयो मुनयश्चैव सिद्धाश्च पितरस्तथा ॥ ११७ ॥
विद्याधराश्च गन्धर्वा यक्षराक्षसकिन्नराः।
सस्त्रीकाश्च समाजग्मुर्दृष्टुश्च मुदान्विताः ॥ ११८ ॥
दिव्यस्यन्दनमारुह्य शातकुम्भविनिर्मितम्।
सुशोभितञ्च मणिना रत्नसारपरिच्छदम् ॥ ११९ ॥
वह्निशुद्धांशुकेनैव वेष्टितं सुमनोहरम्।
श्वेतचामरयुक्तञ्च सद्रत्नदर्पणाम्बुजम् ॥ १२० ॥
शतचक्रं चित्रयुक्तं मनोयायि मनोहरम्।
सद्रत्नसारनिर्माणकलशोज्ज्वलशेखरम् ॥ १२१ ॥
समाजगाम भगवान् पार्वत्या सह शङ्करः।
वामपार्श्वे महाकालो दक्षिणे नन्दिकेश्वरः ॥ १२२ ॥
पुरतः कार्तिकेयश्च स्वयं देवो गणेश्वरः।
पिङ्गलाक्षादयः सर्वे पार्षदाः परितस्तयोः ॥ १२३ ॥
क्षेत्रपालादयः सर्वे तथाष्टौ भैरवेश्वराः।
वक्षःस्थलस्थिता दुर्गा सस्मिता वक्रलोचना ॥ १२४ ॥

भारत्या सह ब्रह्मा च शातकुम्भरथस्थितः ।
वामे सप्तर्षयस्तस्य दक्षिणे सनकादयः ॥ १२५ ॥
सुवर्णस्यन्दनस्थाश्च धर्मः साक्षी च कर्मणाम् ।
वक्षःस्थलस्थिता तस्य मूर्त्तिः स्मेरानना सती ॥ १२६ ॥
पश्यन्ती पूर्णरासञ्च सकामा वक्रलोचना ।
परितः पार्षदाः सर्वे ज्वलन्तो ब्रह्मतेजसा ॥ १२७ ॥
शच्या सह महेन्द्रश्च रोहिण्या च कलानिधिः ।
स्वाहासार्धं स्वयं वह्निः सूर्य्यश्च संज्ञया सह ॥ १२८ ॥
समाजगाम कामश्च रतिं कृत्वा च वक्षसि ।
सर्वे ग्रहाश्च दिक्पाला आजग्मुः सकलत्रकाः ॥१२९॥
आकाशस्थाश्च ददृशुः सरासं रासमण्डलम् ।
केचिच्च मुमुहुस्तत्र मूर्च्छामापुश्च केचन ॥ १३० ॥
मुहूर्त्तञ्च सुराः सर्वे सस्मिताश्च मुदान्विताः ।
चन्दनद्रववृष्टिञ्च पुष्पवृष्टिञ्च चिक्षिपुः ॥ १३१ ॥
कस्तूरीयुक्तमाल्यानां वृष्टिञ्चक्रुर्मुनीश्वराः ।
रासं दृष्ट्वा देवपत्न्यः कामबाणप्रपीड़िताः ॥ १३२ ॥
स्थले रतिरसं कृत्वा जगाम यमुनाजलम् ।
राधया सह कृष्णश्च पूर्णब्रह्मसनातनः ॥ १३३ ॥
गोपीभिः सह जग्मुश्च मायाः श्रीकृष्णरूपिकाः ।
प्रपीड़िताः कामबाणैः क्रीड़াञ्चक्रुर्जले मुदा ॥१३४॥
जलं ददौ राधिकायै सकामो माधवः स्वयम् ।
ददौ सा च माधवाय कामार्त्तायाञ्जलित्रयम् ॥ १३५ ॥
वस्त्रं जग्राह तस्याश्च सा च नग्ना बभूव ह ।
मालाञ्चिच्छेद कबरीं चकार शिथिलां हरिः ॥१३६॥

सिन्दूरपत्रकं लुप्तं वेशञ्च जलताड़नैः ।
भ्रूविचित्रञ्चोष्ठरागं लुप्तं कज्जललोचनम् ॥ १३७ ॥
ताञ्च नग्नां समाश्लिष्य निममज्ज जले हरिः ।
प्रकृत्याभ्यन्तरे क्रीड़ां कृतस्थौ च तया सह ॥ १३८ ॥
ताञ्च नग्नां दर्शयित्वा गोपिकां व्रीड़या नताम् ।
सस्मितां प्रेरयामास दूरतो यमुनाजले ॥ १३९ ॥
सा वेगेन समुत्थाय बलाज्जग्राह माधवम् ।
गृहीत्वा मुरलीं कोपात् प्रेरयामास दूरतः ॥ १४० ॥
गृहीत्वा पीतवसनञ्चकार तं दिगम्बरम् ।
वनमालाञ्च चिच्छेद ददौ तोयं पुनः पुनः ॥ १४१ ॥
हरिं पुनः समाकृष्य प्रेषयामास पाथसि ।
गम्भीरे स्रोतसि मुने निममज्ज जगत्पतिः ॥ १४२ ॥
उत्थाय माधवः शीघ्रं तां गृहीत्वा प्रहस्य च ।
कृत्वा वक्षसि नग्नाञ्च चुचुम्ब च पुनः पुनः ॥ १४३ ॥
एवन्ता मूर्त्तयः सर्वा गोपीभिः सह कौतुकात् ।
क्रीड़ां विचक्रुर्यमुनातीरनीरे मनोहरे । १४४ ॥
तीरं गत्वा तया सार्धं हरिर्नग्नश्च मग्नया ।
सा तं ययाचे वसनं स च तां सस्मितां सतीम् ॥ १४५ ॥
राधिकायै ददौ वस्त्रं रम्यां मालाञ्च माधवः ।
प्रददौ हरये वस्त्रं वंशीं रासेश्वरी तथा ॥ १४६ ॥
चन्दनागुरुकस्तूरीं सर्वाङ्गे कुङ्कमान्विताम् ।
कृष्णस्य परया भक्त्या ददौ श्रोणिस्थितस्य च ॥ १४७ ॥
निर्माय चूड़ां ललितां कामिनीचित्तमोहिनीम् ।
शोभनैर्मालतीमाल्यैश्चकार वेष्टनं पुनः ॥ १४८ ॥

श्रीकृष्णो राधिकायाश्च कवरीं सुमनोहराम्।
कृत्वा कुन्तलसंस्कारं निर्ममे पत्रकावलीम् ॥ १४९ ॥
ददौ ललाटे सिन्दूरं कस्तूरीविन्दुभिः सह।
तदधश्चन्दनेन्दुञ्च सुसूक्ष्मं सुमनोहरम् ॥ १५० ॥
नखाङ्कं स्तनयोरूर्वोरुरस्येव घनं मुदा।
दत्त्वा तां वासयामास वह्निशुद्धांशुकेन वै ॥ १५१ ॥
चन्दनागुरुकस्तूरीकुङ्कुमानां द्रवेण सः।
कृत्वा वक्षसि संलिप्य चुचुम्ब च मुहुर्मुहुः ॥ १५२ ॥
पुनराश्लेषणं कृत्वा ददौ मालां गले पुनः।
भूषणैर्भूषितां कृत्वा मञ्जीरञ्चरणे ददौ ॥ १५३ ॥
अलक्तकञ्चरणयोर्नखेषु च ददौ पुनः।
एवं गोपश्च गोपीनां विदधौ च पृथक् पृथक् ॥ १५४ ॥
पुनः प्रजग्मुस्ता मत्ताः सुन्दरं रासमण्डलम्।
पूर्णेन्दुचन्द्रिकायुक्तं रतियोग्यं सुनिर्जनम् ॥ १५५ ॥
माधवीकेतकीकुन्दमालतीनां मनोहरैः।
चम्पयूथीमल्लिकानां पुष्पैश्च सुरभीकृतम् ॥ १५६ ॥
दृष्ट्वा च स्फुटितं पुष्पञ्चयनं कर्त्तुमीश्वरी।
गोपीर्नियोजयामास कौतुकेन च राधिका ॥ १५७ ॥
काश्चिन्नियोजयामास मालानिर्माणकर्मणि।
काश्चित् ताम्बूलसज्जेषु काश्चिच्चन्दनघर्षणे ॥ १५८ ॥
मालाचन्दनताम्बूलं गोपीदत्तञ्च सुन्दरी।
ददौ कृष्णाय संप्रीत्या सस्मिता वक्रलोचना ॥ १५९ ॥
काश्चिन्नियोजयामासुः कृष्णसङ्गीतकर्मणि।
मृदङ्गमुरजादीनां वादनेषु च काश्चन ॥ १६० ॥

एवं रासे रतिं कृत्वा लीलया हरिणा सह।
विजहार च सर्वत्र निर्जनेषु मनोहरम् ॥ १६१ ॥
पुष्पोद्यानेषु रम्येषु सरसाञ्च तटेषु च।
कन्दरे कन्दरे रम्ये नदेषु च नदीषु च ॥ १६२ ॥
शैलीवनिर्जनस्थाने श्मशाने गिरिगह्वरे।
वाञ्छितेषु च नारीणां त्रयस्त्रिंशद्वनेषु च ॥ १६३ ॥
भाण्डीरे श्रीवने रम्ये कदम्बकानने तथा।
तुलसीकानने कुन्दवने चम्पककानने ॥ १६४ ॥
निम्बारण्ये मधुवने जम्बीरकानने तथा।
नारिकेलवने पूगवने च कदलीवने ॥ १६५ ॥
बदरीकानने विल्ववने नारिङ्गकानने।
अश्वत्थकानने वंशवने दाड़िमकानने ॥ १६६ ॥
मन्दारकानने तालवने चूतवने तथा।
केतकीकावनेऽशोकवने खर्जूरकानने ॥ १६७ ॥
आम्रातकवने जम्बूगहने शालकानने।
कटकीकानने पद्मवने जातिवने मुने ॥ १६८ ॥
न्यग्रोधगहने घोरे श्रीखण्डकानने तथा।
प्रहृष्टकेसरवने सर्वतोऽपि विलक्षणे ॥ १६९ ॥
एवं रेमे कौतुकेन कामाब्धिं अहिवानिशम्।
तथापि मानसम्पूर्णं न च किञ्चिद्बभूव ह ॥ १७० ॥
न कामिनीनां कामश्च शृङ्गारेण निवर्त्तते।
अधिकं वर्द्धते शश्वद्यथाग्निर्घृतधारया ॥ १७१ ॥
जग्मुर्देवाः स्वगेहञ्च देव्यश्च मुनयस्तथा।
ते सर्वे प्रशशंसुश्च विस्मयञ्च ययुर्मुदा ॥ १७२ ॥

गेहे गेहे नृपेन्द्राणां लेभिरे जन्म भारते ।
दग्धाः कामाग्निनांशेन देव्यः शृङ्गारलालसाः ॥१७३॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे रासक्रीड़ाप्रस्तावो नाम
अष्टाविंशोऽध्यायः ।

---

## ऊनत्रिंशोऽध्यायः ।

श्रीनारायण उवाच ।

अथ गोपाङ्गनाः सर्वाः काममत्ततरा मुने ।
अतिप्रौढ़ाश्च मानिन्यो नेश्वरं मेनिरे पतिम् ॥ १ ॥
काश्चिदूचुरहो कृष्णं सस्मिता वक्रलोचना ।
मालतीपुष्पमुत्तोल्य देहि मे मालिकामिति ॥ २ ॥
काश्चिदूचुरये कृष्ण स्वक्रोड़ेऽस्मांश्च कुर्विति ।
गृहीत्वा श्रीहरेः स्कन्धमारुरोह च काचन ॥ ३ ॥
उवाच काचिद्दर्पेण प्रमत्ता प्राणवल्लभम् ।
स्वकीयपीतवसनं परिधारय मामिति ॥ ४ ॥
उवाच काचिदीशन्तं सिन्दूरं देहि मामिति ।
उवाच काचित् प्राणेशं शीघ्रमागत्य साम्प्रतम् ॥ ५ ॥
कृत्वा कुन्तलसंस्कारं कुरु मे कवरीमिति ।
काश्चित्संप्रेरयामासुः श्रीखण्डं वक्षवाय च ॥ ६ ॥

स्वाङ्गवेशविधायिन्यो भूषार्थं श्रुतिमूलतः ।
उवाच काचित् कामेन परं सङ्केतपूर्वकम् ॥ ७ ॥
पश्यन्ती तन्मुखाम्भोजं सस्मिता मैथुनाय च ।
काचिज्जग्राह मुरलीं बलादाकृष्य माधवम् ॥ ८ ॥
जहार पीतवसनं कृत्वा नग्नञ्च कामिनी ।
कामिन्यः काश्चिदित्यूचुर्मानिन्यो मधुसूदनम् ॥९॥
अलक्तकद्रवं देहि पादयोर्नखरेषु च ।
उवाच काचित् प्रेम्णा तं गण्डयोः स्तनयोर्मम ॥१०॥
नानाचित्रविचित्राढ्यं कुरु पत्रावलीमिति ।
कृत्वानुमानं मनसा दृष्ट्वा तासां प्रमत्तताम् ॥ ११ ॥
माधवो राधया सार्द्धमन्तर्धानं चकार ह ।
अतीवनिर्जने स्थाने मुदा स्वेच्छामयो विभुः ॥ १२ ॥
कलामानप्रकारञ्च शृङ्गारञ्च चकार ह ।
पर्वते पर्वते रम्ये द्वीपे द्वीपे सुनिर्जने ॥ १३ ॥
तटे तटे नदीनाञ्च सर्वजन्तुविवर्जिते ।
श्रीगोष्ठे रत्नशैले च वेलागङ्गातटेऽपि च ॥ १४ ॥
कालिन्दे च पुलिन्दे च मन्दिरे गन्धमादने ।
मनोहरे कुन्दवने कावेरीतीरनीरजे ॥ १५ ॥
पुष्पभद्रापुलिनजे पुष्पोद्याने सुपुष्पिते ।
सर्वत्र रमणं कृत्वा राधावेशं विधाय च ॥ १६ ॥
जगाम मलयद्रोणीं रम्याञ्चन्दनवायुना ।
शय्यां पुष्पमयीं कृत्वा तत्र रेमे तया सह ॥ १७ ॥
अतीवसुखसम्भोगान्मूर्च्छां संप्राप्य राधिका ।
कृत्वा वचसि गोविन्दं पुलकाञ्चितविग्रहा ॥ १८ ॥

दृष्ट्वा तां मूर्च्छितां कृष्णो घनश्रोणिपयोधराम्।
विलुप्तवेशां कामार्त्तां नग्नां शिथिलकुन्तलाम् ॥१९॥
चेतनां कारयामास कृत्वा वक्षसि तन्द्रिताम्।
वासयामास वसनं राधाया मेखलाम्बरम् ॥ २० ॥
कवरीं रचयामास किञ्चिद्वामेन वङ्किमाम्।
मालतीमाल्यसंयुक्तां कुन्दपुष्पैश्च वेष्टिताम् ॥ २१ ॥
तस्याः कपाले सिन्दूरतिलकं सुन्दरं ददौ।
गण्डयोः स्तनयोश्चित्रां चकार पत्रिकां मुदा ॥ २२ ॥
सालक्तकांश्च नखरान् चित्रितान् पदपद्मयोः।
नखैः कृत्रिमपद्मानि निर्ममे श्रोणिवक्षसोः ॥ २३ ॥
उत्थायाथ तया सार्द्धं जगाम ह सरोवरम्।
नानाप्रकारपद्मानां राजिभिश्च विराजितम् ॥२४॥
निर्मलस्फटिकाकारजलपूर्णं मनोहरम्।
हंसकारण्डवाकीर्णं जलकुक्कुटकूजितम् ॥ २५ ॥
मधुलुब्धमधुभ्राणां पद्मस्थानं सुपद्मजम्।
चारुणा कलशब्देन शब्दितं शश्वदेव हि ॥ २६ ॥
तत्र स्नात्वा जलक्रीड़ाञ्चकार ह तया सह।
जलं ददौ राधिकायै मुदा सा माधवाय च ॥ २७ ॥
सहस्रदलपद्मे च गृहीत्वा माधवः स्वयम्।
एकं ददौ राधिकायै ररक्ष स्वार्थमेककम् ॥ २८ ॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवमीप्सितम्।
स्वाङ्गं दत्त्वा राधिकायै लिलेप राधिकेश्वरः ॥ २९ ॥
ततो गच्छंस्तया सार्द्धं ददर्श पुरतो वटम्।
अतीवोत्तुङ्गशाखाग्रमतिविस्तृतमेव च ॥ ३० ॥

मूले योजनपर्य्यन्तं छायया परिवेष्टितम् ।
उवास तत्र गोविन्दः केतकीवनसन्निधौ ॥ ३१ ॥
पुष्पाक्तेन सुशीतेन वायुना सुरभीकृते ।
चित्रं रहस्यं सुचिरं पुराणञ्च पुरातनम् । ३२॥
प्रहर्षितश्च श्रीकृष्णः कथयामास राधिकाम् ।
एतस्मिन्नन्तरे तत्र ददर्श मुनिपुङ्गवम् ॥ ३३ ॥
आगच्छन्तञ्च तं दृष्ट्वा प्रसन्नवदनेक्षणम् ।
न दृष्ट्वा हृदये रूपमीशस्य परमात्मनः ॥ ३४ ॥
ध्यानाद्विरतमग्रे च पश्यन्तं वहिरेव तत् ।
सर्वावयववक्रञ्च कृष्णं खर्वं दिगम्बरम् ॥ ३५ ॥
नाम्नाष्टवक्रं जटिलं ज्वलन्तं ब्रह्मतेजसा ।
मुखतोऽग्निमुद्गिरन्तं तपोराशिमिवोत्थितम् ॥ ३६॥
अहो किं वा ब्रह्मतेजो मूर्त्तिमन्तमिव स्वयम् ।
नखश्मश्रुसुदीर्घञ्च शान्तं तेजस्विनं परम् ॥ ३७ ॥
पुटाञ्जलियुतं भक्त्या भीतं प्रणतकन्धरम् ।
दृष्ट्वा हसन्तीं राधां तां वारयामास माधवः ॥ ३८ ॥
प्रभावं कथयामास मुनीन्द्रस्य महात्मनः ।
अथ प्रणम्य गोविन्दं तुष्टाव मुनिपुङ्गवः ।
यत् स्तोत्रञ्च पुरा दत्तं शङ्करेण महात्मना ॥ ३९ ॥

अष्टावक्र उवाच ।

गुणातीत गुणाधार गुणवीज गुणात्मक ।
गुणीश गुणिनां वीज गुणायन नमोऽस्तु ते । ४० ॥
सिद्धिस्वरूप सिद्धांश सिद्धिवीज परात्पर ।

सिद्धिसिद्धगुणाधीश सिद्धानां गुरवे नमः ॥ ४१ ॥
हे वेदवीज वेदज्ञ वेदिन् वेदविदां वर ।
वेदाज्ञातोऽसि रूपेश वेदज्ञेश नमोऽस्तु ते ॥ ४२ ॥
ब्रह्मानन्तेश शेषेन्द्र धर्मादीनामधीश्वर ।
सर्व सर्वेश सर्वेश वीजरूप नमोऽस्तु ते ॥ ४३ ॥
प्रकृते प्राकृत प्राज्ञ प्रकृतीश परात्पर ।
संसारवृक्ष तद्वीज फलरूप नमोऽस्तु ते ॥ ४४ ॥
सृष्टिस्थित्यन्तवीजेश सृष्टिस्थित्यन्तकारण ।
महाविराट् तरोर्वीज राधिकेश नमोऽस्तु ते ॥ ४५ ॥
अहो यस्य त्रयः स्कन्धा ब्रह्मविष्णुमहेश्वराः ।
शाखा प्रशाखा वेदाद्यास्तपांसि कुसुमानि च ॥ ४६ ॥
संसार विफला एव प्रकृत्यङ्कुरमेव च ।
तदाधार निराधार सर्वाधार नमोऽस्तु ते ॥ ४७ ॥
तेजोरूप निराकार प्रत्यक्षानूहमेव च ।
सर्वाकारातिप्रत्यक्ष स्वेच्छामय नमोऽस्तु ते ॥ ४८ ॥
इत्युक्त्वा स मुनिश्रेष्ठो निपत्य चरणाम्बुजे ।
प्राणांस्तत्याज योगेन तयोः प्रत्यक्ष एव च ॥ ४९ ॥
पपात तत्र तद्देहः पादपद्मसमीपतः ।
तत्तेजश्च समुत्तस्थौ ज्वलदग्निशिखोपमम् ॥ ५० ॥
सप्ततालप्रमाणन्तु चोत्थाय च पपात ह ।
भ्रामं भ्रामञ्च परितो लीनं कृत्वा पदाम्बुजे ॥ ५१ ॥
अष्टावक्रकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ।
परं निर्वाणमोक्षञ्च समाप्नोति न संशयः ॥ ५२ ॥
प्राणाधिको मुमुक्षूणां स्तोत्रराजश्च नारद ।

हरिणाहो पुरा दत्तो वैकुण्ठे शङ्कराय च ॥ ५३ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे मुनिमोचनं नाम ऊनत्रिंशोऽध्यायः ।

---

## त्रिंशोऽध्यायः ।

—००—

नारद उवाच ।

महामुने रहस्यञ्च श्रुतं ब्रह्मन् किमद्भुतम् ।
मृते मुनौ किञ्चकार श्रीकृष्णो भक्तवत्सलः ॥ १ ॥

श्रीनारायण उवाच ।

दृष्ट्वा मृतं मुनिं कृष्णः संस्कारं कर्तुमुद्यतः ।
कृत्वा वक्षसि तद्देहं रुरोदोच्चैर्यथा नरः ॥ २ ॥
बाहुभ्याञ्च समाश्लिष्य चिपेषोद्रिक्तमोहतः ।
निर्गतं भस्मनिकरं शवाद्गात्राङ्गघर्षणात् ॥ ३ ॥
रक्तमांसास्थिहीनं तच्छरीरञ्च महात्मनः ।
षष्टिवर्षसहस्राणि निराहारः कृतो मुने ॥ ४ ॥
दग्धं लोहितमांसास्थि ज्वलता जठराग्निना ।
वाह्यज्ञानविहीनस्य हरिपादाब्जचेतसः ॥ ५ ॥
चितां चन्दनकाष्ठेन निर्माय मधुसूदनः ।
कृत्वाग्निकार्य्यं तत्रैव स्थापयामास शोकतः ॥ ६ ॥

ददौ चितायामग्निञ्च काष्ठं दत्त्वा शवोपरि ।
ज्वलतायां चितायाञ्च मूर्च्छामाप क्षणं विभुः ॥ ७ ॥
तद्देहे भस्मसाद्भूते नेदुर्दुन्दुभयो दिवि ।
बभूव पुष्पवृष्टिश्च तत्क्षणाद्गगनाद्द्विज ॥ ८ ॥
एतस्मिन्नन्तरे तत्र रत्नसारविनिर्मितम् ।
स्यन्दनञ्च मनोयायि वस्त्रमाल्यपरिच्छदम् ॥ ९ ॥
पार्षदप्रवरैर्युक्तं श्रीकृष्णसदृशैर्वरैः ।
आविर्बभूव गोलोकात्सुन्दरं पुरतो हरेः ॥ १० ॥
अवरुह्य रथात्तूर्णं पार्षदप्रवरा हरेः ।
सर्वे समानरूपास्ते प्रणम्य राधिकेश्वरी ॥ ११ ॥
धृतवन्तं सूक्ष्मदेहं प्रणमय्य मुनीश्वरम् ।
रथे कृत्वा तु तं देहं जग्मुर्गोलोकमुत्तमम् ॥ १२ ॥
गते मुनीन्द्रे गोलोकं वृन्दावनविनोदिनी ।
बभूव विस्मिता साध्वी पप्रच्छ जगदीश्वरम् ॥ १३ ॥

श्रीराधिका उवाच ।

कोऽयं नाथ मुनिश्रेष्ठः सर्वावयववङ्किमः ।
अतिखर्वोऽञ्जनाकारस्तेजीयानतिकुत्सितः ॥ १४ ॥
कथं वा निर्गतं भस्म देहादस्य किमद्भुतम् ।
साक्षाद्विलीनं यत्तेजस्त्वत्पादाब्जेऽनलोपमम् ॥ १५ ॥
रथस्थः पुण्यवान् सद्यो गोलोकञ्च जगाम ह ।
स्वात्मारामस्य यद्येतो रोदनं ते बभूव ह ॥ १६ ॥
त्वया कृतञ्च सत्कारमश्रुपूर्णेन चक्षुषा ।
सर्वं विवरणं तूर्णं संव्यस्य कथय प्रभो ॥ १७ ॥
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः ।

कथां कथितुमारेभे युगान्तरगतामपि ॥ १८ ॥

श्रीकृष्ण उवाच ।

रहस्यमष्टावक्रीयं विख्यातं सर्वतः प्रिये ।
पश्चाच्छ्रोष्यसि कालेन प्रसङ्गे विदुषां मुखात् ॥ १९ ॥
अष्टावक्रो मुनीन्द्रोऽपि विख्यातो भुवनत्रये ।
परिपूर्णं यद्यशसा जन्मना तज्जगत्त्रयम् ॥ २० ॥
कृष्णस्य वचनं श्रुत्वा विमनस्का हरिप्रिया ।
उवाच मधुरं यत्नाच्छुष्ककण्ठोष्ठतालुका ॥ २१ ॥

राधिकोवाच ।

यत्तृषार्त्तोमनः पूर्णं न बभूव सुराम्बुधौ ।
स विल्पो भवति किं गोष्पदोदकपानतः ॥ २२ ॥
वेदानां वेदवक्तॄणां विधातुर्जनकस्य च ।
महाविष्णोरीश्वरस्त्वं कोऽन्यो वक्तास्ति त्वत्परः ॥२३॥
राधिकावचनं श्रुत्वा तुष्टः कृष्णो बभूव ह ।
उवाच गोपनीयञ्च रहस्यं परमाद्भुतम् ॥ २४ ॥

श्रीकृष्ण उवाच ।

शृणु कान्ते प्रवक्ष्येऽहमितिहासं पुरातनम् ।
श्रवणात् कथनाद्यस्य सर्वं पापं प्रणश्यति ॥ २५ ॥
महाविष्णोर्नाभिपद्मादभूव जगतां विधिः ।
ममांशस्य मत्कलया जलाकीर्णे जगत्त्रये ॥ २६ ॥
पुत्रा बभूवुश्चत्वारो ब्रह्मणो मानसात्पुरा ।
नारायणपराः सर्वे ज्वलन्तो ब्रह्मतेजसा ॥ २७ ॥
शिशवः पञ्चवर्षीया नग्ना अज्ञानिनो यथा ।
बाह्यज्ञानविहीनाश्च ब्रह्मतत्त्वविशारदाः ॥ २८ ॥

सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
सनत्कुमारो भगवानेते चत्वार एव च ॥ २९ ॥
तानुवाच जगद्धाता सृष्टिं कुरुत पुत्रकाः ।
तेन तस्युः पितुर्वाक्ये प्रययुस्तपसे मम ॥ ३० ॥
विधाता विमनस्कश्च तनयेषु गतेषु च ।
पितुर्दुःखाय प्रभवेत् पुत्रश्चेदवचस्करः ॥ ३१ ॥
ज्ञानेन निर्ममे पुत्रान् स्वाङ्गेषु च तपोधनान् ।
वेदवेदाङ्गविज्ञांश्च ज्वलतो ब्रह्मतेजसा ॥ ३२ ॥
अत्रिः पुलस्त्यः पुलहो मरीचिर्भृगुरङ्गिराः ।
क्रतुर्वशिष्ठो वोढ्श्च कपिलश्चासुरिः कविः ॥ ३३ ॥
शङ्कुः शङ्कः पञ्चशिखः प्रचेतास्ते तपोधनाः ।
बहुकालं तपस्तप्त्वा चक्रुः सृष्टिं तदाज्ञया ॥ ३४ ॥
कलत्रवन्तस्ते सर्वे संसारं कर्त्तुमुन्मुखाः ।
बभूवुः पुत्रपौत्राश्च सर्वेषाञ्च तपस्विनाम् ॥ ३५ ॥
तदस्तु च कथा बह्वी मुनिवंशानुकीर्त्तनी ।
चार्वी पुण्यस्वरूपा च प्रकृतं शृणु सुन्दरि ॥ ३६ ॥
प्रचेतसः सुतः श्रीमानसितो मुनिपुङ्गवः ।
सकलत्रस्तपस्तेपे दिव्यं वर्षसहस्रकम् ॥ ३७ ॥
न बभूव सुतस्तस्य प्राणांस्त्यक्तुं समुद्यतः ।
तं सम्बोद्धुं बभूवाथ सत्या वागशरीरिणी ॥ ३८ ॥
कथं त्यजसि प्राणांस्त्वं गच्छ शङ्करसन्निधिम् ।
सिद्धं कुरु गृहीत्वा च मन्त्रं शङ्करवक्त्रतः ॥ ३९ ॥
मन्त्राधिष्ठातृदेवी ते सद्यः साक्षाद्भविष्यति ।
वरेणाभीष्टदेव्याश्च पुत्रस्ते भविता ध्रुवम् ॥ ४० ॥

श्रुत्वैतच्चरितं विप्रो जगाम शिवसन्निधिम् ।
योगिनामप्यगम्यञ्च शिवलोकं निरामयम् ॥ ४१ ॥
सकलतो यथा योगी तुष्टाव योगिनां गुरुम् ।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ ४२ ॥

असित उवाच ।

जगद्गुरो नमस्तुभ्यं शिवाय शिवदाय च ।
योगीन्द्राणाञ्च योगीन्द्र गुरूणां गुरवे नमः ॥ ४३ ॥
मृत्योर्मृत्युस्वरूपेण मृत्युसंसारखण्डन ।
मृत्योरीश मृत्युवीज मृत्युञ्जय नमोऽस्तु ते ॥ ४४ ॥
कालरूपं कलयतां कालकालेशकारण ।
कालादतीत कालस्थ कालकाल नमोऽस्तु ते ॥ ४५ ॥
गुणातीत गुणाधार गुणवीज गुणात्मक ।
गुणीश गुणिनां वीज गुणिनां गुरवे नमः ॥ ४६ ॥
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावनतत्पर ।
ब्रह्मवीजस्वरूपेण ब्रह्मवीज नमोऽस्तु ते ॥ ४७ ॥
इति स्तुत्वा शिवं नत्वा पुरस्तस्थौ मुनीश्वरः ।
दीनवत्साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥ ४८ ॥
असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् ।
वर्षमेकं हविष्याशी शङ्करस्य महात्मनः ॥ ४९ ॥
स लभेद्वैष्णवं पुत्रं ज्ञानिनं चिरजीविनम् ।
भवेद्धनाढ्यो दुःखी च मूको भवति पण्डितः ॥५०॥
अभार्य्यो लभते भार्य्यां सुशीलाञ्च पतिव्रताम् ।
इहलोके सुखं भुक्त्वा यात्यन्ते शिवसन्निधिम् ॥ ५१ ॥
इदं स्तोत्रं पुरा दत्तं ब्रह्मणा च प्रचेतसे ।

प्रचेतसा स्वपुत्रायासिताय दत्तमुत्तमम् ॥ ५२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे
शिवस्तोत्रं समाप्तम् ।

---

श्रीकृष्ण उवाच ।

समाकर्ण्य मुनेः स्तोत्रं भगवान् शङ्करः स्वयम् ।
उवाच ब्रह्मणः पुत्रं स्वभक्तं भक्तवत्सलः ॥ ५३ ॥

शङ्कर उवाच ।

स्थिरो भव मुनिश्रेष्ठ जनामि तव वाञ्छितम् ।
पुत्रस्ते भविता सत्यं मदंशेन च मत्समः ॥ ५४ ॥
दास्यामि मन्त्रमतुलं सर्वेषाञ्च सुदुर्लभम् ।
इत्युक्त्वा च ददौ मन्त्रं तत्रैव षोड़शाक्षरम् ॥ ५५ ॥
स्तोत्रं पूजाविधानञ्च कवचं परमाद्भुतम् ।
संसारविजयं नाम पुरश्चरणपूर्वकम् ॥ ५६ ॥
वरं दातुमिष्टदेवी प्रत्यक्षा भवितेति च ।
इत्युक्त्वा विरतो रुद्रः स तं नत्वा जगाम ह ॥ ५७ ॥
जजाप परमं मन्त्रं सोऽसितः शतवत्सरम् ।
साक्षाद्भूत्वा वरस्तस्मै त्वया दत्तः पुरा सति ॥ ५८ ॥
पुत्रस्ते भविता सत्यं महाज्ञानी सुतेति च ।
वरं दत्त्वा त्वमगमो गोलोकं मम सन्निधिम् ॥ ५९ ॥
कालेन च सुतस्तस्य शिवांशेन बभूव ह ।
ब्रह्मिष्ठो देवलो नाम्ना कन्दर्पसमसुन्दरः ॥ ६० ॥
सुयज्ञनृपतेः कन्यां रत्नमालावतीं मुदा ।
तां सुन्दरीं विवाहेन जग्राह सर्वमोहिनीम् ॥ ६१ ॥

स्थाने स्थाने च रहसि शतवर्षं तया सह ।
स रेमे निपुणश्रेष्ठः स्त्रीणां रमणकर्मणि ॥ ६२ ॥
कालान्तरे स विरतो बभूव मुनिपुङ्गवः ।
सुखं सर्वं परित्यज्य धर्मिष्ठः श्रीहरिं स्मरन् ॥ ६३ ॥
उत्थाय रात्रौ शयनाद्विरक्तश्च तपोधनः ।
स ययौ तपसे कान्ते गन्धमादनपर्वते ॥ ६४ ॥
निद्रां त्यक्त्वा च तत्कान्ता न दृष्ट्वा स्वामिनं सती ।
विललाप भृशं शोकात् प्रदग्धा विरहाग्निना ॥ ६५ ॥
उत्तिष्ठन्ती निविशन्ती रुरोदोच्चैर्मुहुर्मुहुः ।
तप्तपात्रे यथा धान्यं बभूव तन्मनस्तदा ॥ ६६ ॥
आहारञ्च परित्यज्य प्राणांस्तत्याज सुन्दरी ।
चकार तत्सुतस्तस्याः कर्मनिर्हरणादिकम् ॥ ६७ ॥
तपश्चकार स मुनिर्गन्धमादनगह्वरे ।
दिव्यं वर्षसहस्रञ्च मम भक्तो जितेन्द्रियः ॥ ६८ ॥
तं ददर्श ह दैवेन रम्भा शृङ्गारलोलुपा ।
अतीव सुन्दरं शान्तं कन्दर्पमिव सुन्दरम् ॥ ६९ ॥
सा च तं कथयामास निर्जने समुपस्थिता ।
विधाय वेशं यत्नेन त्रैलोक्यचित्तमोहिनी ॥ ७० ॥

रम्भोवाच ।

निबोध साधो मद्वाक्यं कामिनीनां मनोहरम् ।
त्यक्त्वा कठोरं रहसि भज मां सुखदायिकाम् ॥ ७१ ॥
त्वं वरेषु वरः पृथ्व्यां वरारोहा स्वयं वरा ।
विदग्धाया विदग्धस्य दुर्लभो नवसङ्गमः ॥ ७२ ॥

यज्ञं कुर्वन्ति भूपाला भारते स्वर्गहेतुकम् ।
स्वर्गभोगनिमित्तञ्च भोगसारा वयं मुने ॥ ७३ ॥
स्तनयोर्युग्ममूर्वोर्मे सुन्दरं मुखपङ्कजम् ।
हास्यभ्रूभङ्गसहितं दृष्ट्वा को न भवेत्सुखी ॥ ७४ ॥
स्त्रीरसः सुखसारश्च मुनीनामभिवाञ्छितः ।
रसिकासुखसम्भोगो निर्जने चातिदुर्लभः ॥ ७५ ॥
देवो वा दानवो वापि गन्धर्वो वाथ राक्षसः ।
स्त्रीसुखेष्वप्यविज्ञो यो रम्भाया रतिवञ्चितः ॥ ७६ ॥
रहस्युपस्थितां कान्तां न भजेद्यो जितेन्द्रियः ।
गात्रलोमप्रमाणाब्दं कुम्भीपाके वसेत् ध्रुवम् ॥ ७७ ॥
सत्यं तस्याश्च बधभाक् तच्छापेन प्रणश्यति ।
विधाता मोहिनीशापादपूज्यो भुवनत्रये ॥ ७८ ॥
येन त्यक्तोपस्थिता तं यथा पश्यति पुंश्चली ।
स्वामिपुत्रस्वबन्धूनां न तथा घातकं वृषा ॥ ७९ ॥
परं प्रियञ्च सर्वेषां जारं जानाति पुंश्चली ।
यदि तेन परित्यक्ता तं हन्तुं सा तु दक्षिणा ॥ ८० ॥
पुंश्चली हिंस्रजन्तुभ्यो नरघातिभ्य एव च ।
दुष्टा शश्वद्दयाहीना दुरन्ता प्रतिजन्मनि ॥ ८१ ॥
त्यज ध्यानं मुनिश्रेष्ठ भुंक्ष्वेदं तपसः फलम् ।
रहस्युपस्थितां माञ्च गृहीत्वा सुचिरं सुखम् ॥ ८२ ॥
स रम्भावचनं श्रुत्वा तामुवाच भयाकुलः ।
हितं तथ्यं नीतिसारं परिणामसुखावहम् ॥ ८३ ॥

देवल उवाच ।

शृणु रम्भे प्रवक्ष्यामि वेदसारपरं वचः ।

कुलधर्मोचितं सत्यं ब्राह्मणानां तपस्विनाम् ॥ ८४ ॥
धर्मोऽयं युक्तकाले च स्वयोषिति रतो द्विजः ।
सर्वत्र पूजितः शश्वदिहलोके परत्र च ॥ ८५ ॥
ब्राह्मणः क्षत्रियो वैश्यो यो रतः परयोषिति ।
याति तस्यापूजितस्य रुष्टा लक्ष्मीर्गृहादपि ॥ ८६ ॥
इहातिनिन्द्यः सर्वत्र नाधिकारी स्वकर्मसु ।
परत्रैवान्धकूपे च यावद्वर्षशतं वसेत् ॥ ८७ ॥
ग्राह्या चोपस्थिता स्त्री च गृहिणा न तपस्विना ।
त्यागे दोषः कामिनीनां शापभाक् पापभाग्गृही ॥८८॥
ब्रह्मा जगद्विधातापि न विरक्तः कलत्रवान् ।
त्यागे दोषस्त्वकदाचिन्नास्माकं त्यक्तयोषिताम् ॥ ८९ ॥
स्वभार्यांश्च परित्यज्य यो गृह्णाति परस्त्रियम् ।
यशोधनायुषां हानिर्भवेज्जीवन्मृतस्य च ॥ ९० ॥
भुवि नास्ति यशो यस्य जीवनं तस्य निष्फलम् ।
सुसम्पदा किं राज्येन सुखेन च तपस्विनः ॥ ९१ ॥
निष्कामेन च वृद्धेन मया किन्ते प्रयोजनम् ।
सुवेशं सुन्दरं मातर्युवानं पश्य सुन्दरि ॥ ९२ ॥
इत्येवं वचनं श्रुत्वा चुकोपाप्सरसां वरा ।
उवाच भूयो वाक्यं तं वक्त्रा प्रस्फुरिताधरा ॥९३ ॥

रम्भोवाच ।

चारुचम्पकवर्णाभः कन्दर्पसमसुन्दरः ।
तपःप्रभावात्सश्रीकः सुवेशः सम्मतः स्त्रियाः ॥ ९४ ॥
त्वया विनान्यं कं यामि को वास्ति त्वत्परः पुमान् ।
पुंश्चली त्वां परित्यज्य का जीवति स्मरातुरा ॥ ९५ ॥

शीघ्रं मां भज विप्रेन्द्र दग्धां कामाग्निना सदा ।
कामी नश्यति मां त्यक्त्वा यथा रम्भां मतङ्गजः ॥ ९६ ॥
न चेच्छापं प्रदास्यामि वद वेदविदां वर ।
मां वा दारुणशापं वा सत्वरं स्वीकुरु प्रभो ॥ ९७ ॥
दग्धाः प्राणा मनो दग्धं स्वात्मा वा इति सन्ततम् ।
नवशृङ्गारपीयूषपाननिर्वाणतां व्रजेत् ॥ ९८ ॥
स्वात्मदुःखेन दुःखार्त्तो योऽयं शपति निश्चितम् ।
तं शापं खण्डितुं शक्तो न विधाता जगत्पतिः ॥ ९९ ॥
द्विजो रम्भावचः श्रुत्वा बभूव ध्यानतत्परः ।
नोवाच किञ्चिन्मौनस्थः सा तं कोपाच्छशाप ह ॥१००॥
हे वक्रचित्त ते विप्र सर्वावयववक्रिमम् ।
शरीरमञ्जनाकारं रूपयौवनवर्जितम् ॥ १०१ ॥
अतीवविकृताकारं त्रिषु लोकेषु गर्हितम् ।
पुरातनं तपो नष्टं सद्यो भवतु निश्चितम् ॥ १०२ ॥
इत्युक्त्वा पुंश्चली कामात्कामलोकं जगाम सा ।
अचिरेण मुनीन्द्रश्च न ददर्श हरेः पदम् ॥ १०३ ॥
पदारविन्दविरहात्समुद्विग्नो बभूव ह ।
स्वाङ्गञ्च दृष्ट्वा विकृतं पूर्वपुण्यविवर्जितम् ॥ १०४ ॥
कृत्वाग्निकुण्डं शोकेन प्राणांस्त्यक्तुं समुद्यतः ।
मया दृष्टो वरो दत्तो दिव्यज्ञानेन बोधितः ॥ १०५ ॥
आश्वासश्च कृतः प्रीत्या ततः शान्तो बभूव ह ।
अङ्गान्यष्टौ च वक्राणि दृष्ट्वा तूर्णं महामुनेः ।
अष्टावक्रेति तन्नाम कौतुकेन मया कृतम् ॥ १०६ ॥
महावाक्यात् मलयद्रोणीमिमामागम्य सत्वरः ।

षष्ठिवर्षसहस्राणि चकार परमन्तपः ॥ १०७ ॥
तपो वसाने मद्भक्तो मया युक्तः कृतः प्रिये ।
सर्वस्मिन् प्रलये नष्टे न मद्भक्तः प्रणश्यति ॥ १०८ ॥
सुचिरेणैव तपसा ज्वलता जठराग्निना ।
त्यक्ताहारस्यान्तरञ्च भस्मपूर्णं तपो मुनेः ॥ १०९ ॥
आगतं मलयद्रोणिं मुनिर्हेतोर्मम प्रिये ।
अष्टावक्राच्च मद्भक्तो न भूतो न भविष्यति ॥ ११० ॥
एवम्भूतस्तपोनिष्ठः प्रपौत्रो ब्रह्मणो मुनिः ।
निष्फलः पुंश्चलीशापाद् ब्रह्मा पूज्यो यथा पुरा ॥१११॥
इत्येवं कथितं सर्वं रहस्यञ्च महात्मनः ।
सुखदं पुण्यदं गूढ़ं किं भूयः श्रोतुमर्हसि ॥ ११२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद
संवादे श्रीकृष्णजन्मखण्डे राधाप्रश्ने
त्रिंशत्तमोऽध्यायः ।

---

## एकोत्रिंशोऽध्यायः ।

श्रीराधिकोवाच ।

किमाश्चर्य्यं श्रुतं नाथ चरितं सुमनोहरम् ।
अधुना श्रोतुमिच्छामि ब्रह्मणः शापकारणम् ॥ १ ॥
यो विधाता त्रिजगतां तपसां फलदायकः ।
स कथं कुलटाशापादपूज्यश्च बभूव ह ॥ २ ॥

श्रीकृष्ण उवाच ।

मन्वन्तरे रैवतश्च सुचन्द्रो नृपपुंगवः ।
तपस्वी वैष्णवश्रेष्ठो ज्ञानी परमधार्म्मिकः ॥ ३ ॥
स च पूर्व्वं तपः कुर्व्वन्नाजगाम मम प्रिये ।
इमाञ्च मलयद्रोणीं भारतेषु मनोहराम् ॥ ४ ॥
तपश्चकार राजेन्द्रो वर्षाणाञ्च सहस्रकम् ।
जीर्णं तस्य शरीरञ्च कठोरेण तपस्विनः ॥ ५ ॥
वल्मीकाच्छादितं देहं दृष्ट्वा धाता कृपानिधिः ।
आजगाम वरं दातुं तपःस्थानं सुनिर्ज्जनम् ॥ ६ ॥
कमण्डलुजलेनैव मम देहोद्भवेन च ।
सिषेच तञ्च मन्त्रेण मया दत्तेन योगवित् ॥ ७ ॥
कमण्डलुजलस्पर्शादुत्थाय नृपतिः स्वयम् ।
ननाम भक्त्या जगतां स्रष्टारञ्च पुरः स्थितम् ॥ ८ ॥
स तं नमन्तं राजानमुवाच कमलोद्भवः ।
वरं वृणिष्वेति राजेन्द्र यत्ते मनसि वाञ्छितम् ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा वरं वव्रे परात्परम् ।
ममैव चरणे भक्तिं मदीयं दास्यमेव च ॥ १० ॥
कृपया च वरं ब्रह्मा दत्तवानभिवाञ्छितम् ।
स च तत्पुरतस्तस्थौ कामदेवसमप्रभः ॥ ११ ॥
एतस्मिन्नन्तरे राजा ददर्श रथमुत्तमम् ।
आकाशान्निपतन्तं वै शतसूर्य्यसमप्रभम् ॥ १२ ॥
तेजसाच्छादितं सर्व्वं सुप्रदीप्तं दिशो दश ।
रत्नेन्द्रसारनिर्म्माणं शतचक्रसमन्वितम् ॥ १३ ॥
अमूल्यरत्नरचितं विचित्रकलशोज्ज्वलम् ।

मुक्तामाणिक्यहीराणां मालाजालैश्च राजितम् ॥१४॥
सद्रत्नदर्पणैर्दीप्तै रतीव सुमनोहरम् ।
भूषितं दिव्यवस्त्रैश्च श्वेतचामरकोटिभिः ॥ १५ ॥
पारिजातप्रसूनानां मालाजालैः सुशोभितम् ।
मनोयायि महाश्चर्य्यं नानाचित्रेण चित्रितम् ॥१६॥
वेष्टितं पार्षदैर्दिव्यै रत्नभूषणभूषितैः ।
चतुर्भुजैः श्यामलैश्च ज्वलद्भिः स्थिरयौवनैः ॥ १७ ॥
पीतवस्त्रपरीधानैश्चन्दनागुरुचर्च्चितैः ।
दृष्ट्वा रथस्थान् देवांश्च ननाम नृपतिर्मुदा ॥ १८ ॥
सहसा तस्य शिरसि पुष्पवृष्टिर्बभूव ह ।
नेदुर्दुन्दुभयः स्वर्गे चानकाश्च मनोहरम् ॥ १९ ॥
ऋषयो मुनयः सिद्धाः प्रकुर्वन्तो मुदाशिषम् ।
प्रशशंसुः सुराः सर्वे राजानं हर्षनिर्भराः ॥ २० ॥
राजा च पार्षदान्ध्यात्वा तद्रूपश्च बभूव ह ।
पार्षदास्तं रथे कृत्वा नीत्वा जग्मुर्ममालयम् ॥ २१ ॥
मदीयं पार्षदो भूत्वा स च तस्थौ ममान्तिके ।
ततः स्वमन्दिरं यान्तं ददर्श मोहिनी विधिम् ॥२२॥
पुष्पोद्याने च रम्ये च पुष्पचन्दनवायुना ।
सद्यो मुमोह तं दृष्ट्वा प्रदग्धा मदनानलैः ॥ २३ ॥
विलोक्य वक्रनयना जुगोप सस्मितं मुखम् ।
सिन्दूरबिन्दुं दधती कस्तूरीबिन्दुना सह ॥ २४ ॥
चारुचम्पकवर्णाभा सततं स्थिरयौवना ।
बृहन्नितम्बयुगला पीनश्रोणिपयोधरा ॥ २५ ॥
शरत्पार्वणशुभ्रांशुप्रभामुष्टकराणना ।

सूक्ष्मवस्त्रपरीधाना रत्नालङ्कारभूषिता ॥ २६ ॥
त्रैलोक्यं मोहितुं शक्ता कटाक्षैरेव लीलया ।
अतीव कामिनी शश्वद्गजेन्द्रमन्दगामिनी ॥ २७ ॥
पुलकाञ्चितसर्वाङ्गी मूर्च्छां संप्राप वर्त्मनि ।
सन्निरीक्ष्य च तां ब्रह्मा जगाम श्रीहरिं स्मरन् ॥२८॥
अविकारं न हि प्राप ह्यात्मारामो जितेन्द्रियः ।
ब्रह्मलोकञ्च संप्राप ब्रह्मा च जगतां पतिः ॥ २९ ॥
सकामा सा च कुलटा बभूव हृतचेतना ।
दिवानिशञ्चिन्तयन्ती स्वप्ने ध्याने चतुर्मुखम् ॥३०॥
सर्वं जारं विसस्मार तत्याजाहारमीश्वरी ।
उत्तिष्ठन्ती निवसती शयनं कुर्वती क्षणम् ॥ ३१ ॥
तत्रपात शया शस्य' भ्रमत्येव यथा पथि ।
एतस्मिन्नन्तरे रम्भा विदग्धाप्सरसां वरा ॥ ३२ ॥
गच्छन्ती कामलोकं सा सकामा तेन वर्त्मना ।
दृष्ट्वा सहचरीं तत्र शुष्ककण्ठोष्ठतालुकाम् ।
अभिप्रायेण बुबुधे पप्रच्छ सस्मिता तदा ॥ ३३ ॥

रम्भोवाच ।

कथमेवंविधा त्वं हि त्रैलोक्यचित्तमोहिनी ।
वद शीघ्रं महाभागे रम्भाहं चेतनं कुरु ॥ ३४ ॥
समुद्दिश्य सकामा त्वं गच्छ त्वं कान्तमीप्सितम् ।
कुलटा सर्वसौभाग्या न वयं कुलपालिकाः ॥ ३५ ॥
सर्वे व्यग्रा इन्द्रियाणां सुखाय भुवनत्रये ।
यान्ति प्राणा यतः काले का लज्जा तत्र जीविनाम् ॥३६॥
न चात्मनः परः कश्चित् प्रियोऽस्ति भुवनत्रये ।

कान्ते पत्यौ स्वबन्धौ च स्नेहो यः स्वात्महेतुकः ॥३७॥
सम्बन्धः स्वात्मनो यावत्तावत् स्नेहोऽस्ति तत्र वै ।
येषु यन्मानसं शश्वत्तेषां प्राणास्त एव हि ॥ ३८ ॥
गच्छन्तीं कामलोकञ्च सकामां पश्य मां प्रिये ।
सह सख्या समालोच्य मनसा गच्छ तं प्रियम् ॥३९॥
निबद्ध्य नीवीं केशांश्च कृत्वा वेशमभीप्सितम् ।
मुनिर्मोहनवीजञ्च तन्मोहं कुरु मोहिनि ॥ ४० ॥
कथयस्व महाभागे वचनं हृदयङ्गमम् ।
रत्नात्मानं प्रभावञ्च स्त्रीजातीनां जगत्त्रये ॥ ४१ ॥
स्वाभिप्रायश्च सुरतौ न प्रकाश्यः कदाचन ।
स्वान्तं कान्तं स्वानुरक्तमृज्वीं सहचरीं विना ॥४२॥
तस्माद्यत्नेन हृद्वाक्यं प्रकाश्यञ्च प्रिये प्रिये ।
अन्यथा चोपहासाय मरणायैव कल्पते ॥ ४३ ॥
तस्याश्च वचनं श्रुत्वा सस्मिता सा सुलज्जिता ।
हृद्यञ्च कथयामास यद्धेतोस्तादृशी गतिः ॥ ४४ ॥

मोहिन्युवाच ।

यावद् दृष्टो मया रम्भे निर्जने चतुराननः ।
तावन्मनो मेऽति दग्धं शश्वन्मनसिजानलैः ॥४५॥
न दृत्तमात्मने भक्ष्यमन्तरे न हि रोचते ।
जानामि नाहमुदयं यामिनीशदिनेशयोः ॥ ४६ ॥
अधुना न हि भेदो मे सततं स्वप्नज्ञानयोः ।
मम प्राणाः प्रतीचन्ते तस्यालिङ्गनमेव च ॥ ४७ ॥
चणं विज्ञाय न चिरं यास्यन्ती नान्यथा प्रिये ।
कामज्वालाकलापैश्च स्वर्णाकारं कलेवरम् ॥ ४८ ॥

अनाहारेण चेदानीं बभूव दग्धशैलवत्।
गन्तुं स्थातुं न शक्ताह शयनं कर्त्तुमुद्यता ॥ ४९ ॥
धिगस्तु पुंश्चलीजातिं मामेव च विशेषतः।
अमुपायं करिष्यामि वद रम्भेति साम्प्रतम्।
लज्जां वापि शरीरं वा विसृजामि च किं द्वयोः ॥५०॥
मोहिनीवचनं श्रुत्वा प्रहस्याप्सरसां वरा।
तामुवाच हितं नीतमुपायं शुभकारणम् ॥ ५१ ॥

रम्भोवाच।

एवमेतदहो भद्रे भद्रस्य कारणं तव।
सर्वं त्वपनयिष्यामि शृणूपायं भयं त्यज ॥ ५२ ॥
कृत्वा वेशमपूर्वञ्च पूर्वमाराध्य मन्मथम्।
तेन सार्धं स्वयं गत्वा मोहं कुरु च भामिनि ॥ ५३ ॥
जितेन्द्रियाणां प्रवरं साक्षान्नारायणात्मकम्।
विना कामसहायेन का शक्ता जेतुमीश्वरम् ॥ ५४ ॥
भज कामं तपः कृत्वा पुष्करे व्रज मोहिनि।
सद्यः साक्षात् स भविता दयालुर्योषितां प्रभुः ॥५५॥
इत्युक्त्वा तामप्सरसां प्रवरा काममन्तिकम्।
जगामेन्द्रियशान्त्यर्थं सा जगाम च पुष्करम् ॥ ५६ ॥
पुष्करे च तपः कृत्वा कामं सम्प्राप्य मोहिनी।
जगाम तेन सार्धञ्च ब्रह्मलोकमनामयम् ॥ ५७ ॥
ददर्श निर्जनस्थञ्च मोहिनी कमलोद्भवम्।
तमेव मुग्धं कर्त्तुञ्च समारेभे पुरःस्थिता ॥ ५८ ॥
क्षणं ननर्त सुचिरं सुगानेन क्षणं जगौ।
सङ्गीतं मम सम्बन्धि भक्तानां चित्तमोहनम् ॥ ५९ ॥

विधाता जगतां तस्याः श्रुत्वा सङ्गीतमीप्सितम् ।
पुलकाञ्चितसर्वाङ्गो मुमोह साश्रुलोचनः ॥ ६० ॥
दृष्ट्वा मुग्धं चतुर्वक्त्रं मोहिनी हृष्टमानसा ।
कलाप्रमाणं भावञ्च चकार तत्र लीलया ॥ ६१ ॥
स्वाङ्गं सन्दर्शयामास स्मेरभ्रूभङ्गपूर्वकम् ।
का लज्जा तस्य संसारे यः कामहतचेतनः ॥ ६२ ॥
विज्ञाय ब्रह्मा तद्भावं नतवक्त्रो बभूव ह ।
प्रदाय तस्य दानञ्च विरतः श्रीहरिं स्मरन् ॥ ६३ ॥
विज्ञाय ब्रह्मणो भावं शुष्ककण्ठोष्ठतालुका ।
हतोद्यमा सा तुष्टाव कामं कामप्रदं वरम् ॥ ६४ ॥

मोहिन्युवाच ।

सर्वेन्द्रियाणां प्रवरं विष्णोरंशञ्च मानसम् ।
तदेव कर्मणां वीजं तदुद्भव नमोऽस्तु ते ॥ ६५ ॥
स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः ।
नमो ब्रह्मन् जगत्स्रष्टस्तदुद्भव नमोऽस्तु ते ॥ ६६ ॥
सृष्टिः सर्वशरीरेषु दृष्टिश्च योगिनामपि ।
जगत्साध्य दुराराध्य दुर्निवार नमोऽस्तु ते ॥६७॥
सर्वाजित जगज्जेता जीवजीव मनोहर ।
रतिवीज रतिस्वामिन् रतिप्रिय नमोऽस्तु ते ॥ ६८ ॥
शश्वद्योषिदधिष्ठान योषित्प्राणाधिक प्रिय ।
योषिद्वाहन योषास्त्र योषिद्वन्धो नमोऽस्तु ते ॥ ६९ ॥
पतिसाध्यकराशेषरूपाधार गुणाश्रय ।
सुगन्धिवातसचिव मधुमित्र नमोऽस्तु ते ॥ ७० ॥
शश्वद्योनिकृताधार स्त्रीसन्दर्शनवर्धन ।

विदग्धानां विरहिणां प्राणान्तक नमोऽस्तु ते ॥ ७१ ॥
अकृपा येषु ते नाथं तेषां ज्ञानविनाशनम्।
अनूहरूपभक्तेषु कृपासिन्धो नमोऽस्तु ते ॥ ७२ ॥
तपस्विनाञ्च तपसां विघ्नबीजावलीलया।
मनः सकामं मुक्तानां कर्तुं शक्त नमोऽस्तु ते ॥ ७३ ॥
तपः साध्याश्चराध्याश्च सदैवं पाञ्चभौतिकाः।
पञ्चेन्द्रियकृताधार पञ्चबाण नमोऽस्तु ते ॥ ७४ ॥
मोहिनीत्येवमुक्त्वा तु मनसा सा विधेः पुरः।
विरराम नम्रवक्त्रा बभूव ध्यानतत्परा ॥ ७५ ॥
उक्तं माध्यन्दिने कान्ते स्तोत्रमेतन्मनोहरम्।
पुरा दुर्वाससा दत्तं मोहिन्यै गन्धमादने ॥ ७६ ॥
स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत्।
अभीष्टं लभते नूनं निष्कलङ्को भवेत् ध्रुवम् ॥ ७७ ॥
चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम्।
भवेदरोगो श्रीयुक्तः कामदेवसमप्रभः।
वनितां लभते साध्वीं पत्नीं त्रैलोक्यमोहिनीम् ॥ ७८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे राधाप्रश्ने मोहिनीकृतस्तोत्र-
प्रसङ्गो नामैकत्रिंशोऽध्यायः।

———

# द्वाविंशत्तमोऽध्यायः।

श्रीकृष्ण उवाच।

मोहिनीस्तवनेनैव कामस्तुष्टो बभूव ह।
चकार शरसन्धानमन्तरिक्षे स्थितः स्वयम् ॥ १ ॥
मन्त्रपूतं महास्त्रञ्च चिक्षेप पितरं मुदा।
बभूव चञ्चलो ब्रह्मा कामास्त्रेण च कामुकः ॥ २ ॥
क्षणं निरीक्षणं चक्रे मोहिन्यास्ये पुनः पुनः।
ज्ञानं प्राप्य तदा धाता विरराम हरिं स्मरन् ॥ ३ ॥
बुबुधे मनसा सर्वं चरितं मन्मथस्य च।
शशाप तं सुतमपि विधाता क्रोधविह्वलः ॥ ४ ॥
हे काम यौवनोन्मत्त मूढ़ैश्वर्य्येण गर्वितः।
भविता दर्पभङ्गस्ते गुरोर्मे हेलनादिति ॥ ५ ॥
इतोऽयमो जगामाशु मन्मथो मधुना सह।
ब्रह्मणः शापभीतश्च शुष्ककण्ठोष्ठतालुकः ॥ ६ ॥
इत्युवाच जगद्धाता मोहिनीं मदनातुराम्।
चतुर्वक्त्रञ्च पश्यन्तीं सस्मितं वक्रचक्षुषा ॥ ७ ॥

ब्रह्मोवाच।

मातर्मोहिनि गच्छ त्वं निष्फलं कर्म चात्र ते।
ज्ञातस्तवाभिप्रायश्च नाहं योग्योऽस्य कर्मणः ॥ ८ ॥
वेदे जुगुप्सितं कर्म तदेव कर्त्तुमक्षमः।
वेदकर्त्ता स्वयमहं व्यवस्थाकारको भवे ॥ ९ ॥

अकीर्त्तिर्वेदवक्तुश्च निन्द्यञ्च किमतः परम् ।
उपस्थिता च या योषिद्त्याज्या रागिणामपि ॥१०॥
श्रुतौ श्रुतमिति त्याज्या सर्वदेवतपस्विनाम् ।
अहो सर्वैः परित्याज्या पुंश्चली च विशेषतः ॥ ११ ॥
धनायुःप्राणयशसां नाशिनी दुःखदायिनी ।
स्वकार्य्यतत्परा शश्वत्परकार्य्यविनाशिनी ॥ १२ ॥
निष्ठुरा नवघातिभ्यः सर्वापद्वीजरूपिणी ।
विद्युद्दीप्तिर्जले रेखा लोभान्मैत्री यथा भवेत् ॥ १३ ॥
परद्रोहाद्यथा सम्पत् कुलटाप्रेम तत्समम् ।
सर्वेभ्यो हिंस्रजन्तुभ्यो विपद्वीजा सदैव हि ॥१४॥
यो विश्वसेत्तां संमूढ़ो विपत्तस्य पदे पदे ।
त्वञ्च रूपवती धन्या वञ्चिता कामुकैः सदा ॥१५॥
यूनां सम्पत्स्वरूपा च विषतुल्या तपस्विनाम् ।
त्वमेवाप्सरसां श्रेष्ठा सर्वदा स्थिरयौवना ॥ १६ ॥
तवैव कर्मयोग्यञ्च युवानं पश्य सुन्दरि ।
त्वं विदग्धा च योषित्सु विदग्धान्वेषणं कुरु ॥१७॥
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत् ।
जरातुरोऽहं वृद्धश्च तपस्वी वैष्णवो द्विजः ॥ १८ ॥
अस्वतन्त्रः पराधीनः का रतिः पुंश्चलीषु मे ।
अये वत्से गच्छ शीघ्रं विहाय पितरञ्च माम् ॥१९॥
नाम्नाऽहञ्च जगत्स्रष्टा तस्मात्तव पिता सदा ।
मन्मथञ्चन्द्रमिवञ्च जयन्तं नलकूवरम् ॥ २० ॥
स्वर्वैद्यौ चन्द्रतनयं दितिपुत्रांश्च सुन्दरान् ।
कामशास्त्रेषु निष्णातान् रतिकर्मविशारदान् ॥२१॥

या मां यासि हि तांस्त्यक्त्वा सा विदग्धा च कामुकी ।
सदा सम्भोगविषये स्त्रियं प्रार्थयते पुमान् ॥ २२ ॥
स्त्री चेत् प्रयाति पुरुषं विपरीतं विड़म्बनम् ।
सर्वेषाञ्चैव रत्नानां स्त्रीरत्नं दुर्लभं परम् ॥ २३ ॥
स्वयं प्रार्थयते स्वामी न तु स्वामिनमेव च ।
योषिज्जातिषु धिक् ताश्च स्वयं याः समुपस्थिताः ॥२४॥
भवेद् दूरं स्वल्पमूल्यं रत्नं स्वयमुपस्थितम् ।
नित्यं पुमान् स्त्रियं याति स्त्री वा याति च न प्रियम्॥२५
लोकाचारेषु वेदेषु न स्त्री याति परप्रियम् ।
स्ववस्तु भुङ्क्ते यः काले शास्त्रोक्तविधिपूर्वकम् ॥२६॥
स पूज्यो न भवेत् पूज्यो यद्वृत्तिः परवस्तुषु ।
कः कस्य शत्रुरवले निशामय जगत्त्रये ॥ २७ ॥
स्वेन्द्रियाः शत्रवः सर्वे शत्रुता यन्निमित्ततः ।
वेदोक्ताचरणे सर्वं मित्रञ्च जगतां जगत् ॥ २८ ॥
कृते वेदविरुद्धे च मित्रं शत्रुर्भवेद् ध्रुवम् ।
वेदोक्तं कृतवन्तञ्च हरिस्तुष्टो दिवानिशम् ॥ २९ ॥
हरौ तुष्टे जगत्तुष्टं तस्मिन् रुष्टे भवो रिपुः ।
कुत्रास्ति कुलटाजातिः साध्वीजातिश्च कुत्र वा ॥३०॥
स्वकीयाचरणात्सर्वं भवे भवति कर्मणः ।
स्त्रीजातिः प्रकृतेरंशा नारायणविनिर्मिता ॥ ३१ ॥
दुःशीला पुंश्चली निन्द्या सुशीला च पतिव्रता ।
पतिव्रतास्तु त्रिविधाः पुंश्चलीषु च योषितः ॥ ३२ ॥
तासामेवंविधा नास्ति स्वयं याति परप्रियम् ।
स्त्रीजातीनाञ्च मध्ये च कास्त्येवं कुलकज्जला ॥३३॥

भवे रत्यै स्वयं दृष्ट्वा वेश्मं कृत्वा प्रयाति तम् ।
चोभिता यदि पश्यन्ती भक्ष्यद्रव्यमसाध्यकम् ॥३४॥
वैकुल्यान्नहि तत्साध्यं सामान्यमेव केवलम् ।
इत्येवमुक्त्वा जगतां विधाता विरराम च ।
वक्तुं समुद्यता सा च कोपप्रस्फुरिताधरा ॥ ३५ ॥

मोहिन्युवाच ।

ज्ञातं सर्वं जगद्धातश्चरितं तव साम्प्रतम् ।
त्वया निबोधिता नीतिर्मनो मे न स्थिरं भवेत् ॥३६॥
भूतं त्वयि विशिष्टञ्च यावद् दृष्टः चणे भवान् ।
त्वदङ्गदृष्टिमात्रेण सर्वे जाराश्च विस्मृताः ॥ ३७ ॥
देहं कामाग्निना दग्धं यदा त्यक्तुं समुद्यता ।
निसिषेच च मां रम्भा प्रददौ मन्त्रमीदृशम् ॥३८॥
तदा कामसहायेन त्वत्समीपं समागता ।
स मधुस्तव शापेन स जगाम हतोद्यमः ॥ ३९ ॥
अहो गन्तुमशक्ताहं त्वया यद्यपि भर्त्सिता ।
सर्वाङ्गेष्वेव मे जाड्यं बभूव साम्प्रतं विभो ॥४०॥
कृपां कुरु कृपासिन्धो न मां हन्तुं त्वमर्हसि ।
तवाश्लेषणमात्रेण विज्वराहं सुनिश्चितम् ॥ ४१ ॥
त्वमेव जगतां धाता कुलटाऽहञ्च कर्मणा ।
सन्तो गर्वं न कुर्वन्ति कर्मसाध्याश्च जीवनः ॥ ४२ ॥
कश्चित् प्रयाति यानेन वहन्ति तञ्च केचन ।
करं गृह्णाति नृपतिः कर्मणा ददति प्रजाः ॥४३॥
कश्चित् सिंहासनस्थश्च नृपपालश्च कश्चन ।
कर्मणा वाहकाः केचित् केचिद्वाहनपालकाः ॥४४॥

शूकरीजठरं कश्चित् संप्रयाति स्वकर्मणा ।
कश्चिच्छ्वचाश्च जठरं तत्र पुत्राश्च केचन ॥ ४५ ॥
केचित् कृत्वा हरेर्भक्तिं कर्मणा तस्य पार्षदाः ।
केचिद्भवन्ति कृमयो विष्ठायां दैवदोषतः ॥४६॥
स्वर्गं प्रयान्ति राजेन्द्राः केचिच्च स्वस्वकर्मणा ।
केचित् प्रयान्ति नरकं विण्मूत्रे तत्र पच्यते ॥४७॥
कर्मणा कश्चिदिन्द्रेन्द्रः सुराणां प्रवरः स्वयम् ।
केचित् सुरा नराः केचित् केचिच्च क्षुद्रजन्तवः ॥४८॥
केचिच्च कर्मणा विप्रा वर्णश्रेष्ठा महीतले ।
केचिद्भूपा वैश्यशूद्राः केचिच्च म्लेच्छजातयः ॥ ४९ ॥
केचित् स्वकर्मणा प्राज्ञा ज्ञानेन सर्वदर्शिनः ।
केचिन्मूर्खाः केचिदन्धाः स्वाङ्गहीनाश्च केचन ॥५०॥
केचिच्छास्त्रं बोधयन्ति शिष्यवर्गान् स्वकर्मणा ।
केचित् पठन्ति सर्वार्थं जानन्ति गुरुवक्त्रतः ॥ ५१ ॥
भवन्ति कर्मणा केचिद्देहे स्थावरजङ्गमे ।
तपस्वी नवघाती च त्वञ्च ब्रह्मा च कर्मणा ॥ ५२ ॥
काचित् स्वकर्मणा साध्वी पूज्येह च परत्र च ।
काचिद्वेश्या तदाहारं भुंक्ते कृत्वाङ्गविक्रयम् ॥ ५३ ॥
स्वर्वेश्याहं सुरपुरे सुरभोग्या सुपूजिता ।
येषामालिङ्गनेनैव कर्मणां खण्डनं भवेत् ॥ ५४ ॥
मनः स्वभाववीजञ्च स्वभावः कर्मवीजकः ।
तत्कर्म फलवीजञ्च सर्वेषां जनको हरिः ॥ ५५ ॥
फलं ददाति नियतं कर्मद्वारा विभुः स्वयम् ।
सर्वेभ्यो बलवान्नित्यं कर्मरूपी जनार्दनः ॥ ५६ ॥

कुतो हेतोर्निन्दिताहं त्वयैव भर्त्सिता कथम् ।
जगत्स्रष्टुरीश्वरस्य पादाब्जं द्रष्टुमागता ॥ ५७ ॥
स्वप्ने यस्य पदद्वन्द्वं न हि पश्यन्ति योगिनः ।
तमीश्वरं पतिं कर्त्तुमिच्छया स्वयमागता ॥ ५८ ॥
गत्वा हि कस्यचित् स्थानमस्पृश्येह परत्र च ।
कस्याचित् पादरजसा यशसा भान्ति योषितः ॥५९॥
इत्युक्ता मोहिनी शीघ्रं गत्वोवास हरेः पुरः ।
स्वयं विधाता जगताञ्चकम्पे कुलटा भयात् ॥ ६० ॥
सस्मिता वक्रनयना कामभावं चकार ह ।
स्वाङ्गञ्च दर्शयामास कामबाणप्रपीड़िता ॥ ६१ ॥
एतस्मिन्नन्तरे कामः सर्वज्ञः सर्वयोगवित् ।
आविर्भूय पञ्चबाणान्निचिक्षेप च ब्रह्मणि ॥ ६२ ॥
संमोहनं समुद्वेगं वीजस्तम्भितकारणम् ।
उन्मत्तवीजं ज्वलदं शश्वच्चेतनहारकम् ॥ ६३ ॥
एतान् प्रक्षिप्य मदनोऽप्यन्तरिक्षस्थितः स्वयम् ।
किङ्करान् प्रेषयामास संमोहाय पितुर्मुदा ॥ ६४ ॥
वसन्तं कोकिलांश्च गन्धवातं मनोहरम् ।
नियुज्यास्य नरं गत्वा तद्विकारं चकार ह ॥ ६५ ॥
पुंस्कोकिलः कलं रावमुवाच तत्समीपतः ।
षट्पदः सुन्दरं सूक्ष्म जुगुञ्जे पुरतः स्थितः ॥ ६६ ॥
शश्वद्ववौ गन्धवहो मन्दोऽतिशीतलः प्रिये ।
सन्ततं मुदितस्तत्र बभ्राम च मधुः स्वयम् ॥ ६७ ॥
पुलकाञ्चितसर्वाङ्गो बभूव जगतां विधिः ।
ददर्श मोहिनीभावं प्रहस्य च पुनः पुनः ॥ ६८ ॥

अतीववक्रनयना कामास्त्रहतचेतना ।
विधाता बुबुधे सर्वं सर्वब्रह्मनिबन्धनम् ॥ ६९ ॥
नियन्तुं न मनः शक्तः सस्मार श्रीहरिं भिया ।
तुष्टाव मनसा कृष्णं शान्तं हृत्पङ्कजस्थितम् ॥ ७० ॥
द्विभुजं मुरलीहस्तं हरिं पीताम्बरं परम् ।
अतीवकमनीयञ्च किशोरं स्थिरयौवनम् ।
रत्नालङ्कारभूषाढ्यं सस्मितं श्यामसुन्दरम् ॥ ७१ ॥

ब्रह्मोवाच ।

रक्ष रक्ष हरे माञ्च निमग्नं कामसागरे ।
दुष्कीर्तिजलपूर्णे च दुष्पारे बहुसङ्कटे ॥ ७२ ॥
भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे ।
अतीवनिर्मलज्ञानचक्षुःप्रच्छन्नकारणे ॥ ७३ ॥
जन्मोर्मिसङ्गसहिते योषिन्नक्रौघसङ्कुले ।
रतिस्रोतःसमायुक्ते गम्भीरे घोर एव च ॥ ७४ ॥
प्रथमामृतरूपे च परिणामविषालये ।
यमालयप्रवेशाय मुक्तिद्वारातिविस्मृते ॥ ७५ ॥
बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम् ।
स्वयञ्च त्वं कर्णधारः प्रसीद मधुसूदन ॥ ७६ ॥
मद्विधाः कतिचिन्नाथ नियोज्या भवकर्मणि ।
सन्ति विश्वेश विधयो हे विश्वेश्वर माधव ॥ ७७ ॥
न कर्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः ।
तथापि नः स्पृहा कामे तद्भक्तिव्यवधायके ॥ ७८ ॥
हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु ।
त्वं महेश महाज्ञाता दुःस्वप्नं मां न दर्शय ॥ ७९ ॥

इत्युक्त्वा जगतां धाता विरराम सनातनः।
ध्यायं ध्यायं मत्पदाब्जं शश्वत्सस्मार मामिति ॥ ८० ॥
ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत्।
स चैवाकर्णविषये न निमग्नो भवेत् ध्रुवम् ॥ ८१ ॥
मम मायां विनिर्जित्य स ज्ञानं लभते ध्रुवम्।
इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥ ८२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे ब्रह्ममोहिनीसंवादो
नाम द्वाविंशोऽध्यायः।

---

## त्रयस्त्रिंशोऽध्यायः।

---

श्रीकृष्ण उवाच।

कृत्वा ब्रह्मा हरेः स्तोत्रं तस्थौ तस्याः समीपतः।
मनोमत्तगजेन्द्रञ्च कामासक्तं निवारयन् ॥ १ ॥
दिव्यज्ञानाङ्कुशेनैव मया दत्तेन राधिके।
उवाच मोहिनी तञ्च परिहासपरं वचः ॥ २ ॥

मोहिन्युवाच।

इङ्गितेनैव नारीणां सद्यो मत्तं भवेन्मनः।
करोत्याकृष्य सम्भोगं यः स एवोत्तमो विभो ॥ ३ ॥
ज्ञात्वा स्फुटमभिप्रायं नार्य्या संप्रेषितो हि यः।
पश्चात् करोति शृङ्गारं पुरुषः स च मध्यमः ॥ ४ ॥

पुनः पुनः प्रेषितश्च स्त्रिया कामार्त्तया च यः ।
तया न लिप्तो रहसि स क्लीवो न पुमानहो ॥५॥
गृही तपस्वी कामी वा त्यजेत् स्त्रियमुपस्थिताम् ।
व्रजेत् परत्र नरकमपूज्यश्च भवेदिह ॥ ६ ॥
नष्टश्रीर्भ्रष्टरूपश्च भ्रष्टबुद्धिर्भवेद् ध्रुवम् ।
स सद्यः क्लीवतां याति ब्रह्मशापेन योषितः ॥७॥
उत्तिष्ठ जगतीनाथ पारं कुरु स्मरार्णवे ।
निमग्नां दुस्तरे घोरे कर्णधारभयानके ॥ ८ ॥
अतीवनिर्जनस्थाने सर्वजन्तुविवर्जिते ।
सुगन्धिवायुना रम्ये पुंस्कोकिलरुतश्रुते ॥ ९ ॥
सततं त्वन्मनस्कामां दासीं जन्मनि जन्मनि ।
क्रीणीहि रतिपुण्येनामूल्यरत्नेन सत्वरम् ॥ १० ॥
इत्युक्त्वा मोहिनी सद्यो जगत्स्रष्टुश्च ब्रह्मणः ।
विचकर्ष वरं वस्त्रं सस्मिता कामविह्वला ॥ ११ ॥
विज्ञाय समयं धाता तामुवाच भयातुरः ।
पियूषतुल्यं वचनं वरं विनयपूर्वकम् ॥ १२ ॥

ब्रह्मोवाच ।

शृणु मोहिनि मद्वाक्यं सत्यं सारं हितं स्फुटम् ।
न कुरु त्वञ्च त्रैलोक्ये स्त्रीजातीनामपत्रपाम् ॥१३॥
त्यज मामम्बिके पुत्रं वृद्धं निष्काममेव च ।
त्वत्कर्मयोग्यरसिकं युवानं पश्य सुस्मिते ॥ १४ ॥
निषेकाल्लभते पत्नी गुरुभर्त्तुः शुभाशुभम् ।
मन्त्रशिल्पमपत्यञ्च सर्वमेतन्न यत्नतः ॥ १४ ॥
त्वया सह मम रते निबन्धो नास्ति सुव्रते ।

क्षुद्रं महद्वा यत् कर्म्म सर्व्वं दैवनिबन्धकम् ॥ १६ ॥
इत्युक्तवन्तं ब्रह्माणं स्मरन्तं मत्पदाम्बुजम्।
विचकर्ष पुनर्व्वेश्या कामेन हतचेतना ॥ १७ ॥
एतस्मिन्नन्तरे शीघ्रं स्थानं तत् सुमनोहरम्।
आजग्मुर्म्मुनयः सर्व्वे ज्वलन्तो ब्रह्मतेजसा ॥ १८ ॥
अत्रिः पुलस्त्यः पुलहो वशिष्ठः क्रतुरङ्गिराः।
भृगुर्म्मरीचिः कपिलो वोढुः पञ्चशिखो रुचिः ॥१९॥
आसुरिश्च प्रचेताश्च स्वयं शुक्रो बृहस्पतिः।
उतथ्यः करकः कण्वः कश्यपो गौतमस्तथा ॥२० ॥
सनकश्च सनन्दश्च कर्द्दमश्च सनातनः।
सनत्कुमारो भगवान् योगिनां परमो गुरुः ॥२१॥
शातातपः पिप्पलश्च शङ्कुः शङ्खः पराशरः।
मार्कण्डेयो लोमशश्च मृकण्डुश्चयवनस्तथा ॥ २२ ॥
दुर्व्वासाश्च जरत्कारुरास्तीकश्च विभाण्डकः।
ऋष्यशृङ्गो भरद्वाजो वामदेवश्च कौशिकः २३ ॥
दृष्ट्वैतांश्च तपोनिष्ठानागतांश्च मुनीश्वरान्।
तत्याज मोहिनी शीघ्रं व्रीड़या कमलोद्भवम् ॥२४॥
ततोवास जगद्धाता तद्वामपार्श्वतश्च सा।
प्रणेमुर्म्मुनयस्तञ्च भक्तिनम्रात्मकन्धराः ॥ २५ ॥
आशिषं युयुजे ब्रह्मा वासयामास तान् विभुः।
तेषु मध्ये प्रजज्वाल यथा तारासु चन्द्रमाः ॥ २६ ॥
पप्रच्छुर्म्मुनयो देवं कथमेषा तवान्तिके।
स्वर्व्वेश्यानाञ्च प्रवरा मोहिनीत्येवमेव च ॥ २७ ॥
श्रुत्वा मुनीनां वचनमुवाच तान् प्रजापतिः।

स्त्रीजातीनाञ्च वचनं लज्जाच्छादनमेव च ॥ २८ ॥

ब्रह्मोवाच ।

अपूर्वं नृत्यगीतञ्च चिरं कृत्वा शुभावहा ।
उवासेयं परिश्रान्ता यथा कन्या पितुः पुरः ॥ २९ ॥
इत्युक्त्वा जगतां धाता जहास मुनिसंसदि ।
जहसुर्मुनयः सर्वे सर्वज्ञास्तत्र राधिके ॥ ३० ॥
सर्वं रहस्यं विज्ञाय जगत् स्रष्टुश्च मानसम् ।
मद्यश्चुकोप कुलटा हास्यव्याजेन संसदि ॥ ३१ ॥
सर्वाङ्गकम्पमाना सा कुलटा कुटिलानना ।
रक्तपङ्कजनेत्रा च कोपप्रस्फुरिताधरा ॥ ३२ ॥
उत्थाय च सभामध्ये तेषाञ्च पुरतः स्थिता ।
संबोध्योवाच ब्रह्माणं मृत्युकन्या यथा रुषा ॥ ३३ ॥

मोहिन्युवाच ।

अये ब्रह्मन् जगन्नाथ वेदकर्ता त्वमेव च ।
किं वा वेदप्रणिहितं कर्म किं तद्विपर्य्ययम् ॥ ३४ ॥
विचारं मनसा स्वेन कुरु वेदविदां गुरो ।
स्वकन्यायां यत्स्पृहा स कथं हससि नर्तकीम् ॥ ३५ ॥
निर्मिताहमीश्वरेण स्वर्वेश्या सर्वगामिनी ।
सतां कर्मविरुद्धं यत्तदत्यन्तविडम्बनम् ॥ ३६ ॥
दासीतुल्यां विनीताञ्च दैवेन शरणागताम् ।
यतो हससि गर्वेण ततोऽपूज्यो भवाचिरम् ॥ ३७ ॥
अचिराद्दर्पभङ्गं ते करिष्यति हरिः स्वयम् ।
निबोध वचनं ब्रह्मन् वेश्यायाश्च तु साम्प्रतम् ॥ ३८ ॥
तवैव वचनं स्तोत्रं गृह्णाति यो नरः सदा ।

भविता तस्य विघ्नश्च स यास्यत्युपहास्यताम् ॥ ३९ ॥
भविता वार्षिकी पूजा देवतानां युगे युगे।
तव माघ्याञ्च संक्रान्त्यां न भविष्यति सा पुनः ॥ ४० ॥
कल्पान्तरेऽत्र कल्पे वा देहे देहान्तरेऽत्र वा।
पुनः पूजा न भविता या गता सा गतैव च ॥ ४१ ॥
इत्युक्त्वा मोहिनी शीघ्रं जगाम मदनालयम्।
तेन सार्द्धं रतिं कृत्वा बभूव विज्वरा पुनः ॥ ४२ ॥
पश्चात् सा चेतनां प्राप्य विललाप भृशं पुनः।
अयं कथं मया शप्तो जगद्विधिरतिप्रियः ॥ ४३ ॥
स्वर्वेश्यायां गतायाञ्च मुनयो दुःखिता भृशम्।
स्वयं विधाता जगताञ्चकम्पे नतकन्धरः ॥ ४४ ॥
उपायं मुनयस्तस्मै ददुः कल्याणकारिणः।
शरणं व्रज वैकुण्ठमित्युक्त्वा ते गृहान् ययुः ॥ ४५ ॥
ब्रह्मा जगाम शरणं मम मूर्त्यन्तरं परम्।
शान्तं तं कमलाकान्तं श्यामं नारायणाभिधम् ॥ ४६ ॥
गत्वा विषण्णवदनः प्रणम्य च चतुर्भुजम्।
तत्रोवास जगत्कर्ता नातिदूरे समीपतः ॥ ४७ ॥
रहस्यं कथयामास शुष्ककण्ठोष्ठतालुकः।
दीनबन्धुं दयासिन्धुं विपत्तारणकारणम् ॥ ४८ ॥
श्रुत्वा रहस्यं तत्सर्वं प्रहस्योवाच तं विभुः।
सत्यं सारं हितं वाक्यं जगताञ्च सुखावहम् ॥ ४९ ॥

श्रीनारायण उवाच।

स्वयं त्वं वेदविदसि विदुषाञ्च गुरोर्गुरुः।
त्वया कृतञ्च यत् कर्म इह केन न तत् कृतम् ॥ ५० ॥

स्त्रीजातिः प्रकृतेरंशा जगतां वीजरूपिणी ।
स्त्रीणां विड़म्बनेनैव प्रकृतेश्च विड़म्बनम् ॥ ५१ ॥
न तद्भारतवर्षञ्च पुण्यचेत्रमनुत्तमम् ।
क्रीड़ाचेत्रे ब्रह्मलोके कस्तत्रेन्द्रियनिग्रहः ॥ ५२ ॥
यदि तद्भारते दैवात्कामिनी समुपस्थिता ।
स्वयं रहसि कामार्त्ता न सा त्याज्या जितेन्द्रियैः ॥५३॥
त्यक्त्वा परत्र नरकं व्रजेदिति विड़म्बितः ।
भवेदेव हि दुःखार्त्ता शापं दद्याच्च तं ध्रुवम् ॥ ५४ ॥
विहाय स्वकलत्रञ्च यो गृह्णाति परस्त्रियम् ।
लोभात् कामसुखाद्वापि सोऽधमो नात्र संशयः ॥५५॥
पातयित्वा स च पतेद्दश पूर्वान् दशापरान् ।
त्यक्त्वा स्वस्वामिनं या च परं गच्छति कामतः ॥ ५६ ॥
न पुमान्न च वेश्या च कुलस्त्री तत्र दुष्यति ।
उपायेन च या साध्वं करोति परपूरुषम् ॥ ५७ ॥
सा तिष्ठत्येवान्धकूपे यावच्चन्द्रदिवाकरौ ।
स्ववेश्या च दिवं याति सततं कुलधर्मतः ॥ ५८ ॥
ध्रुवं भवेत् सोऽपराधी तस्या अप्यवमानतः ।
तमुपायं करिष्यामि शप्तो यत्र विशुध्यति ॥ ५९ ॥
चणं तिष्ठ जगन्नाथ पापिनश्च भवार्णवे ।
एतस्मिन्नन्तरे कश्चिदाजगाम हरेः पुरः ।
द्वारपालः शीघ्रगामीत्युवाच नतकन्धरः ॥ ६० ॥

द्वारपाल उवाच ।

अन्यब्रह्माण्डाधिपतिर्ब्रह्मा दशमुखः स्वयम् ।
द्वारे तिष्ठन्महाभक्तस्त्वां द्रष्टुं स्वयमागतः ॥ ६१ ॥

द्वारपालवचः श्रुत्वा स चैवानुमतिं ददौ ।
द्वारपालाज्ञया ब्रह्मा तुष्टावागत्य भक्तितः ॥ ६२ ॥
स्तोत्रैरतिविचित्रैश्च चतुर्वेदाश्रुतैरहो ।
तुष्टोवासाज्ञया विष्णोः कृत्वा पश्चाच्चतुर्मुखम् ॥६३॥
नारायणो द्वारपालानित्युवाच चतुर्भुजान् ।
आगन्तुकं जनमपि प्रवेशयत सादरम् ॥ ६४ ॥
एतस्मिन्नन्तरे तत्र वृन्दावनविनोदिनि ।
आजगामातिप्रणतो ब्रह्मा शतमुखः स्वयम् ॥ ६५ ॥
दिव्यैः स्तोत्रैश्च तुष्टाव निगूढ़मतिसुन्दरैः ।
तुष्टोवास वरैः स्तोत्रैः सर्वेषामश्रुतैरहो ॥ ६६ ॥
तदनन्तरयोरग्रे भक्त्या शतमुखः स्वयम् ।
जगद्विधौ सभायाञ्च तत्र तिष्ठति तत्क्षणे ॥ ६७ ॥
आजगामातिब्रह्माण्डाधिपो ब्रह्मा हरेः पुरः ।
सहस्रवदनः श्रीमान् भक्त्या नम्रात्मकन्धरः ॥६८॥
तुष्टोवास वरैः स्तोत्रैः सर्वेषामश्रुतैरहो ।
तञ्च पप्रच्छ सर्वेषां ब्रह्माण्डानाञ्च ब्रह्मणाम् ।
वार्त्तां विषयिणाञ्चैव सुराणाञ्च क्रमेण च ॥ ६९ ॥
चतुर्मुखस्य तान् दृष्ट्वा दर्पभङ्गो बभूव ह ।
आत्मानं विष्णुसदृशं मन्यमानस्य दर्पतः ॥ ७० ॥
अन्यान् स दर्शयामास ब्रह्माण्डस्थान् विधीन् हरिः ।
दृष्ट्वा च कृपया तत्र मृततुल्यं चतुर्मुखम् ॥ ७१ ॥
यावन्ति गात्रलोमानि सन्ति नारायणस्य मे ।
तत्प्रमाणाश्च ब्रह्माण्डा ब्रह्मणः सन्ति सन्ततम् ॥७२॥
नारायणं प्रणम्याशु जग्मुस्ते स्वालयं प्रति ।

स मेने विधिरात्मानमत्यल्पं विषयाधिपम् ॥ ७३ ॥
पप्रच्छ प्रणतं विष्णुर्ल्लज्जानम्रचतुर्मुखम् ।
वद तत् किमिदं दृष्टं स्वप्नवद्भवताधुना ॥ ७४ ॥
नारायणवचः श्रुत्वा विधिरित्युक्तवांस्तदा ।
भूतं भव्यं भविष्यञ्च तव मायासमुद्भवम् ॥ ७५ ॥
इत्येवमुक्त्वा स विधिस्तस्थौ संसदि लज्जया ।
सर्वान्तर्य्यामी भगवान् तस्योपायं विनिर्ममे ॥७६॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे मोहिनीशापब्रह्मदर्पभङ्गो
नाम त्रयस्त्रिंशोऽध्यायः ।

---

## चतुस्त्रिंशोऽध्यायः ।

—०○—

श्रीकृष्ण उवाच ।

एतस्मिन्नन्तरे तत्र शङ्करः समुपस्थितः ।
सस्मितो वृषभेन्द्रस्थो विभूतिभूषणः स्वयम् ॥ १ ॥
व्याघ्रचर्म्माम्बरधरो नागयज्ञोपवीतकः ।
स्वर्णाकारजटाभारमर्धचन्द्रञ्च संदधत् ॥ २ ॥
त्रिशूलपट्टिशकरो बिभ्रत् खट्वाङ्गमुत्तमम् ।
सद्रत्नसाररचितस्वरयन्त्रकरो मुदा ॥ ३ ॥
वाहनादवरुह्याशु भक्तिनम्रात्मकन्धरः ।
प्रणम्य कमलाकान्तं वामे चोवास भक्तितः ॥ ४ ॥

आजग्मुर्मुनयः सर्वे सुराः शक्रादयस्तथा।
आदित्या वसवो रुद्रा मनवः सिद्धचारणाः ॥ ५ ॥
पुलकाञ्चितसर्वाङ्गास्तुष्टुवुः पुरुषोत्तमम्।
प्रणम्य तं शिवं सर्वे सुराश्च नम्रकन्धराः ॥ ६ ॥
एतस्मिन्नन्तरे तत्र सङ्गीतं शङ्करो जगौ।
कृत्वातीव सुतालञ्च स्वरयन्त्रसमन्वितः ॥ ७ ॥
आवयोश्च गुणाख्यानं राससम्बन्धि सुन्दरम्।
समयोचितरागेण मनोमोहनकारिणा ॥ ८ ॥
यत्र कण्ठैकतानेन चैकमानेन चारुणा।
पदभेदविरामेण गुरुणा लघुना क्रमात् ॥ ९ ॥
गमकेनातिदीर्घेण मदेन मधुरेण च।
भवेति दुर्लभं दृष्टं प्रीत्या स्वेन विनिर्मितम् ॥ १० ॥
पुलकाञ्चितसर्वाङ्गः साश्रुनेत्रः पुनः पुनः।
तदेव श्रुतिमात्रेण मूर्च्छां प्राप्य विचेतनाः ॥ ११ ॥
बभूवु रुद्ररूपाश्च मुनयः पुरतः प्रिये।
रुद्ररूपाः सुराः सर्वे विधातृहरिपार्षदाः ॥ १२ ॥
नारायणश्च लक्ष्मीश्च गायकश्च शिवः स्वयम्।
जलपूर्णञ्च वैकुण्ठं दृष्ट्वा त्रस्तोऽहमीश्वरि ॥१३॥
गत्वा मूर्त्तीर्विनिर्माय सर्वाश्च तादृशीरिति।
तत्स्वरूपास्तदस्त्राश्च तत्स्ववाहनभूषणाः ॥१४॥
तत्स्वभावास्तन्मनस्कास्तत्तद्विषयमानसाः।
स्थानं निर्माय परितो वैकुण्ठस्य चतुर्दिशि ॥ १५ ॥
तदधिष्ठातृदेवी च आजगाम स्वमालयम्।
शरीरजा सुराणां सा बभूव सुरनिम्नगा।

मुक्तिदा च मुमुक्षूणां भक्तानां हरिभक्तिदा ॥ १६ ॥
कोटिजन्मार्जितं पापं विविधं पापिनामहो ।
यस्याश्च स्पर्शवायोश्च सम्पर्केण विनश्यति ॥१७॥
किं वा न जाने प्राणेशि स्पर्शदर्शनयोः फलम् ।
किमुत स्नानजन्यञ्च कथयामि निरूपणम् ॥१८॥
सर्वतीर्थात्परं पृथ्वां पुष्करं परिकीर्त्तितम् ।
वेदोक्तञ्च तदेवास्याः कलां नार्हति षोड़शीम् ॥ १९
भगीरथेन चानीता तेन भागीरथी स्मृता ।
गामागता स्रोतसोऽस्याङ्गङ्गा तेन प्रकीर्त्तिता ॥ २०
जानुद्वारा पुरा दत्ता जह्नुना तोयकोपतः ।
तस्य कन्यास्वरूपा सा जाह्नवी तेन कीर्त्तिता ॥२१॥
भीष्मः स्वयं वसुर्जातस्तस्यां सा तेन भीष्मसूः ॥२२॥
धाराभिस्त्रिसृभिः स्वर्गं पृथिवीमतलं तथा ।
ममाज्ञया च गच्छन्ती तेन त्रिपथगामिनी ॥ २३ ॥
प्रधानराधया स्वर्गे सा च मन्दाकिनी स्मृता ।
योजनायुतविस्तीर्णा प्रस्थे च योजना स्मृता ॥२४॥
क्षीरतुल्यजला शश्वदत्युत्तुङ्गतरङ्गिणी ।
वैकुण्ठाद् ब्रह्मलोकञ्च ततः स्वर्गं समागता ॥ २५ ॥
स्वर्गाद्धिमाद्रिमार्गेण पृथिवीमागता मुदा ।
सा धारालकनन्दाख्या लवणोदेन मिश्रिता ॥ २६ ॥
शुद्धस्फटिकसङ्काशा बहुवेगवती सती ।
पापिनां पापशुष्केन्धं दग्धुं पावकरूपिणी ॥२७॥
अतो सागरवंशेभ्यो निर्वाणमुक्तिदायिनी ।
वैकुण्ठगामिनी सा च सोपानरूपिणी वरा ॥२८॥

अतोऽपि मृत्युसमये सतां पुण्यस्वरूपिणाम् ।
आदौ पादौ च संन्यस्य मुखे तोयं प्रदीयते ॥२९॥
गङ्गासोपानमारुह्य सन्तो यान्ति निरामयम् ।
आब्रह्मलोकं संलङ्घ्य रथस्थाश्च निरापदः ॥ ३० ॥
दैवात्पुरा प्राक्तनेन मग्ने चेत् कृतपातकैः ।
लोमप्रमाणवर्षञ्च मोदन्ते हरिमन्दिरे ॥ ३१ ॥
ततो भोगो भवेत्तेषां निश्चितं पापपुण्ययोः ।
अति स्वल्पेन कालेन कालव्यूहञ्च बिभ्रताम् ॥३२॥
ततः पुण्यवतां गेहे लब्ध्वा जन्म च भारते ।
संप्राप्य निश्चलां भक्तिं भवन्ति हरिरूपिणः ॥ ३३ ॥
मृतद्विजानां देहांश्च दैवाच्छूद्रा वहन्ति चेत् ।
पदप्रमाणवर्षञ्च तेषाञ्च नरके स्थितिः ॥ ३४ ॥
ततस्तेषाञ्च साहाय्यं करोति हरिरूपिणी ।
ददाति मुक्तिं तेभ्योऽपि क्रमेण च कृपामयी ॥ ३५ ॥
जन्मपुण्यवतां गेहे कारयित्वा च भारते ।
स्थलं ददाति वैकुण्ठे निश्चितं जन्मभिस्त्रिभिः ॥३६॥
यात्रां कृत्वा तु यः शुद्धो स्नातुं याति सुरेश्वरीम् ।
पदप्रमाणवर्षञ्च वैकुण्ठे मोदते ध्रुवम् ॥ ३७ ॥
गङ्गां प्राप्यानुषङ्गेण स्नाति चेत् समलो नरः ।
मुच्यते सर्वपापेभ्यः पुनर्यदि न लिप्यते ॥ ३८ ॥
कलौ पञ्चसहस्राब्दं स्थितिस्तस्याश्च भारते ।
तस्याञ्च विद्यमानायां कः प्रभावः कलेरहो ॥ ३९ ॥
कलौ दशसहस्राणि वर्षाणि प्रतिमा मम ।
तिष्ठन्ति च पुराणानि प्रभावस्तत्र कः कलेः ॥ ४० ॥

अतलं याति या धारा सा च भोगवती स्मृता।
पयःफेननिभा शश्वदतिवेगवती सदा ॥ ४१ ॥
आकरामूल्यरत्नानां मणीन्द्राणाञ्च सन्ततम्।
नागकन्याश्च तत्तीरे क्रीड़न्ति स्थिरयौवना: ॥ ४२ ॥
स्वयं देवी च वैकुण्ठे वेष्टतित्वा च सन्ततम्।
सहस्रयोजना प्रस्थे दैर्घ्ये च लक्षयोजना ॥ ४३ ॥
अस्या विनाशः प्रलये नास्त्येव दुहितुर्मम।
नानारत्नाकरं दिव्यं तत्तीरं सुमनोहरम् ॥ ४४ ॥
इत्येवं कथितं सर्वं जाह्नवीजन्मपुण्यदम्।
ब्रह्मणश्च प्रतीकारो मोहिनीशापत: शृणु ॥ ४५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे जाह्नवीजन्मप्रस्तावो
नाम चतुस्त्रिंशोऽध्यायः।

---

## पञ्चत्रिंशोऽध्यायः।

श्रीकृष्ण उवाच।

नारायणश्च ब्रह्माणमुवाच कृपया पुनः।
दृष्ट्वा गङ्गाञ्च सर्वे गां मम मायाञ्च मेनिरे ॥ १ ॥

श्रीनारायण उवाच।

उत्तिष्ठ गच्छ भद्रन्ते भविष्यति चतुर्मुख।
अत्र स्नात्वाभिशप्तस्त्वं पूतो भव ममाज्ञया ॥ २ ॥

त्वं चेत् सत्यं स्वयं पूतः स्पर्शं वाञ्छन्ति तानि च ।
वैष्णवेशस्य तीर्थानि सर्वाणि सततं मुने ॥ ३ ॥
तथापि शापमुक्तस्त्वमत्र प्रकृतिहेलनात् ।
अहङ्कारश्च सर्वेषां पापवीजममङ्गलम् ॥ ४ ॥
शीघ्रं त्वं गच्छ गोलोकं ममालयपरात्परम् ।
प्रकृत्यंशां मङ्गलदां तत्र प्राप्स्यसि भारतीम् ॥ ५ ॥
प्रकृतिं भज कल्याणसृष्टिवीजस्वरूपिणीम् ।
अहो कल्पान्तपर्य्यन्तं तपस्तप्तं त्वयाधुना ॥ ६ ॥
तव मन्त्रं न गृह्णन्ति केऽपि वेश्याभिशापतः ।
यदन्यदेवपूजायां तव पूजा भविष्यति ॥ ७ ॥
त्वमेव जगतां धाता स्वात्मारामश्च योषितः ।
सर्वरूपी च पूजा च सर्वदेहेषु सर्वतः ॥ ८ ॥
तदा ममाज्ञया ब्रह्मन् स्नात्वा च जाह्नवीजले ।
शीघ्रं जगाम गोलोकं मां प्रणम्य जगद्गुरुः ॥ ९ ॥
ते देवा मुनयः सर्वे प्रजग्मुः स्वालयं मुदा ।
सुनिर्मलं मम यशो गायन्तश्च पुनः पुनः ॥ १० ॥
विधिरागत्य गोलोकं संप्राप्य भारतीं सतीम् ।
सर्वविद्याधिदेवीं तां मदङ्गाङ्गविनिर्मिताम् ॥ ११
वागीश्वरीञ्च संप्राप्य ब्रह्मा प्रमुदितः स्वयम् ।
कामास्त्राणाञ्च व्यापारमनुमेने स्वयं विभुः ॥१२॥
तत आगत्य मां नत्वा प्राप्य त्रैलोक्यमोहिनीम् ।
क्रीड़ां चकार भगवान् स्थाने स्थानेऽतिनिर्जने ॥ १३ ॥
रतिं चिरतरं कृत्वा विरराम स्वयं विधिः ।
वागीश्वरीमुवाचेदं त्वं वै ब्रह्मा च कर्मणा ॥ १४ ॥

काचित् स्वकर्मणा साध्वी पूज्या च स्थिरयौवना ।
तवैव कर्मयोगश्च युवानं पश्य सुन्दरि ॥ १५ ॥
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत् ।
जरातुरोऽहं वृद्धश्च तपस्वी वैष्णवो द्विजः ॥ १६ ॥
अस्वतन्त्रः पराधीनः का रतिः पुंश्चलीषु मे ।
आजगाम ब्रह्मलोकं पुनरेव निजालयम् ॥ १७ ॥
ददृशुर्ब्रह्मलोकस्थास्तां देवीं कौतुकान्विताम् ।
अतीवसुन्दरीं रम्यां शुभ्रवर्णाञ्च सस्मिताम् ॥ १८ ॥
शरच्छीतांशुवदनां शरत्पङ्कजलोचनाम् ।
पक्वविम्बप्रभामुष्टदीप्तौष्ठाधरपल्लवाम् ॥ १९ ॥
मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिमनोहराम् ।
रत्नकेयूरवलयरत्ननूपुरशोभिताम् ॥ २० ॥
रत्नकुण्डलयुग्मेन कर्णमूलविराजिताम् ।
रत्नेन्द्रसारहारेण वक्षःस्थलसमुज्ज्वलाम् ॥ २१ ॥
वह्निशुद्धांशुकं सूक्ष्मं विभ्रतीं नवयौवनाम् ।
अतीव कमनीयाञ्च पीनश्रोणिपयोधराम् ॥ २२ ॥
वीणापुस्तकहस्ताञ्च व्याख्यामुद्राकरां वराम् ।
ते च निर्मञ्छनं कृत्वा चक्रुः परममङ्गलम् ॥ २३ ॥
पुरीं प्रवेशयामासुर्ब्रह्माणं भारतीं मुदा ।
ब्रह्मा तया सह क्रीड़ां चकार स दिवानिशम् ॥ २४ ॥
अतीव सुखसम्भोगे निमग्नः सततं मुदा ।
गूढ़ं सर्वपुराणेषु किं पुनः श्रोतुमिच्छसि ॥ २५ ॥

श्रीनारायण उवाच ।

प्राणेशवचनं श्रुत्वा प्रहस्य परमेश्वरी ।

भूयोऽपि परिपप्रच्छ कौतुकान्मानसं पुरा ॥ २६ ॥

श्रीराधिकोवाच ।

ब्रह्मा कथं न जग्राह वेश्यां स्वयमुपस्थिताम् ।
न कर्मक्षेत्रे रहसि फलदाता च कर्मणाम् ॥ २७ ॥
उपस्थितायास्त्यागे च महान् दोषो हि योषितः ।
ज्ञात्वा देव विधाता स कथं तत्याज मोहिनीम् ॥२८॥

श्रीनारायण उवाच ।

राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः ।
पाद्मकल्पस्य वृत्तान्तमुवाच परमेश्वरीम् ॥ २९ ॥

श्रीकृष्ण उवाच ।

शृणु कान्ते प्रवक्ष्यामि पुरावृत्तान्तमीप्सितम् ।
अकथ्यं गोपनीयञ्च महतामभिनिन्दितम् ॥ ३० ॥
एकदा च प्रजाः स्रष्टुं विधाता प्रेरितो मया ।
ससर्ज मनसा पुत्रान् ज्वलन्तो ब्रह्मतेजसा ॥ ३१ ॥
सनकञ्च सनन्दञ्च सनातनमनुत्तमम् ।
सनत्कुमारं वोढुञ्च कविं पञ्चशिखं विभुम् ॥ ३२ ॥
असितं कपिलं सिद्धं सिद्धान्सकलोद्भवान् ।
तान् नग्नान् पञ्चवर्षीयान् पिता स्रष्टुं जगाद ह ॥३३॥
प्रजाः स्रष्टुं प्रेरकञ्च जनकं तेऽवमन्य च ।
प्रजग्मुस्तपसे तूर्णं समार्चनपरायणाः ॥ ३४ ॥
तदा रुष्टो जगद्धाता पुनः पुत्रान् विनिर्ममे ।
रुद्रानेकादश वरान् रुदतो भीमविग्रहान् ॥ ३५ ॥
तस्मिन् प्रयुज्य तरसा पुनः पुत्रान् विनिर्ममे ।
योगी योगेन मां ध्यात्वा स्वात्मारामः स्वविग्रहे ॥ ३६ ॥

वशिष्ठं पुलहञ्चैव क्रतुमाङ्गिरसं तथा।
भृगुमत्रिं पुलस्त्यञ्च दक्षं कर्दममेव च ॥ ३७ ॥
मरीचिञ्च विनिर्माय प्रजाः स्रष्टुं नियुज्य च।
प्रहृष्टमानसः पुत्रं कन्यैकाञ्च ससर्ज ह ॥ ३८ ॥
कृष्णस्य कामिनः पुत्रः कामदेवो बभूव ह।
कन्या षोड़शवर्षीया रत्नभूषणभूषिता ॥ ३९ ॥
उवाच पुत्रं स विधिः सुदीप्तं पुरतः स्थितम्।
दुर्निवार्य्यं मत्तसांशं स्वात्मारामं मनोहरम् ॥ ४० ॥

ब्रह्मोवाच।

स्त्रीपुंसोः क्रीड़नार्थाय मुदा त्वञ्च विनिर्मितः।
हृदि योगेन सर्वेषामधिष्ठानं करिष्यसि ॥ ४१ ॥
संमोहनं समुद्वेगं वीजस्तम्भितकारणम्।
उन्मत्तवीजं जलदं शश्वच्चेतनहारकम् ॥ ४२ ॥
प्रगृह्य तान्मया दत्तान् सर्वसंमोहनं कुरु।
दुर्निवार्य्यो मम वराच्च वत्स भवेषु च ॥ ४३ ॥
बाणान् दत्त्वैवमुक्त्वा च प्रहृष्टश्च जगद्विधिः।
दृष्ट्वोवाच दुहितरं वरं दातुं समुद्यतः ॥ ४४ ॥
एतस्मिन्नन्तरे कामी मनसालोच्य मन्त्रणाम्।
कर्त्तुं शस्त्रपरीक्षाञ्च बाणांश्चिक्षेप ब्रह्मणि ॥ ४५ ॥
मन्त्रपूतैश्च बाणैश्च दुर्वार्य्यैः स्मरणेन च।
अतिवृद्धो महायोगी मूर्च्छितो हतचेतनः ॥ ४६ ॥
क्षणेन चेतनां प्राप्य ददर्शाग्रे च कन्यकाम्।
तां संभोक्तुं मनश्चक्रे सा दुद्राव भिया सती ॥ ४७ ॥
दृष्ट्वा पश्चाच्च पितरं धावन्तं हतचेतनम्।

जगाम शरणं शीघ्रं भ्रातृणाञ्च तपस्विनाम् ॥ ४८ ॥
तेषां समीपे संस्थाप्य तमूचुः पितरं क्रुधा ।
हितं तथ्यञ्च वेदोक्तं नीतिसारं परं वचः ॥ ४९ ॥

ऋषय ऊचुः ।

अहो किमेतज्जनककर्मेति विगर्हितम् ।
नीचानां चरितं यत्तत्करोषि त्वं जगद्विधे ॥ ५० ॥
पश्यन्ति सततं सन्तः प्रसूमिव परस्त्रियम् ।
ये ते सर्वत्र पूज्याश्च परत्रेह जितेन्द्रियाः ॥ ५१ ॥
त्वं स्वयं वेदकर्त्ता च कन्यां संभोक्तुमिच्छसि ।
कन्या च मातृवर्गेषु प्रविष्टा च श्रुतौ श्रुता ॥ ५२ ॥
गुरोः पत्नी राजपत्नी विप्रपत्नी च या सती ।
पत्नी च भ्रातृसुतयोर्मित्रपत्नी च तत्प्रसूः ॥ ५३ ॥
प्रसूः पित्रोस्तथा भ्रातुः पत्नी श्वश्रूः स्वकन्यकाः ।
जननी तत्सपत्नी च भगिनी सुरभी तथा ॥ ५४ ॥
स्वाभीष्टसुरपत्नी च धात्रिकान्नप्रदायिका ।
गर्भधात्री स्वनाम्ना च भयात्त्रातुश्च कामिनी ॥ ५५ ॥
एता वेदप्रणीताश्च सर्वेषां मातरः स्मृताः ।
एतास्वपि च सर्वासु न्यूनता नास्ति कासु च ॥ ५६ ॥
कन्यादाताऽन्नदाता च ज्ञानदाताभयप्रदः ।
अन्नदो मन्त्रदो ज्येष्ठभ्राता च पितरः स्मृताः ॥ ५७ ॥
एता वहन्ति ये मूढा य एतान् जनकानपि ।
पच्यन्ते नरके ते च यावद्वै ब्रह्मणो वयः ॥ ५८ ॥
तानन्धकूपे संस्थाप्य दूरतो यमकिङ्कराः ।
कुर्वन्ति ताड़नं शश्वत्पुरीषं पाययन्ति च ॥ ५९ ॥

त्वमेव विश्वकर्ता च शास्ता वै शमनस्य च ।
स्वयं विधाता जगतां तेन गृह्लासि कन्यकाम् ॥ ६० ॥
अस्माकं पुरतो दूरं गच्छ कामार्तमानस ।
न कुर्मो भस्मसात्कर्तुं शक्ताश्च जनकं वयम् ॥ ६१ ॥
गुरोर्दोषसहस्राणि चन्तुमर्हन्ति पण्डिताः ।
सर्वघ्नं तं विनिघ्नन्ति नीतिज्ञाः स्वगुरुं विना ॥ ६२ ॥
गृह्णन्तं यदि सर्वस्वं शपन्तं निष्ठुरं गुरुम् ।
साधवस्तं न निन्दन्ति प्रणमन्ति स्वभक्तितः ॥ ६३ ॥
ये द्विषन्ति च निन्दन्ति गुरुमिष्टं सुरात्परम् ।
पच्यन्ते तेऽन्धकूपे च यावच्चन्द्रदिवाकरौ ॥ ६४ ॥
पुरीषं भुञ्जते नित्यं चुभिता यमताड़नैः ।
सर्पप्रमाणकीटैश्च दंशिताश्च दिवानिशम् ॥ ६५ ॥
इत्येवमुक्त्वा मुनयः प्रणेमुस्तत्पदाम्बुजम् ।
सर्वं भवति दैवेन प्रशान्तमनसा ध्रुवम् ॥ ६६ ॥
उन्मुखा मुनयः सर्वे बभूवुश्च स्वकर्मणि ।
ब्रह्मा शरीरं सन्त्यक्तुं व्रीड़या च समुद्यतः ॥ ६७ ॥
योगेन भित्वा षट्चक्रं सर्वान् प्राणान्निरुध्य च ।
ब्रह्मरन्ध्रं समानीय तत्याज स्वेन वर्त्मना ॥ ६८ ॥
मनसा श्रीहरिं स्मृत्वा नमस्कारं चकार ह ।
न मे मनः परद्रव्ये भविता लोलमीश्वर ॥ ६९ ॥
प्राणत्यागात् परं दुःखमयशश्च यशस्विनाम् ।
बभूव हृदि कृत्वैकं ब्रह्मा लीनश्च ब्रह्मणि ॥ ७० ॥
कन्या तातं मृतं दृष्ट्वा विलप्य च भृशं मुहुः ।
योगेन देहन्तत्याज सा प्रलीना च ब्रह्मणि ॥७१॥

मृतं तातञ्च भगिनीं दृष्ट्वा च मुनिपुङ्गवाः ।
सस्मरुः श्रीहरिं कोपात् स्वात्मारामं विलप्य च ॥७२॥
नारायणो मदंशश्च कृपयागत्य सत्वरम् ।
ब्रह्माणं जीवयामास ब्रह्मज्ञानात् सुताञ्च ताम् ॥७३॥
ब्रह्मा पुरो हरिं दृष्ट्वा वरं वव्रे स्ववाञ्छितम् ।
भक्तिं त्वच्चरणे शश्वन्निश्चलामनपायिनीम् ॥ ७४ ॥
ब्रह्माणं विरसं दृष्ट्वा तमुवाच कृपानिधिः ।
प्रबोधवचनं सत्यं नीतिसारं मनोहरम् ॥ ७५ ॥

श्रीनारायण उवाच ।

शृणु ब्रह्मन् प्रवक्ष्येऽहं सुखमुत्तोल्य साम्प्रतम् ।
त्यज लज्जां जगन्नाथ हृदयज्वररूपिणीम् ॥ ७६ ॥
सत्कीर्तिरपकीर्तिर्वा सुप्रतिष्ठाप्युपद्रवः ।
क्षुद्राणाञ्चैव महतां भवन्त्येव स्वकर्मणा ॥ ७७ ॥
सर्वेषामपि सर्वेभ्यः स्वकर्म बलवत्तरम् ।
तस्मात् सन्तः प्रकुर्वन्ति नित्यं सत्कर्म सन्ततम् ॥७८॥
केचित् कुर्वन्ति निर्मूलं सर्वेषामपि कर्मणाम् ।
कृतं कर्म परं भुक्त्वा हरिपादाब्जचेतसः ॥ ७९ ॥
कुकर्मणश्चापकीर्तिस्ततो लज्जा भवेत् ध्रुवम् ।
सुकर्मणः सुप्रतिष्ठा सर्वत्र निर्मलं यशः ॥ ८० ॥
कालेन रजसा देहो बलरूपं शुभाशुभम् ।
कीर्तिर्या त्रिगुणा चैव मोहश्चापयशो विधे ॥ ८१ ॥
ऋणव्रणापवादाश्च जन्तूनां यान्ति कालतः ।
महतां तौ च पूर्वोक्तौ तिष्ठतश्च कदाचन ॥ ८२ ॥
सदापकीर्तिर्वसति परस्त्रीषु च वस्तुषु ।

तस्मात्ते नैव गृह्णन्ति सन्तः स्वक्लेशकारणे ॥ ८३ ॥
स्मर मामन्तरे ब्राह्मि मदीयं विषयं कुरु ।
अतस्तेन मनो लोलं भविता परवस्तुषु ॥ ८४ ॥
योषिद्रूपा च मे माया सर्वेषां मोहकारिणी ।
लीलया कुरुते मोहं स्वात्मारामस्य सन्ततम् ॥ ८५ ॥
नानामुद्राश्रये देशे रागिणं सन्ततं रतिः ।
स्तनाभिधे मांसपिण्डेऽधरे लालालये शुचौ ॥८६॥
श्रोणिवक्त्रस्तनं तासां कामदेवालयं सदा ।
तस्मात्ते न हि पश्यन्ति सन्तो हि धर्मभीरवः ॥८७॥
को धर्मः किं यशस्तेषां का प्रतिष्ठा च किं तपः ।
किं बुद्धिर्विद्या दानञ्च परस्त्रीषु च यन्मनः ॥ ८८ ॥
इहाप्ययशो दुःखं नरकेषु परत्र च ।
वासः प्रहारस्तेषाञ्च ताड़नैः क्रमिभक्षणैः ॥ ८९ ॥
दुःखवीजं सुखं मत्वा मूढ़ाश्च दैवदोषतः ।
परस्त्रीसेवनं प्रीत्या कुर्वन्ति सन्ततं मुदा ॥ ९० ॥
उत्तमा मत्पदाम्भोजं सत् कर्म मध्यमाः सदा ।
स्मरन्ति शश्वदधमाः परस्त्रीसेवनं मुदा ॥ ९१ ॥
विपत्तिः सन्ततं तस्य परवस्तुषु यन्मनः ।
विशेषतः परस्त्रीषु सुवर्णेषु च भूमिषु ॥ ९२ ॥
दैवात्परस्त्रियं दृष्ट्वा विरमेद्यो हरिं स्मरन् ।
दृष्ट्वा परसुवर्णञ्च हस्तप्रचालनाच्छुचिः ॥ ९३ ॥
सततं नैव संसक्ताः सन्तः स्वस्त्रीषु कामतः ।
यक्ष्मव्याधिज्ञानहानिलोकनिन्दाभयेन च ॥ ९४ ॥
तपस्विनस्तपस्यायां शास्त्रचिन्तासु पण्डिताः ।

योगिनो योगचिन्तासु वेदार्थेषु च वैदिकाः ॥९५॥
साध्व्यश्च पतिसेवासु गृहस्था गृहकर्मसु ।
विषयेषु विषयिणो मद्भक्ता मम सेवने । ९६ ॥
एते नियुक्ता एतेषु सभासु च प्रशंसिताः ।
वेदोक्ताचरणेनैव तद्विरुद्धेन निन्दिताः ॥ ९७ ॥
सर्वे नित्यं प्रशंसन्ति शश्वत्सन्मार्गगामिनम् ।
हालिका अपि निन्दन्ति कुवर्त्मगामिनं विधे ॥९८॥
भविता न परस्त्रीषु परवस्तुषु ते मनः ।
अद्य प्रभृति जीवन्तं निविष्टं मद्वरेण च ॥ ९९ ॥
मदीयविषये वाञ्छे मया दत्तं कुरु प्रियम् ।
अन्तरा मत्पदाम्भोजचिन्तां विघ्नविनाशिनीम् ॥१००॥
कन्या भवतु मे ब्रह्मन् कामदेवस्य कामिनी ।
रतिर्नाम परित्याज्या रत्यधिष्ठातृदेवता ॥१०१॥
इत्येवमुक्त्वा ब्रह्माणमाश्वास्य कमलापतिः ।
जगाम नित्यं वैकुण्ठं वृन्दावनविनोदनः ॥ १०२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे राधाकृष्णसंवादो नाम
पञ्चविंशोऽध्यायः ।

---

## षट्त्रिंशोऽध्यायः ।

श्रीराधिकोवाच ।

एतेन नियमेनैव ब्रह्मा तत्याज मोहिनीम् ।
कथं स कुलटाशापादपूज्यः संबभूव ह ॥ १ ॥
कथं तस्य दर्पभङ्गञ्चकार कमलापतिः ।
कथयस्व सर्व्ववीजं सर्व्वेषामीश्वरः स्वयम् ॥ २ ॥

श्रीनारायण उवाच ।

रासेश्वरीवचः श्रुत्वा प्रहस्य रसिकेश्वरः ।
निगूढ़मितिहासञ्च तां वक्तुमुपचक्रमे ॥ ३ ॥

श्रीकृष्ण उवाच ।

ब्रह्मा चिरं तपस्तप्त्वा मत्तो लब्ध्वा वरं वरम् ।
सृष्टिं नानाविधां कृत्वा विधाता स बभूव ह ॥ ४ ॥
तपसां फलदाता च सर्व्वेषां शास्तिकृत् प्रभुः ।
आत्मानमीश्वरं ज्ञात्वा महागर्व्वो बभूव ह ॥ ५ ॥
ब्रह्माण्डेषु च सर्व्वेषु गर्व्वपर्य्यन्तमुन्नतिः ।
इति मत्वा ब्रह्मणश्च दर्पभङ्गः कृतो मया ॥ ६ ॥
येषां येषां भवेद्दर्पो ब्रह्माण्डेषु परात्परः ।
विज्ञाय सर्व्वं सर्व्वात्मा तेषां शास्ताहमेव च ॥ ७ ॥
प्रथमे ब्रह्मणो गर्व्वो मया चूर्णीकृतः श्रुतः ।
शङ्करस्य च पार्व्वत्याश्चन्द्रस्य च रवेस्तथा ॥ ८ ॥
वह्नेर्दुर्व्वाससश्चैव तथा धन्वन्तरेः प्रिये ।
क्रमेण दर्पभङ्गञ्च कथयामि निशामय ॥ ९ ॥

क्षुद्राणां महताञ्चैव येषाङ्गर्वो भवेत् प्रिये ।
एवंविधमहं तेषां चूर्णीभूतं करोमि च ॥ १० ॥

श्रीनारायण उवाच ।

श्रीकृष्णस्य वचः श्रुत्वा शुष्ककण्ठोष्ठतालुका ।
पप्रच्छ राधा यत्नेन सन्त्रस्ता भयविह्वला ॥ ११ ॥

श्रीराधिकोवाच ।

कस्य केन प्रभावेण महादर्पो बभूव ह ।
त्वया केन प्रभावेण तस्य भङ्गः कृतः पुरा ॥ १२ ॥
कथयस्व प्राणनाथ सर्वेषां दर्पभञ्जन ।
दर्पहाभयद प्राणदानैककारणेश्वर ॥ १३ ॥

श्रीकृष्ण उवाच ।

येन भूतं गर्वचूर्णं श्रुतं त्रिजगतां विधेः ।
अन्येषां श्रूयतां राधे व्यासेन कथयामि ते ॥ १४ ॥
स्वयं शिवो मदंशश्च संहर्ता जगताञ्च यः ।
तेजसा मत्समः पूर्णो ज्ञानेन च गुणेन च ॥ १५ ॥
ध्यायन्ति योगिनो यं स योगीन्द्राणां गुरोर्गुरुः ।
ज्ञानानन्दस्वरूपोऽयं तस्याख्यानं शृणु प्रिये ॥ १६ ॥
युगषष्टिसहस्राणि तपस्तप्त्वा दिवानिशम् ।
भूत्वा च मत्कलापूर्णो बभूव मत्समो विभुः ॥ १७ ॥
तपसा तेजसा शश्वत्तेजोराशिर्बभूव ह ।
सूर्य्यकोटिप्रभावश्च भक्तानां कल्पपादपः ॥ १८ ॥
ध्यायं ध्यायञ्च योगीन्द्रास्तत्तेजो बहुकालतः ।
तदन्तरे च पश्यन्ति स्वरूपमतिसुन्दरम् ॥ १९ ॥
शुद्धस्फटिकसङ्काशं पञ्चवक्त्रं त्रिलोचनम् ।

त्रिशूलपट्टिशकरं व्याघ्रचर्माम्बरं वरम् ॥ २० ॥
जपन्तं स्वात्मनात्मानं श्वेताब्जवीजमालया।
ईषद्धास्यप्रसन्नास्यं चन्द्रचूड़ं परात्परम् ॥ २१ ॥
स्वर्णाकारं जटाभारं दधतं शिरसा मुदा।
शान्तं कान्तं त्रिजगतां भक्तानुग्रहकातरम् ॥ २२ ॥
अथ स्वमीश्वरं मत्वा प्रदाता सर्वसम्पदाम्।
ददाति सर्वं सर्वेभ्यो वाञ्छितं कल्पपादपः ॥ २३ ॥
यो यं वाञ्छति तं तस्मै वरं दत्त्वा वरेश्वरः।
बभूव गर्वसंयुक्तः स्वात्मारामः स्वलीलया ॥ २४ ॥
एकदा च वृको दैत्यस्तपस्तेपे शिवस्य च।
केदारे च कठोरेण वर्षमेकं दिवानिशम् ॥ २५ ॥
नित्यं याति तत्समीपं कृपया च कृपानिधिः।
वरं दातुं यथाभीष्टं न जग्राहासुरो वरम् ॥ २६ ॥
वर्षान्ते शङ्करः शश्वत्तस्थौ तत्पुरतः स्वयम्।
वरदो भक्तिपाशेन चर्णं गन्तुं न स क्षमः ॥ २७ ॥
सर्वैश्वर्य्यं सर्वसिद्धिं भुक्तिं मुक्तिं हरेः पदम्।
दैत्यः किञ्चिन्न गृह्णाति परितः शूलपाणिनः ॥२८॥
ध्यायमानं तत्पदाब्जं दृष्ट्वा त्रस्तो महेश्वरः।
अयाचितारं निश्चेष्टं रुरोद प्रेमविह्वलः ॥ २९ ॥
अतीव रोदनात्तस्य ध्यानभङ्गो बभूव ह।
ददर्श पुरतः साक्षाद्दातारं सर्वसम्पदाम् ॥ ३० ॥
यन्मायया वरं वव्रे दैत्येन्द्रो भक्तिपूर्वकम्।
हस्तं दधे च यन्मूर्ध्नि स भस्म भवितेति च ॥ ३१ ॥
ओमित्युक्ता प्रयातन्तं दुद्राव दैत्यपुङ्गवः।

मृत्युञ्जयो मृत्युभयाद् दुद्राव त्रासविह्वलः ॥३२॥
पपात डमरुस्तस्य व्याघ्रचर्म मनोहरम् ।
दिगम्बरो दश दिशो भेजे दानवभीतये ॥ ३३ ॥
न हन्ति तञ्च कृपया भक्तञ्च भक्तवत्सलः ।
दुष्टानुसारं साधुश्च न करोति कदाचन ॥ ३४ ॥
साधवो घ्नन्ति घ्नन्तञ्च भृत्यं पुत्रं प्रियां विना ।
प्रबोधितुं न शक्तश्च स्वात्मानं कृपया समम् ॥३५॥
शिवः स्वमृत्युं मत्वा च भीतश्च निरहङ्कृतः ।
स्मारं स्मारञ्च मां भद्रे मामेव शरणं ययौ ॥३६॥
दृष्ट्वा स्वाश्रममायान्तं शुष्ककण्ठोष्ठतालुकम् ।
हे हरे रक्ष रक्षेति जपन्तं भयविह्वलम् ॥ ३७ ॥
संस्थाप्य तत्समीपे च स दैत्यो बोधितो मया ।
पृष्टश्च सर्ववृत्तान्तमुवाच मां क्रमेण च ॥ ३८ ॥
तदा ममाज्ञया तूर्णं वञ्चितो माययासुरः ।
दत्त्वा स्वमूर्ध्नि हस्तञ्च सद्यो भस्म बभूव ह ॥ ३९ ॥
तदा सिद्धाः सुरेन्द्राश्च मुनीन्द्रा मनवो मुदा ।
तुष्टुवुर्मां सुभक्त्या च लज्जया लज्जितः शिवः ॥४०॥
बभूव चूर्णस्तद्गर्वो जगाम बोधितो मया ।
वरं ददाति वरदस्ततो वध्यो ह्यहं शिवः ॥ ४१ ॥
अथ गर्वान्वितो रुद्रो हन्तुं त्रिपुरमुल्वणम् ।
मत्वा मनसि संहर्त्ता सर्वेषां जगतामिति ॥ ४२ ॥
कोऽयं पतङ्गवद्दैत्य इति मत्वा ययौ रणम् ।
विहाय शूलं मद्दत्तं मदीयकवचं परम् ॥ ४३ ॥
चिरं बभूव समरं वर्षमेकं दिवानिशम् ।

न कोऽपि जेतुं कं शक्तो द्वौ समौ समरे तदा ॥४४॥
पृथिव्याञ्च रणं कृत्वा दैत्येन्द्रो मायया शिवे।
अत्यूर्ध्वञ्च समुत्तस्थौ पञ्चाशत्कोटियोजनम् ॥४५॥
उत्तस्थौ शङ्करस्तूर्णं हन्तुं दैत्यं जगत्प्रभुः।
बभूव तत्र युद्धञ्च मासमेकं निराश्रये ॥ ४६ ॥
अस्त्राणि चापं चिच्छेद शङ्करस्यासुरो बली।
रथं बभञ्ज दैत्येन्द्रश्चापमस्त्राणि शङ्करात् ॥ ४७ ॥
जघान मुष्टिना रुद्रो दानवेन्द्रं प्रकोपतः।
वज्रमुष्टिप्रहारेण सद्यो मूर्च्छामवाप सः ॥४८॥
क्षणेन चेतनां प्राप्य कोपाद्दानवपुङ्गवः।
शिवं शयानमुत्तोल्य पातयामास भूतले ॥ ४९ ॥
सरथे पातिते रुद्रे देवा देवर्षयो भिया।
तुष्टुवुर्मां परित्राहि कृष्णेत्युक्त्वा पुनः पुनः ॥ ५० ॥
हरः सस्मार मामेव निर्भयो भयकारणम्।
तुष्टाव भक्त्या स्तोत्रेण मया दत्तेन सङ्कटे ॥ ५१ ॥
तदाहं कलया शीघ्रं वृषरूपं विधाय च।
शयानं शङ्करं धृत्वा विषाणाभ्यामुरुक्रमम् ॥५२॥
ददौ तस्मै स्वकवचं स्वशूलमरिमर्दनम्।
प्राप्य तद्दानवस्थानमत्यूर्ध्वञ्च निराश्रयम् ॥ ५३ ॥
मया दत्तेन शूलेन जघान त्रिपुरं हरः।
मामेव दर्पहन्तारं तुष्टाव व्रीड़ितः पुनः ॥५४॥
सद्यः पपात दैत्येन्द्रश्चूर्णीभूतश्च भूतले।
देवता मुनयः सर्वे तुष्टुवुः शङ्करं मुदा ॥ ५५ ॥
तत्याज शङ्करो दर्पं विघ्नबीजन्ततो विभुः।

ज्ञानानन्दस्वरूपश्च निर्लिप्तः सर्वकर्मसु ॥ ५६ ॥
ततोऽहं वृषरूपेण वहामि तेन तं प्रियम् ।
मम प्रियतमो नास्ति त्रैलोक्येषु शिवात्परः ॥५७॥
मनःस्वरूपो ब्रह्मा मे ज्ञानरूपो महेश्वरः ।
बुद्धिर्भगवती दुर्गा मूलप्रकृतिरीश्वरी ॥ ५८ ॥
निद्रादयः शक्तयो यास्ताः सर्वाः प्रकृतेः कलाः ।
वागधिष्ठातृदेवी या सा स्वयं च सरस्वती ॥ ५९ ॥
मम कल्याणाधिदेवो हर्षरूपो गणेश्वरः ।
परमार्थः स्वयं धर्मो मम भक्तो हुताशनः ॥ ६० ॥
सर्वैश्वर्य्याधिदेवी मे सर्वगोलोकवासिनः ।
प्राणाधिष्ठातृदेवी त्वं सदा प्राणाधिका मम ॥ ६१॥
गोपाङ्गनास्तव कला अतएव मम प्रियाः ।
मल्लोमकूपजा गोपाः सर्वे गोलोकवासिनः ॥६२॥
तेजःस्वरूपः सूर्य्यश्च प्राणा मे वायवः स्मृताः ।
जलाधिदेवो वरुणः पृथिवी मे मलोद्भवा ॥ ६३ ॥
मम शून्यो महाकाशो मदनो मानसोद्भवः ।
इन्द्रादयः सुराः सर्वे मत्कलांशांशसम्भवाः ॥ ६४ ॥
एतानि सृष्टिवीजानि महदादीनि चैव हि ।
सर्वेषां वीजरूपोऽहं स्वयमात्मा निराश्रयः ॥ ६५ ॥
जीवो मे प्रतिविम्बश्च कर्मभोगाधिकारकृः ।
अहं साक्षी निरीहश्च न भोगी सर्वकर्मसु ॥ ६६ ॥
भक्तध्यानार्थदेहोऽयं मम स्वेच्छामयस्य च ।
प्रकृतिः पुरुषोऽहञ्च एक एव परात्परः ॥६७॥
इत्येवं कथितं राधे शिवदर्पविमोचनम् ।

सृष्टिवीजञ्च शृणु मे पार्वतीदर्पमोचनम् ॥ ६८ ॥

श्रीनारायण उवाच ।

इत्युक्तवन्तं श्रीकृष्णं परमात्मानमीश्वरम् ।
पप्रच्छ राधिकादेवी निगूढ़मभिवाञ्छितम् ॥ ६९ ॥

श्रीराधिकोवाच ।

भगवन् सर्वतत्त्वज्ञ सर्ववीज सनातन ।
वद मे वाञ्छितं प्रश्नं सर्वसन्देहभञ्जनम् ॥ ७० ॥
सर्वज्ञानाधिदेवश्च शङ्करः सर्वतत्त्ववित् ।
मृत्युञ्जयः कालकालो भगवान् त्वत्समो महान् ॥७१॥
कथं विभूतिगात्रश्च पञ्चवक्त्रस्त्रिलोचनः ।
दिगम्बरो जटाधारी नागसङ्घातभूषणः ॥ ७२ ॥
वृषेणाटति देवेन्द्रो विहाय वरवाहनम् ।
न बिभर्ति कथं रत्नं सारनिर्माणभूषणम् ॥ ७३ ॥
वह्निशुद्धांशुकं त्यक्त्वा धत्ते शार्दूलचर्मकम् ।
धत्ते धत्तूरकुसुमं पारिजातं विहाय च ॥ ७४ ॥
नास्ति रत्नकिरीटेच्छा जटायां प्रीतिरुत्तमा ।
दिव्यलोकं परित्यज्य श्मशानेषु स्पृहा विभोः ॥७५॥
चन्दनागुरुकस्तूरीसुगन्धिकुसुमानि च ।
त्यक्त्वा स्पृहा विल्वपत्रे विल्वकाष्ठानुलेपने ॥ ७६ ॥
एतद्वेदितुमिच्छामि व्यासेन कथय प्रभो ।
श्रोतुं कौतूहलं नाथ वर्द्धते मे मनःस्पृहा ॥ ७७ ॥
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः ।
कथां कथयितुमारेभे कृत्वा राधां स्ववक्षसि ॥ ७८ ॥

श्रीकृष्ण उवाच ।

युगषष्टिसहस्राणि तपः कृत्वा महेश्वरः ।
विरराम पूर्णतमो ध्यात्वा मां मनसा मुदा ॥ ७८ ॥
एतस्मिन्नन्तरे माञ्च ददर्श पुरतः स्थितम् ।
अतीव कमनीयाङ्गं किशोरं श्यामसुन्दरम् ॥ ८० ॥
अहोऽनिर्वचनीयञ्च दृष्ट्वा रूपमनुत्तमम् ।
न बभूव वितृष्णश्च लोचनाभ्यां त्रिलोचनः ॥ ८१ ॥
पश्यन्निमेषरहित इति मत्वा स्वमानसे ।
भक्त्युद्रेकान् महाभक्तो रुरोद प्रेमविह्वलः ॥ ८२ ॥
सहस्रवदनोऽनन्तो भाग्यवांश्च चतुर्मुखः ।
बहुभिर्लोचनैर्दृष्ट्वा तुष्टाव बहुभिर्मुखैः ॥ ८३ ॥
पश्यामि किं वा किं स्तौमि संप्राप्य नाथमीदृशम् ।
आस्यैकेन लोचनाभ्यां चतुर्द्धा स पुनः पुनः ॥ ८४ ॥
स्वमानसे कुर्वतीदं शङ्करे च तपस्विनि ।
तदं बभूव चतुर्वक्त्रं पूर्वेण सह पञ्चमम् ॥ ८५ ॥
एकैकवक्त्रं शुशुभे लोचनैश्च त्रिभिस्त्रिभिः ।
बभूव तेन तन्नाम पञ्चवक्त्रस्त्रिलोचनः ॥ ८६ ॥
स्तवनादधिकप्रीतिः शिवस्य दर्शने मम ।
तेनाधिकानि तस्यैव बभूवुर्लोचनानि च ॥ ८७ ॥
चक्षूंषि गुणरूपाणि तस्य ब्रह्मस्वरूपिणः ।
सत्वं रजस्तम इति तस्य हेतुं निशामय ॥ ८८ ॥
सत्वांशेन दृशा शम्भुः पश्यन् पाति च सात्विकान् ।
राजसेन राजसिकान् तामसेन च तामसान् ॥८८॥
चक्षुषस्तामसात् पश्चाल्ललाटस्थादरस्य च ।

संहारकाले संहर्त्तुरग्निराविर्भवेत् क्रुधा ॥ ९० ॥
कोटितालप्रमाणश्च सूर्य्यकोटिसमप्रभः ।
लेलिहानो दीर्घशिखस्त्रैलोक्यं दग्धुमीश्वरः ॥९१॥
विभूतिगात्रः स विभुः सतीसंस्कारभस्मना ।
धत्ते तस्या अस्थिमालां प्रेमभावेन भस्म च ॥ ९२ ॥
स्वात्मारामो यद्यपीशस्तथापि पूर्णमब्दकम् ।
सतीशवं गृहीत्वा च भ्रामं भ्रामं करोद ह ॥ ९३ ॥
प्रत्यङ्गं चापि तस्याश्च पपात यत्र यत्र ह ।
सिद्धपीठस्तत्र तत्र बभूव मन्त्रसिद्धिकृत् ॥ ९४ ॥
तदा शवावशेषञ्च कृत्वा वचसि शङ्करः ।
पपात मूर्च्छितो भूत्वा सिद्धिक्षेत्रे च राधिके ॥ ९५ ॥
तदा गत्वा महेशं तं कृत्वा क्रोड़े प्रबोध्य च ।
अददद्दिव्यतत्त्वञ्च तस्मै शोकहरं परम् ॥ ९६ ॥
तदा शिवश्च सन्तुष्टः स्वं लोकञ्च जगाम ह ।
मूर्त्त्यन्तरेण कालेन तां संप्राप प्रियां सतीम् ॥९७॥
दिग्वस्त्रधारी योगेन नेच्छा नित्ये परे विभोः ।
जटास्तपस्याकालीना धत्तेऽद्यापि विवेकतः ।९८॥
न चेच्छा केशसंस्कारे स्वाङ्गवेशेन योगिनः ।
समता चन्दने पङ्के लोष्ट्रे रत्ने मणीश्वरे ॥ ९९ ॥
गरुड़द्वेषिणो नागाः शङ्करं शरणं ययुः ।
बिभर्त्ति कृपया स्वाङ्गे तानेव शरणागतान् ॥ १०० ॥
वाहनं वृषरूपोऽहमश्यस्तं वोढुमक्षमः ।
त्रिपुरस्य बधे पूर्वं मत्कलांशसमुद्भवः ॥१०१॥
पारिजातादिकं पुष्पं सुगन्धि चन्दनादिकम् ।

मयि संन्यस्य तेष्वेवं प्रीतिर्नास्ति कदाचन ॥ १०२ ॥
धत्तूरे तत्सदा प्रीतिर्विल्वपत्रानुलेपने।
गन्धहीने प्रसूने च योगोष्टे व्याघ्रचर्मणि ॥१०३॥
दिव्यलोके दिव्यतल्पे जनतायां न तन्मनः।
श्मशानेऽतीव रहसि ध्यायते मामहर्निशम् ॥ १०४ ॥
आब्रह्मस्तम्बपर्य्यन्तं समञ्च मन्यते शिवः।
ममानिर्वचनीयेऽत्र रूपे तन्मग्नमानसम् ॥ १०५ ॥
ब्रह्मणः पतने नापि शूलपाणेः क्षयो भवेत्।
तस्यायुषः प्रमाणञ्च नाहं जानामि का श्रुतिः ॥१०६॥
ज्ञानं मृत्युञ्जयः शूलं धत्ते मत्तेजसा समम्।
विना मया न कश्चित्तं शङ्करं जेतुमीश्वरः ॥१०७॥
शङ्करः परमात्मा मे प्राणेभ्योऽपि परः शिवः।
त्र्यम्बके मन्मनः शश्वत्प्रियो मे भवात्परः ॥१०८॥
ब्रह्माण्डनिकरं कृत्वं मया मन्मायया सदा।
न कम्पति हरं शश्वन्न च तं मोहितुं क्षमः ॥१०९॥
न संवसामि गोलोके वैकुण्ठे तव वक्षसि।
सदाशिवस्य हृदये निबद्धः प्रेमपाशतः ॥११०॥
स्वरसिद्धं सुतानेन पञ्चवक्त्रेण शङ्करः।
शश्वद्गायति मद्गाथां तेनाहं तत्समीपतः ॥ १११ ॥
स्रष्टुं शक्तो हि नष्टुञ्च भ्रूभङ्गलीलयापि यः।
ब्रह्माण्डनिकरं योगान्न योगी शङ्करात् परः ॥११२॥
दिव्यज्ञानेन यः स्रष्टुं नष्टुं भ्रूभङ्गलीलया।
मृत्युं कालादिकं शक्तो न ज्ञानी शङ्करात् परः ॥११३॥
मम भक्तिश्च दास्यञ्च मुक्तिश्च सर्वसम्पदः।

सर्वसिद्धिं दातुमीशो न दाता शङ्करात् परः ॥ ११४ ॥
पञ्चवक्त्रेण मन्नाम यशो गायत्यहर्निशम् ।
मद्रूपं ध्यायते शश्वन्न भक्तः शङ्करात् परः ॥ ११५ ॥
अहं सुदर्शनं शम्भुस्तेजसा च वयं समाः ।
ब्रह्मा स्रष्टा च योगेन नास्माभिस्तेजसा समः ॥ ११६ ॥
इत्येवं कथितं सर्वं शङ्करस्य यशोऽमलम् ।
तथाप्यस्य दर्पभङ्गं किं भूयः श्रोतुमिच्छसि ॥११७॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे शङ्करप्रशंसा नाम
षट्त्रिंशोऽध्यायः ।

---

## सप्तत्रिंशोऽध्यायः ।

---

श्रीराधिकोवाच ।

एवम्भूतस्य च विभोः सर्वेशस्य महात्मनः ।
न शस्तं कथमुच्छिष्टं ब्रूहि सन्देहभञ्जन ॥ १ ॥

श्रीकृष्ण उवाच ।

शृणु देवि प्रवक्ष्येऽहमितिहासं पुरातनम् ।
पापेन्धनानां दहने ज्वलदग्निशिखोपमम् ॥ २ ॥
सनत्कुमारो वैकुण्ठमेकदा च जगाम ह ।
ददर्श भुक्तवन्तञ्च नाथं नारायणं द्विजः ॥ ३ ॥
तुष्टाव गूढैः स्तोत्रैश्च प्रणम्य भक्तितो मुदा ।

अवशेषं ददौ तस्मै सन्तुष्टो भक्तवत्सलः ॥ ४ ॥
प्राप्तमात्रेण तत्रैव भुक्तं तेनैव किञ्चन ।
किञ्चिद्दूरञ्च बन्धूनां भक्षणाय च दुर्लभम् ॥ ५ ॥
सिद्धाश्रमे च यद्दत्तं गुरवे शूलपाणिने ।
भक्त्युद्रेकाच्च तत्सर्वं भुक्तञ्च प्राप्तिमात्रतः ॥ ६ ॥
भुक्त्वा सुदुर्लभं वस्तु ननर्त्त प्रेमविह्वलः ।
पुलकाञ्चितसर्वाङ्गः साश्रुनेत्रो मुदान्वितः ॥ ७ ॥
गायन्मम गुणान् भक्त्या सुकण्ठः पञ्चवक्त्रतः ।
रागभेदैकतानेन तालमानेन सुन्दरम् ॥ ८ ॥
पपात डमरुर्हस्तात् शृङ्गञ्च व्याघ्रचर्म च ।
स्वयं निपत्य पश्चाच्च रुदन् मूर्च्छामवाप ह ॥ ९ ॥
अतीव कमनीयं तद्रूपं ध्यात्वैकमानसः ।
सहस्रदलमध्यस्थं मां पश्यन् हृत्सरोरुहे ॥ १० ॥
एतस्मिन्नन्तरे देवी दुर्गा दुर्गतिनाशिनी ।
मुदाजगाम शीघ्रं तत्प्रसन्नवदनेक्षणा ॥ ११ ॥
रुदन्तं मूर्च्छितं दृष्ट्वा निपतन्तञ्च भक्तितः ।
प्रहस्य वार्त्तां पप्रच्छ कुमारं शूलपाणिनः ॥ १२ ॥
सर्वं तां कथयामास कुमारः संपुटाञ्जलिः ।
श्रुत्वा चुकोप सा देवी शिवं प्रस्फुरिताधरा ॥ १३ ॥
तां शप्तुमुद्यतां देवीमुत्थाय च त्रिलोचनः ।
बोधयामास विविधं तुष्टाव संपुटाञ्जलिः ॥ १४ ॥
श्रुत्वा मनोहरं स्तोत्रं न शशाप शिवं शिवा ।
दुष्टं चक्रे तदुच्छिष्टमभक्ष्यं त्रिदशामपि ॥ १५ ॥
न लोकानां प्रभावस्य तपःसौभाग्यतेजसाम् ।

ब्रह्माण्डे सर्वसंहर्ता चकम्पे पार्वतीभये ॥ १६ ॥
उवाच तं जगन्माता नीतिसारं परं वचः ।
गणप्रसूः सकोपा च रक्तपङ्कजलोचना ॥ १७ ॥
अहो तपःप्रभावस्य तेजसस्य न जीविनाम् ।
स ब्रह्माण्डस्य संहर्ता चकम्पे शैलकन्यका ॥ १८ ॥

पार्वत्युवाच ।

त्वं पोष्टा जगतां पाता ममैव च विशेषतः ।
वक्ता चतुर्णां वेदानां जनकश्च स्वयं विभुः ॥ १९ ॥
मुक्तिप्रदाता भक्तानां दाता च सर्वसम्पदाम् ।
त्वं चेत्करोषि दुर्नीतिं को वा धर्मञ्च पाति वै ॥ २० ॥
सदा ते परिपाल्याहं पोष्या भक्ता च किङ्करी ।
वञ्चिता कर्मदोषेण हरनिर्माल्यभक्षणे ॥ २१ ॥
किञ्चिच्छुद्धं हिरण्येन किञ्चिद्वस्तु च वायुना ।
किञ्चित् प्रक्षालनेनैव सर्वं विष्णोर्निवेदनात् ॥ २२ ॥
विष्णोर्निवेदितान्नेन यष्टव्याः सर्वदेवताः ।
पितरोऽतिथयश्चैवमिति वेदेषु निश्चितम् ॥ २३ ॥
अनिवेद्यमभक्ष्यञ्च नैवेद्यमुदरे हरेः ।
त्यक्त्वा करोति यो भक्त्या पार्षदप्रवरो भवेत् ॥ २४ ॥
अमृतं सर्ववस्तूनां मिष्टसारं सुदुर्लभम् ।
विष्णोर्निवेदितान्नस्य कलां नार्हति षोड़शीम् ॥ २५ ॥
हन्त्यकालिकमृत्युं तदमृतं मूढ़रञ्जनम् ।
नैवेद्यञ्च हरेरेव हरितुल्यं करोत्यहो ॥ २६ ॥
यदृच्छया तत् नैवेद्यं यो भुङ्क्ते साधुसङ्गतः ।
षष्टिवर्षसहस्राणां प्राप्नोति तपसः फलम् ॥ २७ ॥

यो निवेद्य हरिं भुङ्क्ते भक्त्या भक्तश्च नित्यशः ।
किंवा तपस्वी कर्त्ता च स हरेस्तेजसा समः ॥ २८ ॥
श्रुतं पुरा त्वन्मुखतः पुष्करे मुनिसंसदि ।
अहं वेदविधाता न किमहं वक्तुमीश्वरी ॥ २९ ॥
सुचिरञ्च तपस्तप्त्वा मया लब्धस्त्वमीश्वरः ।
त्वया विष्णोः प्रसादेन वञ्चिताहं कथं प्रभो ॥ ३० ॥
यतो न दत्तं नैवेद्यं विष्णोर्मह्यं त्वयाधुना ।
अतो मत्तो गृहाणैतत् फलमेव महेश्वर ॥ ३१ ॥
अद्य प्रभृति ये लोका नैवेद्यं भुञ्जते तव ।
ते जन्मैकं सारमेया भविष्यन्त्येव भारते ॥ ३२ ॥
इत्युक्त्वा पार्वती माता रुरोद पुरतो विभोः ।
दृष्टिः पपात तत्कण्ठे नीलकण्ठो बभूव सः ॥ ३३ ॥
तदा शिवः शिवां भक्त्या कृत्वा वक्षसि सादरम् ।
तन्मानभङ्गं स्तोत्रेण विनयेन चकार ह ॥ ३४ ॥
करेण चक्षुषो नीरं संमृज्य च पुनः पुनः ।
बोधयामास विविधैर्नीतिवाक्यैर्मनोहरैः ॥ ३५ ॥
परितुष्टा च सा देवी भर्त्तारं समुवाच ह ।
कलेवरञ्च त्यक्ष्यामि नैवेद्येन विना हरेः ॥ ३६ ॥
बिभर्त्ति देहं सततं तव सौभाग्यवर्द्धनम् ।
कथं वहामि सौभाग्यरहितञ्च कलेवरम् ॥ ३७ ॥
अपूर्वं तव नैवेद्यं जन्ममृत्युजराहरम् ।
कृतं दुष्टञ्च यत्तस्मात् पश्य देहं त्यजामि च ॥ ३८ ॥
लिङ्गोपरि च यद्दत्तं तदेवायाह्यमीश्वर ।
सुपवित्रं भवेत्तच्च विष्णोर्नैवेद्यमिश्रितम् ॥ ३९ ॥

इत्येवमुक्ता सा देवी देहं त्यक्तुं समुद्यता।
त्रस्तो हरस्तत्पुरतः स्तुत्वा च स्वीचकार ह ॥ ४० ॥

शङ्कर उवाच।

स्थिरा भव महादेवि चण्डिके जगदम्बिके।
ममापराधमखिलं चन्तुमर्हसि सुन्दरि ॥ ४१ ॥
मां भृत्यं तपसा क्रीतं कृपां कुरु ममोपरि।
ब्रह्मविष्णुमहेशानां वीजभूते सनातनि ॥ ४२ ॥
अहो गोलोकनाथस्य गुणातीतस्य निर्गुणे।
सर्वशक्तिस्वरूपे च सदैव सहचारिणि ॥ ४३ ॥
साकारे च निराकारे नित्ये स्वेच्छामये प्रिये।
कृपया तद्विभोरेव मम वचसि साम्प्रतम् ॥ ४४ ॥
सर्ववीजस्वरूपे च महामायि मनोहरे।
सर्वसिद्धिप्रदे देवि मुक्तिदे कृष्णभक्तिदे ॥ ४५ ॥
इच्छैवं श्रीहरेः साचान्नाहं दातुमपि चमः।
तदा देहं परित्यज्य निर्गुणं व्रज निर्गुणे ॥ ४६ ॥
इत्येवमुक्ता पुरतस्तस्थौ च चन्द्रशेखरः।
बभूव सुप्रसन्ना सा प्रणनाम हरं परम् ॥ ४७ ॥
इत्येवं पार्वतीस्तोत्रं शङ्करेण कृतं पुरा।
यः पठेद्विपदा ग्रस्तः स भयादेव मुच्यते ॥ ४८ ॥
मित्रभेदो भवेद्दूरं तत्सम्प्रीतिर्भवेत् पुरा।
पार्वती परितुष्टा च नात्यजत्तस्य मन्दिरम् ॥ ४९ ॥

इति श्रीब्रह्मवैवर्त्ते पार्वतीस्तोत्रं समाप्तम्।

श्रीकृष्ण उवाच।

श्रुत्वा प्रतिज्ञां नाथस्य परितुष्टा बभूव सा।

जगाम स्वर्णदीन्तूर्णं स्नानार्थं शङ्कराज्ञया ॥ ५० ॥
स्नात्वा सम्पूज्य भक्त्या च सुरमिष्टञ्च निर्गुणम्।
चकार प्रस्तुतं शीघ्रं मिष्टान्नं व्यञ्जनानि च ॥५१॥
शिवः स्नात्वा च सम्पूज्य ब्रह्मज्योतिः सनातनम्।
तुष्टाव परया भक्त्या मामेव हृदयस्थितम् ॥ ५२ ॥
गत्वा सर्वमहं भुक्त्वा तस्मै दत्त्वाभिवाञ्छितम्।
नैवेद्यं पार्वती लेभे तव मूलं समागता ॥ ५३ ॥
भुक्तावशेषं सा देवी सह भर्त्रा मुदान्विता।
तुष्टाव शङ्करं भक्त्या प्रणनाम मुहुर्मुहुः ॥ ५४ ॥
इत्येवं कथितं सर्वं त्वया पृष्टं सुरेश्वरि।
अभिशप्तं शङ्करस्य निर्माल्यं येन हेतुना ॥ ५५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे हरनिर्माल्यशापप्रसङ्गो
नाम सप्तविंशोऽध्यायः।

---

## अष्टाविंशोऽध्यायः।

श्रीकृष्ण उवाच।

दर्पभङ्गः श्रुतो देवि शङ्करस्य जगद्गुरोः।
अधुना श्रूयतां मत्तो दुर्गादर्पविमोचनम् ॥ १ ॥
तेजसा सर्वदेवानामाविर्भूय जगत्प्रसूः।
दधार कामिनीरूपं कमनीयं मनोहरम् ॥ २ ॥

निहत्य दानवेन्द्रांश्च ररक्ष देवताकुलम् ।
लेभे जन्म ततो देवी जठरे दक्षयोषित: ॥ ३ ॥
पिनाकपाणिं जग्राह सा देवी सुरसाधनम् ।
शश्वत् परमभक्त्या च सिषेवे स्वामिनं सती ॥ ४ ॥
दक्षेण सार्द्धं दैवेन बभूव शिवशत्रुता ।
निरर्थकं दैवयोगात् पुरा वै सुरसंसदि ॥ ५ ॥
दक्षश्चकार यज्ञञ्च तत आगत्य कोपत: ।
सर्वान् विज्ञापयामास तत्रैव शङ्करं विना ॥ ६ ॥
सस्त्रीका देवता: सर्वा आजग्मुर्दक्षमन्दिरम् ।
सगण: शङ्कर: कोपान्नाजगामाभिमानत: ॥ ७ ॥
सती पतिञ्च मोहेन बोधयामास यत्नत: ।
न तञ्चालयितुं शक्ता बभूव चञ्चला स्वयम् ॥ ८ ॥
आजगाम पितुर्गेहं दर्पात्तस्य विनाज्ञया ।
तस्य शापेन तस्याश्च दर्पभङ्गो बभूव ह ॥ ९ ॥
न हि सम्भाषणञ्चक्रे वाङ्मात्रेण पिता च ताम् ।
श्रुत्वा च निन्दां भर्तुश्च देहं तत्याज मानत: ॥ १० ॥
एवं प्रिये निगदितं सतीदर्पविमोचनम् ।
तस्य जन्मान्तरं नित्यं दर्पभङ्गञ्च श्रूयताम् ॥ ११ ॥
लेभे जन्म सती शीघ्रं जठरे शैलयोषित: ।
शिवस्तस्याश्चिताभस्म चास्थि जग्राह भक्तित: ॥१२॥
चकार मालामस्थ्नाञ्च भस्मना तनुलेपनम् ।
स्मारं स्मारं सतीं प्रेम्णा भ्रामं भ्रामं पुन: पुन: ॥१३
सुषाव मेना तां देवीमतीव सुमनोहराम् ।
सृष्टौ विधातुस्तस्याश्च ह्युपमा नास्ति कुत्र च ॥१४॥

गुणप्रसूर्गुणान् सर्वान् सर्वरूपान् बिभर्त्ति सा ।
सर्वाश्च देवपत्न्यस्तत्कलां नार्हन्ति षोड़शीम् ॥ १५ ॥
बभूव वर्द्धमाना सा शुक्ले चन्द्रकला यथा ।
अतीव यौवनस्था च शैलगेहे दिने दिने ॥ १६ ॥
बभूवाकाशवाणी च तां सम्बोध्य जगत्प्रसूम् ।
शिवे शिवञ्च तपसा कठोरेण लभेति च ॥ १७ ॥
विनेश्वरं न तपसा प्राप्ता हि गर्भसम्भवम् ।
प्रहस्य तस्थौ श्रुत्वेति सा च यौवनगर्विता ॥ १८ ॥
मम जन्मान्तरीणञ्च भस्मास्थि च बिभर्ति यः ।
स मां प्रौढ़ां कथं दृष्ट्वा न गृह्णात्यत्र जन्मनि ॥ १९ ॥
यो विदग्धश्च ब्रह्माण्डं बभ्राम मम शोकतः ।
स कथं मां न गृह्णाति दृष्ट्वा परमसुन्दरीम् ॥ २० ॥
दक्षयज्ञं यो बभञ्ज मम हेतोः कृपानिधिः ।
स कथं मां न गृह्णाति पत्नीं जन्मनि जन्मनि ॥२१॥
या यस्य पत्नी यो यस्या भर्त्ता प्राक्तनतः पुरा ।
कुतो विश्वे तयोर्भेदो निषेको नान्यथा भवेत् ॥ २२ ॥
सर्वरूपगुणाधारं मत्वा स्वमतिमानतः ।
न चकार तपः साध्वी न विज्ञाय तमीश्वरम् ॥ २३ ॥
सुन्दरीषु च सर्वासु मत्तो नास्त्येव सुन्दरी ।
इतीति मत्वा गर्वेण न चकार तपः शिवा ॥ २४ ॥
रूपयौवनवेशानां पुमान् ग्राही स्वयोषिताम् ।
शिवो मत्स्तुतिमात्रेण मां गृह्णाति विना तपः ॥२५॥
इतीति मत्वा गिरिजा तस्थौ हिमगिरेर्गृहे ।
अश्वत्सहचरीमध्ये क्रीड़ोन्मत्ता दिवानिशम् ॥ २६ ॥

एतस्मिन्नन्तरे तूर्णं दूतः शैलेन्द्रसंसदि ।
उवाचागत्य मधुरं तत्पुरः संपुटाञ्जलिः ॥ २७ ॥

दूत उवाच ।

उत्तिष्ठोत्तिष्ठ शैलेन्द्र गच्छाक्षयवटान्तिकम् ।
आजगाम महादेवः सगणो वृषवाहनः ॥ २८ ॥
मधुपर्कादिकं दत्त्वा भक्तिनम्रात्मकन्धरः ।
पूजनं कुरु शैलेन्द्र देवेन्द्रन्तमतीन्द्रियम् ॥ २९ ॥
सिद्धिस्वरूपं सिद्धेशं योगीन्द्राणां गुरोर्गुरुम् ।
मृत्युञ्जयं कालकालं ब्रह्मज्योतिः सनातनम् ॥ ३० ॥
परमात्मस्वरूपञ्च सगुणं निर्गुणं विभुम् ।
भक्तध्यानार्थममलं दधानं देहमीश्वरम् ॥ ३१ ॥
शैलो दूतवचः श्रुत्वा समुत्तस्थौ मुदान्वितः ।
मधुपर्कादिकं नीत्वा जगाम शङ्करान्तिकम् ॥ ३२ ॥
देवी दूतवचः श्रुत्वा प्रसन्नवदनेक्षणा ।
हृदीति मेने मद्धेतोराजगाम महेश्वरः ॥ ३३ ॥
चकार वेशमतुलं दधार वस्त्रमुत्तमम् ।
रत्नेन्द्रसारालङ्कारान् रत्नमालां मनोहराम् ॥ ३४ ॥
पारिजातप्रसूनानां मालां चन्दनसंयुताम् ।
चकार शङ्करार्थञ्च मत्वा मालां मनोहराम् ॥ ३५ ॥
रत्नसिंहासनस्था सा ददर्श दर्पणे मुखम् ।
कस्तूरीविन्दुना सार्द्धं सिन्दूरविन्दुभूषितम् ॥ ३६ ॥
आरक्तनेत्रयुगलं निर्मलाञ्जनसंयुतम् ।
शरन्मध्याह्नममलं यथा लिप्तं त्रिवेष्टितम् ॥ ३७ ॥

सुकोमलोष्ठयुगलं ताम्बूलरागसंयुतम्।
अतीव सुन्दरं रम्यं पक्वविम्बफलं यथा॥ ३८॥
रत्नकुण्डलदीप्त्या च गण्डस्थलविराजितम्।
सूर्य्योदयेन ज्वलितं सुमेरुशिखरं यथा॥ ३९॥
अत्यनिर्वचनीयञ्च दन्तपंक्तिमनोहरम्।
यथा मुक्तासमूहञ्च सजलं जलदागमे॥ ४०॥
गजमुक्तासमायुक्तं सुचारुनासिकोत्तमम्।
सुशोभितं यथा मेरुं स्वर्णदीजलधारया॥ ४१॥
मालतीमाल्यसंयुक्तकवरीभारसंयुतम्।
वकपंक्ति सुशोभाढ्यं नवीनं जलदं यथा॥ ४२॥
तप्तकाञ्चनवर्णाभं चारुवक्षःस्थलोज्ज्वलम्।
रत्नेन्द्रसारहारात्तं कस्तूरीकुङ्कुमान्वितम्॥ ४३॥
चारुचम्पकवर्णाभं स्तनयुग्मं मनोहरम्।
वदरीफलतुल्यञ्च चारुपत्रकशोभितम्॥ ४४॥
मध्यं मनोहरं क्षीणं निम्ननाभिस्थलोज्ज्वलम्।
अतीव सुन्दरं रम्यं सुन्दरं वर्तुलाकृति॥ ४५॥
रम्भास्तम्भविनिन्द्यैकमूरुयुग्मं मनोहरम्।
कामालयं सुकठिनं निगूढ़मंशुकेन च॥ ४६॥
स्थलपद्मप्रभामुष्टपदयुग्मं मनोहरम्।
रत्नपाशकसंयुक्तं सिन्दालक्तकभूषितम्॥ ४७॥
दधतं रत्नमञ्जीरं राजहंसानुकारि च।
रत्नेन्द्रसाराभरणं निर्मितं विश्वकर्मणा॥ ४८॥
करं सुकोमलतरं सुन्दरं कनकप्रभम्।
रत्नकङ्कणकेयूरशङ्खभूषणभूषितम्॥ ४९॥

बिभ्रत्सद्रत्नमुकुटं लीलाकमलमुज्ज्वलम् ।
रत्नाङ्गुलीयमतुलं दधत्तत्सुमनोहरम् ॥ ५० ॥
दृष्ट्वा स्वरूपमतुलं दध्यौ शङ्करमीश्वरम् ।
विशिष्य मनसा शश्वद्भर्त्तुश्चरणपङ्कजम् ॥ ५१ ॥
पितरं मातरं बन्धुं साध्वीवर्गं सहोदरम् ।
अन्तरे सा न सस्मार किञ्चिदेव शिवं विना ॥ ५२ ॥
अथ शैलेश्वरस्तत्र ददर्श चन्द्रशेखरम् ।
स्वर्णदीपुलिनाद्रम्यादुत्पतन्तञ्च सस्मितम् ॥ ५३ ॥
दधतं संस्कृतां मालां जपन्तं मम नामकम् ।
तप्तस्वर्णप्रभाजुष्टजटाराशिविराजितम् ॥ ५४ ॥
वृषभस्थं शूलपाणिं सर्वभूषणराजितम् ।
नागयज्ञोपवीतञ्च सर्पभूषणभूषितम् ॥ ५५ ॥
शुद्धस्फटिकसङ्काशं व्याघ्रचर्म्मधरं परम् ।
विभूतिभूषिताङ्गन्तमस्थिमालं दिगम्बरम् ॥ ५६ ॥
पञ्चवक्त्रं त्रिनयनं सूर्य्यकोटिसमप्रभम् ।
ददर्श रुद्रान् परितो ज्वलतो ब्रह्मतेजसा ॥ ५७ ॥
शिवं वामे महाकालं दक्षिणे नन्दिकेश्वरम् ।
भूतप्रेतपिशाचांश्च कुष्माण्डान् ब्रह्मराक्षसान् ॥ ५८ ॥
वेतालान् क्षेत्रपालांश्च भैरवान् भीमविक्रमान् ।
सनकञ्च सनन्दञ्च कुमारञ्च सनातनम् ॥ ५९ ॥
जैगीषव्यं देवलञ्च काणादङ्गौतमं तथा ।
पिप्पलादं कणखनं वोढुं पञ्चशिखं कचम् ॥ ६० ॥
जावालिं करथं कण्वं लोमशं सूर्य्यवर्चसम् ।
कात्यायनं पाणिनिञ्च शङ्कं दुर्वाससं ततः ॥ ६१ ॥

शातातपं पारिभद्रमष्टावक्रं मरुद्भवम् ।
एतान् पुरोगमान्नत्वा प्रणनाम शिवं गिरिः ।
मूर्द्ध्ना निपत्य भूमौ स दण्डवत्संपुटाञ्जलिः ॥६२॥
अथोऽनन्यया भक्त्या धृत्वा तच्चरणाम्बुजम् ।
ननाम चाश्रुनेत्रः स पुलकाञ्चितविग्रहः ॥ ६३ ॥
धर्मदत्तेन स्तोत्रेण तुष्टाव परमेश्वरम् ।
तुष्टे ब्राह्मे दिनेऽतीते पुष्करे सूर्य्यपर्वणि ॥ ६४ ॥

हिमालय उवाच।

त्वं ब्रह्मा सृष्टिकर्त्ता च त्वं विष्णुः परिपालकः ।
त्वं शिवः शिवदोऽनन्तः सर्वसंहारकारकः ॥ ६५ ॥
त्वमीश्वरो गुणातीतो ज्योतीरूपः सनातनः ।
प्रकृतः प्रकृतीशश्च प्राकृतः प्रकृतेः परः ॥ ६६ ॥
नानारूपविधाता त्वं भक्तानां ध्यानहेतवे ।
येषु रूपेषु यत्प्रीतिस्तत्तद्रूपञ्च बिभर्षि च ॥ ६७ ॥
सूर्य्यस्त्वं सृष्टिजनक आधारः सर्वतेजसाम् ।
सोमस्त्वं शस्यपाता च सततं शीतरश्मिना ॥ ६८ ॥
वायुस्त्वं वरुणस्त्वञ्च त्वमग्निः सर्वदाहकः ।
इन्द्रस्त्वं देवराजश्च काले मृत्युर्यमस्तथा ॥ ६९ ॥
मृत्युञ्जयो मृत्युमृत्युः कालकालो यमान्तकः ।
वेदस्त्वं वेदकर्त्ता च वेदवेदाङ्गपारगः ॥ ७० ॥
विदुषां जनकस्त्वञ्च विद्वांश्च विदुषां गुरुः ।
मन्त्रस्त्वं हि जपस्त्वं हि तपस्त्वं तत्फलप्रदः ॥ ७१ ॥
वाक् त्वं वागधिदेवी त्वं तत्कर्त्ता तद्गुरुः स्वयम् ।
अहो सरस्वतीवीजं कस्त्वां स्तोतुमिहेश्वरः ॥ ७२ ॥

इत्येवमुक्त्वा शैलेन्द्रस्तस्थौ धृत्वा पदाम्बुजम् ।
तत्रोवास तमाबोध्य चावरुह्य वृषाच्छिवः ॥ ७३ ॥
स्तोत्रमेतन्महापुण्यं त्रिसन्ध्यं यः पठेन्नरः ।
मुच्यते सर्व्वपापेभ्यो भयेभ्यश्च भवार्णवे ॥ ७४ ॥
अपुत्रो लभते पुत्रं मासमेकं पठेद्यदि ।
भार्य्याहीनो लभेद्भार्य्यां सुशीलां सुमनोहराम् ॥ ७५ ॥
चिरकालगतं वस्तु लभते सहसा ध्रुवम् ।
राज्यभ्रष्टो लभेद्राज्यं शङ्करस्य प्रसादतः ॥ ७६ ॥
कारागारे श्मशाने च शत्रुग्रस्तेऽतिसङ्कटे ।
गभीरेऽतिजलाकीर्णे भग्नपोते विषादने ॥ ७७ ॥
रणमध्ये महाभीते हिंस्रजन्तुसमन्विते ।
सर्व्वतो मुच्यते स्तुत्वा शङ्करस्य प्रसादतः ॥ ७८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे अष्टत्रिंशत्तमोऽध्यायः ।

---

## एकोनचत्वारिंशोऽध्यायः ।

---

श्रीकृष्ण उवाच ।

इति स्तुत्वा हिमगिरिर्व्वसतः शङ्करस्य च ।
उवास पुरतो दूरे लब्धाज्ञः सर्व्वसम्मतः ॥ १ ॥
मधुपर्काद्दिकं तस्मै प्रददौ भक्तिपूर्व्वकम् ।
मुनीन् सम्पूजयामास ततः शङ्करपार्षदान् ॥ २ ॥

तदा तत्र समागत्य मेनका स्त्रीगणैः सह ।
ददर्श वटमूलस्थं शङ्करं चन्द्रशेखरम् ॥ ३ ॥
ईषद्धास्यप्रसन्नास्यं वसन्तं व्याघ्रचर्मणि ।
मध्ये मुनिगणानाञ्च ज्वलन्तं ब्रह्मतेजसा ॥ ४ ॥
यथाकाशे तारकाणां द्विजराजं विराजितम् ।
परमाह्लादकं रूपं कन्दर्पकोटिसन्निभम् ॥ ५ ॥
विहाय वार्द्धकावस्थां दधतं नवयौवनम् ।
अतीव सुन्दरं रम्यं चित्तचौरञ्च योषिताम् ॥ ६ ॥
कामं कामातुराणाञ्च सतीनाञ्च सुतं यथा ।
वैष्णवानां महाविष्णुं शैवानाञ्च सदाशिवम् ॥ ७ ॥
शक्तिस्वरूपं शाक्तानां सौराणां सूर्य्यरूपिणम् ।
कालस्वरूपं दुष्टानां शिष्टानां परिपालकम् ॥ ८ ॥
कालकालसमं मृत्योर्मृत्युं मृत्युं भयानकम् ।
व्याघ्रचर्म चारुवस्त्रं बभूव भस्म चन्दनम् ॥ ९ ॥
सर्पाः सुन्दरमाल्यानि कस्तूरी या विषप्रभा ।
जटा सुललिता चूड़ा चन्द्रमेलकचन्दनम् ॥ १० ॥
सुचार्व्वी मालतीमाला गङ्गाधारा मनोहरा ।
अस्थिमाला रत्नमाला धत्तूरं चारु चम्पकम् ॥ ११ ॥
एकीभूतं पञ्चवक्त्रं नेत्रयुग्माब्जशोभितम् ।
शरत्पार्व्वणचन्द्राभं प्रच्छाद्य दीप्तमुत्तमम् ॥ १२ ॥
बन्धुजीवविनिन्द्यैकमोष्ठाधरमनोहरम् ।
श्वेतश्चन्द्रो वृषेन्द्रश्च भूताद्या नर्त्तका इव ॥ १३ ॥
सद्यो व्यतिक्रमं सर्वं महेशस्य महेश्वरी ।
दृष्ट्वैवं शिवरूपञ्च मेना तुष्टा बभूव ह ॥ १४ ॥

काश्चिन्निमेषरहिताः कामेन पुलकाञ्चिताः ।
अतिकामातुराः सत्यः प्रापुर्मूर्च्छाञ्च काश्चन ॥ १५ ॥
काश्चिद्विनिन्द्य कान्तांश्च प्रशशंसुर्महेश्वरम् ।
मनोरथेन मनसा समाश्लिष्यन्ति काश्चन ॥ १६ ॥
काश्चिन्मानसिकं कामात् कुर्वन्ति चुम्बनं मुदा ।
ध्रुवं कामं करिष्यामो वयञ्च कामसागरे ॥ १७ ॥
अस्माकमेवं भर्त्ता च परत्रैव यतो भवेत् ।
इहैवैकं करिष्यामो वयं कान्तं रतौ रतम् ॥ १८ ॥
दृष्ट्वा तपस्या सुचिरमिति जल्पन्ति काश्चन ।
काश्चिद्दृष्ट्वा शिवं किञ्चिन्मुखमाच्छाद्य वाससा ॥१९॥
सस्मिता वक्रनयनाः पश्यन्त्येवं पुनः पुनः ।
वयं गृहं न यास्यामो यास्यामः शिवसन्निधिम् ॥ २० ॥
शरत्सुधांशुवदनं द्रक्ष्यामोऽहर्निशं मुदा ।
संसारं न करिष्यामः प्रविशामो हुताशनम् ॥ २१ ॥
भविता नः शिवः स्वामीत्येवं जल्पन्ति काश्चन ।
अहो पुण्यवती दुर्गा श्लाघ्यते जन्म भारते ॥ २२ ॥
यस्या ह्ययं शिवः स्वामीत्येवं जल्पन्ति काश्चन ।
मुदा मेना शिवं दृष्ट्वा गृहन्ताभिर्जगाम ह ॥ २३ ॥
शिवं सम्पूज्य शैलेन्द्रः प्रणम्य स्वगृहं ययौ ।
कृत्वानुमानं रहसि गिरीशो मेनया सह ॥ २४ ॥
दुर्गां प्रस्थापयामास शिवाय शिवसन्निधिम् ।
पार्वती सखिभिः सार्द्धं वेशं कृत्वा मनोहरम् ॥ २५ ॥
भावानुरक्ता हृष्टा जगाम शिवसन्निधिम् ।
दृष्ट्वा शिवा शिवं शान्तं प्रसन्नवदनेक्षणम् ॥ २६ ॥

सप्तप्रदक्षिणं कृत्वा सस्मिता प्रणनाम सा ।
अनन्यभाजं गुणिनममरं ज्ञानिनां वरम् ॥ २७ ॥
सुन्दरं लभ भर्तारं सुन्दरीत्याशिषं ददौ ।
भविता तव सौभाग्यं शुभे स्वामिनि सन्ततम् ॥ २८ ॥
पुत्रस्ते भविता साध्वि नारायणसमो गुणैः ।
भविता ते परा पूजा त्रैलोक्ये जगदम्बिके ॥ २९ ॥
ब्रह्माण्डेषु च सर्वेषु सर्वेषाञ्च परा भव ।
सप्तप्रदक्षिणीकृत्य यतो भक्त्या त्वया नतम् ॥ ३० ॥
सप्तजन्मनि तुष्टोऽहं तत्फलं लभ सुन्दरि ।
तीर्थे कान्तेऽभीष्टदेवे गुरोर्मन्त्रे तथौषधे ॥ ३१ ॥
आस्था च यादृशी यासां सिद्धिस्तासाञ्च तादृशी ।
इत्युक्त्वा शङ्करस्तूर्णं ब्रह्मज्योतिः परञ्च माम् ॥ ३२ ॥
दध्यौ योगासनं कृत्वा योगीशो व्याघ्रचर्मणि ।
प्रक्षाल्य चरणौ देवी पपौ तच्चरणोदकम् ॥ ३३ ॥
चकार मार्जनं भक्त्या वह्निशौचेन वाससा ।
रत्नसिंहासनं रम्यं विश्वकर्मादिनिर्मितम् ॥ ३४ ॥
अपूर्वं कांस्यपात्रस्थं नैवेद्यं प्रददौ किल ।
अर्घ्यं मन्दाकिनीतोयसंयुक्तञ्चरणे ददौ ॥ ३५ ॥
सुगन्धिचन्दनं चारु कस्तूरीकुङ्कुमान्वितम् ।
प्रददौ मालतीमालां गले गरलसुन्दरे ॥ ३६ ॥
भक्त्या पूजाञ्चकाराथ पुष्पवृष्टिञ्च तुष्टये ।
पीयूषं स्वर्णपात्रस्थं प्रददौ मधुरं मधु ॥ ३७ ॥
रत्नप्रदीपशतकं समन्ताद्धूपमुत्तमम् ।
त्रैलोक्यदुर्लभं वस्त्रं स्वर्णयज्ञोपवीतकम् ॥ ३८ ॥

सुगन्धि शीततोयञ्च पानार्थं पार्वती ददौ ।
अतीव सुन्दरं रम्यं रत्नसारेन्द्रभूषणम् ॥ ३९ ॥
दुर्लभां कामधेनुञ्च स्वर्णशृङ्गसमन्विताम् ।
स्नानीयन्तीर्थतोयञ्च ताम्बूलञ्च मनोहरम् ॥ ४० ॥
दत्त्वा षोड़शोपचारं प्रणनाम पुनः पुनः ।
संपूज्य शूलिनं भक्त्या ययौ नित्यं पितुर्गृहम् ॥ ४१ ॥
शुश्रावाप्सरसां वक्त्राद्देवीमिन्द्रो महेश्वरः ।
श्रुत्वा वार्तां शुनाशीरो ननर्त्त हर्षसंयुतः ॥ ४२ ॥
दूतद्वारा कामदेवमानिनाय त्वरान्वितः ।
इन्द्राज्ञया कामदेवः प्रजगामामरावतीम् ॥ ४३ ॥
तूर्णं प्रस्थापयामास तत्र यत्र शिवः शिवा ।
पञ्चसायकसंयुक्तो जगाम पञ्चसायकः ॥ ४४ ॥
प्रसन्नवदनं श्रीमान् यत्र शक्तियुतः शिवः ।
गत्वा ददर्श मदनः शिवायुक्तं शिवं विभुम् ॥ ४५ ॥
शान्तं त्रैलोक्यकान्तञ्च प्रसन्नवदनेक्षणम् ।
कामः स्थितोऽन्तरीक्षे च धृत्वा च सशरं धनुः ॥ ४६ ॥
चिक्षेपास्त्रं दुर्निवार्य्यममोघं शङ्करे मुदा ।
बभूवामोघमस्त्रञ्च मोघन्तत्परमात्मनि ॥ ४७ ॥
आकाश इव निर्लिप्ते निर्लिप्ते परमात्मनि ।
मोघीभूते च शस्त्रे च भयमाप च मन्मथः ॥ ४८ ॥
चकम्पे पुरतः स्थित्वा दृष्ट्वा मृत्युञ्जयं विभुम् ।
सस्मार त्रिदशान् कामः शक्रादीन् भयविह्वलः ॥ ४९ ॥
आययुर्देवताः सर्वाः शम्भुकोपेन वेपिताः ।
चक्रुः स्तुतिञ्च स्तोत्रेण शङ्करं त्रिदशेश्वरम् ॥ ५० ॥

कोपाग्निमुद्गिरन्तं तं कपाललोचनादृशो ।
स्तुतिं कुर्वत्सु देवेषु स वह्निः शम्भुसम्भवः ॥ ५१ ॥
जज्वालोर्ध्वशिखो दीप्तः प्रलयाग्निशिखोपमः ।
उत्पत्य गगने घूर्णन् निपत्य धरणीतले ।
भ्रामं भ्रामञ्च परितः पपात मदनोपरि ॥ ५२ ॥
बभूव भस्मसात्कामः क्षणेन हरकोपतः ।
विषण्णा देवताः सर्वा नतवक्त्रा च पार्वती ॥ ५३ ॥
विललाप बहुतरं हरस्य पुरतो रतिः ।
तुष्टुवुर्देवताः सर्वाः कम्पिताश्चन्द्रशेखरम् ॥ ५४ ॥
रतिमूचुः सुराः सर्वे रुरुदुश्च मुहुर्मुहुः ।
किञ्चिद्भस्म गृहीत्वा च रक्ष मातर्भयं त्यज ॥ ५५ ॥
वयं तं जीवयिष्यामो लभिष्यसि प्रियं पुनः ।
हरकोपापनयने सुप्रसन्ने दिने तथा ॥ ५६ ॥
दृष्ट्वा रतेर्विलापञ्च मूर्च्छां संप्राप पार्वती ।
अतीन्द्रियं गुणातीतं तुष्टाव चन्द्रशेखरम् ॥ ५७ ॥
रुदन्तीं पार्वतीं त्यक्त्वा स्वस्थानं प्रययौ शिवः ।
सद्यो बभूव तत्रैव पार्वतीदर्पमोचणम् ॥ ५८ ॥
रूपयौवनयोर्गर्वं तत्याज शैलकन्यका ।
मुखं दर्शयितुं लज्जा तद्बभूव सखीगणे ॥ ५९ ॥
सुराश्च रतिमाश्वास्य सर्वे जग्मुः स्वमन्दिरम् ।
प्रणम्य दण्डवद्रुद्रं शोकादुद्विग्नमानसाः ॥ ६० ॥
स्तुत्वा रुदित्वा शोकेन भयेन कामकामिनी ।
कोपरक्तेक्षणं रुद्रं राधिके स्वालयं ययौ ॥ ६१ ॥
न जगाम पितुर्गेहे पार्वती सा तु लज्जया ।

स्वालिभिर्वार्य्यमाणापि जगाम तपसे वनम् ॥ ६२ ॥
प्रजग्मुः सहचारिण्यस्तत्पश्चाच्छोकविह्वलाः ।
मातृभिर्वार्य्यमाणा सा स्वर्णदीतीरजं वनम् ॥ ६३ ॥
सुचिरञ्च तपस्तप्त्वा सा संप्राप त्रिलोचनम् ।
रतिः संप्राप मदनं शङ्करस्य वरेण च ॥ ६४ ॥
इत्येवं कथितं सर्वं पार्वतीदर्पमोचनम् ।
निगूढ़चरितं राधे किम्भूयः श्रोतुमिच्छसि ॥ ६५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे श्रीकृष्णराधिकासंवादे एकोनचत्वारिंशोऽध्यायः ।

---

## चत्वारिंशत्तमोऽध्यायः ।

—००—

श्रीराधिका उवाच ।

अहो विचित्रं चरितमपूर्वं किं श्रुतं विभो ।
सुन्दरं श्रुतिपीयूषं निगूढ़ं ज्ञानकारणम् ॥ १ ॥
न विशेषं समासञ्च श्रुतं न व्यासमीप्सितम् ।
अधुना श्रोतुमिच्छामि विस्तीर्णं कथय प्रभो ॥ २ ॥
किं किं तपः कठोरञ्च चकार पार्वती स्वयम् ।
कं कं वरं वा संप्राप्य कथमाप महेश्वरम् ॥ ३ ॥

रतिः केन प्रकारेण जीवयामास मन्मथम्।
पार्वतीशिवयोः कृष्ण विवाहं वर्णय प्रभो॥ ४॥
तयो रहसि सम्भोगं पापिनीपापमोचनम्।
कथ्यतां करुणासिन्धो दुःखिनीदुःखमोचनम्॥ ५॥
दम्पतीविरहोक्तिश्च कर्णज्वाला च योषितः।
श्रोतुं कौतूहलं कृष्ण पुनःसम्मीलनं तयोः॥ ६॥
अग्निज्वाला विषज्वाला क्षमाः सोढुञ्च योषितः।
दम्पतीविरहज्वाला न श्रोतुञ्च क्षणं क्षमा॥ ७॥
राधिकावचनं श्रुत्वा विस्मितश्चकितानन।
विस्तीर्णं वक्तुमारेभे हृदयेन विदूयता॥ ८॥
दम्पतीविरहोक्तिञ्च या राधा श्रोतुमक्षमा।
विच्छेदे शतवर्षीये किमस्या भविता मम॥ ९॥
इत्येवं मानसे कृत्वा सायेशो माययान्वितः।
कृपासिन्धुश्च कृपया कथां कथितुमुद्यतः॥ १०॥

श्रीकृष्ण उवाच।

प्राणाधिके राधिके त्वं श्रूयतां प्राणवल्लभे।
प्राणाधिदेवि प्राणेशि प्राणाधारे मनोहरे॥ ११॥
वटमूलाद्गते रुद्रे पार्वती तपसे ययौ।
पुनः पुनः स्वमात्रा च पित्रा च विनिवारिता॥ १२॥
गत्वा सा स्वर्णदीतीरं स्नात्वा त्रिषवणं मुदा।
सन्देशे च मया दत्तं जजाप तं मनुं मुदा॥ १३॥
वर्षमेकञ्च सम्पूर्णमनाहारा स्वभक्तितः।
तप्ता तपः कठोरञ्च चकार जगदम्बिका॥ १४॥
ग्रीष्मे च परितो वह्निं प्रज्वलन्तं दिवानिशम्।

कृत्वा प्रतस्थौ तन्मध्ये सन्ततं जपती मनुम् ॥ १५ ॥
शश्वत् श्मशाने वर्षासु कृत्वा योगासनं शिवा ।
शिलां दृष्ट्वा च संसिक्ता बभूव जलधारया ॥ १६ ॥
शीते जलान्तरे शश्वत् प्रतस्थौ भक्तिपूर्वकम् ।
अनाहारा शरद्रौद्रनीहारासु निशासु च ॥ १७ ॥
एवं कृत्वा परं वर्षमप्राप्य शङ्करं सती ।
शुचा कृत्वाग्निकुण्डञ्च प्रवेष्टुं सा समुद्यता ॥ १८ ॥
तामग्निकुण्डं विशतीं तपसातिकृशां सतीम् ।
दृष्ट्वा शिवः कृपासिन्धुः कृपया तां जगाम ह ॥ १९ ॥
अतीव वामनो बालो विप्ररूपी स्वतेजसा ।
प्रज्वलन् मनसा हृष्टो दण्डी छत्री जटाधरः ॥ २० ॥
शुक्लयज्ञोपवीती च शुक्लवासाश्च सस्मितः ।
श्वेताब्जवीजमालाञ्च बिभ्रत्तिलकमुज्ज्वलम् ॥२१॥
निर्जने बालकं दृष्ट्वा स्निग्धा साति जगाद ह ।
तत्तेजसातिप्रच्छन्ना तत्याज च तपः स्वयम् ॥२२॥
को भवानिति पप्रच्छ तं शिशुं पुरतः स्थितम् ।
मनसालिङ्गनं कर्त्तुमिच्छन्ती परमादरम् ॥ २३ ॥
श्रुत्वा शैलसुताप्रश्नं प्रहस्य परमेश्वरः ।
उवाचातीव मधुरं कर्णपीयूषमीश्वरीम् ॥ २४ ॥

शङ्कर उवाच ।

इच्छागामी वटुरहं तपस्वी विप्रबालकः ।
का त्वं कान्तातिकान्तारे तपश्चरसि सुन्दरि ॥२५॥
वद कस्य कुले जाता कस्य कन्या च काभिधा ।
तपसः फलदात्री त्वं कस्माद्धेतोस्तपस्तव ॥ २६ ॥

अहो वा तपसां राशिः स्वयं मुर्तिमती सती ।
तपो वा लोकशिक्षार्थं करोषि कमलेक्षणे ॥ २७ ॥
स्वयं तेजःस्वरूपा वा मूलप्रकृतिरीश्वरी ।
विधाय भक्तध्यानार्थं विग्रहं भारते ननु: ॥ २८ ॥
किं वा त्रिलोकलक्ष्मीस्त्वं सम्पद्रूपा सनातनी ।
रक्षां विधातुं जगतामागता धातुरन्तिके ॥ २९ ॥
किंवाम्बिका त्वं देवानां स्वयं मूर्तिमती सती ।
सावित्री भारते जन्म स्वेच्छया लब्धुमागता ॥३०॥
रागाधिष्ठातृदेवी वा स्वयं साक्षात् सरस्वती ।
सर्वविद्याः प्रकटितुं स्वेच्छया जन्म भारते ॥ ३१ ॥
एतासु मध्ये का वा त्वं नाहं तर्कितुमीश्वरः ।
या सा भवति कल्याणि परितुष्टा च मां भव ॥३२॥
सति त्वयि प्रसन्नायां प्रसन्नः परमेश्वरः ।
पतिव्रतायां तुष्टायां तुष्टो नारायणः स्वयम् ॥ ३३ ॥
तुष्टे नारायणे देवे शश्वत्तुष्टं जगत्त्रयम् ।
तरुमूलेषु सिक्तेषु शाखाः सिक्ता यथा प्रिये ॥३४॥
शिशोस्तद्वचनं श्रुत्वा प्रहस्य परमेश्वरी ।
उवाच वचनञ्चारु कर्णपीयूषमीश्वरी ॥ ३५ ॥

पार्वत्युवाच ।

नाहं वेदप्रसूर्लक्ष्मीर्वागधिष्ठातृदेवता ।
जन्म मे भारते वर्षे साम्प्रतं शैलकन्यका ॥ ३६ ॥
पूर्वं जन्म दक्षगेहे सती शङ्करकामिनी ।
योगेन त्यक्तदेहाहं तातभर्तृविनिन्दया ॥ ३७ ॥
अत्र जन्मनि पुण्येन संप्राप्ते शङ्करे द्विज ।

मां त्यक्त्वा भस्मसात् कृत्वा मन्मथं स जगाम ह ॥३८॥
प्रयाते शङ्करे तापाद् व्रीड़याहं पितुर्गृहात्।
अगमत्तपसे चित्तं ममेदं स्वर्णदीतटे ॥ ३९ ॥
तपः कृत्वा कठोरञ्च सुचिरं प्राणवल्लभम्।
अप्राप्याग्निं प्रवेष्टुञ्च त्वां च दृष्ट्वा क्षणं स्थिता ॥ ४० ॥
गच्छ त्वं प्रविशाम्यग्नौ प्रलयाग्निशिखोपमे।
कृत्वा स्वकामनां विप्र हरप्राप्तिमनीषितम् ॥ ४१ ॥
यत्र यत्र जनुर्लब्ध्वा लभिष्यामि शिवं परम्।
प्राणाधिकं प्रियं कान्तं विभुं जन्मनि जन्मनि ॥ ४२ ॥
सर्वा हि स्वप्रियं लब्धुं लभन्ति जन्म वाञ्छितम्।
तज्जन्म पतिलाभार्थं सर्वासाञ्च श्रुतौ श्रुतम् ॥ ४३ ॥
प्राक्तनीयो हि यो भर्त्ता स तासां प्रतिजन्मनि।
या स्त्री येषां सुनियता सा तेषां जन्मजन्मनि ॥ ४४ ॥
तद्देहमिह न प्राप्य कृत्वा घोरतरं तपः।
कृत्वाग्निकुण्डे काम्यञ्च लभिष्यामि परत्र तम् ॥ ४५ ॥
इत्युक्त्वा पार्वती तत्र तत्पुरः प्रविवेश ह।
निषिध्यमाना पुरतो ब्राह्मणेन पुनः पुनः ॥ ४६ ॥
वह्निप्रवेशं कुर्वन्त्याः पार्वत्याः परमेश्वरि।
बभूव तपसा सद्यो वह्निश्चन्दनवत् ध्रुवम् ॥ ४७ ॥
क्षणं तदन्तरे स्थित्वा चोत्पतन्तीं शिवां शिवः।
पुनः पप्रच्छ सहसा वृन्दावनविनोदिनि ॥ ४८ ॥

श्रीमहादेव उवाच।

अहो तपस्वि किं भद्रे न बुद्धं किञ्चिदेव हि।
न दग्धो वह्निना देहो न च प्राप्तो मनीषितः ॥ ४९

शिवं कल्याणरूपञ्च भर्त्तारं कर्त्तुमिच्छसि ।
अविग्रहं पतिं कृत्वा किंवा ते वाञ्छितं भवेत् ॥ ५० ॥
संहर्तारञ्च भर्तारं यदिच्छसि शुचिस्मिते ।
कान्तमिच्छति का वा स्त्री सर्वसंहारकारणम् ॥५१॥
मोक्षं वाञ्छसि चेद्देवि कृत्वा कान्तस्वरूपिणम् ।
सर्वमुक्तिप्रदा त्वञ्च तपस्या विफला तव ॥ ५२ ॥
शिवश्च मङ्गले मोक्षे संहर्ता न च दृश्यते ।
शिवशब्दस्य चान्यार्थो न हि वेदे निरूपितः ॥ ५३ ॥
तञ्च संहारकर्तारं यदि वाञ्छसि सुन्दरि ।
लभिष्यसे रतं रुद्रं सर्वलोकभयङ्करम् ॥ ५४ ॥
न भविष्यति मोक्षस्ते स्वाभीष्टं देवसेवनम् ।
हरिस्मृतिरमोघा च सर्वमङ्गलदा सदा ॥ ५५ ॥
शीघ्रं पितुर्गृहं गच्छ तत्र द्रक्ष्यसि शङ्करम् ।
ममाशिषा स्वतपसां फलेन च सुदुर्लभम् ॥ ५६ ॥
इत्युक्त्वा पार्वतीं विप्रस्तत्रैवान्तरधीयत ।
दुर्गा ययौ पितुर्गेहं महादेवेति वादिनी ॥ ५७ ॥
पार्वतीगमनं श्रुत्वा मेनका च हिमालयः ।
दिव्यं यानं पुरस्कृत्य प्रययौ हर्षविह्वलः ॥ ५८ ॥
संस्थाप्य मङ्गलघटान् राजवर्त्मनि राधिके ।
चन्दनागुरुकस्तूरीफलशाखासमन्वितान् ॥ ५९ ॥
पट्टसूत्रसन्निबद्धरसालपल्लवान्वितैः ।
परितः परितो रम्भास्तम्भवृन्द समन्विते ॥ ६० ॥
पतिपुत्रवती योषित्समूहैर्दीपहस्तकैः ।
पूर्णैर्लाजाधान्यदूर्वाफलपुष्पसमन्वितैः ॥ ६१ ॥

सुपुत्रैर्ब्राह्मणैश्चापि मुनिभिर्ब्रह्मचारिभिः ।
नटीभिर्नर्त्तकीभिश्च गजेन्द्रैः परिशोभिते ॥ ६२ ॥
पुरोहितैश्च संयुक्तैः कुर्वद्भिर्मङ्गलध्वनिम् ।
सुचारुमालतीमालाहस्तैः शस्तैः प्रशंसितैः ॥ ६३ ॥
नानाप्रकारवाद्यैश्च शङ्खध्वनिसुनादितैः ।
सिन्दूररेणुभिश्चारुचन्दनद्रवपङ्किलम् ॥ ६४ ॥
प्रविश्य नगरं दुर्गा ददर्श पितरौ पुरः ।
सुप्रसन्नौ प्रधावन्तौ हर्षाश्रुपुलकान्वितौ ॥ ६५ ॥
प्रसन्नवदना देवी चालिभिः प्रणनाम तौ ।
संयुज्याथाशिषन्तौ च चक्रतुस्तां च वचसि ॥ ६६ ॥
हे वत्से वत्सेत्युच्चार्य रुदन्तौ प्रेमविह्वलौ ।
तदा तां च रथे कृत्वा जग्मतुर्निजमन्दिरम् ॥ ६७ ॥
स्त्रियो निर्मञ्छनञ्चक्रुर्विप्रा युयुजुराशिषम् ।
ब्राह्मणेभ्यश्च वन्दिभ्यः पर्वतेन्द्रो धनं ददौ ॥ ६८ ॥
मङ्गलं कारयामास पाठयामास छान्दसम् ।
एवं स्वकन्यया सार्द्धं तस्थतुस्तौ स्वमन्दिरे ॥ ६९ ॥
सुखे न वसतौ तौ हि हर्षनिर्भरमानसौ ।
एकदा च तपः कर्तुं जगाम स्वर्णदीं गिरिः ॥ ७० ॥
मेनका कन्यया सार्द्धमुवास प्राङ्गणे मुदा ।
एतस्मिन्नन्तरे भिक्षुर्नर्त्तकश्च सुगायनः ॥ ७१ ॥
सहसैक आजगाम मेनकासन्निधिं मुदा ।
शृङ्गवाद्यं वामहस्ते डमरुं दक्षिणे तथा ॥ ७२ ॥
कृत्वा विभूतिगात्रो[illegible]तीव्रजगातुरः ।
पृष्ठकन्था रक्तवासा [illegible]तिमनोहरः ॥ ७३ ॥

जगौ मम गुणाख्यानं कृत्वा नृत्यं मनोहरम् ।
वादयामास शृङ्गञ्च वर्णं डमरुकं तथा ॥ ७४ ॥
आजग्मुर्नागरा बाला बालिका हर्षविह्वलाः ।
वृद्धा युवानो युवतीसमूहा वृद्धयोषितः ॥ ७५ ॥
श्रुत्वा तु सुन्दरं गीतं सुतानस्वरसंयुतम् ।
सहसा मुमुहुः सर्वे तेन मूर्च्छामवाप्नुवम् ॥ ७६ ॥
मूर्च्छां संप्राप सा दुर्गा ददर्श हृदि शङ्करम् ।
त्रिशूलपट्टिशकरं व्याघ्रचर्मधरं परम् ॥ ७७ ॥
विभूतिभूषणं रम्यमस्थिमालां सुनिर्मलाम् ।
ईषद्धास्यप्रसन्नास्यं सुप्रसन्नं त्रिलोचनम् ॥ ७८ ॥
मालाहस्तं पञ्चवक्त्रं नागयज्ञोपवीतकम् ।
वरं वृणिष्वेत्युक्तवन्तं सुन्दरं चन्द्रशेखरम् ॥ ७९ ॥
हृदयस्थं हरं दृष्ट्वा मनसा तं ननाम सा ।
वरं वव्रे मानसे सा त्वं पतिर्मे भवेति च ॥ ८० ॥
एवं दत्त्वा शिवस्तस्यै चान्तर्धानञ्चकार सः ।
न दृष्ट्वा हृदि तं दुर्गा संप्राप्य चेतनां पुनः ॥ ८१ ॥
ददर्श चक्षुरुन्मील्य भिक्षुकं गायकं पुरः ।
नृत्यसंगीततः सा तु भिक्षुकस्य च मेनका ॥ ८२ ॥
दातुं ययौ सा रत्नानि स्वर्णपात्रस्थितानि च ।
भिक्षां ययाचे भिक्षुस्तां दुर्गां नान्यां गृहीतवान् ॥८३॥
पुनश्च नर्त्तनं कर्त्तुमुद्यतः कौतुकेन च ।
मेना तद्वचनं श्रुत्वा चुकोप विस्मयं ययौ ॥ ८४ ॥
भिक्षुकं भर्त्सयामास वहिःकर्त्तुमुवाच तम् ।
पत्नी त्रिलोकनाथस्य शिवस्य परमात्मनः ॥ ८५ ॥

याचन्तमिमं प्रकुर्वन्तं दूरं कुरु सुभाषिणम् ।
एतस्मिन्नन्तरे तत्रा गिरिः स्वालयमाययौ ॥८६॥
ददर्श पुरतो भिक्षुं प्राङ्गणस्थं मनोहरम् ।
कृत्वा नारायणार्चाञ्च गङ्गातीरे मनोहरे ॥ ८७ ॥
तन्मूर्त्तिध्यानविश्लेषशोकादुद्विग्नमानसः ।
श्रुत्वा मेनामुखाद्वार्तां जहास च चुकोप सः ॥८८॥
आज्ञां चकार स्वचरं वहिः कर्तुञ्च भिक्षुकम् ।
आकाशमिव दुःस्पर्शं प्रज्वलन्तं स्वतेजसा ॥ ८९ ॥
न शशाक वहिः कर्तुं समीपं गन्तुमक्षमः ।
ददर्श भिक्षुकं शैलः क्षणञ्चारुचतुर्भुजम् ॥ ९० ॥
किरीटिनं कुण्डलिनं पीताम्बरधरं परम् ।
सुवेशं सुन्दरश्याममीषद्धास्यं मनोहरम् ॥ ९१ ॥
चन्दनोक्षितसर्वाङ्गं भक्तानुग्रहकातरम् ।
यद्यत् पुष्पं प्रदत्तञ्च पूजाकाले गदाभृते ॥ ९२ ॥
गात्रे शिरसि तत्सर्वं भिक्षुकस्य ददर्श ह ।
धूपः प्रदीपो यो दत्तो नैवेद्यं वा मनोहरम् ॥ ९३ ॥
ददर्श शैलस्तत्सर्वं भिक्षुकस्य पुरःस्थितम् ।
क्षणं ददर्श द्विभुजं विनोदमुरलीकरम् ॥ ९४ ॥
गोपवेशं किशोरञ्च सस्मितं श्यामसुन्दरम् ।
मयूरपिच्छचूडञ्च रत्नालङ्कारभूषितम् ॥ ९५ ॥
चन्दनोक्षितसर्वाङ्गं वनमालाविभूषितम् ।
क्षणं ददर्श स्वच्छञ्च शङ्करं चन्द्रशेखरम् ॥ ९६ ॥
त्रिशूलपट्टिशकरं व्याघ्रचर्माम्बरं परम् ।
विभूतिगात्रममलमस्थिमालाविभूषितम् ॥ ९७ ॥

नागयज्ञोपवीतञ्च तप्तस्वर्णजटाधरम् ।
डमरुशृङ्गहस्तञ्च सुप्रशस्तं मनोहरम् ॥ ९८ ॥
प्रजपन्तं हरेर्नाम श्वेताब्जबीजमालया ।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ॥ ९९ ॥
स्वतेजसा प्रज्वलन्तं पञ्चवक्त्रं त्रिलोचनम् ।
क्षणं ददर्श जगतां स्रष्टारञ्च चतुर्मुखम् ॥ १०० ॥
जपन्तं श्रीहरेर्नाम स्वच्छस्फटिकमालया ।
क्षणं सूर्य्यस्वरूपञ्च ददर्श त्रिगुणात्मकम् ॥ १०१ ॥
ददर्शातीवतीव्रं तं ज्वलन्तं ब्रह्मतेजसा ।
क्षणमग्निस्वरूपञ्च ज्वलन्तमतितेजसा ॥ १०२ ॥
क्षणमाह्लादजनकं चन्द्ररूपं ददर्श ह ।
क्षणं तेजःस्वरूपञ्च निराकारं निरञ्जनम् ॥ १०३ ॥
निर्लिप्तञ्च निरीहञ्च परमात्मस्वरूपिणम् ।
एवं स्वेच्छामयं दृष्ट्वा नानारूपधरं परम् ॥ १०४ ॥
हर्षाश्रुपुलकः शैलो दण्डवत् प्रणनाम तम् ।
भक्त्या प्रदक्षिणीकृत्य प्रणम्य च पुनः पुनः ॥ १०५ ॥
समुत्पत्य हर्षयुक्तो ददर्श पुनरेव तम् ।
वास्तवं भिक्षुकं दृष्ट्वा शैलेन्द्रो विष्णुमायया ॥ १०६ ॥
विसस्मार च तत्सर्वं नानारूपधरं परम् ।
भिक्षां ययाचे भिक्षुस्तं भिक्षास्थालीस्वपार्श्वकम् ॥१०७॥
रक्ताम्बरः शृङ्गवाद्यविचित्रडमरुः करे ।
आदातुमुत्सुको दुर्गां नान्यां भिक्षुः कदाचन ॥१०८॥
न स्वीचकार शैलेन्द्रो मोहितो विष्णुमायया ।
भिक्षुः किञ्चिन्न जग्राह तत्रैवान्तरधीयत ॥ १०९ ॥

तदा बभूव ज्ञानञ्च मेनकाशैलयोः प्रिये ।
अहो दृष्टो जगन्नाथ आवाभ्यां स्वप्नवद्दिने ॥ ११० ॥
आवां शिवो वञ्चयित्वा स्वस्थानं गतवान् विभुः ।
तयोर्भक्तिं शिवे दृष्ट्वा सर्वे देवाश्च चिन्तिताः ॥ १११ ॥
चक्रुः शक्रादयो युक्तिं सुमेरो रचणे भरात् ।
एकान्तभक्त्या शैलश्चेत् कन्यां तस्मै प्रदास्यति ॥ ११२॥
ध्रुवं निर्वाणतां सद्यः संप्राप्नोत्येव भारते ।
अनन्तरत्नाधारश्चेत् पृथ्वीं त्यक्त्वा प्रयास्यति ॥ ११३ ॥
रत्नगर्भाभिधा भूमेर्मिथ्यैव भविता ध्रुवम् ।
स्थावरत्वं परित्यज्य दिव्यरूपं विधाय सः ॥ ११४ ॥
कन्यां शूलभृते दत्त्वा विष्णुलोकं गमिष्यति ।
नारायणस्य सारूप्यं भविष्यत्येव लीलया ॥ ११५ ॥
संप्राप्य पार्षदत्वञ्च हरिदासो भविष्यति ।
दशवापीसमा कन्या दीयते ब्राह्मणाय ताम् ॥ ११६ ॥
वेदज्ञाय पवित्राय चाप्रतिग्रहशालिने ।
सन्ध्यायज्ञवेदपाठकारिणे सत्यवादिने ॥ ११७ ॥
अस्मै प्रदत्ता कन्या च दशवापीफलप्रदा ।
त्रिसन्ध्याकारिणे सत्यवादिने गृहशालिने ॥ ११८ ॥
वेदज्ञाय सुविप्राय दत्त्वा सुफलदायिनी ।
परदारगृहीताय याजकाय द्विजाय च ॥ ११९ ॥
शठाय सन्ध्याहीनाय वाप्येकफलदा सुता ।
सर्वसन्ध्यास्वगायत्रीविहीनाय शठाय च ॥ १२० ॥
वैश्योद्भवाय दत्ताया वाप्यर्द्धफलदा स्मृता ।
पापिने शूद्रजाताय विप्रचत्नोद्भवाय च ॥ १२१ ॥

दत्ता चाण्डालतुल्याय कन्या सा नरकप्रदा ।
विष्णुभक्ताय विदुषे विप्राय सत्यवादिने ॥ १२२ ॥
जितेन्द्रियाय दत्ता या विंशद्वापीफलप्रदा ।
षष्टिवर्षसहस्राणि दिव्यरूपं विधाय च ॥ १२३ ॥
एवम्भूताय दत्ता चेत् मोदते विष्णुमन्दिरे ।
दत्त्वा कन्यां सुशीलाञ्च हराय हरयेऽथवा ॥ १२४ ॥
नारायणस्वरूपञ्च भवेदेव श्रुतौ श्रुतम् ।
विष्णुभक्तो यदा कन्यां ददाति विष्णुप्रीतये ॥ १२५ ॥
स लभेद्धरिदास्यञ्च ध्रुवं विप्रोद्भवाय च ।
इत्यालोच्य सुराः सर्वे कृत्वा च मन्त्रणां प्रिये ॥ १२६ ॥
गुरुं प्रस्थापितुं जग्मुर्हिमालयगृहं प्रति ।
गत्वा प्रणम्य च गुरुं सर्वे चक्रुर्निवेदनम् ॥ १२७ ॥
हिमालयगृहं गत्वा कुरु निन्दाञ्च शूलिनः ।
पिनाकिनं विना दुर्गा वरं नान्यं वरिष्यति ॥ १२८ ॥
अनिच्छया सुतां दत्त्वा फलं तूर्णं लभिष्यति ।
कालेन यातु शैलेन्द्रस्तेदानीं भुवि तिष्ठतु ॥ १२९ ॥
अनन्तरत्नाधारञ्च त्वमेव रक्ष भारते ।
देवानां वचनं श्रुत्वा प्रददौ कर्णयोः करौ ॥ १३० ॥
न स्वीचकार स गुरुः स्मरन्नारायणेति च ।
उवाच देववर्गांश्च संभर्त्स्य च पुनः पुनः ।
वेदवेदान्तविज्ञाता महाभक्तो हरौ हरे ॥ १३१ ॥

बृहस्पतिरुवाच ।

श्रूयतां मद्वचः सत्यं हे देवाः स्वार्थसाधकाः ।
नीतिसारञ्च वेदोक्तं परिणामसुखावहम् ॥ १३२ ॥

हरकेशवयोर्भक्तं ये च निन्दन्ति पापिनः ।
भूदेवान् ब्राह्मणांश्चैव स्वगुरुं च पतिव्रता ॥ १३३ ॥
पतिभिक्षुब्रह्मचारिसृष्टिबीजान् सुरांस्तथा ।
पच्यन्ते कालसूत्रे ते यावच्चन्द्रदिवाकरौ ॥ १३४ ॥
श्लेष्ममूत्रपुरीषेषु शेरते ते दिवानिशम् ।
भक्षिताः कीटनिकरैः शब्दं कुर्वन्ति कातराः ॥१३५॥
ये निन्दन्ति च ब्रह्माणं स्रष्टारं जगतां गुरुम् ।
शिवं सुराणां प्रवरं दुर्गां लक्ष्मीं सरस्वतीम् ॥ १३६ ॥
गीताञ्च तुलसीं गङ्गां वेदांश्च वेदमातरम् ।
व्रतं तपस्यां पूजाञ्च मन्त्रं मन्त्रप्रदं गुरुम् ॥ १३७ ॥
ते पच्यन्तेऽन्धकूपे वै चायुषोऽर्द्धं विधेरहो ।
भक्षिताः सर्पसङ्घैश्च शब्दं कुर्वन्ति सन्ततम् ॥ १३८ ॥
ये निन्दन्ति हृषीकेशं देवसाम्यं विधाय च ।
विष्णुभक्तिप्रदञ्चैव पुराणञ्च श्रुतिः परम् ॥ १३९ ॥
राधान्तदङ्गजां गोपीर्ब्राह्मणांश्च सदार्चितान् ।
ते पच्यन्ते वटे देवा विधातुरायुषा समम् ॥ १४० ॥
अधोमुखा ऊर्द्धजङ्घाः सर्पसङ्घैश्च वेष्टिताः ।
भक्षिता विकृताकारैः कीटैः सर्पसमाकृतैः ॥ १४१ ॥
अतीवकातराभीताः शब्दं कुर्वन्ति सन्ततम् ।
श्लेष्ममूत्रपुरीषाणि ध्रुवं भक्षन्ति क्षोभिताः ॥ १४२ ॥
उल्कां ददति रुष्टाश्च तन्मुखे यमकिङ्कराः ।
त्रिसन्ध्यन्तर्जनं कृत्वा कुर्वन्ति दण्डताड़नम् ॥ १४३ ॥
कुर्वन्ति मूत्रपानञ्च प्रहारैस्तृषितान् भिया ।
तदा कल्पान्तरे स्रष्टुं सृष्टिञ्च प्रथमे पुनः ॥ १४४ ॥

तेषां भवेत् प्रतीकार इत्याह कमलोद्भवः ॥ १४५ ॥
कृत्वा हि शिवनिन्दाञ्च यास्यन्ति नरकं सुराः ।
इममेवोपकारञ्च कर्तुमिच्छथ पुत्रकाः ॥ १४६ ॥
ब्रह्मणा प्रेरितो दक्षो दत्त्वा शूलभृते सुताम् ।
न पापं परमैश्वर्य्यं संप्राप हरनिन्दकः ॥ १४७ ॥
अनिच्छया सुतां दत्त्वा तुर्य्यपुण्यं ललाभ सः ।
अहो विहाय सारूप्यं तुच्छं सर्गं ललाभ सः ॥१४८॥
कश्चिन्मध्ये च युष्माकं गत्वा शैलगृहं सुराः ।
सम्पादयत स्वमतं शैलेन्द्रस्य प्रयत्नतः ॥ १४९ ॥
अनिच्छया सुतां दत्त्वा सुखं तिष्ठतु भारते ।
तस्मै भक्त्या सुतां दत्त्वा मोक्षं प्राप्स्यति निश्चितम् ॥१५०॥
पश्चात् सप्तर्षयः सर्वे गृहीत्वा तामरुन्धतीम् ।
ध्रुवं तस्य गृहं गत्वा बोधयिष्यन्ति पर्वतम् ॥ १५१ ॥
विना पिनाकिनं दुर्गा वरं नान्यं वरिष्यति ।
अनिच्छया सुतां तस्मै प्रदास्यति सुताज्ञया ॥ १५२ ॥
इत्येवं कथितं सर्वं देवा गच्छन्तु मन्दिरम् ।
इत्युक्त्वा वाक्पतिः शीघ्रं तपसे स्वर्णदीं गतः ॥ १५३ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे चत्वारिंशत्तमोऽध्यायः ।

---

# एकचत्वारिंशत्तमोऽध्यायः ।

श्रीकृष्ण उवाच ।

तदा देवाः समालोच्य जग्मुस्ते ब्रह्मणोऽन्तिकम् ।
सर्वं निवेदयामासुर्ब्रह्माणं जगतां पतिम् ॥ १ ॥

देवा ऊचुः ।

तव सृष्टौ जगत्स्रष्टा रत्नाधारो हिमालयः ।
स चेत् प्राप्स्यति मोक्षञ्च रत्नगर्भा कुतो मही ॥ २ ॥
सुतां शूलभृते दत्त्वा भक्त्या शैलेश्वरः स्वयम् ।
नारायणस्य सारूप्यं सम्प्राप्स्यति न संशयः ॥ ३ ॥
त्वं तस्य निन्दनं कृत्वा विमतिं प्रतिपादय ।
त्वया विना क्षमो नान्यो गच्छ शैलगृहं प्रभो ॥ ४ ॥
देवानां वचनं श्रुत्वा तानुवाच विधिः स्वयम् ।
वचनं नीतिसारञ्च कर्णपीयूषमुत्तमम् ॥ ५ ॥

ब्रह्मोवाच ।

नाहं कर्त्तुं क्षमो वत्साः शिवनिन्दां सुदुष्कराम् ।
सम्पद्विनाशरूपाञ्च विपदो वीजरूपिणीम् ॥ ६ ॥
भूतेशं प्रस्थापयत स्वात्मनिन्दां करोतु सः ।
परनिन्दाविनाशाय स्वनिन्दा यशसे परम् ॥ ७ ॥
ब्रह्मणो वचनं श्रुत्वा तं प्रणम्य सुराः प्रिये ।
शीघ्रं ययुस्ते कैलासं गत्वा च तुष्टुवुः शिवम् ॥ ८ ॥
सर्वं निवेदयामासुः शङ्करं करुणालयम् ।
स ययौ शैलमूलञ्च तानाश्वास्य प्रहस्य च ॥ ९ ॥

देवा सुमुदिरे सर्वे शीघ्रं गत्वा स्वमन्दिरम् ।
इष्टसिद्धिर्मुदे शश्वदसिद्धिर्दुःखवर्द्धिनी ॥ १० ॥
अथ शैलः सभामध्ये समुवास मुदान्वितः ।
बन्धुवर्गैः परिवृतः पार्वतीसहितः स्वयम् ॥ ११ ॥
एतस्मिन्नन्तरे तत्र विप्ररूपी शिवः स्वयम् ।
समाजगाम सहसा प्रसन्नवदनेक्षणः ॥ १२ ॥
दण्डी छत्री दीर्घवासा बिभ्रत्तिलकमुत्तमम् ।
करे स्फटिकमालाञ्च शालग्रामं गले दधत् ॥ १३ ॥
तञ्च दृष्ट्वा समुत्तस्थौ सगणश्च हिमालयः ।
ननाम दण्डवद्भूमौ भक्त्यातिथिमपूर्वकम् ॥ १४ ॥
ननाम पार्वती भक्त्या प्राणेशं विप्ररूपिणम् ।
आशिषं युयुजे विप्रः सर्वेषां प्रीतिपूर्वकम् ॥ १५ ॥
शैलदत्तासने शीघ्रमुवास ब्राह्मणः स्वयम् ।
मधुपर्कादिकं सर्वं जग्राह प्रीतिपूर्वकम् ॥ १६ ॥
पप्रच्छ कुशलं शैलो ब्राह्मणं को भवानिति ।
उवाच सर्वं विप्रेन्द्रो गिरीन्द्रं सादरेण च ॥ १७ ॥

ब्राह्मण उवाच ।

घाटिकां वृत्तिमाश्रित्य भ्रमामि धरणीतले ।
मनोयायी सर्वगामी सर्वज्ञोऽहं गुरोर्वरात् ॥ १८ ॥
मया ज्ञातं शङ्कराय सुतां दातुं त्वमिच्छसि ।
इमां पद्मासमां दिव्यामज्ञातकुलशीलिने ॥ १९ ॥
निराश्रयायासङ्गायारूपाय निर्गुणाय च ।
श्मशानगामिने सर्वभूतनाथाय योगिने ॥ २० ॥
दिग्वाससेऽहिगात्राय विभूतिभूषणाय च ।

व्यालग्राहिस्वरूपाय कालव्यायादयाय च ॥ २१ ॥
अज्ञातमृत्यवेऽज्ञायानाथायाबन्धवे भवे ।
तप्तस्वर्णजटाभारधारिणे निर्धनाय च ॥ २२ ॥
अज्ञातवयसेऽतीववृद्धाय चाविकारिणे ।
सर्वाश्रयाय भ्रमिणे नागहाराय भिक्षवे ॥ २३ ॥
निबोध ज्ञानिनां श्रेष्ठं नारायणकुलोद्भवम् ।
स ते पात्रानुरूपश्च पार्वतीदानकर्मणि ॥ २४ ॥
महाजनः स्मेरमुखः श्रुतिमात्राद्भविष्यति ।
लक्षशैलाधिपस्त्वञ्च न तस्यैकोऽस्ति बान्धवः ॥ २५ ॥
बान्धवान् मेनकां प्रश्नं कुरु शीघ्रं प्रयत्नतः ।
सर्वान् पप्रच्छ यत्नेन हे बन्धो पार्वतीं विना ॥ २६ ॥
रोगिणे नौषधं शश्वत्कुपथ्यं रोचते सदा ।
इत्युक्त्वा ब्राह्मणः शीघ्रं स्नात्वा भुक्त्वा मुदान्वितः ।
जगाम स्वालयं शान्तो वृन्दावनविनोदिनि ॥ २७ ॥
ब्राह्मणस्य वचः श्रुत्वा मेनोवाच हिमालयम् ।
शोकेन साश्रुनयना हृदयेन विदूयता ॥ २८ ॥

मेनकोवाच ।

शृणु शैलेन्द्र मद्वाक्यं परिणामसुखावहम् ।
पृच्छ शैलवरानस्मै न दास्यामि सुतामहम् ॥ २९ ॥
त्यक्ष्यामि सर्वान्विषयान् भक्ष्यामि विषमेव च ।
गले बध्वाम्बिकां पश्य यास्यामि घोरकाननम् ॥ ३० ॥
गृहीत्वा पार्वतीं मेना गत्वा कोपालयं रुषा ।
त्यक्त्वाहारं रुदन्ती च चकार शयनं भुवि ॥ ३१ ॥
एतस्मिन्नन्तरे तत्र वशिष्ठो भ्रातृभिः सह ।

आजगाम पुनस्तैश्च युक्ता पश्चादरुन्धती ॥ ३२ ॥
प्रणम्य शैलस्तान् सर्वान् स्वर्णसिंहासनं ददौ ।
दत्त्वा षोड़शोपचारं पूजयामास भक्तितः ॥ ३३ ॥
ऋषयश्च सभामध्ये सुखमूषुः सुखासने ।
जगामारुन्धती तूर्णं यत्र मेना च पार्वती ॥ ३४ ॥
गत्वा ददर्श मेनाञ्च शयानां शोकमूर्च्छिताम् ।
उवाच मधुरं साध्वी सावधानां हितं वचः ॥ ३५ ॥

अरुन्धत्युवाच ।

उत्तिष्ठ मेनके साध्वि त्वद्गृहेऽहमरुन्धती ।
पितॄणां मानसीं कन्यां मां जानीहि विधेर्बधूम् ॥३६॥
अरुन्धत्याः स्वरं श्रुत्वा शीघ्रमुत्थाय मेनका ।
उवाच शिरसा नत्वा तां पद्मामिव तेजसा ॥ ३७ ॥

मेनकोवाच ।

अहोऽद्य किमिदं पुण्यमस्माकं पुण्यजन्मनाम् ।
बधूर्जगद्विधेः पत्नी वशिष्ठस्य ममालये ॥ ३८ ॥
सम्भ्रमेणेदमेवोक्तं गृहं तेऽहञ्च किङ्करी ।
ईश्वरी जगतां स्रष्टुरागता बहुपुण्यतः ॥ ३९ ॥
पाद्यं दत्त्वा स्वर्णपीठे वासयामास तां सतीम् ।
भोजयामास मिष्टान्नं बुभुजे कन्यया सह ॥ ४० ॥
शिवस्य हेतोर्नीतिञ्च बोधयामास मेनकाम् ।
अरुन्धती प्रसङ्गेन सम्बन्धयोजनानि च ॥ ४१ ॥
अथ शैलमृषीन्द्राश्च नीतिसारं परं वचः ।
बोधयामासुः सम्बन्धयोजनानि प्रसङ्गतः ॥ ४२ ॥

ऋषय ऊचुः ।

शैलेन्द्र श्रूयतां वाक्यमस्माकं शुभकारणम् ।
शिवाय पार्वतीं देहि संहर्तुः श्वशुरो भव ॥ ४३ ॥
अयाचितारं देवेशं बोधयाशु प्रयत्नतः ।
तव शङ्काविनाशाय ब्रह्मा सम्बन्धकर्मणि ॥ ४४ ॥
नेच्छको दारसंयोगे शङ्करो योगिनां वरः ।
विधेः प्रार्थनया देवस्तव कन्यां ग्रहीष्यति ॥ ४५ ॥
दुहितुस्ते तपस्यान्ते प्रतिज्ञानं चकार सः ।
हेतुद्वयेन योगीन्द्रो विवाहञ्च करिष्यति ॥ ४६ ॥
ऋषीणां वचनं श्रुत्वा प्रहस्य च हिमालयः ।
उवाच किञ्चिद्भीतश्च परं विनयपूर्वकम् ॥ ४७ ॥

हिमालय उवाच ।

शिवस्य राजसामग्रीं न हि पश्यामि काञ्चन ।
किञ्चिदाश्रममैश्वर्य्यं किं वा स्वजनबान्धवम् ॥ ४८ ॥
न कन्यामतिनिर्लिप्तयोगिने दातुमर्हति ।
यूयं विधातुः पुत्राश्च सत्यं वदत निश्चितम् ॥ ४९ ॥
नानुरूपाय पुत्राय पिता कन्यां ददाति चेत् ।
कामाल्लोभाद्भयान्मोहाच्छताब्दं नरकं व्रजेत् ॥ ५० ॥
न हि दास्याम्यहं कन्यामिच्छया शूलपाणिने ।
यद्विधानं भवेद्योग्यमृषयस्तद्विधीयताम् ॥ ५१ ॥
हिमालयवचः श्रुत्वा वशिष्ठो विधिनन्दनः ।
वेदवेदाङ्गविज्ञाता वेदोक्तं वक्तुमुद्यतः ॥ ५२ ॥

वशिष्ठ उवाच ।

वचनं त्रिविधं शैल लौकिके वैदिके तथा ।

सर्वं जानाति शास्त्रज्ञो निर्मलज्ञानचक्षुषा ॥ ५३ ॥
असत्यमहितं पश्चात् साम्प्रतं श्रुतिसुन्दरम् ।
सुबुद्धं शत्रुर्वदति न हितञ्च कदाचन ॥ ५४ ॥
आपातप्रीतिजनकं परिणामसुखावहम् ।
दयालुर्धर्मशीलश्च बोधयत्येव बान्धवम् ॥ ५५ ॥
श्रुतिमात्रात् सुधातुल्यं सर्वकाले सुखावहम् ।
सत्यसारं हितकरं वचसां श्रेष्ठमीप्सितम् ॥ ५६ ॥
एवञ्च त्रिविधं शैल नीतिशास्त्रनिरूपितम् ।
कथ्यतां त्रिषु मध्ये किं वदामि वाक्यमीप्सितम् ॥५७॥
वाह्यसम्पद्विहीनश्च शङ्करस्त्रिदशेश्वरः ।
तत्त्वज्ञानसमुद्रेषु संनिमग्नैकमानसः ॥ ५८ ॥
आपातभ्रमसम्पत्तिर्विद्युच्छ्रीरिव नाशिनी ।
सदानन्दस्येश्वरस्य स्वात्मारामस्य का स्पृहा ॥ ५९ ॥
गृही ददाति स्वसुतां राज्यसम्पत्तिशालिने ।
कन्यां विद्विषिणे दत्त्वा कन्याघाती भवेत् पिता ॥६०॥
को वदेच्छङ्करो दुःखी कुवेरो यस्य किङ्करः ।
भ्रूभङ्गलीलया सृष्टिं स्रष्टुं नष्टुं चमो हि यः ॥ ६१ ॥
निर्गुणः परमात्मा च य ईशः प्रकृतेः परः ।
सर्वेशः स च निर्लिप्तो लिप्तश्च सर्वजन्तुषु ॥ ६२ ॥
स एकः सृष्टिसंहारे स सर्वः सृष्टिकर्मणि ।
निराकारश्च साकारो विभुः स्वेच्छामयः स्वयम् ॥ ६३ ॥
य ईशस्त्रिविधां मूर्त्तिं विधत्ते सृष्टिकर्मणि ।
सृष्टिस्थित्यन्तजननीं ब्रह्मविष्णुशिवाभिधाम् ॥ ६४ ॥
ब्रह्मा च ब्रह्मलोकस्थो विष्णुः क्षीरोदवासकृत् ।

शिवः कैलासवासी च सर्वाः कृष्णविभूतयः ॥ ६५ ॥
श्रीकृष्णश्च द्विधाभूतो द्विभुजश्च चतुर्भुजः ।
चतुर्भुजश्च वैकुण्ठे गोलोके द्विभुजः स्वयम् ॥ ६६ ॥
तस्य देवस्य तेऽ'शाश्च ब्रह्मविष्णुमहेश्वराः ।
केचिद्देवाः कलास्तस्य कलांशाश्चैव केचन ॥ ६७ ॥
कृष्णः सृष्ट्युन्मुखश्चापि प्रकृतिं तत्र निर्ममे ।
निर्माय ताञ्च तयोर्नौ वीर्य्याधानञ्चकार ह ॥ ६८ ॥
ततो डिम्भः समुद्भूतस्तन्मध्ये च महाविराट् ।
महाविष्णुः स विज्ञेयो श्रीकृष्णः षोड़शांशकः ॥ ६९ ॥
नाभिपद्मोद्भवो ब्रह्मा तस्यैव जलशायिनः ।
भालोद्भवस्तस्य स्रष्टुः शङ्करश्चन्द्रशेखरः ॥ ७० ॥
महाविष्णोर्वामपार्श्वात् संभूतो विष्णुरेव च ।
सर्वे प्राकृतिकाः शैल ब्रह्मविष्णुशिवादयः ॥ ७१ ॥
धत्ते चतुर्विधां मूर्तिं प्रकृतिः कृष्णसंभवा ।
अंशेन लीलया सृष्टौ कलया बहुधा तया ॥ ७२ ॥
कृष्णवामाङ्गसंभूता राधा रासेश्वरी स्वयम् ।
मुखाद्भवा स्वयं वाणी रागाधिष्ठातृदेवता ॥ ७३ ॥
वक्षःस्थलोद्भवा लक्ष्मीः सर्वसम्पत्स्वरूपिणी ।
शिवा तेजःसु देवानामाविर्भावं चकार सा॥ ८४ ॥
निहत्य दानवान् सर्वान् देवेभ्यश्च श्रियं ददौ ।
प्राप्य कल्पान्तरे जन्म जठरे दक्षयोषितः ॥ ७५ ॥
नाम्ना सती शिवं प्राप दक्षस्तस्मै ददौ च ताम् ।
योगेन देहं तत्याज श्रुत्वा सा भर्तृनिन्दनम् ॥ ७६ ॥
पितॄणां मानसी कन्या मेनका तव गेहिनी ।

ललाभ तस्या जठरे जन्म सा जगदम्बिका ॥ ७७ ॥
शिवा शिवस्य पत्नीयं शैल जन्मनि जन्मनि ।
कल्पे कल्पे बुद्धिरूपा ज्ञानिनां जननी परा ॥ ७८ ॥
जातिस्मरा च सर्वज्ञा सिद्धिदा सिद्धिरूपिणी ।
अस्या अस्थि चिताभस्म भक्त्या धत्ते शिवः स्वयम् ॥७९॥
देहि त्वं स्वेच्छया कन्यां देहि भद्र शिवाय च ।
अथवा सा स्वयं कान्तस्थानं यास्यति द्रक्ष्यति ॥ ८० ॥
प्राक्तनाद्यस्य या कान्ता सा तं प्राप्नोति वल्लभम् ।
प्रजापतेर्निबन्धञ्च न कोऽपि खण्डितुं क्षमः ॥ ८१ ॥
विवाहे नोत्सुकः शम्भुः स्वात्मारामश्च तत्त्ववित् ।
तुष्टुवुस्तं सुराः सर्वे तारकाख्येन पीड़िताः ॥ ८२ ॥
देवानां पीड़नं दृष्ट्वा ब्रह्मणा प्रार्थितो विभुः ।
कृपया स्वीचकाराशु कृपालुर्देवसंसदि ॥ ८३ ॥
कृत्वा प्रतिज्ञां योगीन्द्रो दृष्ट्वा क्लेशमसंख्यकम् ।
दुहितुस्ते तपःस्थानमाजगाम द्विजात्मकः ॥ ८४ ॥
तामाश्वास्य वरं दत्त्वा जगाम निजमन्दिरम् ।
तच्छ्रुत्वैवाययुः सर्वे सुराः शक्रादयो मुदा ॥ ८५ ॥
नारायणश्च भगवान् ब्रह्मा धर्मश्च सांप्रतम् ।
ऋषयो मुनयः सर्वे गन्धर्वा यक्षराक्षसाः ॥ ८६ ॥
तत्र सर्वे मुदा युक्ताः समालोचनकर्तृभिः ।
प्रस्थापिता वयं शीघ्रमन्नेणा सा अरुन्धती ॥ ८७ ॥
तव प्रबोधने प्रीतिर्वर्द्धते महती सदा ।
संप्राप्तशुभकार्य्यञ्च सर्वकालसुखावहम् ॥ ८८ ॥
शिवां शिवाय शैलेन्द्र स्वेच्छया चेन्न दास्यसि ।

भविता वा विवाहश्च भवितव्यबलेन च ॥ ८९ ॥
आगमिष्यति देवो यो नारायणसहायवान् ।
रत्नसाररथे कृत्वा देवानां प्रवरं वरम् ॥ ९० ॥
योगीन्द्राणां वरेण्यं तं ज्ञानिनाञ्च गुरोर्गुरुम् ।
आदिमध्यान्तरहितमविकारमजं परम् ॥ ९१ ॥
वरं ददौ शिवायै स शिवश्च तपसः स्थले ।
नहीश्वरप्रतिज्ञातं दुर्लभं विफलं भवेत् ॥ ९२ ॥
ब्रह्मादिस्तम्बपर्य्यन्तं सर्वं नश्वरमस्थिरम् ।
अहो प्रतिज्ञा दुर्लङ्घ्या साधूनामविनाशिनी ॥ ९३ ॥
एको महेन्द्रः शैलानां पक्षान् चिच्छेद लीलया ।
पवनो लीलया मेरोः शृङ्गभङ्गं चकार ह ॥ ९४ ॥
के वा शैलेषु योद्धारः सुरैः सह हिमालय ।
पतिष्यन्ति समुद्रेषु पवनैः प्रेरिताः क्षणात् ॥ ९५ ॥
एकार्थे यदि शैलेन्द्र सर्वसम्पद्विनश्यति ।
सर्वान् रक्षति तद्दत्त्वा विना च शरणागतम् ॥ ९६ ॥
शरणागतरक्षार्थे प्राणांश्च दातुमर्हति ।
पुत्रदारधनं सर्वानिति नीतिविदो विदुः ॥ ९७ ॥
दत्त्वा विप्राय स्वसुतामनारण्यो नृपेश्वरः ।
ब्रह्मशापाद्विमुक्तश्च ररक्ष सर्वसम्पदम् ॥ ९८ ॥
तमाशु बोधयामासुर्नीतिशास्त्रविदो जनाः ।
ब्रह्मशापनिमग्नञ्च ब्रह्मण्यमतिकातरम् ॥ ९९ ॥
त्वमेव शैलराजेन्द्र सुतां दत्त्वा शिवाय च ।
रक्ष सर्वान् बन्धुवर्गान् वशे कुरु सुरानपि ॥ १०० ॥
वशिष्ठस्य वचः श्रुत्वा प्रहस्य पर्वतेश्वरः ।

पप्रच्छ नृपवृत्तान्तं हृदयेन विदूयता ॥ १०१ ॥

हिमालय उवाच।

कस्य वंशोद्भवो ब्रह्मन्ननारण्यो नृपेश्वरः।
सुतां दत्त्वा स च कथमरचत् सर्वसम्पदम् ॥ १०२ ॥

वशिष्ठ उवाच।

मनुवंशोद्भवो राजा सोऽनारण्यो नृपेश्वरः।
चिरजीवी धर्मशीलो वैष्णवो विजितेन्द्रियः ॥ १०३ ॥
स्वायम्भुवो मनुः पूर्वं ब्रह्मपुत्रोऽतिधार्मिकः।
राज्यं चकार धर्मेण युगानामेकसप्ततिम् ॥ १०४ ॥
ततो जगाम वैकुण्ठं सहितः शतरूपया।
संप्राप्य दास्यं सान्निध्यं हरेर्दासो बभूव ह ॥ १०५ ॥
मनुर्बभूव तत्पश्चात् स्वयं स्वारोचिषो महान्।
स्वारोचिषे गते शैल बभूव मनुरुत्तमः ॥ १०६ ॥
उत्तमे निर्गते धर्मी तामसो मनुरेव च।
ततो मनुर्बभूवात्र रैवतो ज्ञानिनां वरः ॥ १०७ ॥
चाक्षुषश्च ततो ज्ञेयः श्राद्धदेवश्च सप्तमः।
सावर्णिरष्टमो ज्ञेयः श्रीसूर्य्यतनयो महान् ॥ १०८ ॥
चैत्रवंशोद्भवो राजा पुरासीत् सुरथो भुवि।
नवमो दक्षसावर्णिर्ब्रह्मसावर्णिको दश ॥ १०९ ॥
एकादश मनुश्रेष्ठो धर्मसावर्णिरुच्यते।
ततश्च रुद्रसावर्णिर्विष्णुभक्तो जितेन्द्रियः ॥ ११० ॥
तत्परो देवसावर्णिरिन्द्रसावर्णिकस्ततः।
इत्येवं कथितं बन्धो मनवश्च चतुर्दश ॥ १११ ॥
एतेषु समतीतेषु बभूव ब्रह्मणो दिनम्।

इन्द्रसावर्णिवृत्तान्तं सर्वं मत्तो निशामय ॥ ११२ ॥
मनूनां प्रवरो धर्मी शुद्धभक्तो गदाभृतः।
चकार राज्यं धर्मेण युगानामेकसप्ततिम् ॥ ११३ ॥
राज्यं दत्त्वा सुरेन्द्राय जगाम तपसे वनम्।
सुरेन्द्रस्य सुतः श्रीमान् श्रीनिकेतुर्महाबलः ॥ ११४ ॥
तस्य पुत्रो महायोगी पुरीषतरुरेव च।
तस्य पुत्रोऽतितेजस्वी गोकामुख इति स्मृतः ॥ ११५ ॥
वृद्धश्रवाः सुतस्तस्य तत्पुत्रो भानुरेव च।
पुण्डरीकः सुतस्तस्य तत्पुत्रो जिह्वलस्तथा ॥ ११६ ॥
जिह्वलस्य सुतः शृङ्गी तत्पुत्रो भीम एव च।
तत्पुत्रोऽपि यशश्चन्द्रो यशसा च शशी जितः ॥ ११७ ॥
तत्कीर्तिनिर्मलां सन्तो गायन्ति सन्ततं सुराः।
तस्य पुत्रो वरेण्यश्च पुरारण्यश्च तत्सुतः ॥ ११८ ॥
तत्पुत्रो धार्मिकः श्रीमान् धरारण्यश्च एव च।
तत्पुत्रो मङ्गलारण्यस्तपस्वी ज्ञानिनां वरः ॥ ११९ ॥
अपुत्रको नृपश्रेष्ठस्तपसे पुष्करं गतः।
सुचिरञ्च तपस्तप्त्वा वरं लब्ध्वा महेश्वरात् ॥ १२० ॥
संप्राप्य वैष्णवं पुत्रमनारण्यं जितेन्द्रियम्।
दत्त्वा तस्मै च राज्यञ्च जगाम तपसे वनम् ॥ १२१ ॥
अनारण्यो नृपश्रेष्ठः सप्तद्वीपमहीपतिः।
चकार यज्ञशतकं भृगुणा च पुरोधसा ॥ १२२ ॥
तुच्छं मत्वाशु शक्रत्वं न लेभे नश्वरं सुधीः।
लीलया च जितः शक्रो लीलया च जितो बलिः ॥१२३
जिताश्च दानवेन्द्रा वै ज्वलता स्वेन तेजसा।

बभूवुः शतपुत्राश्च राज्ञस्तस्य हिमालय ॥ १२४ ॥
कन्यैका सुन्दरी रम्या पद्मा पद्मालयासमा ।
सा कन्या यौवनस्था च बभूव पितृमन्दिरे ॥ १२५ ॥
चारं प्रस्थापयामास वराय नृपतीश्वरः ॥ १२६ ॥
एकदा पिप्पलादश्च गन्तुं स्वाश्रममुत्सुकः ।
तपःस्थाने निर्जने च गन्धर्वं स ददर्श ह ॥ १२७ ॥
स्त्रीषु निमग्नचित्तञ्च शृङ्गाररससागरे ।
कामादतीवमत्तञ्च न जानन्तं दिवानिशम् ॥ १२८ ॥
दृष्ट्वा तं मुनिशार्दूलः सकामश्च बभूव ह ।
ततः सुभग्नचित्तः सन् चिन्तयन् दारसंग्रहम् ॥१२९॥
एकदा पुष्पभद्रायां स्नातुं गच्छन् मुनीश्वरः ।
ददर्श पद्मां युवतीं पद्मामिव मनोरमाम् ॥१३०॥
केयं कन्येति पप्रच्छ समीपस्थान् जनान् मुनिः ।
जना निवेदनञ्चक्रुः पद्मानारण्यकन्यका ॥ १३१ ॥
मुनिः स्नात्वाभीष्टदेवं सम्पूज्य राधिकेश्वरम् ।
जगाम कामी भिक्षार्थमनारण्यसभां गिरे ॥ १३२ ॥
राजा शीघ्रं मुनिं दृष्ट्वा प्रणनाम भयाकुलः ।
मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः ॥ १३३ ॥
कामात्सर्वं गृहीत्वा च ययाचे कन्यकां मुनिः ।
मौनी बभूव नृपतिः किञ्चिन्निर्वक्तुमक्षमः ॥ १३४ ॥
मुनिः पुनर्ययाचे तं कन्यां देहीति मे नृप ।
अथवा भस्मसात्सर्वं करिष्यामि क्षणेन च ॥ १३५ ॥
सर्वे बभूवुराच्छन्ना गणाश्च तेजसा मुनेः ।
रुरोद राजा सगणो दृष्ट्वा वृद्धं जरातुरम् ॥ १३६ ॥

महिष्यो रुरुदुः सर्वा इति कर्तव्यमक्षमाः ।
मूर्च्छां प्राप महाराज्ञी कन्यामाता शुचाकुला ॥१३७॥
पण्डितो नीतिशास्त्रज्ञो बोधयामास भूपतिम् ।
महिषीञ्च नृपसुतान् कन्यकां नीतिमुत्तमाम् ॥१३८॥
अद्य वापि दिनान्ते वा दातव्या कन्यका नृप ।
पराय विप्रादन्यस्मै कस्मै वा दातुमर्हति ॥ १३९ ॥
सत्पात्रं ब्राह्मणादन्यं न पश्यामि जगत्त्रये ।
सुतां दत्त्वा च मुनये रक्षस्व सर्वसम्पदम् ॥ १४० ॥
राजकन्यानिमित्तेन सर्वसम्पत् प्रणश्यति ।
सर्वं रक्षति तत्त्यक्त्वा विना तं शरणागतम् ॥ १४१ ॥
राजा प्राज्ञवचः श्रुत्वा विलप्य च मुहुर्मुहुः ।
कन्यां स्वालङ्कृतां कृत्वा मुनीन्द्राय ददौ किल ॥ १४२ ॥
कान्तां गृहीत्वा स मुनिर्मुदितः स्वालयं ययौ ।
राजा सर्वान् परित्यज्य जगाम तपसे शुचा ॥१४३॥
भर्तुश्च दुहितुः शोकात् प्राणांस्तत्याज सुन्दरी ।
पुत्राः पौत्राश्च भृत्याश्च मूर्च्छां प्रापुर्नृपं विना ॥१४४॥
अनारण्यस्तपस्तप्त्वा चिन्तयन् राधिकेश्वरम् ।
गोलोकनाथं संसेव्य गोलोकञ्च जगाम ह ॥ १४५ ॥
बभूव कीर्त्तिमान् राजा ज्येष्ठपुत्रो नृपस्य च ।
पुत्रवत् पालयामास प्रजाः सर्वा महीतले ॥ १४६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे एकचत्वारिंशोऽध्यायः ।

---

# द्विचत्वारिंशोऽध्यायः ।

वशिष्ठ उवाच ।

अथानारण्यस्य कन्या सिषेवे भक्तितो मुनिम् ।
कर्मणा मनसा वाचा लक्ष्मीर्नारायणं यथा ॥ १ ॥
एकदा स्वर्णदीं स्नातुं गच्छन्तीं सस्मितां सतीम् ।
ददर्श पथि धर्मश्च मायया नृपलिङ्गकः ॥ २ ॥
चारुरत्नरथस्थश्च रत्नालङ्कारभूषितः ।
नवीनयौवनः श्रीमान् कामदेवसमप्रभः ॥ ३ ॥
दृष्ट्वा तां सुन्दरीं रम्यामुवाच मायया विभुः ।
विज्ञातुमन्तस्तत्त्वञ्च तस्याश्च मुनियोषितः ॥ ४ ॥

धर्म उवाच ।

अयि सुन्दरि लक्ष्मीव राजयोग्ये मनोहरे ।
अतीवयौवनस्थे च कामिनि स्थिरयौवने ॥ ५ ॥
जरातुरस्य वृद्धस्य समीपे त्वं न राजसे ।
चन्दनागुरुसंलिप्ता राजसे राजवर्चसि ॥ ६ ॥
विप्रं तपःसु निरतं सत्यञ्च मरणोन्मुखम् ।
विहाय पश्य राजेन्द्रं रतिशूरं स्मरातुरम् ॥ ७ ॥
प्राप्नोति सुन्दरं पुण्यात् सौन्दर्य्यं पूर्वजन्मतः ।
सफलं तद्भवेत्सर्वं रसिकालिङ्गनेन च ॥ ८ ॥
सहस्रसुन्दरीकान्तं कामशास्त्रविशारदम् ।
किङ्करं कुरु मां कान्ते परित्यक्ष्यामि ता अपि ॥ ९ ॥

निर्जने निर्जने रम्ये शैले शैले नटे नटे।
पुष्पोद्याने पुष्पिते च सुगन्धिपुष्पवायुना ॥ १० ॥
मलये चन्दनारण्ये चारुचन्दनवायुना।
विहरिष्यामि कामेन कामिन्या च त्वया सह ॥११॥
कामज्वरेण दग्धायाः शान्तिं कर्तुमहं क्षमः।
विहरस्व मया सार्द्धं जन्मेदं सफलं कुरु ॥ १२ ॥
इत्येवमुक्तवन्तं तं स्वरथादवरुह्य च।
गृहीतुमुत्सुकं हस्तेतमुवाच पतिव्रता ॥ १३ ॥

पद्मोवाच।

दूरं गच्छ गच्छ दूरं पापिष्ठ भूमिपाधम।
मां चेत्पश्यसि कामेन सद्यो भस्म भविष्यसि ॥ १४ ॥
पिप्पलादं मुनिश्रेष्ठं तपसा पूतविग्रहम्।
विहाय त्वां भजिष्यामि स्त्रीजितं रतिलम्पटम् ॥१५॥
स्त्रीजितस्पर्शमात्रेण सर्वं पुण्यं प्रणश्यति।
न भूमौ पातकी पापात् पापिनां स्त्रीजितात्परः ॥१६
मां मातरञ्च स्त्रीभावं कृत्वा येन ब्रवीषि च।
भविष्यति क्षयस्तेन कालेन मम शापतः ॥ १७ ॥
श्रुत्वा धर्मः सतीशापं नृपमूर्तिं विहाय च।
धृत्वा स्वमूर्तिं देवेशः कम्पमान उवाच ताम् ॥ १८ ॥

धर्म उवाच।

मातर्जानीहि मां धर्मं धर्मज्ञानां गुरोर्गुरुम्।
परस्त्रीमातृबुद्धिञ्च कुर्वन्तं सन्ततं सति ॥ १९ ॥
अहं तवान्तर्विज्ञातुमागतस्तव सन्निधिम्।
युष्माकञ्च मनो याने तथापि दैवबोधितः ॥ २० ॥

कृतं मे दमनं साध्वि न विरुद्धं यथोचितम् ।
शास्तिः समुत्पथस्थानामीश्वरेण विनिर्मिता ॥ २१ ॥
धर्मं स्वधर्मं विज्ञातुं कालं कलयितुं क्षमः ।
विधातारं संविधातुं तस्मै कृष्णाय ते नमः ॥ २२ ॥
संहर्तुं यः क्षमः काले संहर्तारं भवं विभुः ।
स्रष्टारं लीलया स्रष्टुं तस्मै कृष्णाय ते नमः ॥ २३ ॥
शत्रुं विधातुं मित्रञ्च सुप्रीतिं कलहं क्षमः ।
स्रष्टुं नष्टुं तदेवञ्च तस्मै कृष्णाय ते नमः ॥ २४ ॥
शापं प्रदातुं सर्वांश्च सुखदुःखवरान् क्षमः ।
सम्पदं विपदं यो हि तस्मै कृष्णाय ते नमः ॥ २५ ॥
प्रकृतिर्निर्मिता येन महाविष्णुश्च निर्मितः ।
ब्रह्मविष्णुमहेशाद्यास्तस्मै कृष्णाय ते नमः ॥ २६ ॥
येन शुक्लीकृतं क्षीरं जलं शीतं कृतं पुरा ।
दाहीकृतो हुताशश्च तस्मै कृष्णाय ते नमः ॥ २७ ॥
अतितेजःसमुत्थाय तेजोरूपाय मूर्तये ।
गुणश्रेष्ठनिर्गुणाय तस्मै कृष्णाय ते नमः ॥ २८ ॥
सर्वस्मै सर्ववीजाय सर्वेषामन्तरात्मने ।
सर्वबन्धुस्वरूपाय तस्मै कृष्णाय ते नमः ॥ २९ ॥
इत्युक्त्वा पुरतस्तस्यास्तस्थौ धर्मो जगद्गुरुः ।
सा साध्वी तञ्च विज्ञाय सहसोवाच पर्वत ॥ ३० ॥

पद्मोवाच ।

त्वमेव धर्मः सर्वेषां साक्षी च सर्वकर्मणाम् ।
सर्वान्तरेषु सर्वात्मा सर्वज्ञः सर्वतत्त्ववित् ॥ ३१ ॥
कथं मनो मे विज्ञातुं विडम्बयसि किङ्करीम् ।

यत् कृतं त्वत्कृते ब्रह्मन्नपराधो बभूव मे ॥ ३२ ॥
त्वञ्च शप्तो मयाज्ञानात् स्त्रीस्वभावात् क्रुधा विभो ।
का व्यवस्था भवेत्तस्य चिन्तयामीति साम्प्रतम् ॥ ३३ ॥
आकाशोऽसौ दिशः सर्वा यदि नश्यन्ति वायवः ।
तथापि साध्वीशापस्तु न नश्यति कदाचन ॥ ३४ ॥
त्वञ्च नष्टो भवसि चेत् सृष्टिनाशो भवेत्तदा ।
इतिकर्तव्यतामूढ़ा तथापि त्वां वदाम्यहम् ॥ ३५ ॥
सत्ये पूर्णश्चतुष्पादैः पौर्णमास्यां यथा शशी ।
विराजसे देवराज सर्वकालं दिवानिशम् ॥ ३६ ॥
पादत्रयश्च त्रेतायां भगवन् भविता तव ।
पादौ परौ द्वापरे च तृतीयश्च कलौ विभो ॥ ३७ ॥
कलिशेषे शेषपादस्तवाच्छन्नो भविष्यति ।
पुनः सत्ये समायाते परिपूर्णो भविष्यसि ॥ ३८ ॥
सत्ये सर्वव्यापकस्त्वं तदन्येषु च कुत्रचित् ।
यत्र स्थानं तत्राधारो वदामि श्रूयतां विभो ॥ ३९ ॥
वैष्णवेषु च सर्वेषु यतिषु ब्रह्मचारिषु ।
पतिव्रतासु प्राज्ञेषु वानप्रस्थेषु भिक्षुषु ॥ ४० ॥
नृपेषु धर्मशीलेषु सत्सु सद्वैश्यजातिषु ।
द्विजसेविषु शूद्रेषु सत्संसर्गस्थितेषु च ॥ ४१ ॥
एषु त्वं सततं पूर्णो धर्मराज विराजसे ।
युगे युगे तवाधारा यत्र पुण्यतमा जनाः ॥ ४२ ॥
अश्वत्थवटविल्वेषु तुलसीचन्दनेषु च ।
दीक्षापरीक्षाशपथगोष्ठगोष्पदभूमिषु ॥ ४३ ॥
विवाहेषु च पुण्येषु विद्यमानोऽसि शाखिषु ।

देवालयेषु तीर्थेषु सतां शश्वद्‌गृहेषु च ॥ ४४ ॥
वेदवेदाङ्गश्रवणे जलेषु च सभासु च।
श्रीकृष्णगुणनामोक्तस्तुतिगीतस्थलेषु च ॥ ४५ ॥
व्रतपूजातपोन्याययज्ञसाक्षिस्थलेषु च।
गवां गृहेषु गोष्वेव विद्यमानो हि पश्यसि ॥ ४६ ॥
कृशता ते न भविता धर्म तेषु स्थलेषु च।
एतदन्येषु कृशता यद्गम्यञ्च तच्छृणु ॥ ४७ ॥
पुंश्चलीषु च सर्वासु गृहेषु नरघातिनाम्।
नरघातिषु नीचेषु मूर्खेषु च खलेषु च ॥ ४८ ॥
देवतागुरुविप्रेष्ठ पात्राणां धनहारिषु।
असत्करेषु धूर्तेषु चौरेषु रतिभूमिषु ॥ ४९ ॥
दुरोदरसुरापानकलहानां स्थलेषु च।
शालग्राम साधुतीर्थ पुराणरहितेषु च ॥ ५० ॥
दस्युस्नेहेषु वादेषु तालच्छायासु गर्विषु।
असिजीविमसीजीविदेवलग्रामयाजिषु ॥ ५१ ॥
वृषवाहस्वर्णकारजीवहिंसोपजीविषु।
भर्तृनिन्दितनारीषु स्त्रीजितेषु च पुंसु च ॥ ५२ ॥
दीक्षासन्ध्याविष्णुभक्तिविहीनेषु द्विजेषु च।
स्वाङ्गकन्याविक्रयिषु स्वयोषिद्विक्रयिष्वथ ॥ ५३ ॥
शालग्रामसुरग्रन्थभूमिविक्रयिषु प्रभो।
मित्रद्रोहिकृतघ्नेषु सत्यविश्वासघातिषु ॥ ५४ ॥
शरणागतहीनेषु चाश्रितघ्नेषु नृष्वपि।
शश्वन्मिथ्योक्तिशीलेषु तथा सीमापहारिषु ॥ ५५ ॥
कामात् क्रोधात्तथा लोभान्मिथ्यासाक्ष्यप्रवादिषु।

पुण्यकर्मविहीनेषु पुण्यकर्मविरोधिषु ॥ ५६ ॥
स्थातुमेतेषु निन्द्येषु नाधिकारस्तव प्रभो ।
ममापि वचनं सत्यं बभूव तत्क्षणं तव ।
यास्यामि पतिसेवायै गच्छ तात स्वमन्दिरम् ॥ ५७ ॥
इत्येवं वादिनीं साध्वीमुवाच विधिनन्दनः ।
प्रसन्नवदनः श्रीमानतीवविनयं वचः ॥ ५८ ॥

धर्म उवाच ।

धन्यासि पतिभक्तासि स्वस्ति तेऽस्तु च सन्ततम् ।
वरं गृहाण दास्यामि मत्परित्राणकारिणि ॥५९॥
युवा भवतु भर्त्ता ते रतिशूरश्च कन्यके ।
रूपवान् गुणवान् साध्वि सन्ततं स्थिरयौवनः ॥ ६० ॥
परमैश्वर्यसंयुक्ता त्वं भव स्थिरयौवना ।
चिरजीवी भवतु स मार्कण्डेयात्परः सुते ॥ ६१ ॥
कुवेराद्धनवांश्चैव शक्रादैश्वर्य्यवानपि ।
विष्णुभक्तः शिवसमः सिद्धस्तु कपिलात्परः ॥ ६२ ॥
स्वामिसौभाग्यसंयुक्ता भव त्वं जीवनावधि ।
गृहा भवन्तु ते साध्वि कुवेरभवनाधिकाः ॥ ६३ ॥
माता त्वं दशपुत्राणां गुणिनां चिरजीविनाम् ।
स्वभर्तुरधिकानाञ्च भविष्यसि न संशयः ॥ ६४ ॥
इत्येवमुक्त्वा सन्तस्थौ धर्मराजश्च पर्वत ।
सा तं प्रदक्षिणीकृत्य प्रणम्य स्वगृहं ययौ ॥ ६५ ॥
धर्मस्तामाशिषं युक्त्वा जगाम निजमन्दिरम् ।
पतिव्रतां प्रशशंस प्रतिसंसदि संसदि ॥ ६६ ॥
सा रेमे स्वामिना सार्धं यूना रहसि सन्ततम् ।

पश्चाद्बभूवुः सत्पुत्रास्तज्जर्तुरधिका गुणैः ॥ ६७ ॥
शैलेन्द्रकथितं सर्वमितिहासं पुरातनम्।
दत्त्वानारण्यः स्वसुतां ररक्ष सर्वसम्पदम् ॥ ६८ ॥
त्वमेव कन्यकां दत्त्वा सर्वेषामीश्वराय च।
रक्ष सर्वबन्धुवर्गानात्मनः सर्वसम्पदम् ॥ ६९ ॥
सप्ताहे समतीते च दुर्लभेऽतिशुभे क्षणे।
लग्नाधिपे च लग्नस्थे चन्द्रे स्वतनयान्विते ॥ ७० ॥
मोदते रोहिणीयुक्ते विशुद्धे चन्द्रतारके।
मार्गशीर्षे चन्द्रवारे सर्वदोषविवर्जिते ॥ ७१ ॥
सर्वसद्ग्रहसंदृष्टे ह्यसद्ग्रहविवर्जिते।
सदपत्यप्रदेऽतीवपतिसौभाग्यदायिनि ॥ ७२ ॥
अवैधव्यप्रदे सौख्यप्रदे जन्मनि जन्मनि।
अत्यन्तप्रेमाविच्छेदप्रदायिनि परात्परे ॥ ७३ ॥
कन्यां प्रदाय पुत्राय त्वं कृती भव पर्वत।
जगदम्बां जगत्पित्रे मूलप्रकृतिमीश्वरीम् ॥ ७४ ॥
तेजःस्वरूपां सर्वेषां देवानां देवपूजिताम्।
आविर्भूता पुराकल्पे देवानां रक्षणाय च ॥ ७५ ॥
तेजोराशिः सुरौघाणां प्रज्वलन्ति दिशो दश।
अस्याः स्वतेजसा दैत्याः केचिद्दग्धाः पलायिताः ॥७६॥
केचिद्बभूवुः शैलेन्द्र भस्मीभूताश्च भूतले।
बिलं प्रविविशुः केचिन्मूर्च्छां प्रापुश्च केचन ॥ ७७ ॥
केचिद्दन्ते तृणं कृत्वा जग्मुः शरणमीश्वरीम्।
केचिच्छिन्नपुरस्त्राणि स्तम्भिता अपि केचन ॥ ७८ ॥
केचिच्चिरं रणं कृत्वा ययुः स्वर्गमनामयम्।

निःशत्रवो बभूवुस्ते सुरा अस्याः प्रसादतः ॥ ७९ ॥
कृष्णाज्ञया सा कल्पान्ते दक्षकन्या बभूव ह ।
दक्षश्च विधिवद्देवीं प्रददौ शूलपाणये ॥ ८० ॥
दैवेन मत्पितुर्यज्ञे सहसा सुरसंसदि ।
बभूव कलहः शैल तेन शूलभृता महान् ॥ ८१ ॥
ब्रह्माणञ्च नमस्कृत्य ययौ रुष्टस्त्रिलोचनः ।
दक्षश्च सगणो रुष्टः प्रययौ स्वालयं तदा ॥ ८२ ॥
कोपात् संभृतसंभारो दक्षो यज्ञं चकार ह ।
न ददौ यज्ञभागञ्च मात्सर्याच्छूलपाणये ॥ ८३ ॥
दृष्ट्वा सती प्रकुपिता जनकं रक्तलोचना ।
निर्भर्त्स्य च बहुतरं हृदयेन विदूयता ॥ ८४ ॥
यज्ञस्थानात् समुत्थाय जगाम मातुरन्तिकम् ।
भविष्यं कथयामास त्रिकालज्ञा परात्परा ॥ ८५ ॥
यज्ञभङ्गादिकं वापि स्वपितुश्च पराभवम् ।
पलायनञ्च देवानां यज्ञस्थानाद्गिरीश्वर ॥ ८६ ॥
मुनीनामृत्विजाञ्चैव पर्वतानां तथैव च ।
जयं कङ्करसैन्यानां स्वात्मनो मृत्युरेव च ॥ ८७ ॥
शोकात् पर्य्यटनं भर्तुर्विरहातुरचेतसा ।
निर्माणं नवसरसोः प्रबोधञ्च जनार्दनात् ॥ ८८ ॥
मूर्तिभेदात् पुनः प्राप्तिं विहारं तस्य तत्समम् ।
अपरं भवितव्यञ्च सर्वमुक्त्वा जगाम सा ॥ ८९ ॥
स्वमात्रा भगिनीभ्यश्च प्रतिसिद्धा च दुःखिता ।
बभूवादर्शना योगात्सर्वासां सिद्धियोगिनी ॥ ९० ॥
गत्वा सा जाह्नवीतीरं स्मृत्वा संपूज्य शङ्करम् ।

स्मृत्वा तच्चरणाम्भोजं देहं तत्याज सुन्दरी ॥ ८१ ॥
गन्धमादनद्रोणीस्थं शरीरं प्रविवेश ह ।
सञ्जहार पुरा येन दैत्यानामखिलं कुलम् ॥ ८२ ॥
हाहाकारं प्रचक्रुश्च सुराः सर्वेऽतिविस्मिताः ।
जग्मुः शङ्करसेनाश्च दक्षयज्ञं विनश्य च ॥ ८३ ॥
पराभवञ्च सर्वेषां कृत्वा शोकातुराः पराः ।
सत्वरं सर्ववृत्तान्तं कथयामासुरीश्वरम् ॥ ८४ ॥
श्रुत्वा प्रवृत्तिं संहर्त्ता सर्वरुद्रगणैर्वृतः ।
जगाम स्वर्णदीतीरं यत्र देवीकलेवरम् ॥ ८५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे सतीदेहत्यागो नाम
द्विचत्वारिंशोऽध्यायः ।

---

## त्रिचत्वारिंशोऽध्यायः ।

---

श्रीनारायण उवाच ।

अथ दुर्गां महादेवः सतीमूर्त्तिं मनोहराम् ।
अम्लानपद्मवक्त्रां तां शयानां जाह्नवीतटे ॥ १ ॥
दधतीमक्षमालाञ्च प्रतप्तकाञ्चनप्रभाम् ।
तेजसा प्रज्वलन्तीञ्च दधानां शुक्लवाससम् ॥ २ ॥
दृष्ट्वा सतीशरीरञ्च प्रदग्धां [illegible]ग्निना ।
तत्त्वराशिर्मूर्त्तिमांश्च मूर्च्छां [illegible] तथापि च ॥ ३ ॥
कलत्रशोको बलवान् स्वात्मा[illegible] [illegible]त्परम् ।

बाधते वेदवीजं तं योगीन्द्राणां गुरोर्गुरुम् ॥ ४ ॥
क्षणेन चेतनां प्राप्य तामुवाच त्रिलोचनः ।
निरीक्ष्य वदनाम्भोजं स्थाणुः स्थाणुरिवापरः ॥ ५ ॥
साश्रुनेत्रोऽतिदीनश्च दीनानां शरणप्रदः ।
दीनदैन्यापहारी च विललाप परं वचः ॥ ६ ॥

शङ्कर उवाच ।

उत्तिष्ठोत्तिष्ठ सुभगे सति प्राणेश्वरि प्रिये ।
शङ्करोऽहं तव स्वामी पश्य मां निकटागतम् ॥ ७ ॥
शिवं शिवप्रदं सर्वसंपद्रूपञ्च सिद्धिदम् ।
सर्वात्मानञ्च सर्वेशं शवतुल्यं त्वया विना ॥ ८ ॥
शक्तोऽहञ्च त्वया सार्द्धं सर्वशक्ति स्वरूपया ।
शक्तिहीनः शवसमो निश्चेष्टः सर्वकर्मसु ॥ ९ ॥
यश्च शक्तिं न जानाति ज्ञानहीनश्च निन्दति ।
तं त्यक्तुमुचितं विद्धि कथं मां त्यजसि प्रिये ॥ १० ॥
स्वयं ब्रह्मा स्वयं विष्णुः साध्यभूतावयं तव ।
सस्मितं सकटाक्षञ्च वद किञ्चित्सुधोपमम् ॥ ११ ॥
मधुराभासदृष्ट्या च मां दग्धं सेचनं कुरु ।
मां दृष्ट्वा दूरतः शीघ्रं स्निग्धं वदसि सस्मितम् ॥ १२
कथमद्यापि निश्चेष्टं विलपन्तं न भाषसे ।
प्राणाधिके समुत्तिष्ठ रुदन्तं मां न पश्यसि ॥ १३ ॥
परित्यज्य च नः प्राणान् गन्तुं नार्हसि सुन्दरि ।
जगदम्बे समुत्तिष्ठ प्राणाधारे परात्परे ॥ १४ ॥
पतिव्रते समुत्तिष्ठ कथं मां नाद्य सेवसे ।
कथं करोषि विज्ञाय व्रतभङ्गं श्रुतिप्रसूः ॥ १५ ॥

इत्युक्त्वा मृतदेहञ्च प्रियाया विरहातुरः ।
निधायोरसि संश्लिष्य चुचुम्ब च पुनः पुनः ॥ १६ ॥
अधरे चाधरं दत्त्वा वक्षो वक्षसि शङ्करः ।
पुनः पुनः समाश्लिष्य पुनर्मूर्च्छामवाप सः ॥ १७ ॥
पुनः स चेतनां प्राप्य वेगादुत्थाय शोकतः ।
दुद्राव च यथोन्मत्तो ज्ञानिनाञ्च गुरोर्गुरुः ॥ १८ ॥
सप्तद्वीपं सप्तसिन्धुं लोकालोकञ्च काञ्चनं ।
बभ्राम भ्रान्तवज्ज्ञानी सतीं कृत्वा स्ववक्षसि ॥ १९ ॥
शतशृङ्गगिरेः पार्श्वे जम्बुद्वीपे च भारते ।
सुनिर्जनेऽक्षयवटे गङ्गातीरे सरित्तटे ॥ २० ॥
करोदोच्चैः स्वयं कृत्वा सतिं साध्वीत्युदीर्य्य च ।
शिवनेत्रनेत्रनीरेण सम्बभूव सरोवरम् ॥ २१ ॥
तन्नेत्रञ्च सरो नाम मुनीनां तपसः स्थलम् ।
योजनद्वयविस्तीर्णं पुण्यतीर्थं मनोहरम् ॥ २२ ॥
यत्र स्नात्वा पुनर्जन्म नराणां न भवेद्ध्रुवम् ।
शतजन्मकृतं पापं स्नानमात्रेण नश्यति ।
त्यक्त्वा तां मानवीं मूर्तिं नरा यान्ति हरेः पदम् ॥२३॥
तत्र संरोदनं त्यक्त्वा पुनर्बभ्राम मेदिनीम् ।
पूर्णमब्दं महायोगी विरहातुरमानसः ॥ २४ ॥
सतीगलितप्रत्यङ्गैरङ्गैश्च पर्वतेश्वर ।
बभूव सिद्धपीठानां समूहो वाञ्छितप्रदः ॥ २५ ॥
शेषाङ्गानां महादेवः संस्कारं वै विधाय च ।
अस्थिमालां विनिर्माय चकार कण्ठभूषणम् ॥ २६ ॥
नित्यं तद्भस्म भक्त्या च चकार गात्रलेपनम् ।

सति प्राणेश्वरीत्युक्त्वा पुनर्मूर्च्छामवाप सः ॥ २७ ॥
विसस्मार ब्रह्मपरमात्मानमात्मसम्भवः ।
स्वात्मारामः पूर्णकामो निश्चेष्टो विरहज्वरात् ॥ २८ ॥
तं शयानं गिरिवरस्याभ्यासे वटमूलके ।
दृष्ट्वा देवाः समागम्य विस्मिताः शिवसन्निधिम् ॥ २९ ॥
नारायणश्च भगवानीश्वरः सह पार्षदैः ।
रत्नयानेनाजगाम पद्मार्चितपदाम्बुजः ॥ ३० ॥
रत्नालङ्कारशोभाढ्यः पीतवासाश्चतुर्भुजः ।
ईषद्धास्यप्रसन्नास्यो वनमालाविभूषितः ॥ ३१ ॥
ब्रह्मा शेषश्च धर्मश्च सुराः सर्वे महर्षयः ।
समूषुरीशसदसि लक्ष्मीकान्तं प्रणम्य ते ॥ ३२ ॥
श्रीहरिः शङ्करमहो कृत्वा वक्षसि मूर्च्छितम् ।
रुदन्तं बोधयामास ज्ञानीशो ज्ञानिनां गुरुम् ॥ ३३ ॥
श्रीभगवानुवाच ।
स्वात्माराम निबोधेदं मदीयं वचनं शृणु ।
हितमध्यात्मसारञ्च दुःखशोकनिकृन्तनम् ॥ ३४ ॥
सर्वाध्यात्मविद्यमानबीजं ज्ञाननिधिं विधिम् ।
तथापि बोधयामि त्वां सर्वज्ञं वेधसां विधिम् ॥ ३५ ॥
बुधं बोधयितुं शक्तो बुधोऽपि प्राणसङ्कटे ।
व्यवहारोऽस्ति लोकेषु सर्वः सर्वं परस्परम् ॥ ३६ ॥
मायाश्रिता गुणाः सर्वे हेतवः सुखदुःखयोः ।
विष्णुमाया बलवती गुणयुक्तं प्रबाधते ॥ ३७ ॥
दुःखं शोकं भयं शम्भो दुर्दिने भवतीश्वर ।
तत्रातीते कुतस्तानि सुदिने च समागते ॥ ३८ ॥

हर्षं ऐश्वर्य्यदर्पश्च सततं तव वर्द्धते।
सर्वाण्येतानि गण्यन्ते स्वप्नानीव विपश्चित: ॥ ३९ ॥
ज्ञानं लभ महादेव ज्ञानवीज सनातन।
चेतनां कुरु भद्रं ते सतीं प्राप्स्यसि निश्चितम् ॥ ४० ॥
तत्तोयं शीतता नित्यं नाग्निं मुञ्चति दाहिका।
तेज: सूर्य्यं महीं गन्धो तथा त्वाञ्च सती शिव ॥४१॥
शैलेत्येवं समाकर्ण्य हरिं किञ्चिदुवाच ह।
नेत्राण्युन्मीलनं कृत्वा त्रिनेत्रो श्रूयतामिति ॥ ४२ ॥

त्रिनेत्र उवाच।

कस्त्वं तेज:स्वरूपोऽसि क इमे तव सन्निधौ।
किन्नाम भवतश्चैषां कानि नामानि का सती ॥ ४३ ॥
कोऽहं को मे भवान् ब्रूते किङ्करा: कुत आगता:।
क यास्यसि क यास्यामि क गच्छन्त इमे वद ॥ ४४ ॥
हरिरित्येवमाकर्ण्य रुरोद सगणो गिरे।
नेत्रनीरैस्त्रिनेत्रं तं रुदन्तं प्रसिषेच स: ॥ ४५ ॥
हरित्रिनेत्रयोर्नैत्रनीरपातेन तत्र वै।
बभूव सरसां श्रेष्ठं तीर्थं भुवनपावनम् ॥ ४६ ॥
भारतेऽस्तगिरे: पश्चात्तत्राचयवटान्तिके।
स्थलं बभूव तपसां मुक्तिवीजं तपस्विनाम् ॥ ४७ ॥
अथोवाच पुन: शीघ्रमाध्यात्मञ्च हरं हरि:।
शृण्वतां सर्वदेवानां मुनीनामूर्ध्वरेतसाम् ॥ ४८ ॥

श्रीभगवानुवाच।

शृणु शङ्कर वच्यामि ज्ञानानन्द सनातन।
ज्ञानं ज्ञाननिधे शोकादिस्मृतोऽसि परात्पर ॥ ४९ ॥

सुदिनं दुर्दिनं शश्वत् भ्रमत्येवं भवे भवे।
सर्वेषां प्राकृतानाञ्च ते वीजे सुखदुःखयोः ॥ ५० ॥
सुखाद्भवति हर्षश्च दर्पः शौर्य्यं प्रमत्तता।
राग ऐश्वर्य्यकामश्च विद्वेषश्च निरन्तरम् ॥ ५१ ॥
दुःखाच्छोकात् समुद्वेगाद्भयं नित्यं प्रवर्तते।
हतान्येतानि सर्वाणि हते वीजे महेश्वर ॥ ५२ ॥
सुदिनं दुर्दिनञ्चैव सर्वकर्मोद्भवं भव।
तत्कर्म तपसां साध्यं कर्मणाञ्च शुभाशुभम् ॥ ५३ ॥
तपः स्वभावसाध्यञ्च स्वभावोऽभ्यासतो भवेत्।
संसर्गसाध्योऽभ्यासश्च संसर्गः पुण्यतो भवेत् ॥ ५४ ॥
पुण्यवीजं मनश्चैव पापवीजञ्च चञ्चलम्।
मनः शम्भो ममांशश्च सर्वेन्द्रियपुरःसरम् ॥ ५५ ॥
सर्वेषां जनकोऽहञ्च चित्त्वं ब्रह्मा पतिस्त्वयम्।
ब्रह्मैकं मूर्तिभेदस्तु गुणभेदेन सन्ततम् ॥ ५६ ॥
तद्ब्रह्म विविधं वस्तु सगुणं निर्गुणं शिव।
मायाश्रितो यः सगुणो मायातीतश्च निर्गुणः ॥ ५७ ॥
स्वेच्छामयश्च भगवानिच्छया विकरोति च।
इच्छाशक्तिश्च प्रकृतिर्नित्या सर्वप्रसूः सदा ॥ ५८ ॥
केचिदेकं वदन्त्येवं ब्रह्म ज्योतिः सनातनम्।
केचिद्वदन्ति द्विविधं ब्रह्म प्रकृतिपूर्वकम् ॥ ५९ ॥
शृणु ये च वदन्त्येकं मायापुरुषयोः परम्।
तस्माद्भवति तौ द्वौ च तद्ब्रह्म सर्वकारणम् ॥ ६० ॥
अथ चैकं परं ब्रह्म द्विविधं भवतीच्छया।
इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा ॥ ६१ ॥

तत्रासक्तश्च सगुणः सर्वाधारः सनातनः।
सर्वेश्वरः सर्वसाक्षी सर्वत्रास्ति फलप्रदः॥ ६२॥
शरीरं द्विविधं शम्भो नित्यं प्राकृतमेव च।
नित्यं विनाशरहितं नश्वरं प्राकृतं सदा॥ ६३॥
अहं त्वञ्चापि भगवन्नावयोर्नित्यविग्रहः।
आवयोरंशभूता ये प्राकृता नष्टविग्रहाः॥ ६४॥
रुद्रादयस्त्वदंशाश्च मदंशा विष्णुरूपिणः।
ममाप्येवं द्विधारूपं द्विभुजञ्च चतुर्भुजम्॥ ६५॥
चतुर्भुजोऽहं वैकुण्ठे पद्मया पार्षदैः सह।
गोलोके द्विभुजोऽहञ्च गोपीभिः सह राधया॥ ६६॥
द्विविधं ये वदन्त्येवं द्वौ प्रधानौ तु तन्मते।
पुरुषश्च सदा नित्यो नित्या प्रकृतिरीश्वरी॥ ६७॥
सदा तौ द्वौ च संश्लिष्टौ सर्वेषां पितरौ शिव।
सशरीरौ निःशरीरौ स्वेच्छया सर्वरूपिणौ॥ ६८॥
प्राधान्यञ्च यथा पुंसः प्रकृतेश्च सदा तथा।
सतीमिच्छसि चेच्छम्भो प्रकृतेः स्तवनं कुरु॥ ६९॥
यत् स्तोत्रञ्च त्वया दत्तं पुरा दुर्वाससे मुदा।
तद्दिव्यं कण्वशाखोक्तं भज तेन जगत्प्रसूम्॥ ७०॥
शोकनाशो भवतु ते शिवं शिव ममाशिषा।
दूरं विघ्नहेतुश्च यातु स्त्रीविरहज्वरः॥ ७१॥
इत्येवमुक्त्वा लक्ष्मीशो विरराम गिरीश्वर।
स्तवनं कर्त्तुमारेभे प्रकृतेश्च महेश्वरः॥ ७२॥
स्नात्वा नत्वा च श्रीकृष्णं ब्रह्माणं भक्तिसंयुतः।
पुटाञ्जलियुतो भूत्वा पुलकाञ्चितविग्रहः॥ ७३॥

महेश्वर उवाच ।

ओं नमः प्रकृत्यै मन्त्रः ।

ब्राह्मि ब्राह्मस्वरूपे त्वं मां प्रसीद सनातनि ।
परमात्मस्वरूपे च परमानन्दरूपिणि ॥ ७४ ॥
भद्रे भद्रप्रदे दुर्गे दुर्गघ्ने दुर्गनाशिनि ।
पोतस्वरूपेऽजीर्णे त्वं मां प्रसीद भवार्णवे ॥ ७५ ॥
सर्वस्वरूपे सर्वेशि सर्वबीजस्वरूपिणि ।
सर्वाधारे सर्वविद्ये मां प्रसीद जयप्रदे ॥ ७६ ॥
सर्वमङ्गलरूपे च सर्वमङ्गलदायिनि ।
समस्तमङ्गलाधारे प्रसीद सर्वमङ्गले ॥ ७७ ॥
निद्रे तन्द्रे क्षमे श्रद्धे तुष्टिपुष्टिस्वरूपिणि ।
लज्जे मेधे बुद्धिरूपे प्रसीद भक्तवत्सले ॥ ७८ ॥
वेदस्वरूपे वेदानां कारणे वेददायिनि ।
सर्ववेदाङ्गरूपे च वेदमातः प्रसीद मे ॥ ७९ ॥
दये जये महामाये प्रसीद जगदम्बिके ।
क्षान्ते शान्ते च सर्वान्ते क्षुत्पिपासास्वरूपिणि ॥८०॥
लक्ष्मीर्नारायणक्रोडे स्रष्टुर्वक्षसि भारति ।
मम क्रोडे महामाये विष्णुमाये प्रसीद मे ॥ ८१ ॥
कलाकाष्ठास्वरूपे च दिवारात्रिस्वरूपिणि ।
परिणामप्रदे देवि प्रसीद दीनवत्सले ॥ ८२ ॥
कारणे सर्वभक्तानां कृष्णस्योरसि राधिके ।
कृष्णप्राणाधिके भद्रे प्रसीद कृष्णपूजिते ॥ ८३ ॥
यशःस्वरूपे यशसां कारणे च यशःप्रदे ।
सर्वदेवीस्वरूपे च नारीरूपविधायिनि ॥ ८४ ॥

समस्तकामिनीरूपे कलांशेन प्रसीद मे ।
सर्वसम्पत्स्वरूपे च सर्वसम्पत्प्रदे शुभे ॥ ८५ ॥
प्रसीद परमानन्दे कारणे सर्वसम्पदाम् ।
यशस्विनां पूजिते च प्रसीद यशसां निधे ॥ ८६ ॥
आधारे सर्वजगतां रत्नाधारे वसुन्धरे ।
चराचरस्वरूपे च प्रसीद मम मा चिरम् ॥ ८७ ॥
योगस्वरूपे योगीशे योगदे योगकारणे ।
योगाधिष्ठात्रि देवीशे प्रसीद सिद्धयोगिनि ॥ ८८ ॥
सर्वसिद्धिस्वरूपे च सर्वसिद्धिप्रदायिनि ।
कारणे सर्वसिद्धीनां सिद्धेश्वरि प्रसीद मे ॥ ८९ ॥
व्याख्यानं सर्वशास्त्राणां मतभेदे महेश्वरि ।
ज्ञाने यदुक्तं तत्सर्वं चमस्व परमेश्वरि ॥ ९० ॥
केचिद्वदन्ति प्रकृतेः प्राधान्यं पुरुषस्य च ।
केचित्तत्र मतद्वैधे व्याख्याभेदं विदुर्बुधाः ॥ ९१ ॥
महाविष्णोर्नाभिदेशे स्थितं तं कमलोद्भवम् ।
मधुकैटभौ महादैत्यौ लीलया हन्तुमुद्यतौ ॥ ९२ ॥
दृष्ट्वा स्तुतिं प्रकुर्वन्तं ब्रह्माणं रक्षितुं पुरा ।
बोधयामास गोविन्दं विनाशहेतवे तयोः ॥ ९३ ॥
नारायणस्त्वया भक्त्या जघान तौ महासुरौ ।
सर्वेश्वरस्त्वया सार्द्धमनीशोऽयं त्वया विना ॥ ९४ ॥
पुरा त्रिपुरसंग्रामे गगनात्पतिते मयि ।
त्वया च विष्णुना सार्द्धं रक्षितोऽहं सुरेश्वरि ॥ ९५ ॥
अधुना रक्ष मामीशे प्रदग्धं विरहाग्निना ।
स्वात्मदर्शनपुण्येन क्रीणीहि परमेश्वरि ॥ ९६ ॥

इत्युक्त्वा विरतः शम्भुर्ददर्श गगनस्थिताम् ।
रत्नसाररथस्थां तां देवीं शतभुजां मुदा ॥ ९७ ॥
तप्तकाञ्चनवर्णाभां रत्नाभरणभूषिताम् ।
ईषद्धास्यप्रसन्नास्यां जगतां मातरं सतीम् ॥ ९८ ॥
दृष्ट्वा तां विरहासक्तः पुनस्तुष्टाव सत्वरम् ।
दुःखं निवेदयामास प्ररुदन्विरहोद्भवम् ॥ ९९ ॥
दर्शयामासास्थिमालां स्वाङ्गस्थं भस्मभूषणम् ।
कृत्वा बहुपरीहारं तोषयामास सुन्दरीम् ॥ १०० ॥
नारायणश्च ब्रह्मा च धर्मः शेषः सुरर्षयः ।
शिवं रक्षेश्वरीत्युक्त्वा तुष्टुवुस्ते सनातनीम् ॥ १०१ ॥
बभूव परितुष्टा सा तेषां स्तोत्रेण तत्क्षणम् ।
उवाच कृपया शम्भुं प्राणेशं प्राणवल्लभा ॥ १०२ ॥

प्रकृतिरुवाच ।

स्थिरो भव महादेव प्राणाधिक मम प्रभो ।
भवानात्मा च योगीशः स्वामी जन्मनि जन्मनि ॥१०३॥
अहं शैलेन्द्रकामिन्यां लब्ध्वा जन्म महेश्वर ।
तव पत्नी भविष्यामि मुञ्च त्वं विरहज्वरम् ॥ १०४ ॥
इत्युक्त्वा शिवमाश्वास्य चान्तर्धानं चकार सा ।
सुरा जग्मुस्तमाश्वास्य लज्जानम्रात्मकन्धरम् ॥ १०५ ॥
हर्षान्तरात्मा गिरिशः कैलासं तं जगाम ह ।
ननर्त सगणस्तूर्णं सन्त्यज्य विरहज्वरम् ॥ १०६ ॥
इदं शिवकृतं स्तोत्रं प्रकृत्या यः पठेन्नरः ।
न भवेत्कामिनीभेदस्तस्य जन्मनि जन्मनि ॥ १०७ ॥

इह लोके सुखं भुक्त्वा स याति शिवमन्दिरम्।
धर्मार्थकाममोक्षांश्च लभते नात्र संशयः ॥ १०८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे शङ्करशोकापनोदनं
नाम त्रिचत्वारिंशोऽध्यायः।

---

## चतुश्चत्वारिंशोऽध्यायः।

---

श्रीकृष्ण उवाच।

वशिष्ठस्य वचः श्रुत्वा सगणोऽपि हिमालयः।
विस्मितो भार्य्यया सार्द्धं जहास पार्वती स्वयम् ॥ १ ॥
अरुन्धती च तां मेनां बोधयामास कातराम्।
निराहारां रुदन्तीं तां जहौ शोकं मुदा च सा ॥ २ ॥
अरुन्धतीं भोजयित्वा बुभुजे भोगमुत्तमम्।
सर्वं प्रहृष्टमनसा मङ्गलञ्च चकार ह ॥ ३ ॥
ततः संभृतसंभारो वशिष्ठस्याज्ञया प्रिये।
पत्रं प्रस्थापयामास नानास्थानं त्वरान्वितः ॥ ४ ॥
ततः प्रस्थापयामास शिवं मङ्गलपत्रिकाम्।
नानाप्रकारद्रव्याणि वाद्यानि च चकार ह ॥ ५ ॥
तण्डुलानाञ्च शैलान् वै पृथुकानाञ्च सुन्दरि।
तैलानाञ्च घृतानाञ्च दध्नां वापीश्चकार ह ॥ ६ ॥
गुड़ानामासवानाञ्च क्षीराणाञ्च तथैव च।
अथो हैयङ्गवीनानां लवणानां परं मुने ॥ ७ ॥

लड्डुकानां शर्कराणां स्वस्तिकानां तथैव च।
यवचूर्णादिपिष्टानां घृतपक्वानि तानि च ॥ ८ ॥
नानाप्रकारवस्त्राणि वह्निशौचानि यानि च।
महारत्नप्रवालानि सुवर्णरजतानि च ॥ ९ ॥
द्रव्याण्येतानि शैलेन्द्रः कृत्वा तु विधिपूर्वकम्।
मङ्गलं कर्तुमारेभे तत्रैव मङ्गले दिने ॥ १० ॥
संस्कारं कारयामासुः पार्वतीं पर्वतस्त्रियः।
स्नापयित्वा वस्त्रयुग्मं धारयामासुराशु ताः ॥ ११ ॥
कारयित्वा सुवेशाञ्च रत्नभूषणभूषिताम्।
दर्पणं धारयामासुर्दूर्वाक्षतसमन्वितम् ॥ १२ ॥
ददुश्चालक्तकं चारु पादाङ्गुलिषु पादयोः।
गण्डे पत्रावलीं रम्यां नेत्रे कज्जलमुज्ज्वलम् ॥ १२ ॥
कवरीं कारयामासुर्मालतीमाल्यवेष्टिताम्।
पट्टसूत्रपिनद्धां तां वामवक्त्रां मनोहराम् ॥ १४ ॥
एतस्मिन्नन्तरे राधे समाजग्मुः सुरेश्वराः।
नीत्वा त्रिनेत्रं तत्रैव रत्नयानस्थमीश्वरम् ॥ १५ ॥
शैलः संभृतसंभारान् सम्भाषयितुमीश्वरान्।
शैलान् प्रस्थापयामास ब्राह्मणानपि पूजितान् ॥ १६ ॥
प्राङ्गणं कारयामास रम्भास्तम्भैः समन्वितम्।
पट्टसूत्रसन्निबद्धरसालपल्लवान्वितैः ॥ १७ ॥
फलपल्लवसंयुक्तैः कलसैर्जलसंयुतैः।
चन्दनागुरुकस्तूरीसुचारुकुसुमान्वितैः ॥ १८ ॥
मालतीमाल्यसंयुक्तैः संयुक्तं सुमनोहरम्।
देवेश्वरान् पुरो दृष्ट्वा प्रणनाम हिमालयः ॥ १९ ॥

रत्नसिंहासनं दातुं प्रेरयामास किङ्करान् ।
नारायणो हि भगवानुवास पार्षदैः सह ॥ २० ॥
विनतानन्दनात्तूर्णमवरुह्य चतुर्भुजः ।
चतुर्भुजैः पार्षदैश्च रत्नभूषणभूषितैः ॥ २१ ॥
रत्नमुष्टिनिबद्धैश्च सेवितः श्वेतचामरैः ।
ऋषिश्रेष्ठैः सुरश्रेष्ठैः स्तूयमानश्च संसदि ॥ २२ ॥
ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकातरः ।
उवास च तदभ्यासे ब्रह्मा देवगणैः सह ॥ २३ ॥
ऋषयो मुनयश्चैव समूषुर्मङ्गले स्थले ।
एतस्मिन्नन्तरे शम्भुरवरुह्य रथाद्द्रुतो ॥ २४ ॥
रत्नासने समुत्तिष्ठन् ददर्श पर्वतालयम् ।
समाजग्मुः शिवं द्रष्टुं शैलेन्द्रनगरस्त्रियः ॥ २५ ॥
वृद्धा बाला युवत्यश्च वस्त्राभरणभूषिताः ।
काश्चित्कज्जलहस्ताश्च वस्त्रहस्ताश्च काश्चन ॥ २६ ॥
काश्चित् सिन्दूरहस्ताश्च काश्चित् कङ्कतिकाकराः ।
वेशार्धभूषिताः काश्चित् काश्चिन्नैवार्धभूषिताः ॥२७॥
काश्चिन्निर्भूषिताः काश्चित् सर्वाभरणभूषिताः ।
सर्वा आगत्य सन्तस्थुः सस्मिताः पर्वतालये ॥ २८ ॥
ऋषिकन्या देवकन्या नागकन्या मनोहराः ।
गन्धर्वशैलकन्याश्च राजकन्याः समागताः ॥ २९ ॥
सर्वा अप्सरसो दिव्या रम्भाद्याः समुपस्थिताः ।
मेन कन्यागणैः सार्द्धं ददर्श शङ्करं वरम् ॥ ३० ॥
चारुचम्पकवर्णाभमेकवक्त्रं त्रिलोचनम् ।
ईषद्धास्यप्रसन्नास्यं रत्नाभरणभूषितम् ॥ ३१ ॥

चन्दनागुरुकस्तूरीचारुकुङ्कुमभूषितम् ।
मालतीमाल्यसंयुक्तं सद्रत्नमुकुटोज्ज्वलम् ॥ ३२ ॥
वह्निशौचेनातुलेन चातिसूक्ष्मेण चारुणा ।
अमूल्यवस्त्रयुग्मेन विचित्रेणातिभूषितम् ॥ ३३ ॥
रत्नदर्पणहस्तञ्च कज्जलोज्ज्वललोचनम् ।
सर्वया प्रभयाच्छन्नमतीवसुमनोहरम् ॥ ३४ ॥
अतीवतरुणं रम्यैर्भूषिताङ्गैश्च भूषितम् ।
बिभ्रन्तं रूपमतुलं परं नारायणाज्ञया ॥ ३५ ॥
योगस्वरूपं योगेशं योगीन्द्राणां गुरोर्गुरुम् ।
स्वेच्छामयं गुणातीतं ब्रह्मज्योतिः सनातनम् ॥ ३६ ॥
गुणभेदाद्रूपभेदं धत्तेऽनन्तमरूपकम् ।
तारणं तं भवस्थानां सृष्टिस्थित्यन्तकारणम् ॥ ३७ ॥
सर्वाधारं सर्ववीजं सर्वेशं सर्वजीवनम् ।
सच्चिद्रूपं निरीहञ्च परमानन्दमक्षरम् ॥ ३८ ॥
आद्यन्तमध्यरहितं सर्वाद्यं सर्वरूपकम् ।
दृष्ट्वा जामातरं मेना जहौ शोकं मुदान्विता ॥ ३९ ॥
प्रशशंसुर्युवत्यश्च धन्या धन्या सतीति ताः ।
दुर्गा भाग्यवतीत्येवमूचुः काश्चन कन्यकाः ॥ ४० ॥
कामेन काश्चित्कामिन्यो मौनीभूताश्च काश्चन ।
न दृष्टो वर इत्येवमस्माभिर्ज्ञानगोचरे ॥ ४१ ॥
काश्चिन्निमेषरहिता मूर्च्छामापुश्च काश्चन ।
निनिन्दुः स्वपतिं काश्चित् स्वेच्छाश्रूंश्च काश्चन ॥४२॥
काश्चिद्भावेन रुरुदुः पुलकाञ्चितविग्रहाः ।
कामेन काश्चित् कामिन्यो मौनीभूताश्च स्तम्भिताः ॥४३

जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ।
दृष्ट्वा शङ्कररूपञ्च प्रहृष्टाः सर्वदेवताः ॥ ४४ ॥
नानाप्रकारवाद्यानि चारूणि मधुराणि च ।
वादका वादयामासुर्नानाशिल्पेन तत्र वै ॥ ४५ ॥
एतस्मिन्नन्तरे दुर्गां शैलान्तःपुरचारिकाः ।
वहिश्चक्रुश्च सद्रत्नासनस्थां रत्नवेदिकाम् ॥ ४६ ॥
कस्तूरीविन्दुभिः सान्द्रसिन्दूरविन्दुभूषिताम् ।
चारुचन्दनचन्द्राभां नम्रभालस्थलोज्ज्वलाम् ।
रत्नेन्द्रसारहारेण वक्षःस्थलविभूषिताम् ॥ ४७ ॥
त्रिनेत्रदत्तनेत्रान्तामन्यवारितलोचनाम् ।
अतीषद्धास्ययुक्तास्यां सकटाक्षां मनोहराम् ॥ ४८ ॥
रत्नकेयूरवलयरत्नकङ्कणमण्डिताम् ।
रत्नपाशकसंसक्तां क्वणन्मञ्जीररञ्जिताम् ॥ ४९ ॥
अमूल्यातुल्यचित्राढ्यवस्त्रयुग्मसुशोभिताम् ।
सद्रत्नकुण्डलाभ्याञ्च चारुगण्डस्थलोज्ज्वलाम् ॥ ५० ॥
मणिसारप्रभामुष्टदन्तराजिविराजिताम् ।
रत्नदर्पणहस्ताञ्च क्रीड़ापद्मं विघूर्णतीम् ॥ ५१ ॥
चन्दनागुरुकस्तूरीकुङ्कुमेनाङ्गचर्च्चिताम् ।
मुदिता ददृशुः सर्वे जगदाद्यां जगत्प्रसूम् ॥ ५२ ॥
त्रिनेत्रो नेत्रकोणेन तां ददर्श मुदान्वितः ।
सर्वां सत्याकृतिं दृष्ट्वा विजहौ विरहज्वरम् ॥ ५३ ॥
शिवः सर्वं विसस्मार दुर्गासंन्यस्तमानसः ।
पुलकाञ्चितसर्वाङ्गो हर्षाश्रुयुक्तलोचनः ॥ ५४ ॥
एतस्मिन्नन्तरे शैलः प्रहृष्टः सपुरोहितः ।

तं वरं वरयामास वस्त्रचन्दनभूषणैः ॥ ५५ ।
भक्त्या पाद्यादिभिर्माल्यैर्दिव्यगन्धमनोहरैः ।
ततः शीघ्रं वेदमन्त्रैः सम्प्रदानञ्चकार ताम् ॥ ५६ ॥
यौतुकानि ददौ तस्मै रत्नानि विविधानि च ।
चारुरत्नविकाराणि पात्राणि सुन्दराणि च ॥ ५७ ॥
गवां लक्षं गजेन्द्राणां सहस्राणि च राधिके ।
रत्नकम्बलयुक्तानि साङ्कुशानि मुदान्वितः ॥ ५८ ॥
त्रिंशल्लक्षं हयानाञ्च सज्जितानामकातरः ।
दासीनामनुरक्तानां लक्षं सद्रत्नभूषितम् ॥ ५९ ॥
शतं द्विजवटूनाञ्च पार्वतीभ्रातृकल्पकम् ।
रथानाञ्च शतं रम्यं रत्नेन्द्रसारनिर्मितम् ॥ ६० ॥
पार्वतीं वसुसहितां स्वस्तीत्युच्चार्य्य शङ्करः ।
जग्राहानन्दमनसा यत्नाच्छैलसमर्पिताम् ॥ ६१ ॥
हिमालयः सुतां दत्त्वा परिहारञ्चकार तम् ।
माध्यन्दिनोक्तस्तोत्रेण तुष्टाव सम्पुटाञ्जलिः ॥ ६२ ॥

हिमालय उवाच ।

प्रसीद दक्षयज्ञघ्न नरकार्णवतारक ।
सर्वात्मरूप सर्वेश परमानन्दविग्रह ॥ ६३ ॥
गुणार्णव गुणातीत गुणयुक्त गणेश्वर ।
गुणवीज महाभाग प्रसीद गुणिनां वर ॥ ६४ ॥
योगाधार योगरूप योगज्ञ योगकारण ।
योगीश योगिनां वीज प्रसीद योगिनां गुरो ॥ ६५ ॥
प्रलय प्रलयाद्यैक भव प्रलयकारण ।
प्रलयान्ते सृष्टिवीज प्रसीद परिपालक ॥ ६६ ॥

संहारकाले घोरे च सृष्टिसंहारकारण ।
दुर्निवार्य्य दुराराध्य चाशुतोष प्रसीद मे ॥ ६७ ॥
कालस्वरूप कालेश काले च फलदायक ।
कालबीजैक कालघ्न प्रसीद कालपालक ॥ ६८ ॥
शिवस्वरूप शिवद शिवबीज शिवाश्रय ।
शिवभूत शिवप्राण प्रसीद परमाश्रय ॥ ६९ ॥
इत्येवं स्तवनं कृत्वा विरराम हिमालयः ।
प्रशशंसुः सुराः सर्वे मुनयश्च गिरीश्वरम् ॥ ७० ॥
हिमालयकृतं स्तोत्रं संयतो यः पठेन्नरः ।
प्रददाति शिवस्तस्मै वाञ्छितं राधिके ध्रुवम् ॥ ७१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण नारद-
संवादे श्रीकृष्णजन्मखण्डे पार्वतीसम्प्रदाने
चतुश्चत्वारिंशोऽध्यायः ।

---

# पञ्चचत्वारिंशोऽध्यायः ।

---

श्रीकृष्ण उवाच ।

अथ वेदविधानेन संस्थाप्य वह्निमीश्वरः ।
यज्ञं चकार तत्रैव वामे संस्थाप्य पार्वतीम् ॥ १ ॥
निवृत्ते विधिवद् यज्ञे विप्राय दक्षिणां ददौ ।
शिवः शतसुवर्णानि वृन्दावनविनोदिनि ॥ २ ॥
अथ प्रदीपमानीय शैलेन्द्रनगरस्त्रियः ।
निर्वर्त्त्य मङ्गलं कर्म गृहं संप्राप्य दम्पती ॥ ३ ॥

कृत्वा जयध्वनिं प्रीत्या शुभनिर्मञ्छनादिकम् ।
सस्मिताः सकटाक्षाश्च पुलकाञ्चितविग्रहाः ॥ ४ ॥
वासगेहं संप्रविश्य ददृशुः कामिनीगणाः ।
शङ्करं रूपवेशाढ्यं रत्नभूषणभूषितम् ॥ ५ ॥
चन्दनागुरुकस्तूरीकुङ्कुमाञ्चितविग्रहम् ।
ईषद्धास्यप्रसन्नास्यं सकटाक्षं मनोहरम् ॥ ६ ॥
अपूर्वसूक्ष्मवेशाढ्यं सिन्दूरविन्दुभूषितम् ।
चारुचम्पकवर्णाभं सर्वावयवसुन्दरम् ॥ ७ ॥
नवीनयौवनस्थञ्च मुनीन्द्रचित्तमोहनम् ।
सरस्वतीञ्च लक्ष्मीञ्च सावित्रीं जाह्नवीं रतिम् ॥ ८ ॥
अदितिञ्च शचीञ्चैव लोपामुद्रामरुन्धतीम् ।
अहल्यां तुलसीं स्वाहां रोहिणीञ्च वसुन्धराम् ॥ ९ ॥
शतरूपाञ्च संज्ञाञ्च सतीस्त्रीणाञ्च षोड़श ।
देवकन्या नागकन्या मुनिकन्या मनोहराः ॥ १० ॥
या याः स्थितास्तत्र तासां संख्यां कर्तुञ्च कः क्षमः ।
ताभी रत्नासने दत्ते तत्रोवास शिवो मुदा ।
तमूचुः क्रमशो देव्यो मधुरोक्तिं सुधामिव ॥ ११ ॥

सरस्वत्युवाच ।

प्राप्ता सती महादेवाधुना प्राणाधिका मुदा ।
दृष्ट्वा प्रियास्यं चन्द्राभं सन्तापं त्यज कामुक ॥ १२ ॥
कालं गमय कालेश सदा संश्लेषपूर्वकम् ।
विश्लेषस्ते न भविता सर्वकालं ममाशिषा ॥ १३ ॥

लक्ष्मीरुवाच ।

लज्जां विहाय देवेश सतीं कृत्वा स्ववक्षसि ।

तिष्ठ सम्प्रति का लज्जा प्राणा यान्ति यया विना ॥१४॥

सावित्र्युवाच ।

भोजयित्वा सतीं शम्भो शीघ्रं भोजय मा खिद ।
तदाचम्य सकर्पूरं ताम्बूलं देहि भक्तितः ॥ १५ ॥

जाह्नव्युवाच ।

स्वर्णकङ्कतिकां धृत्वा केशान्मार्जय योषितः ।
कामिन्याः स्वामिसौभाग्यं सुखं नातः परं भवेत् ॥१६॥

रतिरुवाच ।

गृहीत्वा पार्वतीं देव सुभगामतिदुर्लभाम् ।
कथं मम प्राणनाथो निःस्वार्थं भस्मसात्कृतः ॥ १७ ॥
जीवयसि विभो कामं कामव्यापारमात्मनि ।
कुरु दूरञ्च सन्तापं मम विश्लेषहेतुकम् ॥ १८ ॥
दम्पतीविरहक्लेशं सर्वं ज्ञात्वा दयानिधे ।
तथापि मम कान्तश्च कोपेन भस्मसात्कृतः ॥ १९ ॥
इत्युक्त्वा कामभस्माथ ददौ सा ग्रंथिबन्धितम् ।
रुरोद पुरतः शम्भोर्नाथ नाथेत्युदीर्य्य च ॥ २० ॥
हरिस्तद्रोदनं श्रुत्वा करुणामयसागरः ।
ब्रह्मा धर्मादिदेवाश्च ययुर्वासगृहं शिवम् ॥ २१ ॥
दृष्ट्वा नारायणं धर्मं ब्रह्माणञ्च सुरानपि ।
जवेन पीठादुत्थाय स्वाज्ञां कुर्वित्युवाच ह ॥ २२ ॥
शङ्करस्य वचः श्रुत्वा तमुवाच हरिः स्वयम् ।
कामं जीवय हे रुद्रेत्युक्त्वा शीघ्रं जगाम सः ॥ २३ ॥
ऊचुर्देव्यो बहुतरं वाक्यं विनयपूर्वकम् ।
क्रुधा दृष्ट्या शूलभृतो भस्मतो निर्गतः स्मरः ॥ २४ ॥

दृष्ट्वा कामं रतिस्तञ्च प्रणनाम महेश्वरम् ।
तद्रूपञ्च तदाकारं सस्मितं सधनुःशरम् ॥ २५ ॥
प्रणम्य शङ्करं कामः स्तुतिं कृत्वा यथागमम् ।
बहिर्गत्वा हरिं देवान् प्रणम्य समुवाच ह ॥ २६ ॥
कामं सम्भाष्य देवाश्च युयुजुश्च तमाशिषम् ।
काले रक्षा विनाशश्च निषेधः केन वार्यते ॥ २७ ॥
अथ शैलः सुरान् सर्व्वान्नारायणपुरोगमान् ।
भोजयामास भक्त्या च शाययामास यत्नतः ॥ २८ ॥
अथ शम्भुर्वासगृहे वामे संस्थाप्य पार्व्वतीम् ।
मिष्टान्नं भोजयामास तया सह मुदान्वितः ॥ २९ ॥
भुक्तवन्तं शिवं तत्र देवमातादितिः स्वयम् ।
उवाच सस्मितं राधे सम्प्रीत्या सरसं वचः ॥ ३० ॥

अदितिरुवाच ।

भोजनान्ते शचि शम्भोः शौचार्थं जलमर्पय ।
देहि शीघ्रं मम प्रीत्या दम्पत्योः प्रीतिपूर्व्वकम् ॥ ३१ ॥

शच्युवाच ।

कृत्वा विलापं यद्धेतोः शवं कृत्वा स्ववक्षसि ।
यो बभ्राम भवं मोहात् कालेन प्राप तां सतीम् ॥३२॥

अरुन्धत्युवाच ।

मया दत्ता सती तुभ्यं मेना दातुमनीप्सिता ।
विविधं बोधयित्वेमां रतिञ्च कर्तुमर्हसि ॥ ३३ ॥

अहल्योवाच ।

वृद्धावस्थां परित्यज्य झतीव तरुणोऽधुना ।
तेन मेना तु मेने त्वां सुतामर्पितुमीश्वर ॥ ३४ ॥

तुलस्युवाच ।

सती त्वया परित्यक्ता कामो दग्धः पुरा कृतः ।
कथं तदा वशिष्ठश्च प्रभो प्रस्थापितोऽधुना ॥ ३५ ॥

स्वाहोवाच ।

स्थिरो भव महादेव स्त्रीणां वचसि साम्प्रतम् ।
विवाहे व्यवहारोऽस्ति पुरस्त्रीणां प्रगल्भता ॥ ३६ ॥

रोहिण्युवाच ।

कामं पूरय पार्वत्याः कामशास्त्रविशारद ।
कुरु पारं स्वयं कामी कामिनां कामसागरम् ॥ ३७ ॥

वसुन्धरोवाच ।

भोगद्रव्यं विना भोगी न हि तुष्टः क्षुधातुरः ।
येन तुष्टिर्भवेच्छम्भो तत्कर्तुमुचितं स्त्रिया ॥ ३८ ॥

संज्ञोवाच ।

जानासि भावं सर्वज्ञ कामार्त्तानाञ्च योषिताम् ।
न च स्वस्वामिनं शम्भो सती जानाति सङ्गतम् ॥ ३९ ॥

शतरूपोवाच ।

तूर्णं प्रस्थापय प्रीत्या पार्वत्या सह शङ्करम् ।
रत्नप्रदीपं ताम्बूलं तल्पं निर्माय निर्जने ॥ ४० ॥

श्रीकृष्ण उवाच ।

स्त्रीणां तद्वचनं श्रुत्वा ता उवाच शिवः स्वयम् ।
निर्विकारी च भगवान् योगीन्द्राणां गुरोर्गुरुः ॥ ४१ ॥

शङ्कर उवाच ।

देव्यो मा वदतोक्तिञ्च छेवम्भूतां ममान्तिके ।
जगतां मातरः साध्व्यः पुत्रे चपलता कथम् ॥ ५२ ॥

शङ्करस्य वचः श्रुत्वा लज्जिताः सुरयोषितः ।
बभूवुः सम्भ्रमात्तूष्णीं चित्रपुत्तलिका यथा ॥ ४३ ॥
भुक्त्वा मिष्टानि भगवानाचम्य च मुदान्वितः ।
सकर्पूरञ्च ताम्बूलं बुभुजे भार्य्यया सह ॥ ४४ ॥
रत्नसिंहासने शम्भुर्मेनादत्ते मनोहरे ।
सन्निधाय मुदा युक्तो ददर्श वासमन्दिरम् ॥ ४५ ॥
रत्नप्रदीपशतकैर्ज्ज्वलद्भिर्ज्ज्वलितं श्रिया ।
रत्नपात्रघटाकीर्णं मुक्तामाणिक्यभूषितम् ॥ ४६ ॥
रत्नदर्पणशोभाढ्यं मण्डितं श्वेतचामरैः ।
चन्दनागुरुसंयुक्तं पुष्पशय्यासमन्वितम् ॥ ४७ ॥
नानाचित्रविचित्राढ्यं निर्म्मितं विश्वकर्म्मणा ।
रत्नसारेण खचितं रचितं हीरकैर्वरैः ॥ ४८ ॥
कुत्रचित् सुरनिर्म्माणवैकुण्ठसुमनोहरम् ।
वृन्दावनं कुत्र वनं कुत्रचिद्रासमण्डलम् ॥ ४९ ॥
कैलासञ्च कुत्रचन कुत्रचिदिन्द्रमन्दिरम् ।
दृष्ट्वाश्चर्य्यं महादेवः परितुष्टो बभूव ह ॥ ५० ॥
अथ प्रभातकालश्च बभूव प्राणवल्लभे ।
नानाप्रकारवाद्यञ्च वादयाञ्चक्रिरे जनाः ॥ ५१ ॥
सर्व्वे सुराः समुत्तस्थुः सज्जीभूताः ससम्भ्रमाः ।
स्ववाहनान् समारुह्य कैलासं गन्तुमुद्यताः ॥ ५२ ॥
वासगेहं समागत्य धर्म्मो नारायणाज्ञया ।
उवाच शङ्करं योगी योगीशं समयोचितम् ॥ ५४ ॥

धर्म्म उवाच ।

उत्तिष्ठोत्तिष्ठ भद्रं ते भवतु प्रमथाधिप ।

पार्वत्या सह माहेन्द्रे यात्रां कुरु हरिं स्मरन् ॥ ५४ ॥
दृष्ट्वा धर्मवचः श्रुत्वा पार्वत्या सह शङ्करः ।
यात्रां चकार माहेन्द्रे वृन्दावनविनोदिनि ॥ ५५ ॥
यात्रां कुर्वति देवेशे पार्वत्या सह शङ्करे ।
उच्चैरुदित्वा सा मेना तमुवाच कृपानिधिम् ॥ ५६ ॥

मेनोवाच ।

कृपानिधे कृपां कृत्वा मद्दत्तां पालयिष्यसि ।
सहस्रदोषं भगवानाशुतोषः क्षमिष्यति ॥ ५७ ॥
त्वत्पादाम्बुजभक्तैषा मद्वत्सा जन्मजन्मनि ।
स्वप्ने ज्ञाने स्मृतिर्नास्ति महादेवप्रभुं विना ॥ ५८ ॥
त्वद्भक्तिश्रुतिमात्रेण हर्षाश्रुपुलकान्विता ।
त्वन्निन्दया भवेन्मौना मृत्युञ्जय मृता इव ॥ ५९ ॥
इत्युक्त्वा मेनका शीघ्रं तत्रागत्य हिमालयः ।
उच्चैरुरोद च तदा वत्सां कृत्वा स्ववक्षसि ॥ ६० ॥
क्व यासि वत्सेत्युच्चार्य्य शून्यं कृत्वा हिमालयम् ।
स्मारं स्मारं तद्गुणौघं विदार्य्य मन्मनः स्फुटम् ॥ ६१ ॥
इत्येवमुक्त्वा शैलेन्द्रः समर्प्य च शिवां शिवे ।
सशैलः सहपुत्रश्च रुरोदोच्चैर्मुहुर्मुहुः ॥ ६२ ॥
नारायणश्च भगवानध्यात्मविद्यया स्वयम् ।
सर्व्वान् प्रबोधयामास कृपया स कृपानिधिः ॥ ६३ ॥
ननाम पार्वती भक्त्या मातरं पितरं गुरुम् ।
मायया च महामाया रुरोदोच्चैर्मुहुर्मुहुः ॥ ६४ ॥
पार्वतीरोदनेनैव रुरुदुः सर्वयोषितः ।
मुनयश्च सुराः सर्वे सस्त्रीकाः सगणा ध्रुवम् ॥ ६५ ॥

शीघ्रं ययुस्ते कैलासं देवा मानसगामिनः।
मुहूर्तार्द्धेन मुदिताः संप्रापुः शङ्करालयम् ॥ ६६ ॥
दृष्ट्वा गता देवपत्न्यो मुनिपत्न्यश्च सत्वरम्।
आययुर्दीपमानीय मुदा मङ्गलकर्मणि ॥ ६७ ॥
वायुपत्नी कुबेरस्य कामिनी शुक्रकामिनी।
तारासुरगुरोः पत्नी पत्नी दुर्वाससस्तथा ॥ ६८ ॥
अत्रिभार्य्यानुसूया च चन्द्रपत्न्यस्तथैव च।
देवकन्या नागकन्या मुनिकन्याः सहस्रशः ॥ ६९ ॥
असंख्यकामिनीसङ्घः संख्यां कर्त्तुञ्च कः क्षमः।
ताश्च प्रवेशयामासुर्दम्पती वासमन्दिरम् ॥ ७० ॥
रत्नसिंहासने रम्ये वासयामासुरीश्वरीम्।
सतीं तां दर्शयामास शिवः पूर्वालयं मुदा।
सति स्मरस्यतो गेहाद्यद्गता तातमन्दिरम् ॥ ७१ ॥
अधुना शैलकन्या त्वं तत्र दक्षसुता पुरा।
जातिस्मरां स्मारयामि नित्यं स्मरसि चेदद ॥ ७२ ॥
शङ्करस्य वचः श्रुत्वा सस्मितोवाच सा सती।
सर्वं स्मरामि प्राणेश मौनीभूतो भवेति तम् ॥ ७३ ॥
शिवः संभृतसंभारो नानावस्तु मनोहरम्।
भोजयामास देवांश्च नारायणपुरोगमान् ॥ ७४ ॥
भुक्त्वा देवाः प्रजग्मुस्ते नानारत्नविभूषिताः।
सस्त्रीकाः सगणाः सर्वे प्रणम्य चन्द्रशेखरम् ॥ ७५ ॥
नारायणञ्च ब्रह्माणं ननाम शङ्करः स्वयम्।
तौ च तञ्च समाश्लिष्याशिषं कृत्वा प्रजग्मतुः ॥ ७६ ॥
अथ शैलश्च मेना च मैनाकमाजुहाव ह।

शीघ्रमानय भद्रं ते पार्वतीं शङ्करं सुत ॥ ७७ ॥
तयोः स वचनं श्रुत्वा शीघ्रं गत्वा शिवालयम्।
आजगाम समानीय पार्वतीपरमेश्वरौ ॥ ७८ ॥
पार्वत्या गमनं श्रुत्वा बालाश्च बालिकास्तथा।
वृद्धा युवत्यो या याश्च शैलाश्च दुद्रुवुर्मुदा ॥ ७९ ॥
मेना सुताभ्यां बध्वा च सह दुद्राव सस्मिता।
हिमालयश्च मुदितो दुद्रावानुव्रजन् सुताम् ॥ ८० ॥
अवरुह्य रथाद्देवी मातरं पितरं गुरुम्।
प्रणनाम प्रमुदिता निमग्नानन्दसागरे ॥ ८१ ॥
पार्वतीञ्च समाश्लिष्य मेनका हर्षविह्वला।
हिमालयश्च मुदितो गताः प्राणा इवागताः ॥ ८२ ॥
सुतां निधाय गेहे स्वे रत्नसिंहासनं ददौ।
शूलभृते गणेभ्यश्च मधुपर्कादिकं मुदा ॥ ८३ ॥
तस्थौ श्वशुरगेहे च सगणश्चन्द्रशेखरः।
नित्यं षोड़शोपचारैः पूजितः सह भार्य्यया ॥ ८४॥
इत्येवं कथितं राधे शङ्करोद्वाहमङ्गलम्।
शोकघ्नं हर्षजनकं किं भूयः श्रोतुमिच्छसि ॥ ८५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारद-
संवादे श्रीकृष्णजन्मखण्डे शङ्करविवाहो
नाम पञ्चचत्वारिंशोऽध्यायः।

---

# षट्चत्वारिंशोऽध्यायः ।

राधिकोवाच ।

सुचिरञ्च मृतं कामं शङ्करेण च जीवितम् ।
रतिः पुनः प्रियं प्राप्य किं चकार मुदान्विता ॥ १ ॥
स्त्रीणां स्वस्वामिविच्छेदो मरणादतिदुष्करः ।
पुनःसंमेलनं भर्त्तुः सुखं परमदुर्लभम् ॥ २ ॥
शिवः सतीं तां संप्राप्य सङ्गे मङ्गलकर्मणि ।
चिरं प्रनष्टविरहः किं चकार मुदान्वितः ॥ ३ ॥
कलत्रविरहः पुंसां सर्वशोकात् सुदुष्करः ।
पुनःसम्मीलनं तस्याः प्राणदानाधिकं सुखम् ॥ ४ ॥
रतिः पुंसो विरहिणी शिवः स्त्रीविरही चिरम् ।
द्वयोर्द्वयोश्च संप्राप्तौ किम्बभूव द्वयोः सुखम् ॥ ५ ॥
तदेव श्रोतुमिच्छामि परं कौतूहलं मम ।
कृपया विदुषां श्रेष्ठ सव्यासं कथय प्रभो ॥ ६ ॥
मेलनं शक्तिशिवयो रतिमन्मथयोस्ततः ।
शोकापहं श्रुतवतां सर्वमङ्गलकारणम् ॥ ७ ॥

नारायण उवाच ।

इत्युक्ता राधिका देवी सस्मिता विरराम ह ।
कृष्णस्तद्वचनं श्रुत्वा सस्मितस्तामुवाच ह ॥ ८ ॥

कृष्ण उवाच ।

मृतं कामं पुनः प्राप्य कामार्त्ता कामकामिनी ।
स्वालयं तं समानीय हर्षोद्वाहश्चहादहो ॥ ९ ॥

भर्तुः सुवेषं विविधं स्वात्मनः स्वालिभिर्मुदा ।
कारयामास यत्नेन सा रती रमणोत्सुका ॥ १० ॥
ज्ञात्वा कामस्तु तद्भावं कामशास्त्रविधायकः ।
रत्नयानं समारुह्य जगाम स्वालयाद्वनम् ॥ ११ ॥
शैले शैलेऽतिरम्ये च नद्यां नद्यां नदे नदे ।
द्वीपे द्वीपे सिन्धुतटे पुष्पोद्याने मनोहरे ॥ १२ ॥
काञ्चने भूमिनिकरे वटमूलेऽतिनिर्जने ।
नदीपुलिनभूम्याञ्च पुष्पिते पुष्पकानने ॥ १३ ॥
भ्रमरध्वनि संयुक्ते पुंस्कोकिल रुत श्रुते ।
सुगन्धिवायुनाकीर्णे दधती जलशीकरम् ॥ १४ ॥
चित्तेषु चेतनानाञ्च हरणं योषितामहो ।
कलामानप्रकारेण शृङ्गारञ्च चकार सा ॥ १५ ॥
पूर्णमब्दशतं दिव्यं स रेमे वामया सह ।
दिवानिशं न बुबुधे संसक्तः सततं मुदा ॥ १६ ॥
तस्थतुस्तौ च तत्रैव संसक्तौ सन्ततं मुदा ।
सुरतौ च न विरतौ रतिशास्त्रविशारदौ ॥ १७ ॥
पतिविच्छेदसन्तापं विजहौ सा रतिर्मुदा ।
प्राप्य रत्नमपह्नुतं कः क्षणं त्यक्तुमुत्सहेत् ॥ १८ ॥
इत्येवं कथितं सर्वं रतिसन्तापकारणम् ।
शृङ्गारं शक्तिशिवयोरतुलं शृणु राधिके ॥ १९ ॥
शृण्वतां कर्णपीयूषं परमाश्चर्यमीप्सितम् ।
सर्वसन्तापहरणं सुखदं पुण्यदं शुभम् ॥ २० ॥
वसन् श्वशुरगेहे स पार्वत्या सह शङ्करः ।
तदनुज्ञां समादाय क्रीडार्थं प्रययौ वनम् ॥ २१ ॥

रत्नस्यन्दनमारुह्य रत्नसारपरिच्छदम् ।
रत्नसारेण खचितं रचितं विश्वकर्मणा ॥ २२ ॥
शतशृङ्गे सुवसने मलये गन्धमादने ।
नन्दने पुष्पभद्रे च पारिभद्रे च भद्रके ॥ २३ ॥
पुलिन्दे च कलिन्दे च पुष्के पिण्डारकेऽन्यके ।
वने वनेऽतिरम्ये च सागराणां तटे तटे ॥ २४ ॥
निकटेऽस्त्रगिरेः पार्श्ववटमूले मनोहरे ।
चकार करुणां यत्र परित्यज्य सती शिवम् ॥ २५ ॥
नानास्थानेषु रहसि पशुपक्षिविवर्जिते ।
यथा मनोरथं गामी स रेमे वामया सह ॥ २६ ॥
यत्र यत्र शवं नीत्वा बभ्राम धरणीतलम् ।
तत् सर्वं दर्शयामास सतीं शम्भुर्मुदान्वितः ॥ २७ ॥
कृत्वा विहारं सुचिरं न पूर्णं मानसं तयोः ।
महाशृङ्गारमारेभे सहस्राब्दं जगत्पिता ॥ २८ ॥
मायातीतोऽतिमायेशो मायासक्तः स्वमायया ।
न कालं बुबुधे योगी सुखेन कालकारकः ॥ २९ ॥
शक्तिशक्तिमतोस्तत्र न बभूव परिश्रमः ।
जहतोः सर्वसन्तापमन्योन्यविरहोद्भवम् ॥ ३० ॥
सुखसंसक्तमनसोः पुलकाञ्चितगात्रयोः ।
कामवाण मूर्च्छितयोः पुष्पशय्याशयानयोः ॥ ३१ ॥
नग्नयोः सुखसम्भोगाद्रतिशास्त्रविधिज्ञयोः ।
नखदन्तप्रहारैश्च क्षतविक्षतदेहयोः ॥ ३२ ॥
चन्दनागुरुकस्तूरीसिन्दूरविन्दुलिप्तयोः ।
निबद्धकेशकवरीस्रस्तयोश्छिन्नमाल्ययोः ॥ ३३ ॥

वसनानां नूपुराणां कङ्कणानाञ्च सुन्दरि ।
वलयानां कुण्डलानां शब्दैः क्रीड़ां प्रकुर्वतोः ॥ ३४ ॥
पुष्पतल्पं दलितयोर्वीर्य्योत्कर्षञ्च बिभ्रतोः ।
तेजसा समयोः शश्वत् क्रीड़या कौतुकेन च ॥ ३५ ॥
भारेण विश्वम्भरयोर्भाराक्रान्ता वसुन्धरा ।
सा विदीर्णा चकम्पे च सशैलवनसागरा ॥ ३६ ॥
तयोर्भरभराक्रान्त धरायाश्च भरेण च ।
भाराक्रान्तो हि शेषश्च तद्भरार्त्तोऽपि कच्छपः ॥ ३७ ॥
कच्छपस्य भरेणैव सर्वाधाराः समीरणाः ।
महाविक्लवयुक्ताश्च सर्वप्राणाश्च स्तम्भिताः ॥ ३८ ॥
स्तम्भितेषु समीरेषु विलोका भयविह्वलाः ।
ब्रह्मादयः सुराः सर्वे वैकुण्ठं शरणं ययुः ॥ ३९ ॥
सर्वं निवेदयामासुर्नारायणपदाम्बुजे ।
नारायणश्च भगवानुवाच कमलोद्भवम् ॥ ४० ॥

श्रीनारायण उवाच ।

शृङ्गारभङ्गसमयो भविता नाधुना विधे ।
कालप्रयुक्तं कार्य्यञ्च सिद्धं तत्समयोचितम् ॥ ४१ ॥
पूर्णे वर्षसहस्रे च स्वेच्छया विरमिष्यति ।
शम्भोः सम्भोगमिष्टञ्च को भेदं कर्तुमीश्वरः ॥ ४२ ॥
स्त्रीपुंसो रतिविच्छेदमुपायेन करोति यः ।
तस्य स्त्रीपुंसयोर्भेदो भवेज्जन्मनि जन्मनि ॥ ४३ ॥
यात्यन्ते कालसूत्रे च वर्षलक्षं स पातकी ।
भ्रष्टज्ञानो नष्टकीर्तिरलक्ष्मीको भवेदिह ॥ ४४ ॥
रम्भा युक्तं शक्रमिमं चकार विरतं रतौ ।

महामुनीन्द्रो दुर्वासास्तत्स्त्रीभेदो बभूव ह ॥ ४५ ॥
पुनरन्यां स संप्राप्य निषेव्य शूलपाणिनम् ।
दिव्यवर्षसहस्रञ्च विजहौ विरहज्वरम् ॥ ४६ ॥
रोहिणीसहितं चन्द्रं चकार विरतं रतौ ।
महर्षिर्गौतमस्तस्य स्त्रीविच्छेदो बभूव ह ॥ ६७ ॥
पुनः शिवं समाराध्य प्रापाहल्याञ्च पुष्करे ।
दिव्यवर्षसहस्रञ्च विजहौ विरहज्वरम् ॥ ४८ ॥
मुनिः स्वभार्य्यासंसक्तं दिवसे निर्जने वने ।
ब्रह्माण्डकसुतं नीत्वा चकार विरतं रुषा ॥ ४९ ॥
बभूव पुत्रविच्छेदस्तस्य कल्पान्तरे पुनः ।
शिवं निषेव्य संप्राप्य पुत्रं तत्याज विक्लवम् ॥ ५० ॥
हरिश्चन्द्रो हालिकञ्च वृषल्या सह संयुतम् ।
वारयामास निश्चेष्टं निर्जने तत्फलं शृणु ॥ ५१ ॥
भ्रष्टः श्रीराज्यवित्तेभ्यस्तं चकारावलीलया ।
विश्वामित्रो महर्षिश्च ताड़यामास तं पुरा ॥ ५२ ॥
ततः शिवं समाराध्य दातारं सर्वसम्पदाम् ।
सद्यो जगाम वैकुण्ठं सगणो मम मन्दिरम् ॥ ५३ ॥
अजामिलं द्विजश्रेष्ठं वृषल्या सह संयुतम् ।
न भिया वारयामासुः सुरास्तत्रापि केचन ॥ ५४ ॥
निष्पन्ने कर्म्मभोगे च स मङ्क्षु मुमोच ह ।
मन्नामस्मृतिमात्रेण चाजगाम ममालयम् ॥ ५५ ॥
सर्वं निषेकसाध्यञ्च निषेको बलवान् विधेः ।
निषेकफलदाताहं निषेकः केन वार्य्यते ॥ ५६ ॥
दिव्यं वर्षसहस्रञ्च शम्भोः सम्भोगकर्म्मकृत् ।

निषेकफलदातुस्तु निषेकफलसञ्चयम् ॥ ५७ ॥
पूर्णे वर्षसहस्रे च गत्वा तत्र महेश्वरः ।
येन वीर्य्यं पतद्भूमौ तत्करिष्यति निश्चितम् ॥ ५८ ॥
तत्र वीर्य्ये च भविता स्कन्दको भक्ततारकः ।
सदा भद्रस्वरूपोऽहं भयं किं वो मयि स्थिते ॥ ५९ ॥
अधुना त्वं गृहं गच्छ भगवन् स्वगणैः सह ।
करोतु शम्भुः सम्भोगं पार्वत्या सह निर्जने ॥ ६० ॥
इत्युक्त्वा कमलाकान्तः शीघ्रं स्वान्तःपुरं ययौ ।
स्वालयं प्रययुर्देवाः शिवः स्वस्थो रतौ रतः ॥ ६१ ॥

नारायण उवाच ।

इत्युक्त्वा राधिकां कृष्णः सकटाक्षाञ्च सस्मिताम् ।
जगाम चन्दनवनं निर्जने च तया सह ॥ ६२ ॥
अतीवनिर्जनं रम्यं वायुना सुरभीकृतम् ।
पुष्पोद्यानैः समाकीर्णं तत्र क्रीड़ां चकार ह ॥ ६३ ॥
पुष्पतल्पसमाकीर्णे परपुष्टश्रुतश्रुते ।
भ्रमरध्वनिसंयुक्ते कामिनीनां मनोहरे ॥ ६४ ॥
कृष्णसम्भोगमात्रेण सुखसंमूर्च्छिता च सा ।
अतीवमूर्च्छितः कृष्णो राधाङ्गस्पर्शमात्रतः ॥ ६५ ॥
तस्थतुस्तत्र संयुक्तौ राधारासेश्वरौ मुने ।
अतीवरतिनिश्चेष्टौ किं भूयः श्रोतुमिच्छसि ॥ ६६ ॥
इत्येवं मङ्गलं कर्म्म यः शृणोति समाहितः ।
कदाचिद्बन्धुविच्छेदो न भवेत्तस्य नारद ॥ ६७ ॥
महाशोकान्वदे मग्नो भेदे पुत्रकलत्रयोः ।
म[illegible]ञ्च बन्धूनां मासं श्रुत्वा लभेद्ध्रुवम् ॥ ६८ ॥

सूत उवाच ।

इत्युक्त्वा धर्मपुत्रश्च विरराम महामुनिः ।
पुनः संप्रष्टुमारेभे देवर्षिः कौतुकान्वितः ॥ ६८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे मङ्गलवर्णनं नाम
षट्चत्वारिंशोऽध्यायः ।

---

## सप्तचत्वारिंशोऽध्यायः ।

नारद उवाच ।

अथ क्रीड़ान्तरे राधा किं पप्रच्छ हरिं विभुम् ।
कां कथां कथयामास कथ्यतां करुणानिधे ॥ १ ॥

श्रीनारायण उवाच ।

उत्थाय सुखसम्भोगाद्राधां कृत्वा पुरो हरिः ।
उवास मलयद्रोणीं वटमूले मनोहरे ॥ २ ॥
राधां तां परिपप्रच्छ सस्मितं सुमनोहरम् ।
दर्पभङ्गं वज्रभृतो निगूढ़ं श्रुतिसुन्दरम् ॥ ३ ॥

श्रीराधिकोवाच ।

श्रुतं यशः शूलभृतो दर्पभङ्गश्च दैवतः ।
पार्वत्या दर्पभङ्गश्च विवाहश्च तयोरहो ॥ ४ ॥
अधुना श्रोतुमिच्छामि दर्पभङ्गं हरेर्हरे ।
शेषाणाञ्च क्रमेणैव अहं श्रस्य जगद्गुरो ॥ ५ ॥

श्रीकृष्ण उवाच ।

दर्पभङ्गं सुरपतेस्त्रिषु लोकेषु विश्रुतम् ।
कर्णपीयूषमतुलं सुन्दरं शृणु सुन्दरि ॥ ६ ॥
पुरा शतमखो दर्पात् कृत्वा शतमखं मुदा ।
बभूव सर्वदेवानामध्यक्षः सम्पदा युतः ॥ ७ ॥
दिने दिने तदैश्वर्य्यं वर्द्धते तपसः फलात् ।
दीक्षान्तं कारयामास सिद्धमन्त्रं बृहस्पतिः ॥ ८ ॥
स जजाप महामन्त्रं पुष्करे शतवत्सरम् ।
बभूव मन्त्रसिद्धश्च परिपूर्णमनोरथः ॥ ९ ॥
ब्रह्मस्वरूपां प्रकृतिं सम्पन्मूढ़ो न मन्यसे ।
सा तं शशाप श्वशुरोः शापं लभेऽतिकोपतः ॥ १० ॥
एकदा प्रकृतिः शापाद्धतबुद्धिः स्वसंसदि ।
गुरुं दृष्ट्वा समुत्थाय न ननाम मुदान्वितः ॥ ११ ॥
बृहस्पतिस्ततः कोपाज्जगाम गृहमाशयौ ।
न तस्थौ तारकाभ्यासे तपसे काननं ययौ ॥ १२ ॥
उवाच मनसा दीनो या तु सम्पद्धरेरिति ।
अथ शक्रो मतिं प्राप्य क्व गतोऽतो महीश्वरः ॥ १३ ॥
इत्युक्ता वेगतः पीठाज्जगाम तारकान्तिकम् ।
प्रणम्य मातरं भक्त्या नतस्कन्धः पुटाञ्जलिः ॥ १४ ॥
सर्वं निवेदनं कृत्वा रुरोदोच्चैर्मुहुर्मुहुः ।
पुत्रस्य रोदनं दृष्ट्वा रुरोद तारका भृशम् ॥ १५ ॥
वत्स गच्छ गृहं नैव गुरुं द्रक्ष्यसि साम्प्रतम् ।
दुर्दिनान्ते गुरुं प्राप्य पुत्रत्वं [illegible] ॥ १६ ॥
अधुना कर्मणां [illegible] भुंक्ष्व मूढ़ [illegible] ।

दुर्दिने स्वगुरौ दोषः सुदिने परितोषणम् ॥ १७ ॥
सुदिनं दुर्दिनं शक्र कारणं सुखदुःखयोः ।
इत्युक्त्वा तारका देवी विरराम पतिव्रता ॥ १८ ॥
जगाम शक्रः स्नानार्थं स्वर्णदीं सुमनोहराम् ।
ददर्श तत्र रुचिरां मार्जन्तीञ्च नितम्बिनीम् ॥ १९ ॥
सस्मितां सकटाक्षां तामहल्यां गौतमप्रियाम् ।
दृष्ट्वा च विपुलश्रोणीं स्तनयुग्मं मनोहरम् ॥ २० ॥
स तस्याः शक्रः सम्पश्यन् मुमोह काममोहितः ।
पुनः स चेतनां प्राप्य विहाय स्नानमीश्वरि ।
मूर्तिं विधाय तद्भर्तुस्तत्समीपं जगाम ह ॥ २१ ॥
गत्वा तु स्निग्धवस्त्रां तां समाकृष्य स्मरातुरः ।
चकार विविधं तत्र शृङ्गारं सुमनोहरम् ॥ २२ ॥
मूर्च्छां संप्राप कामेन तन्द्राञ्च मुनिकामिनी ।
निश्चेष्टा सुखसम्भोगान्निश्चेष्टस्त्रिदशाधिपः ॥ २३ ॥
एतस्मिन्नन्तरे तत्रा समागत्य मुनीश्वरः ।
ददर्श गेहे मिथुनं मैथुने च रतिप्रिये ॥ २४ ॥
दृष्ट्वा चुकोप स मुनिर्ज्वलन्निव हुताशनः ।
विप्रो न चातिरोषेण बभञ्ज सुरतिच्छलम् ॥ २५ ॥
शक्रः स चेतना प्राप्य दृष्ट्वा च मुनिपुङ्गवम् ।
कालस्वरूपं त्रासेन दधार चरणाम्बुजम् ॥ २६ ॥
कोपरक्तास्यनयनो देवं पादानतं भिया ।
उवाच नीतिवचनं जगाम शरणागतम् ॥ २७ ॥

गौतम उवाच ।

धिक् त्वामिन्द्र सुरश्रेष्ठ कश्यपात्मज पण्डित ।

प्रपौत्र जगतां स्रष्टुर्बुद्धिस्ते कथमीदृशी ॥ २८ ॥
मातामहः स्वयं दक्षोऽदितिर्माता पतिव्रता ।
कर्मसाध्यः स्वभावश्च कुलधर्मं प्रबाधते ॥ २९ ॥
वेदं विज्ञाय ज्ञानी त्वं योनिलुब्धोऽसि कर्मणा ।
योनीनाञ्च सहस्रञ्च तव गात्रे भवत्विह ॥ ३० ॥
पूर्णवर्षञ्च सततं योनिगन्धं त्वमाप्नुहि ।
ततः सूर्य्यं समाराध्य योनिश्चक्षुर्भविष्यति ॥ ३१ ॥
मम प्राणेश्वरी दुष्टा येन मूढ़ त्वया कृता ।
मच्छापेन गुरोः कोपाद्भ्रष्टश्रीर्भव साम्प्रतम् ॥ ३२ ॥
गुरोरपेक्षया मूढ़ प्राणा नापहृतास्तव ।
तेजस्विनोऽतिबन्धोर्मे बन्धुभेदभिया सुर ॥ ३३ ॥
उत्तिष्ठोत्तिष्ठ देवेन्द्र गच्छ वत्स स्वमन्दिरम् ।
शुभाशुभञ्च यत्किञ्चित् सर्वं कर्मोद्भवं भवेत् ॥ ३४ ॥
महामुनीन्द्रवचनाद्गत्वा शक्रश्च पुष्करम् ।
चकाराराधनं भक्त्या नैष्कृत्यञ्च चकार ह ॥ ३५ ॥
पादानतामहल्यां तामुवाच मुनिपुङ्गवः ।
वनं गत्वा चिरं तिष्ठ विधाय मूर्तिमश्मनः ॥ ३६ ॥
अकामाच्चकमे शक्रः सर्वं जानाम्यहं प्रिये ।
तथाच परभोग्या मे न च भोग्या व्रजाधमे ॥ ३७ ॥
परवीर्यं यदुदरे कामतोऽकामतोऽपिवा ।
अहल्ये याति दैवेन तदुपायं निशामय ॥ ३८ ॥
अकामतो न दुष्टा सा प्रायश्चित्तेन शुध्यति ।
कामभोगेन त्याज्या सा कर्मभोगेन शुध्यति ॥ ३९ ॥
पितृपाके देवपाके पूजायां नाधिकारिणी ।

षष्टिर्वर्षसहस्राणि कालसूत्रं प्रयाति सा ॥ ४० ॥
षष्टिर्वर्षसहस्राणि चयं कृत्वा स्वकर्मणः ।
स्वामिनो वचनात् सा तु प्रणम्य स्वामिनं भिया ॥४१
नाथ नाथेति कुर्वन्ती रुदन्ती वनमाप सा ।
षष्टिर्वर्षसहस्राणि भुक्त्वा भोगं मुनिप्रिया ॥ ४२ ॥
श्रीरामचरणस्पर्शात्सद्यः शुद्धा बभूव ह ।
त्रैलोक्यमोहनं रूपं विधाय मुनिकामिनी ॥ ४३ ॥
जगाम गौतमाभ्यासं मुनिः सम्प्राप्य सुन्दरीम् ।
अथ शक्रस्य वृत्तान्तं परमं शृणु सुन्दरि ॥ ४४ ॥
पापघ्नं पुण्यवीजं तत् संव्यस्य कथयामि ते ।
एकदा च गुरोः कोपात् प्रकृतेरेव हेलनात् ॥ ४५ ॥
ब्रह्महत्या वज्रभृतो बभूव हतचेतसः ।
शक्रस्यकृतगुरुर्दैव तस्थौ दैत्यनिपीड़ितः ॥ ४६ ॥
जगाम शरणं भीतो ब्रह्माणं जगतां गुरुम् ।
तदाज्ञया विश्वरूपञ्चकार च पुरोहितम् ॥ ४७ ॥
बभूव तत्र विश्वस्तो दैवाद्दुहितो हरिः ।
दैत्यदौहित्रस्य भावं विज्ञाय च विचक्षणः ॥ ४८ ॥
प्रचिच्छेद शिरस्तस्य तीक्ष्णबाणेन लीलया ।
विश्वरूपपिता त्वष्टा श्रुत्वा सद्यश्चुकोप ह ॥ ४९ ॥
इन्द्रशत्रो विवर्द्धस्वेत्युक्त्वा यज्ञञ्चकार ह ।
यज्ञकुण्डात् समुत्तस्थौ वृत्रो नाम महासुरः ॥ ५० ॥
चकार निग्रहं कोपाद्देवानामवलीलया ।
शक्रो महामुनेरस्थ्ना वज्रं कृत्वा सुदारुणम् ॥ ५१ ॥
जघान वृत्रं देवानां कण्टकं दैत्यमर्दनः ।

ब्रह्महत्या शुनासीरं दुद्राव हतचेतनम् ॥ ५२ ॥
रक्तवस्त्रपरीधाना वृद्धस्त्रीवेशधारिणी।
सप्ततालप्रमाणा सा शुष्ककण्ठोष्ठतालुका ॥ ५३ ॥
ईषाप्रमाणदशना महाभीतश्चकार तम्।
धावन्तं परिधावन्ती बलिष्ठा हतचेतनम् ॥५४॥
खड्गहस्ता दयाहीना वेगेन परिधावति।
इन्द्रो दृष्ट्वा च तां घोरां स्मारं स्मारं गुरोः पदम् ॥५५॥
विवेश मानससरो मृणालसूक्ष्मसूत्रतः।
तत्र गन्तुं न शक्ता सा ब्रह्मणः शापकारणात् ॥५६॥
सा तस्थौ वटशाखायां सरसस्तटसन्निधौ।
अथात्र नहुषो भूपस्त्रिलोकेशो बभूव ह ॥ ५७ ॥
स ययाचे शचीं देवान् बलिष्ठो दुर्बलानपि।
शची श्रुत्वा महाभीता तारकां शरणं ययौ ॥ ५८ ॥
तारा निर्भर्त्स्य स्वर्पतिं भृत्यपत्नीं ररक्ष च।
शचीमाश्वास्य स्वगुरुर्जगाम तत्सरो मुदा।
आजुहाव शुनासीरं कातरं हतचेतनम् ॥ ५९ ॥

बृहस्पतिरुवाच।

उत्तिष्ठोत्तिष्ठ हे वत्स भयं किं ते मयि स्थिते।
त्वदीश्वरं स्वरेणैव निशामय भयं त्यज ॥ ६० ॥
स्वरं बृहस्पतेर्ज्ञात्वा सर्वसिद्धीश्वरो हरिः।
सूक्ष्मरूपं परित्यज्य स्वरूपञ्च दधार सः ॥ ६१ ॥
उत्थाय सद्यः सम्भ्रान्तो गुरुं तं सूर्य्यवर्चसम्।
दृष्ट्वा ननाम सम्प्रीत्या सम्प्रीतं त्यक्तकोपकम् ॥ ६२ ॥
पादाम्बुजे निपतितं रुदन्तं भयविह्वलम्।

निधाय वचसि प्रेम्णा रुरोद प्रेमविह्वलः ॥ ६३ ॥
रुदन्तं वाक्पतिं तुष्टं तुष्टाव त्रिदशेश्वरः ।
पुटाञ्जलिः पुलकितो भक्तिनम्रात्मकन्धरः ॥ ६४ ॥

इन्द्र उवाच ।

क्षमस्व भगवन् दोषं कृपां कुरु कृपानिधे ।
भृत्यापराधं न गृह्णाति सदीश्वरः ॥ ६५ ॥
स्वभार्य्यासु स्वशिष्येषु स्वभृत्येषु सुतेषु च ।
दुर्बलः सबलो वापि को दण्डं कर्त्तुमक्षमः ॥ ६६ ॥
त्रिषु कोटिषु देवेषु देवकोऽहमपण्डितः ।
त्वत्प्रसादात् सुरश्रेष्ठ कृपया वर्द्धितस्त्वया ॥ ६७ ॥
संहर्त्तुमीशस्त्वं सर्वमहं को वापि कीटवत् ।
स्वयं विधातुः पौत्रश्च पुनः स्रष्टुं स्वयं क्षमः ॥ ६८ ॥
इति तस्य स्तवं श्रुत्वा परितुष्टो गुरुः स्वयम् ।
उवाच वचनं प्रीत्या प्रसन्नवदनेक्षणः ॥ ६९ ॥

गुरुरुवाच ।

स्थिरो भव महाभाग निश्चलां कमलां लभ ।
सम्प्राप्य परमैश्वर्यं पूर्वस्माच्च चतुर्गुणम् ॥ ७० ॥
गच्छामरावतीं वत्स राज्यं कुरु पुरन्दर ।
हतशत्रुर्मत्प्रसादाद्गत्वा पश्य शचीं सतीम् ॥ ७१ ॥
इत्येवमुक्त्वा स गुरुः सशिष्यो गन्तुमुद्यतः ।
ददर्श पुरतो घोरां ब्रह्महत्यां सुदुःसहाम् ॥ ७२ ॥
दृष्ट्वा शक्रो महाभीतस्तं गुरुं शरणं ययौ ।
बृहस्पतिर्महाभीतः सस्मार मधुसूदनम् ॥ ७३ ॥
एतस्मिन्नन्तरे तत्र वाग् बभूवाशरीरिणी ।

स्वल्पाक्षरा च बह्वर्था तां शुश्राव बृहस्पतिः ॥ ७४ ॥
संसारविजयं नाम सर्वाशुभविनाशनम् ।
राधिके वचनं श्रुत्वा शिष्यं रक्षाधुनेति च ॥ ७५ ॥
तदा तत् कवचं दत्त्वा शिष्याय शिष्यवत्सलः ।
चकार भस्मसात्ताञ्च हुङ्कारेणैव लीलया ॥ ७६ ॥
तदा शिष्यं गृहीत्वा च गत्वाताममरावतीम् ।
ददर्श छिन्नभग्नाञ्च शत्रुणा वचनाद्गुरोः ॥ ७७ ॥
भर्त्तुरागमनं श्रुत्वा शची संहृष्टमानसा ।
प्रणम्य स्वगुरुं भक्त्या स्वकान्तं प्रणनाम सा ॥ ७८ ॥
श्रुत्वा गमनमिन्द्रस्य समाजग्मुः सुराः प्रिये ।
ऋषयो मुनयश्चैव हर्षगद्गदमानसाः ॥ ७९ ॥
योजयामास सत्कारं निर्मातुममरावतीम् ।
पूर्णमब्दशतं शिल्पी निर्ममे त्वमरावतीम् ॥ ८० ॥
नानारत्नविचित्राढ्यां मणिरत्नेन्द्रनिर्मिताम् ।
मनोहरां निरुपमां न हि तुष्टो यया हरिः ॥ ८१ ॥
विश्वकर्मा गृहं गन्तुं न शशाक विनाज्ञया ।
परमोद्विग्नचित्तश्च ब्रह्माणं शरणं ययौ ॥ ८२ ॥
विज्ञाय तदभिप्रायं तमुवाच विधिः स्वयम् ।
तव कर्मक्षयादेव तावच्छो भवितेति च ॥ ८३ ॥
श्रुत्वा तद्वचनं कारुः शीघ्रं प्रापामरावतीम् ।
ब्रह्मा जगाम वैकुण्ठं प्रणम्योवाच मातरम् ॥ ८४ ॥
हरिर्ब्रह्माणमाश्वास्य प्रस्थाप्य स्वगृहञ्च तम् ।
विप्ररूपं समास्थाय चाजगामामरावतीम् ॥ ८५ ॥
दण्डी छत्री शुक्लवासा बिभ्रत्तिलकमुज्ज्वलम् ।

अतिखर्वः शुक्लदन्तः सस्मितः सुमनोहरः ॥ ८६ ॥
वयसातिशिशुर्बुद्धया ज्ञानवृद्धया विचक्षणः ।
स्वयं विधातुर्धाता च दाता च सर्वसम्पदाम् ॥ ८७ ॥
इन्द्रद्वारे समुत्तिष्ठन् द्वारपालमुवाच ह ।
ब्रूहीदं ब्राह्मणो द्वारे शीघ्रं त्वां द्रष्टुमागतः ॥ ८८ ॥
इत्येवं वचनं श्रुत्वा द्वारिज्ञानं चकार तम् ।
स च शीघ्रं समागम्य ददर्श ब्राह्मणार्भकम् ॥ ८९ ॥
बालकानां बालिकानां समूहैः परिवेष्टितम् ।
हसद्भिश्च महोत् साहात्सस्मितं तेजसान्वितम् ॥ ९० ॥
प्रणनाम हरिर्भक्त्या तं हरिं शिशुरूपिणम् ।
आशिषं युयुजे प्रीत्या तं हरिर्भक्तवत्सलः ॥ ९१ ॥
मधुपर्कादिकं दत्त्वा शक्रः पूजां चकार तम् ।
पप्रच्छागमनं कस्माद्वदेति विप्रबालकम् ॥ ९२ ॥
इन्द्रस्य वचनं श्रुत्वा तमुवाच द्विजार्भकः ।
मेघगम्भीरया वाचा बृहस्पतिगुरोर्गुरुः ॥ ९३ ॥

ब्राह्मण उवाच ।

समागतोऽहं त्वां द्रष्टुं प्रष्टुं वचनमीप्सितम् ।
चित्रं नगरनिर्माणं समाकर्ण्याद्भुतं हरे ॥ ९४ ॥
कतिवर्षञ्च निर्माणे भवान् संकल्पितो यथा ।
कतिचित्रां विश्वकर्मा निर्माणं वा करिष्यति ॥ ९५ ॥
एवम्भूतञ्च निर्माणं न केनेन्द्रेण निर्मितम् ।
नैवंविधं सुनिर्माणे विश्वकर्मा परः क्षमः ॥ ९६ ॥
बालकस्य वचः श्रुत्वा जहास स सुरेश्वरः ।
सम्पन्मदातिमत्तश्च पुनः पप्रच्छ बालकम् ॥ ९७ ॥

कतीन्द्राणां समूहश्च त्वया दृष्टः श्रुतोऽथवा ।
विश्वकर्मा कतिविधस्तं मे ब्रूहि शिशोऽधुना ॥ ९८ ॥
शक्रस्य वचनं श्रुत्वा प्रहस्य विप्रबालकः ।
तमुवाच श्रुतिसुखं पीयूषसदृशं वचः ॥ ९९ ॥

ब्राह्मण उवाच ।

जानामि कश्यपं तात तव तातं प्रजापतिम् ।
मुनिं मरीचिनामानं तत्तातञ्च तपोनिधिम् ॥ १०० ॥
नाभिपद्मोद्भवं विष्णोः सुत्वा तं विधिमीश्वरम् ।
रक्षितारञ्च तं विष्णुं परं सत्वगुणान्वितम् ॥ १०१ ॥
एकार्णवञ्च प्रलयं सत्वशून्यं भयानकम् ।
सृष्टिं कतिविधां शक्र कल्पं कतिविधं ध्रुवम् ॥ १०२ ॥
ब्रह्माण्डञ्च कतिविधं ब्रह्मविष्णुमहेश्वरान् ।
ब्रह्माण्डेषु कतिविधानिन्द्रान् को गन्तुमीश्वरः ॥१०३॥
यदि संख्यास्ति रेणूनां धरायाञ्च सुराधिप ।
तथापि संख्या शक्राणां नास्त्येवेति विदुर्बुधाः ॥१०४॥
शक्रस्यायुश्चाधिकारो युगानामेकसप्ततिः ।
अष्टाविंशतिशक्राणां पतनेऽहर्निशं विधेः ॥ १०५ ॥
विधेरष्टोत्तरशतमायुरेव प्रमाणतः ।
रसेन्द्राणाञ्च का संख्या नास्ति संख्या विधेरपि ॥१०६॥
ब्रह्माण्डसंख्या यत्र क्व ब्रह्मविष्णुमहेश्वराः ।
महाविष्णोर्लोमकूपोद्भवे तोये सुनिर्मले ॥ १०७ ॥
ब्रह्माण्डेऽस्ति यथा नौका भवतोये च कृत्रिमा ।
एवं लोम्नः प्रमाणेन ब्रह्माण्डाः सन्त्यसंख्यकाः ॥१०८॥

ब्रह्माण्डे च कतिविधाः सुराः सन्त्येव त्वत्समाः ।
एतस्मिन्नन्तरे तत्र ददर्श पुरुषोत्तमः ॥ १०९ ॥
पिपीलिकासमूहञ्च व्यायतं धनुषां शतम् ।
क्रमशस्तान् संनिरीक्ष्य जहासोच्चैर्द्विजार्भकः ।
नोवाच किञ्चिन्मौनी च गम्भीरः सागरो यथा ॥११०॥
दृष्ट्वा हास्यं विप्रवटोर्गाथां श्रुत्वातिविस्मितः ।
पप्रच्छ च पुनर्विप्रं शुष्ककण्ठोष्ठतालुकः ॥ १११ ॥

इन्द्र उवाच ।

कथं हससि विप्रेन्द्र मां शीघ्रं कारणं वद ।
त्वं वा को माययाच्छन्नः शिशुरूपी गुणार्णवः ॥११२॥
इन्द्रस्य वचनं श्रुत्वा तमुवाच द्विजार्भकः ।
आध्यात्मिकं नीतिसारं ज्ञानवीजं परं वरम् ॥ ११३ ॥

ब्राह्मण उवाच ।

दृष्टः पिपीलिकासङ्घो हेतुरस्य निगूढकः ।
मा मां पृच्छ शोकवीजं तवान्यज्ञानकारणम् ॥११४॥
सांसारिकाणां संसारवृक्षमूलनिकृन्तनम् ।
अज्ञानतमसि छन्नं ज्ञानदीपमनुत्तमम् ॥ ११५ ॥
निगूढं सर्ववेदेषु सिद्धानामपि दुर्लभम् ।
योगिनां प्राणतुल्यञ्च मूढ़ाहङ्कारभञ्जनम् ॥ ११६ ॥
इत्युक्त्वा तत्र सन्तस्थौ सस्मितो द्विजपुङ्गवः ।
पुनः पप्रच्छ शक्रस्तं शुष्ककण्ठोष्ठतालुकः ॥ ११७ ॥

शक्र उवाच ।

ब्रूहि विप्रवटो शीघ्रं ज्ञानदीपं पुरातनम् ।
न जानामि शिशुः कस्त्वं ज्ञानराशिः स्वमूर्तिमान् ॥११८॥

इन्द्रस्य वचनं श्रुत्वा विप्ररूपी जनार्दनः ।
ज्ञानं भाषितुमारेभे योगीन्द्राणां सुदुर्लभम् ॥ ११९ ॥

ब्राह्मण उवाच ।

दृष्टः पिपीलिकासङ्घ एकैकं क्रमशो मया ।
सर्वे स्वकर्मणा शक्र शक्रीभूताः सुरालये ॥ १२० ॥
अधुना कर्मणा सर्वे क्रमशो भूतजन्मनाम् ।
अतीतकाले संप्राप्ता भूतजातिं पिपीलिकाम् ॥१२१॥
कर्मणा जीविनो यान्ति वैकुण्ठञ्च निरामयम् ।
कर्मणा ब्रह्मलोकञ्च शिवलोकञ्च कर्मणा ॥ १२२ ॥
स्वर्गं स्वर्गसमास्थानं पातालञ्च स्वकर्मणा ।
कर्मणा नरकं घोरं स्वात्मदुःखैककारणम् ॥ १२३ ॥
कर्मणा शूकरीगर्भं कर्मणा क्षुद्रजीवनम् ।
कर्मणा पशुपत्नीनां कर्मणा पक्षियोषिताम् ॥ १२४ ॥
कर्मणा कीटयोनिञ्च वृक्षत्वञ्च स्वकर्मणा ।
स्वकर्मणा सुखी दुःखी सेव्यः सेवक एव च ॥ १२५ ॥
कर्मणा ब्राह्मणत्वञ्च देवञ्चापि स्वकर्मणा ।
स्वकर्मणा च प्रेतत्वं ब्रह्मत्वञ्च स्वकर्मणा ॥ १२६ ॥
कर्मणा व्याधियुक्तश्च कर्मणैवातिसुन्दरः ।
कर्मणा स्वाङ्गहीनश्च स्वाङ्गहृष्टश्च कर्मणा ॥ १२७ ॥
विधाता कर्मसूत्रेण फलदाता च जीविनाम् ।
कर्म स्वभावसाध्यञ्च स्वभावोऽभ्यासजीवकः ॥ १२८ ॥
इत्येवं कथितं सर्वमाध्यात्मिकपरं वचः ।
सुखदं पुण्यदं सारं नरकार्णवतारकम् ॥ १२९ ॥

संसारः स्वप्नवत्सर्वं देवेन्द्र सचराचरम् ।
मृत्युश्च मस्तकस्थायी सर्वेषां कालयोगतः ॥ १३०
जलबुद्बुदवत्सर्वं जीविनाञ्च शुभाशुभम् ।
शक्र शश्वद् भ्रमत्येव नाविष्टस्तत्र पण्डितः ॥ १३१ ॥
इत्येवमुक्त्वा विप्रश्च तत्र तस्थौ च सस्मितः ।
विस्मितस्त्रिदशाध्यक्षो नात्मानं बहु मन्यते ॥ १३२ ॥
एतस्मिन्नन्तरे शीघ्रमाजगाम मुनीश्वरः ।
अतिवृद्धो महायोगी ज्ञानेन वयसा महान् ॥ १३३ ॥
कृष्णाजिनी जटाधारी बिभ्रत्तिलकमुज्ज्वलम् ।
वक्षःस्थले रोमचक्रं बिभर्त्ति मस्तके कटम् ॥ १३४ ॥
स्थितं सर्वं मध्यदेशे किञ्चिदुत्पाटितं स्फुटम् ।
समागत्य द्वयोर्मध्ये तस्थौ स्थाणुवदेव सः ॥ १३५ ॥
महेन्द्रो ब्राह्मणं दृष्ट्वा प्रणनाम मुदान्वितः ।
मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः ॥ १३६ ॥
पप्रच्छ कुशलं विप्रश्चकार विनयं पुनः ।
तुष्टावातिथिभावेन मुदा सादरपूर्वकम् ॥ १३७ ॥
विप्रार्भकस्तेन सार्द्धं सम्भाषाञ्च चकार सः ।
स्ववाञ्छितं परं प्राह सर्वं विनयपूर्वकम् ॥ १३८ ॥

बालक उवाच ।

कुतस्त्वमागतो विप्र किन्नाम तव वा वद ।
को वातागमने हेतुर्निवासः केन हेतुना ॥ १३९ ॥
कटं कथं मस्तके ते लोमचक्रञ्च वक्षसि ।
अत्युन्नतं मध्यदेशे किञ्चिदुत्पाटितं मुने ॥ १४० ॥

मां चेत् कृपास्ति ते विप्र सर्वं संख्यस्य कथ्यताम् ।
अत्यद्भुतमिदं सर्वं श्रोतुं कौतूहलं मम ॥ १४१ ॥
स शिशोर्वचनं श्रुत्वा तमुवाच महामुनिः ।
सर्वं स्वकीयवृत्तान्तं शक्रस्य पुरतो मुदा ॥ १४२ ॥

मुनिरुवाच ।

अल्पायुषा मया विप्र कुत्रापि न कृता गृहाः ।
न विवाहश्चोपजीव्यं भिक्षोपजीविनाधुना ॥ १४३ ॥
लोमशेति च सन्नाम हेतुर्विप्रस्य दर्शनम् ।
वर्षणातपशान्त्यर्थं मस्तकस्थं कटं मम ॥ १४४ ॥
वक्षःस्थलस्थितं रोमचक्रं तत्कारणं शृणु ।
सांसारिकाणां भयदं विवेकजननं परम् ॥ १४५ ॥
आयुःसंख्याप्रमाणं मे लोमचक्रञ्च वक्षसि ।
शक्रैकपतनं विप्र लोमैकोत्पाटनं मम ॥ १४६ ॥
उत्पाटितानि लोमानि तेन मध्ये स्थितानि च ।
ब्रह्मणो द्विपरार्धे च मम मृत्युर्निरूपितः ॥ २४७ ॥
असंख्यविधयो ब्रह्मन् मरिष्यन्ति मृता अपि ।
कलत्रेण च पुत्रेण गृहेण किं प्रयोजनम् ॥ १४८ ॥
ब्रह्मणः पतने चक्षुर्निमेषश्च हरेर्भवेत् ।
तस्मादृपद्ममतुलं चिन्तयामि निरन्तरम् ॥ १४९ ॥
दुर्लभं श्रीहरेर्दास्यं भक्तिर्मुक्तेर्गरीयसी ।
स्वप्नवत्सर्वमैश्वर्यं तद्भक्तिव्यवधायकम् ॥ १५० ॥
इदं मद्गुरुणा दत्तं शम्भुना ज्ञानमुत्तमम् ।
विना भक्तिं न गृह्णामि सालोक्यादिचतुष्टयम् ॥१५१॥

इत्येवमुक्त्वा स मुनिर्जगाम शिवसन्निधिम् ।
शिशुरूपी हरिस्तत्रैवान्तर्धानं चकार ह ॥ १५२ ॥
इन्द्रस्तु स्वप्नवद् दृष्ट्वा बभूव तत्र विस्मितः ।
तृष्णाभावञ्च सम्पत्तौ नास्त्येव परमेश्वरि ॥ १५३ ॥
विश्वकर्म्माणमानीय प्रियमुक्त्वा शतक्रतुः ।
दत्त्वा रत्नानि सम्पूज्य तं प्रस्थापितवान् गृहम् ॥ १५४ ॥
सर्वं विन्यस्य पुत्रे च शरणं गन्तुमुद्यतः ।
शचीं राज्यश्रियं त्यक्त्वा विवेकी चयकामुकः ॥ १५५ ॥
दृष्ट्वा विवेकिनं कान्तं हृदयेन विदूयता ।
शची जगाम शोकार्त्ता सन्त्रस्ता शरणं गुरोः ॥ १५६ ॥
सर्वं निवेदनं कृत्वा समानीय बृहस्पतिम् ।
बोधयामास शक्रं तं नीतिसारेण कामिनी ॥ १५७ ॥
गुरोः शास्त्रविशेषञ्च दम्पतीरससंयुतम् ।
विधाय च स्वयं प्रीत्या पाठयामास तं मुदा ॥ १५८ ॥
मुनिः शास्त्रविशेषञ्च बोधयामास वाक्पतिः ।
स चकार तदा राज्यं वृन्दावनविनोदिनि ॥ १५९ ॥
इत्येवं कथितं सर्वं शक्रदर्पविमोचनम् ।
साक्षाद् दृष्टो दर्पभङ्गो नन्दयज्ञे सुरेश्वरि ॥ १६० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे श्रीकृष्णराधासंवादो
नाम सप्तचत्वारिंशोऽध्यायः ।

## अष्टचत्वारिंशोऽध्यायः।

---

श्रीराधिकोवाच।

कथितो भवता मह्यं दर्पभङ्गः श्रुतो हरेः।
दर्पभङ्गं रवेश्चापि श्रोतुमिच्छामि तत्त्वतः॥ १॥

श्रीकृष्ण उवाच।

एकदैवोदयं कृत्वा रविरस्तं जगाम ह।
माली सुमाली दैत्येन्द्रौ दीप्तिं कर्त्तुं समुद्यतौ॥ २॥
महासम्पन्मदोन्मत्तौ शङ्करस्य वरेण च।
तयोश्च प्रभया रात्रिर्न भवेदिति सुन्दरि॥ ३॥
रुष्टः सूर्य्यः स्वशूलेन तौ जघानावलीलया।
पतितौ सूर्य्यशूलेन मूर्च्छितौ धरणीतले॥ ४॥
भक्तापायञ्च विज्ञाय शङ्करो भक्तवत्सलः।
आगत्य जीवयामास महाज्ञानेन तौ विभुः॥ ५॥
तौ च नत्वा शिवं भक्त्या जग्मतुर्निजमन्दिरम्।
दुद्राव च महादेवः सूर्य्यं हन्तुं रुषा ज्वलन्॥ ६॥
दृष्ट्वा संहारकर्त्तारं जिघांसन्तं हरं रविः।
भिया पलायमानश्च ब्रह्माणं शरणं ययौ॥ ७॥
दुद्राव च महादेवो ब्रह्मणो निलयं रुषा।
शूलमत्यर्थमुद्यम्य कालकालो विधेर्विधिः॥ ८॥
दृष्ट्वा ब्रह्मा हरं रुष्टं तुष्टाव परमेश्वरम्।
चतुर्वक्त्रेण वेदोक्तस्तोत्रेण जगतां पतिः॥ ९॥

ब्रह्मोवाच।

प्रसीद दक्षयज्ञघ्न सूर्य्यं मच्छरणागतम्।
त्वयैव सृष्टः सृष्टेश्च समारम्भे जगद्गुरो॥ १०॥
आशुतोष महाभाग प्रसीद भक्तवत्सल।
कृपया च कृपासिन्धो रक्ष रक्ष दिवानिशम्॥ ११॥
ब्रह्मस्वरूप भगवन् सृष्टिस्थित्यन्तकारण।
स्वयं रविञ्च निर्माय स्वयं संहर्तुमिच्छसि॥ १२॥
स्वयं ब्रह्मा स्वयं शेषो धर्मः सूर्य्यो हुताशनः।
चन्द्रइन्द्रादयो देवास्त्वत्तो भीताः परात्पर॥ १३॥
ऋषयो मुनयश्चैव त्वां निषेव्य तपोधनाः।
तपसां फलदाता त्वं तपस्त्वं तपसां फलम्॥ १४॥
इत्येवमुक्त्वा ब्रह्मा तं सूर्य्यमानीय भक्तितः।
प्रीत्या समर्पयामास शङ्करे दीनवत्सले॥ १५॥
शम्भुस्तमाशिषं कृत्वा विधिं नत्वा जगद्विधिः।
प्रसन्नवदनः श्रीमानालयं प्रययौ मुदा॥ १६॥
इति धातृकृतं स्तोत्रं सङ्कटे यः पठेन्नरः।
भयात् प्रमुच्यते भीतो बद्धो मुच्येत बन्धनात्॥ १७॥
राजद्वारे श्मशाने च मग्नपोते महार्णवे।
स्तोत्रस्मरणमात्रेण मुच्यते नात्र संशयः॥ १८॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे श्रीकृष्णराधासंवादो
नाम अष्टचत्वारिंशोऽध्यायः।

———

# एकोनपञ्चाशत्तमोऽध्यायः ।

श्रीकृष्ण उवाच ।

सूर्य्यः प्रणम्य ब्रह्माणं मुदा युक्तस्तदाज्ञया ।
चकार विनयं प्रीत्या तेजस्वी त्रिगुणात्मकः ॥ १ ॥
अथ वह्नेरुपाख्यानं सावधानं निशामय ।
गोपनीयं पुराणेषु कर्णपीयूषमुत्तमम् ॥ २ ॥
त्रैलोक्यं भस्मसात् कर्तुमेकदाग्निः समुद्यतः ।
शततालप्रमाणां तां शिखां कृत्वा भयानकीम् ॥ ३ ॥
क्षुभितः कुपितश्चैव भृगोः शापस्य कारणात् ।
स्वञ्च तेजस्विनं मत्वा तुच्छं मत्वान्यमात्मनः ॥ ४ ॥
एतस्मिन्नन्तरे विष्णुराजगामावलीलया ।
वह्नेस्तां दाहिकीं शक्तिं तां जहार पुरःस्थितः ॥ ५ ॥
मायया शिशुरूपी च तमुवाच जनार्द्दनः ।
सस्मितो विनयं कृत्वा भक्तिनम्रात्मकन्धरः ॥ ६ ॥

शिशुरुवाच ।

कथं रुष्टोऽसि भगवन् भवान् मां कारणं वद ।
त्रैलोक्यं भस्मसात् कर्तुमुद्यतोऽसि निरर्थकम् ॥ ७ ॥
त्वमेव भृगुणा शप्तो भृगोश्च दमनं कुरु ।
एकापराधात् त्रैलोक्यं भस्मीकर्तुं न चार्हसि ॥ ८ ॥
विश्वञ्च ब्रह्मणा सृष्टं तस्य पाता स्वयं हरिः ।
संहर्त्ता भगवान् रुद्रएवमेव क्रमो भवेत् ॥ ९ ॥
तत्कथं भस्मसात् कर्तुमीश्वरे शङ्करे स्थिते ।
रचितारं हरिं जित्वा संहारं कुरु सत्वरम् ॥ १० ॥

इत्युक्त्वा ब्राह्मणवटुः शरपत्रं पुरःस्थितम् ।
अतिशुष्कं करे धृत्वा दग्धं कर्त्तुं ददौ मुदा ॥ ११ ॥
दृष्ट्वा शुष्केन्धने वह्निर्लेलिहानो भयानकः ।
स वव्रे शिखया विप्रं मेघेन शशिनं यथा ॥ १२ ॥
न च दग्धं शुष्कपत्रं लोमैकञ्च शिशोस्तथा ।
दृष्ट्वा व्रीड़ायुतो वह्निर्निस्तब्धो हि शिशोः पुरः ॥१३॥
कृत्वा वह्नेर्दर्पभङ्गमन्तर्धानं चकार सः ।
वह्निः स्वमूर्त्तिं संहृत्य स्वस्थानं भीतवद्ययौ ॥ १४ ॥
उक्तो वह्नेर्दर्पभङ्गः परं वै श्रोतुमिच्छसि ।
नित्यनूतनमाख्यानं देवानां दर्पमोचनम् ॥ १५ ॥

श्रीराधिकोवाच ।

शेषाणां दर्पभङ्गञ्च क्रमेण कथय प्रभो ।
कथापीयूषधारां ते श्रुत्वा तृप्येत को भुवि ॥ १६ ॥

श्रीनारायण उवाच ।

राधिकावचनं श्रुत्वा सस्मितो भगवान् प्रभुः ।
कथां कथितुमारेभे श्रुत्वा रम्यां पुरातनीम् ॥ १७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे अग्निदर्पमोचनं नाम
एकोनपञ्चाशत्तमोऽध्यायः ।

---

# पञ्चाशत्तमोऽध्यायः ।

——:०:——

श्रीकृष्ण उवाच ।

दुर्वाससो दर्पभङ्गं कथयामि शृणु प्रिये ।
महामुनेर्योगिनश्च रुद्रांशस्यातितेजसः ॥ १ ॥
एकदा चाम्बरीषश्च कृत्वा च द्वादशीव्रतम् ।
पारणं कर्तुमारेभे भोजयित्वा द्विजान् बहून् ॥ २ ॥
एतस्मिन्नन्तरे तत्र चाजगाम मुनिः स्वयम् ।
क्षुधार्तश्च तृषार्तश्च विष्णुव्रतपरायणः ॥ ३ ॥
मां भोजय महाभोगेत्येवं स नृपमुक्तवान् ।
राजा भक्त्या ददौ तस्मै परमान्नं सुधोपमम् ॥ ४ ॥
सकेशं पायसं दृष्ट्वा राजानं शप्तुमुद्यतः ।
जटां निकृत्य शिरसः स्थापयामास भूतले ॥ ५ ॥
जटामध्यात् समुद्भूतो ज्वलदग्निशिखोपमः ।
सप्ततालप्रमाणश्च पुरुषः प्रलयान्तकः ॥ ६ ॥
नृपश्रेष्ठं स राजानं कोपेन हन्तुमुद्यतः ।
भयेन कम्पिताः सर्वे शुष्ककण्ठोष्ठतालुकाः ॥ ७ ॥
सस्मार च महाभीतो राजा मम पदाम्बुजम् ।
सर्वविघ्नस्योपशमः स्मृतिमात्राद्बभूव ह ॥ ८ ॥
एतस्मिन्नन्तरे चक्रं दुर्निवार्य्यं सुदर्शनम् ।
तेजसा मम तुल्यञ्च कोटिसूर्य्यप्रभोपमम् ॥ ९ ॥
आविर्बभूव सहसा सभामध्ये च घूर्णितम् ।
निकृत्य कृत्यापुरुषं दुद्राव मुनिपुङ्गवः ॥ १० ॥

सशैलसागरां पृथ्वीं काञ्चनीं भूमिमुत्तमाम् ।
भ्रामयित्वा महीं सर्वां पुनर्दुद्राव तं मुनिम् ॥ ११
धावन्तं मुक्तकेशं तं भीतं कातरमातुरम् ।
तेजसाच्छाद्य सूर्य्यं तं दीप्तिं कुर्वन्तमुत्तमाम् ॥ १
कैलासं सप्तवर्गञ्च ब्रह्मलोकमनामयम् ।
विप्रेन्द्रो भ्रमणं कृत्वा वैकुण्ठं शरणं ययौ ॥ १३ ॥
पादपद्मे पतन्तञ्च ददर्श विप्रपुङ्गवम् ।
कृपया च कृपासिन्धुर्ददौ विप्राय निर्भयम् ॥ १४ ॥
नारायणवरेणैव बभूव विज्वरो द्विजः ।
पुनर्ययौ हरिं स्तुत्वा नृपगेहं तदाज्ञया ॥ १५ ॥
राजा मुनीन्द्रं सम्प्राप्य भोजयामास पायसम् ।
स्वयञ्च पारणं चक्रे सस्त्रीकः सहबान्धवः ॥ १६ ॥
राजानमाशिषं कृत्वा भुक्त्वा विप्रो गृहं ययौ ।
मया नियोजितं चक्रं भक्तानां रक्षणाय च ॥ १७ ॥
नश्यन्ति सर्वे प्रलये न मे भक्तः प्रणश्यति ।
सर्वे देवा मम प्राणा भक्ताः प्राणाधिका मम ॥ १८
त्वञ्च लक्ष्मीर्महामाया सावित्री वा सरस्वती ।
ब्रह्मा शम्भुरनन्तश्च धर्मश्च ब्राह्मणास्तथा ॥ १९ ॥
गोपाङ्गनाश्च गोपाश्च सर्वे प्रियतमा मम ।
तेभ्यः प्रियाः परा भक्ताः प्रियो भक्तान्न कश्चन ॥ २०
दत्त्वा सुदर्शनं चक्रं भक्तानां रक्षणाय च ।
तथापि न प्रतीतिर्मे स्वयं द्रष्टुं प्रयामि तान् ॥ २१
दुर्वाससो दर्पभङ्गः श्रुतो मत्तः सुरेश्वरि ।
आज्ञापय महाभागे किम्भूयः श्रोतुमिच्छसि ॥ २२

श्रीराधिकोवाच ।

धन्वन्तरेर्दर्पभङ्गं कथयस्व जगद्गुरो ।
पुराणे गोपनीयञ्च श्रोतुं कौतूहलं मम ॥ २३ ॥

श्रीनारायण उवाच ।

राधिकावचनं श्रुत्वा जहास मधुसूदनः ।
कथां कथितुमारेभे श्रुतिरम्यां पुरातनीम् ॥ २४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे दुर्वाससो दर्पभङ्गो
नाम पञ्चाशत्तमोऽध्यायः ।

---

## एकपञ्चाशत्तमोऽध्यायः ।

श्रीकृष्ण उवाच ।

नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान् ।
पुरा समुद्रमथने समुत्तस्थौ महोदधेः ॥ १ ॥
सर्ववेदेषु निष्णातो मन्त्रतन्त्रविशारदः ।
शिष्यो हि वैनतेयस्य शङ्करस्योपशिष्यकः ॥ २ ॥
शिष्याणाञ्च सहस्रेणागतः कैलासमीश्वरि ।
ददर्श तक्षकं मार्गे लेलिहानं भयानकम् ॥ ३ ॥
लक्षनागैः परिवृतं शैलतुल्यं विषोल्बणम् ।
भोक्तुं कोपात् समायान्तमेवं दृष्ट्वा जहास च ॥ ४ ॥
दम्भी धन्वन्तरिः शिष्यो धृत्वा तक्षकमुल्बणम् ।
मन्त्रेण जृम्भितं कृत्वा निर्विषं तं चकार ह ॥ ५ ॥

अमूल्यं मणिरत्नञ्च जहार मस्तके स्थितम् ।
करेण भ्रामयित्वा च प्रेरयामास दूरतः ॥ ६ ॥
निश्चेष्टस्तक्षकस्तस्थौ तत्र मार्गे यथा मृतः ।
गणा निवेदयामासुर्गत्वा वासुकिसन्निधिम् ॥ ७ ॥
वासुकिस्तत्समाकर्ण्य प्रज्वलन्नतिकोपतः ।
सर्पान् प्रस्थापयामासासंख्यांश्चैव विषोल्बणान् ॥ ८ ॥
सर्पसेनाग्रणीनाञ्च मुख्यान् पञ्च विशारदान् ।
द्रोणकालीयकर्कोटपुण्डरीकधनञ्जयान् ॥ ९ ॥
सर्वे नागाः समाजग्मुर्यत्र धन्वन्तरिः स्वयम् ।
भयमापुः शिष्यगणा दृष्ट्वा नागानसंख्यकान् ॥ १० ॥
नागनिःश्वासवातेन सर्वे शिष्या मृता इव ।
निश्चेष्टाज्ञानरहिताः शेरते धरणीतले ॥ ११ ॥
धन्वन्तरिश्च भगवान् पीयूषवर्षणेन च ।
जीवयामास शिष्यांश्च मन्त्रेण च गुरुं स्मरन् ॥ १२ ॥
चेतनां कारयित्वा च शिष्याणाञ्च जगद्गुरुः ।
चकार जृम्भितं मन्त्रैः सर्पसङ्घं विषोल्बणम् ॥ १३ ॥
सर्वे बभूवुर्निश्चेष्टा जृम्भितास्ते मृता इव ।
कोऽपि नालं ततो देवि वार्तां दातुं गणेषु च ॥ १४ ॥
वासुकीर्बुबुधे सर्वं सर्वज्ञः सर्वसङ्कटम् ।
आजुहाव जगद्गौरीं भगिनीं ज्ञानरूपिणीम् ॥ १५ ॥

वासुकिरुवाच ।

मनसे त्वं समागच्छ नागान् रक्षातिसङ्कटात् ।
जगत्त्रये महाभागे पूजा तव भविष्यति ॥ १६ ॥
वासुकेर्वचनं श्रुत्वा प्रहस्योवाच कन्यका ।

वाक्यं पीयूषतुल्यञ्च विनयावनतस्थिता ॥ १७ ॥

मनसोवाच ।

नागेन्द्र शृणु मद्वाक्यं यास्यामि समरं प्रति ।
भद्राभद्रं दैवसाध्यं करिष्यामि यथोचितम् ॥ १८ ॥
तं गतं संहरिष्यामि लीलया समरस्थले ।
अहं यं निहनिष्यामि तं को रक्षितुमीश्वरः ॥ १९ ॥
यदि ब्रह्मादयो देवाः समायान्ति रणस्थले ।
तथापि तव शत्रुञ्च प्रजेष्यामि न संशयः ॥ २० ॥
गुरुर्मे भगवान् शेषः सिद्धमन्त्रञ्च दत्तवान् ।
नारायणस्य जगतामीशस्य परमाद्भुतम् ॥ २१ ॥
बिभर्मि कवचं कण्ठे परं त्रैलोक्यमङ्गलम् ।
संसारं भस्मसात् कृत्वा पुनः स्रष्टुमहं क्षमा ॥ २२ ॥
शिष्याहं मन्त्रशास्त्रेषु शम्भोर्भगवतः पुरा ।
महाज्ञानं दत्तवान् स मह्यञ्च कृपया विभुः ॥ २३ ॥
शम्भोश्च शिष्यो गरुड़ो गणयामि न तं ध्रुवम् ।
धन्वन्तरिस्तच्छिष्याणामेकः किं गणयामि तम् ॥ २४ ॥
इत्युक्त्वा सा जगामैका त्यक्त्वा नागगणान् रुषा ।
प्रणम्य श्रीहरिं शम्भुं शेषञ्च हृष्टमानसा ॥ २५ ॥
यत्र धन्वन्तरिर्देवः प्रसन्नवदनेक्षणः ।
तत्राजगाम सा देवी कोपरक्तेक्षणा रुषा ॥ २६ ॥
दृष्टिमात्रेण सर्वांश्च जीवयामास सुन्दरी ।
विपदृष्ट्या शत्रुशिष्यान्निश्चेष्टांश्च चकार ह ॥ २७ ॥
धन्वन्तरिस्तु भगवान् मन्त्रशास्त्रविशारदः ।
मन्त्रेण यत्नं कृतवान्नोत्थापयितुमीश्वरः ॥ २८ ॥

दृष्ट्वा धन्वन्तरिं देवी प्रहस्योवाच सत्वरम्।
बहुभक्तिमर्थयुक्ताञ्च साहङ्कारां सुरेश्वरि॥ २९॥

नमसोवाच।

मन्त्रार्थं मन्त्रशिल्पञ्च मन्त्रभेदं महौषधम्।
वद जानासि किं सिद्धशिष्योऽसि गरुड़स्य च॥ ३०
अहञ्च वैनतेयश्च शिष्यौ शम्भोश्च विश्रुतौ।
सुकल्पकालं सुचिरमहं धन्वन्तरे शृणु॥ ३१॥
इत्युक्त्वा सरसः पद्मं समानीय जगत्प्रसूः।
मन्त्रसम्बलितं कृत्वा प्रेरयामास कोपतः॥ ३२॥
दृष्ट्वागतं पद्मपुष्पं ज्वलदग्निशिखोपमम्।
धन्वन्तरिश्च निःश्वासैर्भस्मसात्तच्चकार ह॥ ३३॥
तच्च धन्वन्तरिर्दृष्ट्वा समन्त्रेणमुष्टिना।
चकार निष्फलं भस्म तां प्रहस्यावलीलया॥ ३४॥
देवी जग्राह शक्तिञ्च ग्रीष्मसूर्य्यसमप्रभाम्।
मन्त्रसंवलितां कृत्वा प्रेरयामास तं रिपुम्॥ ३५॥
दृष्ट्वा जाज्वल्यमानां तां शक्तिं धन्वन्तरिः स्वयम्।
विष्णुदत्तेन शूलेन स तु चिच्छेद लीलया॥ ३६॥
ताञ्च शक्तिं वृथा दृष्ट्वा प्रजज्वालेश्वरी रुषा।
जग्राह नागपाशञ्च घोरमव्यर्थमुल्वणम्॥ ३७॥
नागलक्षसमायुक्तं सिद्धमन्त्रेण मन्त्रितम्।
प्रेरयामास कोपेन कालान्तकसमप्रभम्॥ ३८॥
धन्वन्तरिर्नागपाशं दृष्ट्वा च सस्मितो मुदा।
सस्मार गरुड़ं तूर्णमाजगाम खगेश्वरः॥ ३९॥
सर्पास्त्रमागतं दृष्ट्वा गरुड़ो हरिवाहनः।

विधाय चक्षुना शीघ्रं बुभुजे क्षुधितश्चिरम् ॥ ४० ॥
नागास्त्रं निष्फलं दृष्ट्वा कोपरक्तेक्षणा भृशम् ।
जग्राह भस्ममुष्टिञ्च शिवदत्तां पुरा प्रिये ॥ ४१ ॥
भस्ममुष्टिं मन्त्रपूतां दृष्ट्वा च प्रेरितां यथा ।
पक्षवातेन चिक्षेप शिष्यं पश्चान्निधाय च ॥ ४२ ॥
निरस्तां भस्ममुष्टिञ्च दृष्ट्वा देवी चुकोप ह ।
जग्राह शूलमव्यर्थं हन्तुं धन्वन्तरिं स्वयम् ॥ ४३ ॥
शिवदत्तञ्च शूलञ्च शतसूर्य्यसमप्रभम् ।
अव्यर्थं शूलं लोकेषु प्रलयाग्निसमप्रभम् ॥ ४४ ॥
अथ ब्रह्मा तथा शम्भुराजगाम रणाजिरम् ।
धन्वन्तरेश्च रक्षार्थं सम्मानार्थं खगस्य च ॥ ४५ ॥
दृष्ट्वा शम्भुं जगद्धोरो विधिञ्च जगतां पतिम् ।
भक्त्या ननाम तावेव निःशङ्का शूलधारिणी ॥ ४६ ॥
धन्वन्तरिश्च गरुड़ः प्रणनाम सुरेश्वरौ ।
तुष्टाव परया भक्त्या तौ च चक्रतुराशिषम् ॥ ४७ ॥
उवाच ब्रह्मा मधुरं हितं धन्वन्तरिं मुदा ।
पूजार्थं मनसायाश्च लोकानां हितकाम्यया ॥ ४८ ॥

ब्रह्मोवाच ।

धन्वन्तरे महाभाग सर्वशास्त्रविशारद ।
रणं ते मनसासार्द्धं न हि साम्यञ्च मे मतम् ॥ ४९ ॥
शिवदत्तेन शूलेन दुर्निवार्य्येण सर्वतः ।
त्रैलोक्यं भस्मसात्कर्त्तुं क्षमेयं त्रिदशेश्वरी ॥ ५० ॥
ध्यानं कौथुमशाखोक्तं कृत्वा भक्त्या समाहितः ।
दत्त्वा षोड़शोपचारं देव्याश्च कुरु पूजनम् ॥ ५१ ॥

आस्तिकोक्तेन स्तोत्रेण स्तवनं कर्तुमर्हसि ।
परितुष्टा च मनसा वरं तुभ्यं प्रदास्यति ॥ ५२ ॥
ब्रह्मणो वचनं श्रुत्वा चकारानुमतिं शिवः ।
वैनतेयश्च सम्प्रीत्या बोधयामास यत्नतः ॥ ५३ ॥
एषाञ्च वचनं श्रुत्वा स्नात्वा शुचिरलङ्कृतः ।
विधिं पुरोहितं कृत्वा पूजां कर्तुं समुद्यतः ॥ ५४ ॥

धन्वन्तरिरुवाच ।

इहागच्छ जगद्गौरि गृहाण मम पूजनम् ।
पूज्या त्वं त्रिषु लोकेषु पुरा काश्यपकन्यके ॥ ५५ ॥
त्वया जितं जगत् सर्वं देवि विष्णुस्वरूपया ।
तेन तेऽस्त्रप्रयोगश्च न कृतो रणभूमिषु ॥ ५६ ॥
इत्युक्त्वा संयतो भूत्वा भक्तिनम्रात्मकन्धरः ।
गृहीत्वा शुक्लकुसुमं ध्यानं कर्त्तुं समुद्यतः ॥ ५७ ॥
चारुचम्पकवर्णाभां सर्वाङ्गसुमनोहराम् ।
ईषद्धास्यप्रसन्नास्यां शोभितां सूक्ष्मवाससा ॥ ५८ ॥
सुचारुकबरीशोभां रत्नाभरणभूषिताम् ।
सर्वाभयप्रदां देवीं भक्तानुग्रहकातराम् ॥ ५९ ॥
सर्वविद्याप्रदां शान्तां सर्वविद्याविशारदाम् ।
नागेन्द्रवाहिनीं देवीं भजे नागेश्वरीं पराम् ॥ ६० ॥
ध्यात्वैवं कुसुमं दत्त्वा नानाद्रव्यसमन्वितम् ।
दत्त्वा षोड़शोपचारं पूजयामास तां प्रिये ॥ ६१ ॥
स्तोत्रं चकार यत्नाच्च पुलकाञ्चितविग्रहः ।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ ६२ ॥

धन्वन्तरिरुवाच ।

नमः सिद्धिस्वरूपायै सिद्धिदायै नमो नमः ।
नमः कश्यपकन्यायै वरदायै नमो नमः ॥ ६३ ॥
नमः शङ्करकन्यायै शङ्करायै नमो नमः ।
नमस्ते नागवाहिन्यै नागेश्वर्यै नमो नमः ॥ ६४ ॥
नम आस्तीकजननि जनन्यै जगतां मम ।
नमो जगत्कारणायै जरत्कारुस्त्रियै नमः ॥ ६५ ॥
नमो नागभगिन्यै च योगिन्यै च नमो नमः ।
नमश्चिरं तपस्विन्यै सुखदायै नमो नमः ॥ ६६ ॥
नमस्तपस्यारूपायै फलदायै नमो नमः ।
सुशीलायै च साध्व्यै च शान्तायै च नमो नमः ॥ ६७ ॥
इत्येवमुक्त्वा भक्त्या च प्रणनाम प्रयत्नतः ।
तुष्टा देवी वरं दत्त्वा सत्वरं स्वालयं ययौ ॥ ६८ ॥
ब्रह्मरुद्रवैनतेयाः समाजग्मुर्निजालयम् ।
धन्वन्तरिश्च भगवान् जगाम निजमन्दिरम् ॥ ६९ ॥
जग्मुर्नागाः प्रहृष्टाश्च फणाराजिविराजिताः ।
इत्येवं कथितः सर्वः स्तवराजो मया तव ॥ ७० ॥
विधिना मातरं भक्तिमास्तिकश्च चकार ह ।
तदा तुष्टा जगद्गौरी पुत्रं तं मुनिपुङ्गवम् ॥ ७१ ॥
इदं स्तोत्रं महापुण्यं भक्तियुक्तश्च यः पठेत् ।
वंशजानां नागभयं नास्ति तस्य न संशयः ॥ ७२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे धन्वन्तरिदर्पभङ्ग-मनसा-
विजयो नामैकपञ्चाशत्तमोऽध्यायः ।

# द्विपञ्चाशत्तमोऽध्यायः ।

---

श्रीकृष्ण उवाच ।

सर्वेषां दर्पभङ्गश्च कथितश्च श्रुतस्त्वया ।
क्षुद्राणां महताञ्चैव कृत एव न संशयः ॥ १ ॥
अधुना च समुत्तिष्ठ गच्छ वृन्दावनं वनम् ।
गोपिका विरहार्त्ताश्च शीघ्रं पश्यामि सुन्दरि ॥ २ ॥

श्रीनारायण उवाच ।

इत्येवं वचनं श्रुत्वा मानिनी रसिकेश्वरी ।
उवाच कृष्णं नय मां न शक्ता गन्तुमीश्वर ॥ ३ ॥
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः ।
मामारुहेत्येवमुक्त्वा सोऽन्तर्धानं चकार ह ॥ ४ ॥
सा मनोयायिनी राधा कृत्वा च रोदनं क्षणम् ।
इतस्ततस्तमन्विष्य वृन्दारण्यं जगाम सा ॥ ५ ॥
विवेश चन्दनवनं रुदन्ती शोककातरा ।
ददर्श गोपिकास्तत्र शोकार्त्ता भयविह्वलाः ॥ ६ ॥
ताम्रास्या घूर्णनयना भ्रमन्तीः सर्वकाननम् ।
नाथ नाथेति कुर्वन्तीर्निराहारा रुषान्विताः ॥ ७ ॥
ता दृष्ट्वा राधिका सा च प्रेमविच्छेदकातरा ।
कथयामास वृत्तान्तं मलयभ्रमणादिकम् ॥ ८ ॥
ताभिः सार्धञ्च सा राधा रुरोद विरहातुरा ।
हा नाथ नाथेत्युच्चार्य्य विलप्य च मुहुर्मुहुः ॥ ९ ॥

विनिन्द्य कृष्णं कोपेन तर्जयामास च क्षणम् ।
क्षणं शरीरमुत्स्रष्टुं कोपात् सर्वाः समुद्यताः ॥ १० ॥
एतस्मिन्नन्तरे कृष्णस्तत्र चन्दनकानने ।
स्वात्मानं दर्शयामास राधिकां गोपिकागणम् ॥ ११ ॥
राधा गोपाङ्गनाभिश्च दृष्ट्वा प्राणेश्वरं मुदा ।
सस्मिता च प्रदुद्राव पुलकाञ्चितविग्रहा ॥ १२ ॥
तूर्णं कृष्णं समाश्लिष्य जहार मुरलीं रुषा ।
मालाञ्च पीतवसनं भग्नं कृत्वा च मानिनी ॥ १३ ॥
पुनः संधारयामास वस्त्रं मालां मनोहराम् ।
विनोदमुरलीं तुष्टा वृन्दावनविनोदिनी ॥ १४ ॥
चन्दनागुरुकस्तूरीकुङ्कुमाक्तञ्च कातरम् ।
मुहुर्मुहुर्मुखं वीक्ष्य चुचुम्ब परमादरम् ॥ १५ ॥
क्षणं त तर्जयामास क्षणं स्तोत्रं चकार ह ।
सकर्पूरञ्च ताम्बूलं क्षणं तस्मै ददौ मुदा ॥ १६ ॥
अथ गोपाङ्गनाः सर्वा रुरुदुः प्रेमविह्वलाः ।
सर्वं निवेदयामासुः स्वदुःखं विरहोद्भवम् ॥ १७ ॥
देहत्यागञ्च स्नानञ्च स्वाहारस्य विसर्जनम् ।
वने वनेऽहर्निशञ्च शश्वद्भ्रमणमेव च ॥ १८ ॥
क्षणं तं भर्त्सयामासुः स्तोत्रं चक्रुः क्षणं मुदा ।
क्षणं ददुर्भूषणञ्च क्षणं तस्मै च चन्दनम् ॥ १९ ॥
काश्चिदूचुः प्राणचौरं पश्य रक्षेति सन्ततम् ।
एवं पुनर्न कर्त्तव्यमनेनेति च काश्चन ॥ २० ॥
काश्चिदूचुरिमं मध्ये यूयं कुरुत सत्वरम् ।
निबध्य प्रेमपाशेन हृदये चेति काश्चन ॥ २१ ॥

काश्चिदूचुरयं नास्ति प्रतीतिर्न कदाचन।
यद्वाचेतनचोरश्च पश्य पश्येति काश्चन ॥ २२ ॥
काश्चिदूचुर्निष्ठुरोऽयं नरघातीति कोपतः।
न पुनर्वदतेमञ्च काश्चनेति च नारद ॥ २३ ॥
निर्जनानि च रम्याणि यानि यानि वनानि च।
भ्रमियुर्गोपिकास्तानि कृष्णेन सह कौतुकात् ॥२४॥
एवं तं गोपिकाः सर्वा मध्ये कृत्वा सदीश्वरम्।
ययुर्वनान्तरे यत्र सुरम्यं रासमण्डलम् ॥ २५ ॥
रासं गत्वा स्वर्णपीठे तस्थौ स रसिकेश्वरः।
निशि भाति यथाकाशे चन्द्रस्तारागणैः सह ॥ २६ ॥
नानाभूर्तीर्विधायात्र सह ताभिर्जनार्द्दनः।
चकार च पुनः क्रीड़ां कामुकीनां मनोहराम् ॥२७॥
स्वयं राधाकरे धृत्वा पूर्वोक्तं रतिमन्दिरम्।
विश्वकर्मविनिर्माणमारुरोह स्मरातुरः ॥ २८ ॥
चन्दनागुरुकस्तूरीकुङ्कुमाक्तं सुवासितम्।
तत्र चम्पकतल्पेषु सुष्वाप च तया सह ॥ २९ ॥
नानाप्रकारशृङ्गारं कामशास्त्रविशारदः।
चकार कामी क्रीड़াञ्च कामिन्या सह कौतुकी ॥३०॥
बभूव सुरतिस्तत्र सुचिरञ्च तयोर्मुने।
रतिनिष्ठा तयो रम्या विरतिर्नास्ति तत्क्षणम् ॥३१॥
एवं तौ तस्थतुस्तत्र राधाकृष्णौ रसोत्सुकौ।
तस्थुस्ता गोपिकाभिश्च सुरतौ कृष्णमूर्त्तयः ॥ ३२ ॥

नारद उवाच।

आदौ राधां समुच्चार्य पश्चात् कृष्णं विदुर्बुधाः।

निमित्तमस्य मां भक्तं वद भक्तजनप्रिय ॥ ३३ ॥

श्रीनारायण उवाच ।

निमित्तमस्य त्रिविधं कथयामि निशामय ।
जगन्माता च प्रकृतिः पुरुषश्च जगत्पिता ।
गरीयसी त्रिजगतां माता शतगुणैः पितुः ॥ ३४ ॥
राधाकृष्णेति गौरीशेत्येवं शब्दः श्रुतौ श्रुतः ।
कृष्णराधेशगौरीति लोकेन च कदा श्रुतः ॥ ३५ ॥
प्रसीद रोहिणीचन्द्र गृहाणार्घ्यमिमं मम ।
गृहाणार्घ्यं मया दत्तं संज्ञया सह भास्कर ॥ ३६ ॥
प्रसीद कमलाकान्त गृहाण मम पूजनम् ।
इति दृष्टं सामवेदे कौथुमे मुनिसत्तम ॥ ३७ ॥
राशब्दोच्चारणादेव स्फीतो भवति माधवः ।
धाशब्दोच्चारणात् पश्चाद्धावत्येव ससम्भ्रमः ॥ ३८ ॥
आदौ पुरुषमुच्चार्य्य पश्चात्प्रकृतिमुच्चरेत् ।
स भवेन्मातृघाती च वेदातिक्रमणे मुने ॥ ३९ ॥
त्रैलोक्ये भारतं धन्यं कर्म्मचेतच्च पुण्यदम् ।
ततो वृन्दावनं पुण्यं राधापादाब्जरेणुना ॥ ४० ॥
षष्टिवर्षसहस्राणि तपस्तप्तञ्च वेधसा ।
राधिकाचरणाम्भोजपादरेणूपलब्धये ॥ ४१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे [illegible]णनारदसंवादे
श्रीकृष्णजन्मखण्डे राधा[illegible] रासवर्णनं
नाम द्विपञ्चाशत्[illegible]ध्यायः ।

# त्रिपञ्चाशत्तमोऽध्यायः ।

नारद उवाच ।

समतीते पूर्णमासे किञ्चकार जगत्पतिः ।
रहस्यं किं बभूवाथ तद्भवान् वक्तुमर्हति ॥ १

श्रीनारायण उवाच ।

रासं निर्वृत्य रासे च रासेश्वर्या समन्वितः ।
स्वयं रासेश्वरस्तस्माद्यमुनापुलिनं ययौ ॥ २ ॥
तत्र स्नात्वा जलं पीत्वा निर्मलं निर्मले जले ।
सार्धं गोपाङ्गनाभिश्च जलक्रीड़ाञ्चकार सः ॥ ३ ॥
ततो जगाम भगवान् भाण्डीरं राधया सह ।
गोपाङ्गनाश्च स्वगृहान् प्रययुर्विरहातुराः ॥ ४ ॥
क्रीड़ाञ्चकार रहसि भाण्डीरे मालतीवने ।
मालतीपुष्पशय्यायां रम्यायां रमणोत्सुकः ॥ ५ ॥
कृत्वा क्रीड़ाञ्च तत्रैव वासन्तीकाननं ययौ ।
रेमे तत्रैव रासेशो वसन्ते सुमनोहरे ॥ ६ ॥
तत्रैव रमणं कृत्वा ययौ चन्दनकाननम् ।
चन्दनोचितसर्वाङ्गो गृहीत्वा चन्दनोचितम् ॥ ७ ॥
रम्ये चन्दनतल्पे च स्निग्धे चन्दनपल्लवे ।
पूर्णचन्द्रे समुदिते विजहार तया सह ॥ ८ ॥
कृत्वा विहारं तत्रैव ययौ चम्पककाननम् ।
रम्ये चम्पकतल्पे च चकार रतिमीश्वरीम् ॥ ९ ॥

रतिं निवृत्य तत्रैव ययौ पद्मवनं प्रभुः।
पद्मपत्रसमाकीर्णे तल्पेऽतिसुमनोहरे ॥ १० ॥
सार्धं तत्र पद्ममुख्या शीतेन पद्मवायुना।
चकार सुखसम्भोगं ययौ निद्रां तया सह ॥ ११ ॥
विहाय निद्रां निद्रेशो ददर्श निद्रितां प्रियाम्।
शयानां पद्मतल्पे च सुखसम्भोगमात्रतः ॥ १२ ॥
दृष्ट्वा मुखञ्च घर्माक्तं शरच्चन्द्रविनिन्दितम्।
अतिसंलुप्तसिन्दूरं लुप्तं कज्जलमुल्वणम् ॥ १३ ॥
संलुप्ताधररागञ्च संलुप्तगण्डपत्रकम्।
विस्रस्तकबरीभारं नेत्रोत्पलविमुद्रितम् ॥ १४ ॥
रत्नकुण्डलयुग्मेनामूल्येन परिशोभितम्।
राजितं मौक्तिकेनैव गजराजोद्भवेन च ॥ १५ ॥
प्रेम्णा स्वसूक्ष्मवस्त्रेण वह्निशुद्धेन माधवः।
मार्जयामास भक्त्या च तद्वक्त्रं भक्तवत्सलः ॥ १६ ॥
केशसंमार्जनं कृत्वा निर्माय कबरीं हरिः।
माधवीमालतीमालाजालेन परिशोभिताम् ॥ १७ ॥
रत्नपट्टसूत्रबद्धां वामवक्त्रां मनोहराम्।
अतीववर्तुलाकारां कुन्दपुष्पसुशोभिताम् ॥ १८ ॥
ददौ सिन्दूरतिलकमधश्चन्दनमुज्ज्वलम्।
कस्तूरीविन्दुना सार्द्धं परितः परिशोभिताम् ॥ १९ ॥
चकार पत्रकं गण्डयुग्मे चित्रविचित्रितम्।
प्रददौ कज्जलं भक्त्या नेत्रोत्पलसमुज्ज्वलम् ॥ २० ॥
चकाराधररागञ्च राधायाश्चानुरागतः।
कर्णभूषणयुग्मञ्च चकारातीवनिर्मलम् ॥ २१ ॥

अमूल्यरत्नहारञ्च स्तनभारयुगोज्ज्वलम् ।
ददौ कण्ठे च वैकुण्ठो मणिराजिविराजितम् ॥ २२
वह्निशुद्धांशुकं दिव्यममूल्यं विश्वरत्नतः ।
वासयामास वसनं कस्तूरीकुङ्कुमाक्तकम् ॥ २३ ॥
प्रददौ पादयुगले रत्नमञ्जीररञ्जितम् ।
चकारालक्तकं भक्त्या पादाङ्गुलिनखेषु च ॥ २४ ॥
चकार सेवां सेव्याया: सेव्यस्त्रिजगतां सताम् ।
अहो सेवकसंभक्त्या श्वेतेन चामरेण च ॥ २५ ॥
सर्वभावविदां श्रेष्ठो बोधज्ञ: कामशास्त्रवित् ।
कामिनीं बोधयामास वासयामास वक्षसि ॥ २६ ॥
प्रेम्णा च प्रददौ तस्यै सद्रत्नदर्पणं शुभम् ।
सुवेशदर्शनार्थञ्च मुखचन्द्रञ्च मार्जितुम् ॥ २७ ॥
नानापुष्पैर्विरचितामम्लानां चन्दनोच्चिताम् ।
गण्डे सौभाग्ययुक्ताया: सौभाग्येन ददौ हरि: ॥ २८ ॥
कस्तूरीकुङ्कुमाक्तञ्च सुगन्धिचन्दनं तत: ।
ददौ प्रियाया: सर्वाङ्गे प्रिय: प्रेमभरेण च ॥ २९ ॥
पारिजातस्य कुसुमं दत्तं रहसि ब्रह्मणा ।
प्रददौ तत्कवर्य्याञ्च ललितायाञ्च नारद ॥ ३० ॥
कमलं निर्मलं दिव्यं सहस्रदलमुज्ज्वलम् ।
शिवेन दत्तं रहसि ददौ तद्दक्षिणे करे ॥ ३१ ॥
अतिसारं मणीन्द्राणां मणिरत्नञ्च कौस्तुभम् ।
दत्तं रहसि धर्मेण तस्यै सुप्रीतये ददौ ॥ ३२ ॥
आसवं रत्नपात्रस्थं दस्रदत्तञ्च निर्जने ।
पानार्थं प्रददौ तस्यै कामोन्मादकरं परम् ॥ ३३ ॥

मालतीमाधवीकुन्दमन्दारचम्पकादिकम् ।
पुष्पं सद्रत्नपात्रस्थं तस्यै सुप्रीतये ददौ ॥ ३४ ॥
सुदुर्लभञ्च ताम्बूलं कर्पूरादिसुसंस्कृतम् ।
भक्षणं कारयामास समयज्ञश्च तां प्रियाम् ॥ ३५ ॥
सुदुर्लभञ्च विश्वेषु वाक्पतेः परिनिर्मितम् ।
अनुत्तममसूल्यञ्च वरुणेन रहःस्थले ॥ ३६ ॥
अतिसूक्ष्ममनुपमं दत्तं भक्त्या विराजितम् ।
वासयामास वसनं कृत्वा नग्नाञ्च कौतुकात् ॥ ३७ ॥
देवराजेन दत्तञ्च गजराजेन्द्रमौक्तिकम् ।
नासिकाभूषणञ्चारु तस्यै सुप्रीतये ददौ ॥ ३८ ॥
एतस्मिन्नन्तरे तत्र सुशीलाद्याश्च गोपिकाः ।
षष्टिः सत्सहचर्य्यश्च राधायाः सुप्रतिष्ठिताः ॥ ३९ ॥
षष्टिसत्कोटिगोपीभिः सार्द्धं संहृष्टमानसाः ।
आययुः पादचिह्नेन प्रियस्य वहतः प्रियाम् ॥ ४० ॥
काश्चिच्चन्दनहस्ताश्च काश्चिच्चामरवाहिकाः ।
काश्चित् कस्तूरीहस्ताश्च मालाहस्ताश्च काश्चन ॥ ४१ ॥
काश्चित् सिन्दूरहस्ताश्च काश्चित् कङ्कतिकाकराः ।
काश्चिदलक्तककरा वस्त्रहस्ताश्च काश्चन ॥ ४२ ॥
काश्चिद्दर्पणहस्ताश्च पुष्पपात्रधरा वराः ।
काश्चित् क्रीडापद्महस्ता मालाहस्ताश्च काश्चन ॥ ४३ ॥
काश्चिदासवहस्ताश्च काश्चिद्भूषणवाहिकाः ।
करतालकराः काश्चिन्मृदङ्गवाहिकाः पराः ॥ ४४ ॥
स्वरयन्त्रकराः काश्चिद्वीणाहस्ताश्च काश्चन ।
षट्त्रिंशद्रागरागिण्यो गोपिकारूपधारिकाः ।

गोलोकादागता याश्च भारतं राधया सह ॥ ४५ ॥
काश्चिज्जगुश्च नन्टतुस्तत्रागत्य च काश्चन ।
काश्चिच्चक्रुस्तथा सेवां राधायाः श्वेतचामरैः ॥ ४६ ॥
काश्चिच्चक्रुश्च देव्याश्च पादसंवाहनं मुदा ।
काचिद्ददौ च ताम्बूलं भक्षणार्थं महामुने ॥ ४७ ॥
एवं कौतुकयुक्तश्च पुण्ये वृन्दावने वने ।
प्रतस्थौ गोपिकासार्द्धं राधावक्षःस्थलस्थितः ॥ ४८ ॥
क्षणं पपौ च माध्वीकं प्रियया सह माधवः ।
क्षणञ्चखाद ताम्बूलं क्षणं निद्रां ययौ मुदा ॥ ४९ ॥
क्षणं चकार शृङ्गारं रत्ननिर्मितमन्दिरे ।
क्षणं जलविहारञ्च चकार यमुनाजले ॥ ५० ॥
इत्येवं कथिता वत्स रासक्रीड़ा हरेरहो ।
स्वेच्छामयस्यात्मनश्च परिपूर्णतमस्य च ॥ ५१ ॥
निर्गुणस्य स्वतन्त्रस्य परस्य प्रकृतेः प्रभोः ।
ब्रह्मविष्णुशिवादीनामीश्वरस्य परस्य च ॥ ५२ ॥
कृष्णजन्मरहस्यञ्च बालक्रीड़नमीप्सितम् ।
उक्तं किशोरचरितं किम्भूयः श्रोतुमिच्छसि ॥ ५४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे श्रीकृष्णरासक्रीड़ावर्णनं
नाम त्रिपञ्चाशत्तमोऽध्यायः ।

---

# चतुःपञ्चाशत्तमोऽध्यायः ।



नारद उवाच ।

अतः परं किं रहस्यं बभूव मुनिसत्तम ।
कथं जगाम भगवान् मथुरां नन्दमन्दिरात् ॥ १ ॥
नन्दो दधार प्राणांश्च विच्छेदेन हरेः कथम् ।
गोपाङ्गना यशोदा च कृष्णैकतानमानसाः ॥ २ ॥
चक्षुर्निमेषविच्छेदाद् या राधा न हि जीवति ।
कथं दधार सा देवी प्राणान् प्राणेश्वरं विना ॥ ३ ॥
ये ये तत्सङ्गिनो गोपाः शयनाशनभोगतः ।
कथं विसस्मरुस्ते च तादृशं बान्धवं व्रजे ॥ ४ ॥
श्रीकृष्णो मथुरां गत्वा किं किं कर्म चकार सः ।
स्वर्गारोहणपर्य्यन्तं तद्भवान् वक्तुमर्हति ॥ ५ ॥

श्रीनारायण उवाच ।

कंसश्चकार यज्ञञ्च समाहूतो धनुर्मखम् ।
जगाम तत्र भगवान् तेन राज्ञा निमन्त्रितः ॥ ६ ॥
राजा प्रस्थापयामास चाक्रूरं भगवत्प्रियम् ।
अक्रूरः प्रेरितो राज्ञा गत्वा च नन्दमन्दिरम् ॥ ७
श्रीकृष्णञ्च गृहीत्वा च सगणं मथुरां गतः ।
कृष्णः श्रीमथुरां गत्वा जघान नृपतिं मुने ॥ ८ ॥
जघान रजकञ्चैव चाणूरं मुष्टिकं गजम् ।
चकार पित्रोरुद्धारं बान्धवानाञ्च बान्धवः ॥ ९ ॥

कुब्जया सह शृङ्गारं कृत्वा च कौतुकेन च ।
ताञ्च प्रस्थापयामास गोलोकं गोपिकापतिः ॥ १० ॥
चकार कृपया विष्णुर्मालाकारस्य मोचणम् ।
कृपया चोद्धवद्वारा बोधयामास गोपिकाः ॥ ११ ॥
तदोपनीतो भगवानवन्तीनगरं ययौ ।
चकार विद्याग्रहणं मुनेः सान्दीपिनेर्गुरोः ॥ १२ ॥
ततो जित्वा जरासन्धं निहत्य यवनेश्वरम् ।
उग्रसेनञ्च नृपतिञ्चकार विधिपूर्वकम् ॥ १३ ॥
गत्वा समुद्रनिकटं निर्माय द्वारकां पुरीम् ।
जहार रुक्मिणीं देवीं जित्वा नृपतिसङ्घकम् ॥ १४ ॥
कालिन्दीं लक्ष्मणां शैब्यां सत्यां जाम्बवतीं सतीम् ।
मित्रविन्दां नाग्नजितीं समुद्वाहञ्चकार सः ॥ १५ ॥
निहत्य नरकं भूपं रणेन दारुणेन च ।
पत्नीषोड़शसाहस्रं विहारञ्च चकार सः ॥ १६ ॥
जहार पारिजातञ्च जित्वा शक्रञ्च लीलया ।
चिच्छेद बाणहस्तांश्च जित्वा च चन्द्रशेखरम् ॥ १७ ॥
पौत्रस्य मोचणं कृत्वा पुनरागत्य द्वारकाम् ।
आत्मानं दर्शयामास लोकांश्च प्रतिमन्दिरम् ॥ १८ ॥
योगे च वसुदेवस्य तीर्थयात्राप्रसङ्गतः ।
प्राणाधिष्ठात्वदेवीञ्च ददर्श तत्र राधिकाम् ॥ १९ ॥
पूर्णे च शतवर्षे च सुदाम्नः शापमोचणे ।
पुनर्ययौ तया सार्द्धं पुण्यं वृन्दावनं वनम् ॥ २० ॥
पुनश्चतुर्दशाब्दञ्च तया सार्धं जगत्पतिः ।
चकार रासं रासे च पुण्यचेत्रे च भारते ॥ २१ ॥

पूर्णैकादशाब्दञ्च निवृत्य नन्दमन्दिरे ।
मथुरायां द्वारकायां पूर्णमब्दशतं विभुः ॥ २२ ॥
चकार भारहरणं पृथिव्यां पृथुविक्रमः ।
पञ्चविंशतिवर्षञ्च शतवर्षाधिकं मुने ।
तिष्ठन् जगाम गोलोकं पृथिव्याञ्च पुरातनः ॥ २३ ॥
यशोदायै च नन्दाय वृषभानाय धीमते ।
राधामात्रे कलावत्यै ददौ सामीप्यमोक्षणम् ॥ २४ ॥
कृष्णेन सार्द्धं गोपीभी राधिका च कुतूहलात् ।
बबन्ध धर्मसेतुञ्च वेदोक्तञ्च युगे युगे ॥ २५ ॥
इत्येवं कथितं सर्वं समासेन महामुने ।
श्रीकृष्णचरितं रम्यं चतुर्वर्गफलप्रदम् ॥ २६ ॥
ब्रह्मादिस्तम्बपर्य्यन्तं सर्वं नश्वरमेव च ।
भज तं परमानन्दं सानन्दं नन्दनन्दनम् ॥ २७ ॥
स्वेच्छामयं परं ब्रह्म परमात्मानमीश्वरम् ।
परमव्ययमव्यक्तं भक्तानुग्रहविग्रहम् ॥ २८ ॥
सत्यं नित्यं स्वतन्त्रञ्च सर्वेशं प्रकृतेः परम् ।
निर्गुणञ्च निरीहञ्च निराकारं निरञ्जनम् ॥ ३० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे श्रीकृष्णराधिकासंवादो
नाम चतुःपञ्चाशत्तमोऽध्यायः ।

———

# पञ्चपञ्चाशत्तमोऽध्यायः।

नारायण उवाच।

स एव भगवान् कृष्णः सर्वात्मा पुरुषः परः।
दुराराध्योऽतिसाध्यश्च सर्वाराध्यः सुखप्रदः ॥ १ ॥
निजभक्तातिसाध्यश्च भक्तस्याराध्य एव च।
शश्वद् दृश्यः स्वभक्तस्याभक्तस्यादृश्य एव च ॥ २ ॥
दुर्ज्ञेयं तस्य चरितं कार्यं हृदयमेव च।
बद्धास्तन्मायया सर्वे मोहिताश्च दुरन्तया ॥ ३ ॥
यद्भयाद्वाति वातोऽयं कूर्मो धत्ते निराश्रयः।
कूर्मोऽनन्तं विधत्ते च यद्भयेन निरन्तरम् ॥ ४ ॥
बिभर्ति शेषो विश्वञ्च यद्भयेन च नारद।
सहस्रशीर्षा पुरुषः शिरसश्चैकदेशतः ॥ ५ ॥
सप्तसागरसंयुक्ता सप्तद्वीपा वसुन्धरा।
शैलकाननसंयुक्ता पातालाः सप्त एव च ॥ ६ ॥
सप्त स्वर्गाश्च विविधा ब्रह्मलोकसमन्विताः।
एवं विश्वं त्रिभुवनं कृत्रिमं परिकीर्तितम् ॥ ७ ॥
यद्भयेन विधात्रा च प्रतिसृष्टौ च निर्मितम्।
एवं विश्वान्यसंख्यानि लोमकूपेर्महान् विराट् ॥ ८ ॥
यद्भयेन विधत्ते च यदंशो ध्यायते हि यम्।
विष्णुः पाति च संसारं यद्भयेन कृपानिधिः ॥ ९ ॥
कालाग्निरुद्रो यद्भीतः कालः संहरते प्रजाः।

मृत्युञ्जयो महादेवो यद्भयाद्ध्यायते च यम् ॥ १० ॥
षड्गुणैरनुरागैश्च विरागी विरतः सदा ।
यद्भयेन दहत्यग्निः सूर्य्यस्तपति यद्भयात् ॥ ११ ॥
यद्भयाद्वर्षतीन्द्रश्च मृत्युश्चरति जन्तुषु ।
यद्भयेन यमः शास्ता पापिनां धर्म एव च ॥ १२ ॥
धत्ते च धरणी लोकान् यद्भयेन चराचरान् ।
सूयते प्रकृतिः सृष्टौ यद्भयान्महदादिकम् ॥ १३ ॥
दुर्ज्ञेयं तदभिप्रायं को वा जानाति पुत्रक ।
यत्प्रभावं न जानन्ति ब्रह्मविष्णुमहेश्वराः ॥ १४ ॥
कथं जानामि तच्चेष्टामहं वत्स सुमन्दधीः ।
कथं जगाम मथुरां त्यक्त्वा वृन्दावनं वनम् ॥ १५ ॥
कथं तत्याज गोपीश्च राधां प्राणाधिकां प्रियाम् ।
यशोदां बान्धवादींश्च नन्दं वा नन्दनन्दनः ॥ १६ ॥
दर्पहा दर्पदः सोऽपि सर्वेषां सर्वदः सदा ।
बभञ्ज राधादर्पञ्च सुदाम्नः शापकारणात् ॥ १७ ॥
अन्येषां भावनाहेतोर्ब्रह्मप्राप्तिस्तथा भवेत् ।
एवं किञ्चिद्वितर्कञ्च कुरुते कमलोद्भवः ॥ १८ ॥
चकार दर्पभङ्गञ्च महाविष्णुः पुरा विभुः ।
ब्रह्मणश्च तथा विष्णोः शेषस्य च शिवस्य च ॥ १९ ॥
धर्मस्य च यमस्यापि साम्बस्य चन्द्रसूर्य्ययोः ।
गरुड़स्य च वह्नेश्च गुरोर्दुर्वाससस्तथा ॥ २० ॥
दौवारिकस्य भक्तस्य जयस्य विजयस्य च ।
सुराणामसुराणाञ्च भवतः कामशक्रयोः ॥ २१ ॥
लक्ष्मणस्यार्जुनस्यापि बाणस्य च भृगोस्तथा ।

सुमेरोश्च समुद्राणां वायोश्च वरुणस्य च ॥ २२ ॥
सरस्वत्याश्च दुर्गायाः पद्मायाश्च भुवस्तथा ।
सावित्र्याश्चैव गङ्गाया मनसायास्तथैव च ॥ २३ ॥
प्राणाधिष्ठातृदेव्याश्च प्रियायाः प्राणतोऽपि च ।
प्राणाधिकाया राधाया अन्येषामपि का कथा ॥२४॥
हृत्वा दर्पञ्च सर्वेषां प्रसादञ्च चकार सः ।
कर्ता हर्ता पालयिता स्रष्टा स्रष्टुश्च सर्वतः ॥ २५ ॥
यं स्तोतुमीशो नालञ्च पञ्चवक्त्रेण शङ्करः ।
स्तोतुं नालं चतुर्वक्त्रो विधाता जगतामपि ॥ २६ ॥
स्तोतुं नालमनन्तश्च सहस्रवदनैरहो ।
स्वयं विष्णुर्विश्वव्यापी नालं स्तोतुं जनार्दनः ॥ २७ ॥
महाविराट् न शक्तोऽपि यं स्तोतुं परमेश्वरम् ।
कम्पिता यस्य पुरतः प्रकृतिः परमात्मनः ॥ २८ ॥
सरस्वती जड़ीभूता यं स्तोतुं परमेश्वरम् ।
महिमानं न जानन्ति वेदा यस्य च नारद ॥ २९ ॥
इत्येवं कथितो ब्रह्मन् प्रभावः परमात्मनः ।
निर्गुणस्य च कृष्णस्य किम्भूयः श्रोतुमिच्छसि ॥ ३० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे श्रीकृष्णप्रभाववर्णनं नाम
पञ्चपञ्चाशत्तमोऽध्यायः ।

---

# षट्पञ्चाशत्तमोऽध्यायः ।

---

नारद उवाच ।

किमपूर्वं श्रुतं ब्रह्मन् रहस्यं परमाद्भुतम् ।
अनन्तचरितं धन्यमनन्तस्याच्युतस्य च ॥ १ ॥
कथं कृष्णो महाविष्णोर्दर्पभङ्गं चकार सः ।
अन्येषां वा कथमहो तद्भवान् वक्तुमर्हति ॥ २ ॥
स्वतः श्रीकृष्णचरितमतीवमधुरं श्रुतौ ।
अतीवमधुरं रम्यं काव्यं कविमुखात्ततः ॥ ३ ॥

श्रीनारायण उवाच ।

महाविष्णोरहङ्कारो बभूव सहसेति च ।
सर्वं मल्लोमकूपेषु विश्वान्येवाहमीश्वरः ॥ ४ ॥
संहारभैरवो भूत्वा तं जग्रास सलीलया ।
स्थितं मूर्द्धविशेषे च प्रसादं तं चकार सः ॥ ५ ॥
सर्वात्मानं ध्यायमानं स्तुतं भीतं कृपानिधिः ।
तच्छरीरं सुसम्पन्नं पुनरेव चकार सः ॥ ६ ॥
ब्रह्मणः सहसा ब्रह्मन्निति दर्पो बभूव ह ।
अहं त्रिजगतां धाता कर्त्ताहमीश्वरः स्वयम् ॥ ७ ॥
मत्परः पूजितो नास्ति मत्परः पूजितेन्द्रियः ।
इत्येवं मनसा कृत्वा बहुदर्पो बभूव ह ॥ ८ ॥
तं ब्रह्मणां समूहञ्च दर्शयामास तत्क्षणम् ।
गोलोके स्वसमीपे च वसन्तं पुरुषा विभोः ।
पञ्चवक्त्रं चतुर्वक्त्रं षड्वक्त्रञ्च ततोऽधिकम् ॥ ९ ॥

शतवक्त्रञ्च प्रत्येकं ब्रह्माण्डौघञ्च लीलया ।
त्यक्तुकामं स्वदेहञ्च व्रीड़या नतकन्धरम् ॥ १० ॥
पुनः प्रसादं कृपया तं चकार कृपानिधिः ।
कालेन मोहिनीद्वारा तमपूज्यं चकार सः ॥ ११ ॥
स्वकन्यां दर्शयित्वा तं सकामञ्च चकार ह ।
पुनस्तद्दर्पभङ्गञ्च शिवद्वारा चकार सः ॥ १२ ॥
तत्याज लज्जया देहं पुनर्देहं दधार सः ।
पुनश्चकार तं पूज्यं ब्रह्माणं ब्रह्मणः प्रभुः ॥ १३ ॥
ज्ञानं ददौ महाज्ञानी ज्ञानानन्दः सनातनः ।
विष्णोर्बभूव गर्वश्च जगत्पाताहमीश्वरः ॥ १४ ॥
तमात्मविस्मृतं कृष्णश्चकार रामजन्मनि ।
अहं विश्वं बिभर्मीति शेषदर्पो बभूव ह ॥ १५ ॥
तद्दर्पं गरुड़द्वारा चूर्णीभूतं चकार सः ।
एकदा पूजितो नागैर्गरुड़ः कृष्णवाहनः ॥ १६ ॥
न पूजितश्च शेषेण स्वदर्पेण पुरा मुने ।
गरुड़ेन जितं क्रोधात्तमनन्तं मनस्विनम् ॥ १७ ॥
चकार मोचणं तस्य श्रीकृष्णश्च कृपानिधिः ।
स्वयं शिवः स्वदर्पाच्च विवाहं न चकार सः ॥ १८ ॥
तं कृत्वा मायया मोहं कारयामास स्त्रीयुतम् ।
पुनर्जहार पत्नीञ्च दक्षकन्यां महासतीम् ॥ १९ ॥
वर्षं शुशोच तद्देहं क्रोड़े कृत्वा च शङ्करः ।
नानास्थानञ्च बभ्राम रुदन् शोकान्मुहुर्मुहुः ॥ २० ॥
जन्मान्तरे पुनः प्राप्य तां सतीं पार्वतीं मुदा ।
विसस्मार च स्वज्ञानं दत्तशप्तः पुनः शिवः ॥ २१ ॥

पुनश्चाङ्गिरसद्वारा स्मारयामास सत्वरम् ।
एकदा सरथः शम्भुः प्रेरितस्त्रिपुरे पुरा ॥ २२ ॥
हत्वा दैत्यं शिवद्वारा त्रिपुरारिं चकार तम् ।
सर्वं वरञ्च सर्वस्मै दातुं शम्भुः कृपानिधिः ॥ २३ ॥
स्वयं कल्पतरुर्भूत्वा प्रतिज्ञाञ्च चकार सः ।
वृकासुरोऽनुष्ठानञ्च कृत्वा वव्रे वरं विभुम् ॥ २४ ॥
दास्यामि हस्तं तन्मूर्ध्नि भस्मसाद्भवतु क्षणात् ।
जगाद जगतां नाथ ईप्सितं ते भविष्यति ॥ २५ ॥
इति लब्ध्वा वरं रुद्रात् गच्छन्तं शङ्करं विभुम् ।
हस्तं दातुञ्च तन्मूर्ध्नि प्राधावत्सत्वरं पुरा ॥ २६ ॥
अतीवभीतः शम्भुश्च जगाम शरणं हरिम् ।
भगवांश्च शिवस्यार्थे दैत्यं भस्मीचकार सः ॥ २७ ॥
शिवं युद्धञ्च कुर्वन्तं बाणं युद्धे परा विभुः ।
लीलया जृम्भणास्त्रेण जड़ीभूतं चकार सः ॥ २८ ॥
समागतं दक्षयज्ञे शम्भुं दम्भेन लीलया ।
वारयामास भगवान् हस्तं दत्त्वा च तद्गले ॥ २९ ॥
केदारकन्यकाद्वारा शप्तो धर्मोऽतिदैवतः ।
बभूवातिकृशो भीतः कुह्वामिव यथा शशी ॥ ३० ॥
तदा तस्य च शापान्ते सत्ये पूर्णो बभूव ह ।
त्रिपाद्बभूव त्रेतायां द्वापरे च द्विपादिति ॥ ३१ ॥
एकपाच्च कलौ सोऽपि कलेरन्ते पुनः क्षयः ।
षोड़शांशोऽतिकृष्टश्च सस्मार चरणं विभोः ॥ ३२ ॥
तदा सत्ययुगारम्भे परिपूर्णोऽभवत् पुनः ।
पुनर्युगानुरोधेन क्रमेण च पुनः क्षयः ॥ ३३ ॥

यमो माण्डव्यशापेन शूद्रयोनिमवाप ह।
तदा पुनः शताब्दान्ते पुनः शुद्धो बभूव ह ॥ ३४ ॥
साम्बो विमातृशापेन गलत्कुष्ठी बभूव सः।
चन्द्रो दर्पमदेनैव जहार च गुरोः प्रियाम् ॥ ३५ ॥
बभूव दर्पभङ्गोऽस्य यक्ष्मग्रस्तो बभूव सः।
सूर्य्यो दर्पात्तेजसश्च हन्तुं शङ्करकिङ्करम् ॥ ३६ ॥
सुमालीत्यभिधं दैत्यं जगामाशु गिरिं प्रति।
अहर्निशं दीप्तिकरं कुर्वन्तं विषयं रवेः ॥ ३७ ॥
सूर्य्येण भीतो दैत्यश्च शङ्करं शरणं ययौ।
सूर्य्यं दृष्ट्वा शङ्करश्च जग्राह शूलमेव च।
भीतो दुद्राव सूर्य्यश्च दृष्ट्वा तं शूलिनं मुने ॥ ३८ ॥
जघान काश्यां शूलेन शूली काशीश्वरो रविः।
मूर्च्छां संप्राप्य शूलेन दर्पभङ्गो बभूव ह ॥ ३९ ॥
सान्द्रान्धकारः सहसा जग्राह पृथिवीतलम्।
आशुतोषो महादेवो जीवयामास तत्क्षणम् ॥ ४० ॥
तुष्टाव शङ्करं सूर्य्यो लज्जितोऽपि भयेन च।
कृत्वा तमाशिषं तुष्टो ययौ गेहं कृपानिधिः ॥ ४१ ॥
विभुर्गरुत्मतो दर्पं बभञ्ज लीलया पुरा।
निःश्वासैः प्रेरितस्यापि शिवस्य वृषभस्य च ॥ ४२ ॥
आगच्छतश्च वैकुण्ठं पृष्ठे कृत्वा शिवं पुरा।
द्रष्टुं समागतं भक्त्या देवं नारायणं परम् ॥ ४३ ॥
वह्निर्दर्पी भृगोः शापात् सर्वभक्षो बभूव ह।
गुरोः स्वभार्य्याहरणाद्दर्पचूर्णो बभूव ह ॥ ४४ ॥
दुर्वाससो दर्पभङ्गो बभूव ह्यम्बरीषतः।

सुदर्शनेन चक्रेण विष्णोर्दुर्विषहेण च ॥ ४५ ॥
जयस्य विजयस्यापि दर्पभङ्गं चकार सः।
वैकुण्ठात् पतितस्यापि ब्रह्मशापच्छलेन च ॥ ४६ ॥
नृसिंहेन हतः सोऽपि हिरण्यकशिपुर्यथा।
शूकरेण हिरण्याक्षो लीलया च रसातले ॥ ४७ ॥
रावणः कुम्भकर्णश्च निहतौ रामबाणतः।
जन्मान्तरे च लङ्कायां ब्रह्मणा प्रार्थितस्य च ॥ ४८ ॥
शिशुपालो हि निहतः कृष्णबाणेन लीलया।
दन्तवक्रश्च सहसा परिपूर्णेऽत्र जन्मनि ॥ ४९ ॥
सुराणां दर्पभङ्गञ्च दैत्यद्वारा चकार ह।
असुराणां सुरद्वारा विरोधेन परस्परम् ॥ ५० ॥
विधिद्वारा दर्पभङ्गं भवतश्च चकार सः।
भवानासीन्नारदश्च पुरा पुत्रः प्रजापतेः ॥ ५१ ॥
गन्धर्वश्च पितुः शापात् शूद्रीपुत्रस्ततः क्रमात्।
ततः पुनर्नारदश्च प्रसादादधुना विभोः ॥ ५२ ॥
मम साध्यं विश्वमिति कामदर्पो बभूव ह।
तं प्रमत्तं हरद्वारा भस्मसाच्च चकार सः ॥ ५३ ॥
पुनः कृत्वा प्रसादन्तं जीवयामास लीलया।
एकान्तिकश्च तद्भक्तं स च नास्त्रं करोति ह ॥ ५४ ॥
चकार दर्पभङ्गञ्च दुर्निर्णो लक्ष्मणस्य च।
रणे शङ्करशूलेन रावणप्रेरितेन च ॥ ५५ ॥
पुनस्तं जीवयामास रामस्य स्तवनेन च।
स्वयं विस्मृतविद्याश्च ब्रह्मशापेन नारद ॥ ५६ ॥
चकार दर्पभङ्गञ्च कार्त्तवीर्यार्जुनस्य च।

जामदग्न्यस्य शस्त्रेणामोघेन पर्शुना पुरा ॥ ५७ ॥
विप्रपुत्रस्य मरणे हरणे कृष्णयोषिताम् ।
कर्णेन सार्द्धं समरे पार्थदर्पं बभञ्ज सः ॥ ५८ ॥
बाणस्य योषाहरणे चिच्छेद च भुजान् विभुः ।
भृगोश्च दक्षयज्ञे च दर्पभङ्गं चकार सः ॥ ५९ ॥
पर्शुरामस्य रामस्य विवाहे पथि गच्छतः ।
बभञ्ज दर्पं समरे रामद्वारा पुरा विभुः ॥ ६० ॥
सुमेरोः शृङ्गभङ्गञ्च वायुद्वारा चकार सः ।
समुद्राणां दर्पभङ्गं चकारागस्त्यभक्षणात् ॥ ६१ ॥
अकाले सृष्टिहरणे तत्पुत्रमरणे पुरा ।
कोपयुक्तस्य वायोश्च दर्पभङ्गं चकार सः ॥ ६२ ॥
उषाहरणयात्रायां द्वारकागमने हरेः ।
बाणस्य च गवां हेतोर्वरुणञ्च शशाप सः ॥ ६३ ॥
कलहे गङ्गया सार्द्धं वाण्या नारायणाग्रतः ।
सरस्वतीञ्च तत्याज तस्या दर्पं बभञ्ज सः ॥ ६४ ॥
दर्पयुक्ताञ्च दुर्गाञ्च त्यक्त्वा शम्भुर्हिमालये ।
कामञ्च भस्मसात् कृत्वा तपसे च ययौ विभुः ॥ ६५ ॥
लज्जामवाप सा देवी तस्या दर्पं बभञ्ज सः ।
सा ययौ तपसे विष्णोः प्राप्तिहेतोः शिवस्य च ॥६६॥
भारते सुचिरं तप्त्वा देवी विष्णोर्वरेण च ।
चकार स्वामिनं शम्भुं भगवन्तं सनातनम् ॥ ६७ ॥
महासौभाग्ययुक्ता सा बभूव शङ्करप्रिया ।
विश्वेषु सर्वदेवीषु पूज्या वन्द्या स्तुता सुरैः ॥ ६८ ॥
दर्पयुक्ता महालक्ष्मीर्बभूव सा महामुने ।

पराभूता पुरा देवी जयेन विजयेन च ॥ ६८ ॥
प्रविशन्ती विभोर्द्वारं दत्त्वा भक्ताय वाञ्छितम्।
निवारिता सा द्वाराच्च तेन दौवारिकेण वै ॥७०॥
यदात्मनस्तिरस्कारं साभिमाना महासती।
स्मृत्वा हरेः पादपद्मं देहं त्यक्तुं समुद्यता ॥ ७१ ॥
तदा ब्रह्मा महेशश्च विष्णुर्धर्मश्च भास्करः।
चन्द्रश्च कामदेवश्च वैश्वानरो धनेश्वरः ॥ ७२ ॥
ऋषयो मुनयश्चैव मनवो विघ्ननाशकाः।
महेन्द्रो वरुणश्चैव जगत्प्राणो हुताशनः ॥ ७३ ॥
समाययू रुदन्तस्ते पद्मायाः पुरतः पुरः।
तुष्टुवुश्च महालक्ष्मीं मूलप्रकृतिमीश्वरीम् ॥ ७४ ॥

देवा ऊचुः।

क्षमस्व भगवत्यम्ब क्षमाशीले परात्परे।
शुद्धसत्त्वस्वरूपे च कोपादिपरिवर्जिते ॥ ७५ ॥
उपमे सर्वसाध्वीनां देवानां देवपूजिते।
त्वया विना जगत्सर्वं मृततुल्यञ्च निष्फलम् ॥ ७६ ॥
सर्वसम्पत्स्वरूपा त्वं सर्वेषां सर्वरूपिणी।
रासेश्वर्यधिदेवी त्वं त्वत्कलाः सर्वयोषितः ॥ ७७ ॥
कैलासे पार्वती त्वञ्च क्षीरोदे सिन्धुकन्यका।
स्वर्गे च स्वर्गलक्ष्मीस्त्वं मर्त्यलक्ष्मीश्च भूतले ॥ ७८ ॥
वैकुण्ठे च महालक्ष्मीर्देवदेवी सरस्वती।
गङ्गा च तुलसी त्वञ्च सावित्री ब्रह्मलोकतः ॥ ७९ ॥
कृष्णप्राणाधिदेवी त्वं गोलोके राधिका स्वयम्।
रासे रासेश्वरी त्वञ्च वृन्दा वृन्दावने वने ॥ ८० ॥

कृष्णप्रिया त्वं भाण्डीरे चन्द्रा चन्दनकानने।
विरजा चम्पकवने शतशृङ्गे च सुन्दरी ॥ ८१ ॥
पद्मावती पद्मवने मालती मालतीवने।
कुन्ददन्ती कुन्दवने सुशीला केतकीवने ॥ ८२ ॥
कदम्बमाला त्वं देवी कदम्बकाननेऽपि च।
राजलक्ष्मी राजगेहे गृहलक्ष्मीर्गृहे गृहे ॥ ८३ ॥
इत्युक्त्वा देवताः सर्वे मुनयो मनवस्तथा।
रुरुदुर्नम्रवदनाः शुष्ककण्ठोष्ठतालुकाः ॥ ८४ ॥
इति लक्ष्मीस्तवं पुण्यं सर्वदेवैः कृतं शुभम्।
यः पठेत् प्रातरुत्थाय स वै सर्वं लभेत् ध्रुवम् ॥८५॥
अभार्य्यो लभते भार्यां विनीताञ्च सुतां सतीम्।
सुशीलां सुन्दरीं रम्यामतिसुप्रियवादिनीम् ॥८६॥
पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां वराम्।
अपुत्रो लभते पुत्रं वैष्णवं चिरजीविनम् ॥ ८७ ॥
परमैश्वर्ययुक्तञ्च विद्यावन्तं यशस्विनम्।
भ्रष्टराज्यो लभेद्राज्यं भ्रष्टश्रीर्लभते श्रियम् ॥ ८८ ॥
हतबन्धुर्लभेद् बन्धुं धनभ्रष्टो धनं लभेत्।
कीर्तिहीनो लभेत् कीर्तिं प्रतिष्ठाञ्च लभेत् ध्रुवम् ॥८९॥
सर्वमङ्गलदं स्तोत्रं शोकसन्तापनाशनम्।
हर्षानन्दकरं शश्वद्धर्ममोक्षसुहृत्प्रदम् ॥ ९० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे भगवद्गुणवर्णने लक्ष्मी-स्तोत्रकथनं नाम षट्पञ्चा-शत्तमोऽध्यायः।

# सप्तपञ्चाशत्तमोऽध्यायः ।

---

नारायण उवाच ।

देवानां स्तवनं श्रुत्वा त्यक्त्वा च रोदनं सती ।
उवाच सुप्रसन्ना तान् तेषां स्तोत्रेण नारद ॥ १ ॥

महालक्ष्मीरुवाच ।

त्यजामि देहं न क्रोधान्न वैराग्येण साम्प्रतम् ।
इदं हृदि समालोच्य देवास्तच्छ्रूयतामिति ॥ २ ॥
यस्मिन् सदीशे महति सर्वसाक्ष्ये च निर्गुणे ।
सर्वात्मनि सदानन्दे समता तृणशैलयोः ॥ ३ ॥
भ्रूभङ्गलीलया लक्ष्मीर्लक्षं स्रष्टुमलञ्च यः ।
भृत्ये स्त्रियां यत्समता किं कार्य्यं तस्य सेवया ॥ ४ ॥
तत्पत्नीनां प्रधानाहं निरस्ता हारिणाधुना ।
उद्धृत्य भृत्यभृत्येन परिपूर्णेन नेक्षिता ॥ ५ ॥
त्यक्ष्यामि जीवनमहमसौभाग्या च स्वामिनि ।
वह्नौ च कामनां कृत्वा यथा भद्रं भवेत् पुरा ॥ ६ ॥
या स्त्री भर्तुरसौभाग्या ससौभाग्या च सर्वतः ।
शयने भोजने तस्या न सुखं जीवनं वृथा ॥ ७ ॥
यस्या नास्ति प्रियप्रेम तस्या जन्म निरर्थकम् ।
तत् किं पुत्रे धने रूपे सम्पत्तौ यौवनेऽथवा ॥ ८ ॥
यद्भक्तिर्नास्ति कान्ते च सर्वप्रियतमे परे ।
साशुचिर्धर्महीना च सर्वकर्मविवर्जिता ॥ ९ ॥

पतिर्बन्धुर्गतिर्भर्ता दैवतं गुरुरेव च ।
सर्वस्माच्च परः स्वामी न गुरुः स्वामिनः परः ॥ १० ॥
पिता माता सुतो भ्राता क्लिष्टा दातुमिदं धनम् ।
सर्वस्वदाता स्वामी च मूढ़ानां योषितां सुराः ॥११॥
काचिदेव हि जानाति महासाध्वी च स्वामिनम् ।
अतिसद्वंशजाता च सुशीला कुलपालिका ॥ १२ ॥
असद्वंशप्रसूता या दुःशीला धर्मवर्जिता ।
मुखदुष्टा योनिदुष्टा पतिं निन्दति कोपतः ॥ १३ ॥
या स्त्री सर्वपरं द्वेष्टि पतिं विष्णुसमं गुरुम् ।
कुम्भीपाके पचति सा यावदिन्द्राश्चतुर्दश ॥ १४ ॥
व्रतं चानशनं दानं सत्यं पुण्यं तपश्चिरम् ।
पतिभक्तिविहीनाया भस्मीभूतं निरर्थकम् ॥ १५ ॥
अतः किञ्चिन्न वक्ष्यामि निष्ठुरं पतिमीश्वरम् ।
भृत्यापराधैर्देवस्य प्राणांस्त्यक्ष्यामि निश्चितम् ॥ १६ ॥
पतिदोषे महासाध्वी पतिञ्चानिष्ठुरं वदेत् ।
यदि सोढुमशक्ता च प्राणांस्त्यजति धर्मतः ॥ १७ ॥
पतिसेवा व्रतं स्त्रीणां पतिसेवा परं तपः ।
पतिसेवा परो धर्मः पतिसेवा सुरार्चनम् ॥ १८ ॥
पतिसेवा परं सत्यं दानतीर्थानुकीर्तनम् ।
सर्वदेवमयः स्वामी सर्वदेवमयः शुचिः ॥ १९ ॥
सर्वपुण्यस्वरूपश्च पतिरूपी जनार्दनः ।
या सती भर्तुरुच्छिष्टं भुंक्ते पादोदकं सदा ॥ २० ॥
तस्या दर्शमुपस्पर्शं नित्यं वाञ्छन्ति देवताः ।
ततः सर्वाणि तीर्थानि पुनन्ति पापिनो ह्यवात् ॥२१॥

इत्युक्त्वा च महासाध्वी रुरोद च मुहुर्मुहुः ।
उवाच ब्रह्मा भीतश्च भक्तिनम्रात्मकन्धरः ॥ २२ ॥

ब्रह्मोवाच ।

भविष्यति न भद्रञ्च जयस्य विजयस्य च ।
त्वया न शप्तौ तौ मूढौ प्रियापराधभीतया ॥ २३ ॥
सापराधञ्च धर्मिष्ठः क्षमया नाशयेद् यदि ।
सर्वनाशो भवेत्तस्य निश्चितं मा चिरं सति ॥ २४ ॥
यदि शक्तुं न शक्तश्च न दण्डं कर्तुमीश्वरः ।
सापराधे च पुरुषे धर्मी दण्डं करोति च ॥ २५ ॥
सर्वं क्षमस्व हे मातर्गच्छ गच्छ प्रियान्तिकम् ।
माञ्च त्वत्स्वामिनो भक्तं नियोज्य सृष्टिकर्मणि ॥२६॥
इत्युक्त्वा तां पुरस्कृत्वा सार्द्धं देवैर्मुनीन्द्रकैः ।
शीघ्रं जगाम वैकुण्ठं वैकुण्ठे स्तोतुमीश्वरः ॥ २७ ॥
तत्र गत्वा जगन्नाथं तुष्टाव कमलासनः ।
चतुर्वक्त्रैश्चतुवक्त्रश्चतुर्वेदविदां गुरुम् ॥ २८ ॥
ब्रह्मणः स्तवनं श्रुत्वा दृष्ट्वा लक्ष्मीं पुरःसराम् ।
रुदन्तीं नम्रवदनामुवाच कमलापतिः ॥ २९ ॥

श्रीभगवानुवाच ।

सर्वं जानामि सर्वज्ञः सर्वात्मा सर्वपालकः ।
सर्वशास्ता च सर्वादिकारणं कमलोद्भव ॥ ३० ॥
भक्ते कलत्रे बन्धौ च सर्वत्र समता मम ।
विशेषतोऽतिमद्भक्तः कलत्रात्पर एव च ॥ ३१ ॥
मद्भक्तौ तव पुत्रौ च द्वारपालौ दुरन्तकौ ।
क्षम मामपराधञ्च तयोश्च भक्तिपूर्वयोः ॥ ३२ ॥

मद्भक्तिपूर्णो बलवान् दैत्येभ्यो न बिभेति च ।
रक्षितो मम चक्रेण भक्तिमाध्वीकदुर्मदः ॥ ३३ ॥
इत्युक्त्वा जगतां नाथो लक्ष्मीं कृत्वा स्ववक्षसि ।
समानीय द्वारपालं तमुवाचेदमेव च ॥ ३४ ॥
मा भैर्वत्स सुख तिष्ठ भयं किं ते मयि स्थिते ।
मद्भक्तानाञ्च कः शास्ता गच्छ वत्सात्मनः पदम् ॥ ३५ ॥
इत्युक्त्वा भगवांस्तत्र विरराम महामुने ।
ययुर्देवाश्च स्वस्थानं प्रणम्य जगदीश्वरम् ॥ ३६ ॥
नारायणवचः श्रुत्वा द्वारपाल उवाच तम् ।
पुलकाञ्चितसर्वाङ्गो भक्तिनम्रात्मकन्धरः ॥ ३७ ॥

जय उवाच ।

नाहं बिभेमि देवांश्च लक्ष्मीं मुनिगणांस्तथा ।
त्वदीयचरणाम्भोजध्यानैकतानमानसः ॥ ३८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे वैराग्यमोचनं नाम
सप्तपञ्चाशत्तमोऽध्यायः ।

---

# अष्टपञ्चाशत्तमोऽध्यायः ।

श्रीनारायण उवाच ।

बभूव दर्पः पृथ्व्याश्च सर्वाधाराहमेव च ।
पृथुद्वारा च तद्दर्पं जघान चैव तत्प्रभुः ॥ १ ॥
बभूव दर्पः सावित्र्या वेदमाताहमेव च ।
काले चकार तस्याश्च सपुत्राया अदर्शनम् ॥ २ ॥
बभूव दर्पो गङ्गाया अहं निर्वाणदेति च ।
जह्नुद्वारा च तद्दर्पं जहार जगतां पतिः ॥ ३ ॥
जहार मनसादर्पं दुर्गाद्वारा पुरा मुने ।
विरजोपगतं कृष्णं भर्त्सयामास कोपतः ॥ ४ ॥
प्रविशन्तं रासगृहं गोपीभिर्विनिवारितम् ।
दौवारिकाभिर्वेत्रैश्च ताड़ितं तच्च दर्पतः ॥ ५ ॥
सुदाम्ना निजभक्तेन राधा शप्ता बभूव ह ।
देवेन सहसा ध्वस्ता गोलोकादागता धराम् ॥ ६ ॥
वृषभानुस्त्रियां जाता कलावत्याञ्च नारद ।
कृष्णस्तदनुरोधेन कंसभीतिच्छलेन च ॥ ७ ॥
समागतो नन्दगेहं तेनाहं नन्दनन्दनः ।
सुदाम्नः शापविच्छेदपालनार्थं जगत्पतिः ॥ ८ ॥
पुनर्जगाम मथुरामित्याह कमलोद्भवः ।
अस्याः परमभिप्रायं को वा जानाति नारद ॥ ९ ॥
कथं जातः समायातो मथुरायाश्च गोकुलम् ।
इत्येवं कथितं सर्वमपरं श्रूयतामिति ॥ १० ॥

यथा जगाम मथुरां नन्दात् स नन्दनन्दनः ।
शोकं नन्दो यशोदा च यथा सम्प्राप दैवतः ॥ ११ ॥
यथा गोपाश्च गोप्यश्च गावो वृन्दावने वने ।
वने वने वा वन्यास्ते वन्या जानन्ति किञ्चन ॥ १२ ॥
वनं रम्यं वन्यपद्ममपि त्यक्त्वा वने वने ।
श्मशाने वाश्मशाने वा बभ्राम भामिनी मुने ॥ १३ ॥
ग्रामं त्यक्त्वा च बभ्राम चेतनाचेतना क्षणम् ।
क्षणेन वर्जिता सा च प्रार्थयन्ती प्रतीक्षणम् ॥ १४ ॥
क्षणं क्षणं सा श्वसन्ती चेतनं कुर्वती क्षणम् ।
क्षणं विशन्ती तल्पे च क्षणमुत्थाय तिष्ठति ॥ १५ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे अष्टपञ्चाशत्तमोऽध्यायः ।

---

# एकोनषष्टितमोऽध्यायः ।

---

श्रीनारायण उवाच ।

इत्येवं कथितं सर्वं सर्वेषां दर्पभञ्जनम् ।
इन्द्रस्य दर्पभङ्गञ्च विस्तारेण निशामय ॥ १ ॥
इन्द्रो दर्पात् सभायाञ्च रत्नसिंहासनाहरात् ।
नोत्तस्थौ स्वगुरुं दृष्ट्वा ब्रह्मिष्ठञ्च बृहस्पतिम् ॥ २ ॥
गुरुर्जगामातिरुष्टः स्वापमाने समत्सरः ।
तथापि कृपया धर्मी स्नेहाच्च न शशाप तम् ॥ ३ ॥

विना शापेन तद्दर्पैश्चूर्णीभूतो बभूव ह।
अन्यस्येश्व शपेद्धर्मात् प्रेमणा वा चाति किल्बिषम् ॥४॥
तथापि तच्च फलति धर्मस्तं हन्ति नारद।
योयं हिंस्रं सापराधं शपेत्कोपेन धार्मिकः ॥ ५ ॥
विनाशः सापराधस्य धर्मो नष्टश्च धर्मिणः।
तेनाधर्मेण शक्रस्य ब्रह्महत्या बभूव ह ॥ ६ ॥
भीतस्त्यक्त्वा स्वराज्यञ्च प्रययौ स सरोवरम्।
सरसः पद्मसूत्रे च निवासञ्च चकार सः ॥ ७ ॥
गन्तुं न शक्ता हत्या च पुण्यं विष्णुसरोवरम्।
श्रेष्ठं भारतवर्षे च तपस्थानं तपस्विनाम् ॥ ८ ॥
तदेव पुष्करं तीर्थं प्रवदन्ति पुराविदः।
राज्यभ्रष्टं हरिं दृष्ट्वा हरिभक्तो नराधिपः ॥ ९ ॥
बलाज्जहार तद्राज्यं नहुषो नाम धार्मिकः।
दृष्ट्वा शचीं वरारोहामनपत्याञ्च सुन्दरीम् ॥ १० ॥
स्वर्गगङ्गाञ्च गच्छन्तीं हृदयेन विदूयता।
नवयौवनसम्पन्नां रत्नालङ्कारभूषिताम् ११ ॥
सुकोमलां तां सुदतीं वदन्तीञ्च महासतीम्।
मूर्च्छां सम्प्राप राजेन्द्रः कामेन यौवनेन च ॥ १२ ॥
उवाच तत्पुरःस्थित्वा सुविनीतश्च दासवत्।

नहुष उवाच।

धातुर्गतिर्विचित्राहो न बोध्या च सतामपि।
ईदृशी स्त्री भगाङ्गस्य लुब्धस्य परयोषिति।
ईदृशी सुन्दरी यस्य परभार्य्यासु तन्मनः ॥ १४ ॥
अस्या अग्रे च का रम्भा कोर्वशी का तिलोत्तमा।

का वा मेना घृताची वा रत्नमाला कलावती ॥ १५ ॥
कालिका सुन्दरी भद्रावती चम्पावती तथा ।
एताश्चाप्सरसश्चान्याः कलां नार्हन्ति षोड़शीम् ॥ १६ ॥
इमां विहाय मूढ़ोऽन्यां कथं गच्छति मन्दधीः ।
अस्माकं योषितो याश्च चेटीतुल्याश्च निश्चितम् ॥ १७ ॥
मां भजस्व वरारोहे सुप्रीता भव किङ्करम् ।
यथा राधा च गोलोके कृष्णवक्षसि राजते ॥ १८ ॥
वैकुण्ठोरसि वैकुण्ठे यथा लक्ष्मीः सरस्वती ।
ब्रह्मलोके च ब्रह्माणी यथैव ब्रह्मवक्षसि ॥ १९ ॥
यथा मूर्तिर्महासाध्वी धर्मवक्षःस्थलस्थिता ।
पातालतललक्ष्मीर्वा यथैवानन्तवक्षसि ॥ २० ॥
यथा पुष्टिर्गणेशे च देवसेना च कार्तिके ।
वरुणे वरुणानी च यथा स्वाहा हुताशने ॥ २१ ॥
यथा रतिः कामदेवे यथा संज्ञा दिनेश्वरे ।
वायोः पत्नी यथा वायौ यथा चन्द्रे च रोहिणी ॥ २२ ॥
यथादितिर्देवमाता तव श्वश्रूश्च कश्यपे ।
यथा हिमालये मेना पितृकन्या च मानसी ॥ २३ ॥
लोपामुद्रा यथागस्त्ये यथा तारा बृहस्पतौ ।
कर्दमे देवहूती च वशिष्ठेऽरुन्धती यथा ॥ २४ ॥
मनौ च शतरूपेव दमयन्ती नले यथा ।
तथा भव त्वं सौभाग्या मम वक्षसि सुन्दरि ॥ २५ ॥
लीलया च सहस्रेन्द्रान् जेतुं शक्तोऽहमीश्वरः ।
नारी वाञ्छति जारञ्च स्वामिनो बलवत्तरम् ॥ २६ ॥
सुमेरुगिरिकूटे च दुर्गमेऽतिरहःस्थले ।

अथवामलये रम्ये रम्ये चन्दनवायुना ॥ २७ ॥
विश्वम्भके सुरसने किंवा नन्दनकानने ।
निकटे शतशृङ्गस्य पुष्पभद्रानदीतटे ॥ २८ ॥
गोदावरीत्तीरनीरे समीपे शीतवायुना ।
चम्पावतीनदीतीरे रम्ये चम्पककानने ॥ २९ ॥
श्मशानेऽतिश्मशाने च रम्येऽतिनिर्जने वने ।
शैले शैलेऽतिरहसि कन्दरे कन्दरे वने ॥ ३० ॥
द्वीपे द्वीपे दुर्गदुर्गे नद्यां नद्यां नदे नदे ।
समुद्रपुलिने रम्ये सर्वजन्तुविवर्जिते ॥ ३१ ॥
विदग्धाया विदग्धेन सङ्गमो निर्जने सुखः ।
पुष्पचन्दनशय्यायां पुष्पचन्दनचर्चिते ॥ ३२ ॥
मां गृहीत्वा कुरु रतिं पुष्पचन्दनचर्चितम् ।
ब्रह्मणश्च वरैर्देवी जरामृत्युविवर्जितम् ॥ ३३ ॥
मां कुरुष्व पतिं भद्रे नित्यं सुस्थिरयौवनम् ।
सुवेशं सुन्दरं धीरं कामशास्त्रविशारदम् ॥ ३४ ॥
शरत्पार्वणचन्द्रास्यं चन्द्रवंशसमुद्भवम् ।
आगतामुर्वशीं मह्यां त्यक्तवन्तञ्च याचतीम् ॥ ३५ ॥
न मे स्पृहा परस्त्रीषु त्वां दृष्ट्वा लोलुपं मनः ।
त्यक्ता मया स्वभार्य्याश्च रत्नभूषणभूषिताः ॥ ३६ ॥
अथवा रचिताः सर्वा दासीः कृत्वा वरानने ।
रत्नेन्द्रसारां मालां ते दास्यामि वरुणस्य च ॥ ३७ ॥
निर्जित्य वरुणं युद्धे ब्रह्मास्त्रेणातितेजसा ।
वह्निशुद्धं वस्त्रयुगं जित्वा वह्निं सुदुर्बलम् ॥ ३८ ॥
दास्याम्यद्यैव ते देवि वियोज्यं मां नियोजय ।

मणीन्द्रसारनिर्माणमकराकारकुण्डले ॥ ३८ ॥
दास्यामि देवान्निर्ज्जित्य देवमातुश्च सुन्दरि ।
करभूषणयुग्मञ्चात्यमूल्यरत्ननिर्मितम् ॥ ४० ॥
दास्याम्यद्यैव रोहिण्याश्चन्द्रं जित्वातिदुर्लभम् ।
यद्ममग्रस्तमतिक्लशं ममैव पूर्वपूरुषम् ॥ ४१ ॥
विना युद्धेन भीतो मां क्षपया वा प्रदास्यति ।
अल्परत्नविनिर्माणं क्वणन्मञ्जीरयुग्मकम् ॥ ४२ ॥
दास्याम्यद्यैव पार्वत्या भिक्षां कृत्वा महेश्वरम् ।
आशुतोषं स्तुतिवशं भक्तेशञ्च कृपामयम् ॥ ४३ ॥
सर्वसम्पत्तिदातारं परं कल्पतरुं शुभे ।
अमूल्यरत्ननिर्माणकेयुरयुगलं प्रिये ॥ ४४ ॥
दास्यामि तेऽद्य गङ्गाया युद्धं कृत्वा सुदुर्लभम् ।
बहुलीयुगलं चारु सूर्य्यपत्न्या मनोहरम् ॥ ४५ ॥
सद्रत्नसारनिर्माणं दास्याम्यद्य सुशोभने ।
अमूल्यरत्ननिर्माणं दर्पणञ्चातिनिर्मलम् ॥ ४६ ॥
दास्यामि ते कामपत्न्याः कामं जित्वा च लीलया ।
क्रीड़ाकमलमम्लानं कमलायाश्च सुन्दरि ॥ ४७ ॥
भिक्षां कृत्वा च दास्यामि स्तुत्वा च कमलापतिम् ।
अङ्गुलीयकरत्नानि विश्वेषु दुर्लभानि च ॥ ४८ ॥
सावित्र्याश्च प्रदास्यामि कृत्वा च ब्रह्मणस्तथा ।
स्वयं गीतं प्रगायन्तीं मूर्च्छनाश्रुतिसंयुताम् ॥ ४९ ॥
वाणीवीणां प्रदास्यामि कृत्वा नारायणव्रतम् ।
रत्नपाशकसङ्घञ्च विश्वकर्मविनिर्मितम् ॥ ५० ॥
कुवेरपत्न्या दास्यामि पादाङ्गुलिविभूषणम् ।

इत्येवमुक्त्वा नहुषः पपात तत्पदाम्बुजे ॥ ५१ ॥
उवाच तं शची त्रस्ता राजमार्गगतं नृपम् ॥ ५१ ॥
उत्थाप्य तं करे धृत्वा शुष्ककण्ठोष्ठतालुका ।
स्मारं स्मारं पदाम्भोजं महासाध्वी हरेर्गुरोः ॥ ५२ ॥

शच्युवाच ।

शृणु वत्स महाराज हे तात भयभञ्जन ! ।
भयत्राता च राजा च सर्वेषां पालकः पिता ॥ ५३ ॥
भ्रष्टश्रीश्च महेन्द्रोऽद्य त्वञ्च स्वर्गे नृपोऽधुना ।
यो राजा स पिता पाता प्रजानामेव निश्चितम् ॥५४॥
गुरुपत्नी राजपत्नी देवपत्नी तथा वधूः ।
पित्रोः स्वसा शिष्यपत्नी भृत्यपत्नी च मातुली ॥ ५५ ॥
पितृपत्नी भ्रातृपत्नी श्वश्रूश्च भगिनी सुता ।
गर्भधात्रीष्टदेवी च पुंसः षोड़श मातरः ॥ ५६ ॥
त्वं नरो देवभार्य्याहं माता ते वेदसम्मता ।
गच्छ वत्सादितिं रन्तुं यदि चेच्छसि मातरम् ॥५७॥
सर्वेषां निष्कृतिश्चास्ति न वत्स ! मातृगामिनाम् ।
कुम्भीपाके ते पचन्ति यावद्वै ब्रह्मणो वयः ॥ ५८ ॥
ततो भवन्ति क्रमयः विश्वायोनिषु कल्पकान् ।
ततश्च कुष्ठिनो म्लेच्छा भवन्ति सप्तजन्मसु ॥ ५९ ॥
नास्त्येव निष्कृतिस्तेषामित्याह कमलोद्भवः ।
एवं विट्क्षत्रशूद्राणां ब्राह्मणीगमने नृप ॥ ६० ॥
वेदेषु निष्कृतिर्नास्ति चेत्याङ्गिरसभाषितम् ।
स्वर्गसम्पत्तिभोगश्च सुखं संसारिणां ध्रुवम् ॥ ६१ ॥
मुमुक्षूणाञ्च मोक्षश्च तपश्चैव तपस्विनाम् ।

ब्राह्मणानाञ्च ब्राह्मण्यं मुनीनां मौनमेव च ॥ ६२ ॥
वेदाभ्यासो वैदिकानां कवीनां काव्यवर्णनम् ।
विष्णुदास्यं वैष्णवानां विष्णुभक्तिरसं परम् ॥ ६३ ॥
विष्णुभक्तिं विना नैव मुक्तिं वाञ्छन्ति वैष्णवाः ।
मलाढ्येषु च क्लेदेषु दुर्गन्धिनिलयेषु च ॥ ६४ ॥
साधूनां किं सुखं साधो स्त्रीणां योनिषु मां वद ।
कुलप्रदीपे राजेन्द्र राज्ञां मण्डलवर्त्तिनाम् ॥ ६५ ॥
लब्धञ्च भारते जन्म पुण्येन बहुजन्मनाम् ।
पद्मानां चन्द्रवंश्यानां नृपाणां दीप्तिहेतवे ॥ ६६ ॥
त्वमाविरासीस्तेजस्वी ग्रीष्ममध्याह्नभास्करः ।
सर्वेषामाश्रमाणाञ्च स्वधर्मश्च यशः परम् ॥ ६७ ॥
स्वधर्महीना नरके पतन्ति मूढ़चेतसः ।
ब्राह्मणस्य स्वधर्मश्च त्रिसन्ध्यमर्चनं हरेः ॥ ६८ ॥
तत्पादोदकनैवेद्यभक्षणञ्च सुधाधिकम् ।
अन्नं विष्ठा जलं मूत्रमनिवेद्यं हरेर्नृप ॥ ६९ ॥
भवन्ति शूकराः सर्वे ब्राह्मणा यदि भुञ्जते ।
आजीवं भुञ्जते विप्रा एकादश्यां न भुञ्जते ॥ ७० ॥
कृष्णजन्मदिने चैव शिवरात्रौ सुनिश्चितम् ।
तथा रामनवम्याञ्च यत्नतः पुण्यवासरे ॥ ७१ ॥
ब्राह्मणानां स्वधर्मश्च कथितो ब्रह्मणा नृप ।
व्रतं पतिव्रतानाञ्च पतिसेवा परं तपः ॥ ७२ ॥
यथा पुत्रः परपतिरेष धर्मश्च योषिताम् ।
पालयन्ति यथा भूपाः प्रजाः पुत्रानिवौरसान् ॥ ७३ ॥
प्रजाःस्त्रियञ्च पश्यन्ति राजानो मातरं यथा ।

यज्ञं कुर्वन्ति विप्राश्च सेवनं देवविप्रयोः ॥ ७४ ॥
निवारणञ्च दुष्टानां शिष्टानां प्रतिपालनम् ।
इति धर्मः क्षत्रियाणां कथितो ब्रह्मणा पुरा ॥ ७५ ॥
वाणिज्यञ्चैव वैश्यानां स्वधर्मो धर्मसञ्चयः ।
शूद्राणां विप्रसेवा च परो धर्मो विधीयते ॥ ७६ ॥
सर्वन्यासो हरौ भूप धर्मः सन्न्यासिनां ध्रुवम् ।
रक्तैकवासा दण्डी च बिभर्ति मृत्कमण्डलुम् ॥ ७७ ॥
सर्वत्र समदर्शी च स्मरेन्नारायणं सदा ।
करोति भ्रमणं नित्यं गेहे गेहे न तिष्ठति ॥ ७८ ॥
विद्यामन्त्रञ्च कस्मैचिन्न ददाति च लोभतः ।
करोति नाश्रमं भिक्षुः करोति नान्यवासनाम् ॥ ७९ ॥
करोति नान्यसङ्गञ्च निर्मोहः सङ्गवर्जितः ।
न स्वादुभुङ्क्ते लोभाच्च स्त्रीमुखं न हि पश्यति ॥८०॥
न वाञ्छितं भक्ष्यवस्तु याचते गृहिणं व्रती ।
इति सन्न्यासिनां धर्ममित्याह कमलोद्भवः ॥ ८१ ॥
इति ते कथितं पुत्र गच्छ वत्स यथासुखम् ॥ ८२ ॥
इत्युक्त्वा च महेन्द्राणी विरराम च वर्त्मनि ।
उवाच नहुषो राजा शचीं वक्रप्रकन्धरः ॥ ८३ ॥

नहुष उवाच ।

त्वया यत् कथितं देवि सर्वं तत्तु विपर्य्ययम् ।
यथार्थधर्मं वेदोक्तं निबोध कथयामि ते ॥ ८४ ॥
कर्मणां फलभोगश्च सर्वेषां सुरसुन्दरि ।
नैव स्वर्गे न पाताले नान्यद्वीपे श्रुतौ श्रुतम् ॥ ८५ ॥
कृत्वा शुभाशुभं कर्म पुण्यक्षेत्रे च भारते ।

अन्यत्र तत्फलं भुंक्ते कर्म्मी कर्म्मनिबन्धनात् ॥ ८६ ॥
हिमालयादासमुद्रं पुण्यक्षेत्रञ्च भारतम् ।
श्रेष्ठं सर्व्वस्थलानाञ्च मुनीनाञ्च तपःस्थलम् ॥ ८७ ॥
तत्र लब्ध्वा जन्म जीवी वञ्चितो विष्णुमायया ।
शश्वत्करोति विषयं विहाय सेवनं हरेः ॥ ८८ ॥
कृत्वा तत्र महत् पुण्यं स्वर्गं गच्छति पुण्यवान् ।
गृहीत्वा स्वर्गकन्याश्च चिरं स्वर्गे प्रमोदते ॥ ८९ ॥
स्वर्गमागच्छति नरो विहाय मानवीं तनुम् ॥ ९० ॥
स्वशरीरेणागतोऽहं मत्पुण्यं पश्य सुन्दरि ।
अनेकजन्मपुण्येन चागतो स्वर्गमीप्सितम् ॥ ९१ ॥
ततः किं केन पुण्येन दर्शनं मे त्वया सह ।
न हि कर्म्मस्थलमिदं स्वभोगस्थलमेव हि ॥ ९२ ॥
भोगस्थले भोगवस्तु न हि त्यक्तुं प्रशस्यते ।
भावानुरक्ता रसिका भोग्या त्वं भोगिनामिह ॥ ९३ ॥
द्रव्यमस्वामिकं भोग्यं सुखं त्यजति मन्दधीः ।
अविरोधसुखत्यागी पशुरेव न संशयः ॥ ९४ ॥
गच्छ कान्ते गृहं गत्वा कुरु तल्पं मनोहरम् ।
रमणीयञ्च रहसि वरं रतिकरं परम् ॥ ९५ ॥
त्यज द्वैधञ्च मनसो निश्चितं वरवर्णिनि ।
वरानने मया सार्द्धं मोदस्व वरमन्दिरे ॥ ९६ ॥
अमूल्यरत्नमालाञ्च मणिराजविराजिताम् ।
भिक्षां कृत्वा च दास्यामि लक्ष्मीवक्षसि शोभिताम् ॥ ९७ ॥
मणिञ्चानन्तशिरसः सर्व्वेषामतिदुर्ल्लभम् ।
दुष्प्राप्यं त्रिषु लोकेषु तुभ्यं दास्यामि सुन्दरि ॥ ९८ ॥

मणिरत्नं कौस्तुभञ्च यन्नारायणवक्षसि ।
भिक्षां कृत्वा तु दास्यामि कृत्वा नारायणव्रतम् ॥९९॥
चन्द्रशेखरमौलेश्च यद्रत्नं चन्द्रभूषणम् ।
जरामृत्युव्याधिहरं शान्तं क्रीड़ाकरं वरम् ॥ १०० ॥
अतीव विश्वदुष्प्राप्यं विश्ववन्द्यञ्च सुन्दरम् ।
विश्वनाथव्रतं कृत्वा तुभ्यं दास्यामि निश्चितम् ॥१०१॥
दास्यामि ते श्रीसूर्य्यस्य मणिश्रेष्ठं स्यमन्तकम् ।
भक्त्या सूर्य्यव्रतं कृत्वा त्रिषु लोकेषु दुर्लभम् ॥ १०२ ॥
अष्टौ भारान् सुवर्णञ्च यश्च नित्यं प्रसूयते ।
जरामृत्युहरञ्चैव परं क्रीड़ाकरं प्रिये ॥ १०३ ॥
अमूल्यरत्ननिर्माणं पात्ररत्नं मनोरमम् ।
सन्ततं मधुपूर्णञ्च दास्यामि मदनस्य च ॥ १०४ ॥
अमूल्यरत्ननिर्माणं सूर्य्यतुल्यञ्च तेजसा ।
नानाचित्रविचित्राढ्यं निर्माणमीश्वरेच्छया ॥ १०५ ॥
निर्मलं मण्डलाकारं मणिराजविराजितम् ।
हस्तलक्षपरिमितं चतुरस्रञ्च सुन्दरि ॥ १०६ ॥
पद्मापद्मासनं श्रेष्ठं प्रेष्ठं तस्याः सुदुर्लभम् ।
ध्रुवं तुभ्यं प्रदास्यामि कृत्वा पद्मालयाव्रतम् ॥१०७॥
इत्येवमुक्त्वा नहुषः कृत्वा वर्त्म निरोधनम् ।
पुनः पपात चरणे महेन्द्राख्या मुहुर्मुहुः ॥ १०८ ॥
नृपस्य वचनं श्रुत्वा शुष्ककण्ठोष्ठतालुका ।
तमुवाच महेन्द्राणी स्मारं स्मारं गुरुं हरिम् ॥ १०९॥

शच्युवाच ।

अचेतनस्य मूढ़स्य कार्य्याकार्य्यमजानतः ।

श्रोष्याम्यद्य कतिविधां कथां कामातुरस्य च ॥ ११० ॥
मधुमत्तः सुरामत्तः काममत्तो विचेतनः।
मृत्युं न गणयेत्कामी कामेन हृतमानसः ॥ १११ ॥
त्यज मामद्य हे मत्त मातृतुल्यां रजस्वलाम्।
ऋतोः प्रथमो दिवसो ह्यद्य हे नृप मे ध्रुवम् ॥ ११२ ॥
प्रथमे दिवसे स्त्री च चाण्डाली सा रजस्वला।
द्वितीये दिवसे म्लेच्छा तृतीये रजकी तथा ॥ ११३ ॥
शुद्धा भर्तुश्चतुर्थेऽह्नि न शुद्धा दैवपैत्रयोः।
असत्शूद्रा समा सा च तद्दिने च परं प्रति ॥ ११४ ॥
प्रथमे दिवसे कान्तां यो हि गच्छेद्रजस्वलाम्।
ब्रह्महत्याचतुर्थांशं लभते नात्र संशयः ॥ ११५ ॥
स पुमान्न हि कर्मार्हो दैवे पैत्रे च कर्मणि।
अधमः स च सर्वेषां निन्दितश्चायशस्करः ॥ ११६ ॥
द्वितीये दिवसे नारीं यो व्रजेच्च रजस्वलाम्।
कामतः परिपूर्णश्च गोहत्यां लभते ध्रुवम् ॥ ११७ ॥
आजीवनं नाधिकारी पितृविप्रसुरार्चने।
अमनुष्योऽयशस्यः स्यादित्याङ्गिरसभाषितम् ॥ ११८ ॥
तृतीये दिवसे जायां यो हि गच्छेद्रजस्वलाम्।
स मूढो भ्रूणहत्याञ्च लभते नात्र संशयः ॥ ११९ ॥
पूर्ववत् पतितः सोऽपि न चार्हः सर्वकर्मसु।
असत्शूद्रा चतुर्थेऽह्नि न गच्छेत्तां विचक्षणः ॥१२०॥
यदि मां मातरं मूढ ग्रहिष्यसि बलेन च।
ऋतावतीते दिवसे गमनञ्च करिष्यसि ॥ १२१ ॥
शच्याश्च वचनं श्रुत्वा प्रहस्य नहुषस्तथा।

उवाच मधुरं शान्तः शक्रकान्ताञ्च सुव्रताम् ॥ १२२ ॥
देवपत्नी सदा शुद्धा तन्नूनं मानवं प्रति ।
शयने भोजने देवी नाशुद्धा मानवं प्रति ॥ १२३ ॥
रजस्वलायाः सम्भोगे कर्मक्षेत्रे च भारते ।
त्वयोक्तञ्च भवेत् पापं नात्र दुर्गे च सुन्दरि ॥ १२४ ॥
कर्मक्षेत्रेऽपि तत्कर्म यद्वेदोक्तं शुभाशुभे ।
न भवेद्वैष्णवानाञ्च ज्वलतां ब्रह्मतेजसा ॥ १२५ ॥
यथा प्रदीप्ते वह्नौ च शुष्काणि च तृणानि च ।
भवन्ति भस्मीभूतानि तथा पापानि वैष्णवे ॥ १२६ ॥
वह्निसूर्य्यब्राह्मणेभ्यस्तेजीयान् वैष्णवः सदा ।
रक्षितो विष्णुचक्रेण स्वतन्त्रो मत्तकुञ्जरः ॥ १२७ ॥
न विचारो न भोगश्च वैष्णवानां स्वकर्मणाम् ।
लिखितं साम्नि कौथुम्यां कुरु प्रश्नं बृहस्पतिम् ॥१२८॥
अस्मांश्च सर्वे जानन्ति चन्द्रवंश्यांश्च वैष्णवान् ।
देवमन्यं न सेवन्ते चन्द्रवंश्या हरिं विना ॥ १२९ ॥
सद्वंशप्रभवो यो हि ब्राह्मणः क्षत्रियोऽथवा ।
विष्णुमन्त्रं न गृह्णाति वञ्चितो विष्णुमायया ॥ १३० ॥
को वा मन्त्रश्च के देवा न हि शास्ता यमो मम ।
सर्वान् शास्तुं समर्थोऽहं ब्रह्मविष्णू शिवं विना ॥१३१॥
शय्यां कुरु गृहं गत्वा शीघ्रं यास्यामि ते गृहम् ।
ऋतुपापं मयि भवेत्तव किं गच्छ शोभने ॥ १३२ ॥
इत्युक्त्वा नहुषो राजा प्रफुल्लवदनेक्षणः ।
रत्नयानं समारुह्य ययौ नन्दनकाननम् ॥ १३३ ॥
न ययौ सा शची गेहं प्रजगाम गुरोर्गृहम् ।

गत्वा कुशासनस्थञ्च ददर्श च बृहस्पतिम् ॥ १३४ ॥
तारासेवितपादाब्जं ज्वलन्तं ब्रह्मतेजसा ।
जपमालाकरं शश्वज्जपन्तं कृष्णमीप्सितम् ।
परमं परमानन्दं परमात्मानमीश्वरम् ॥ १३५ ॥
निर्गुणञ्च निरीहञ्च स्वतन्त्रं प्रकृतेः परम् ।
स्वेच्छामयं परं ब्रह्म भक्तानुग्रहविग्रहम् ॥ १३६ ॥
तमानन्दाश्रुनेत्रञ्च ननाम शिरसा भुवि ।
रुदन्ती साश्रुनेत्रा सा मज्जन्ती भक्तिसागरे ॥ १३७ ॥
शोकार्णवे निमज्जन्ती हृदयेन विदूयता ।
तुष्टाव भीता स्वगुरुं ब्रह्मिष्ठञ्च कृपानिधिम् ॥ १३८ ॥

शच्युवाच ।

रक्ष रक्ष महाभाग मां भीतां शरणागताम् ।
त्वमीश्वरः स्वदासीञ्च निमग्नां शोकसागरे ॥ १३९ ॥
अनीश्वरश्चेश्वरो वा बलवान् वा सुदुर्बलः ।
स्वशिष्यभार्य्यां पुत्रांश्च शासितुञ्च सदा क्षमः ॥ १४० ॥
दूरीभूतः स्वराज्याच्च स्वशिष्यश्च कृतस्त्वया ।
शान्तिर्बभूव दोषस्य चाधुना निग्रहं कुरु ॥ १४१ ॥
अनाथां सर्वशून्यां मां शून्यांताममरावतीम् ।
सम्पत्शून्यमाश्रमं मे पश्य रक्ष कृपानिधे ॥ १४२ ॥
दस्युग्रस्ताञ्च मां रक्ष देशं किङ्करमानय ।
दत्त्वा चरणरेणून् तं शुभाशीर्वचनं कुरु ॥ १४३ ॥
सर्वेषाञ्च गुरूणाञ्च जन्मदाता परो गुरुः ।
पितुः शतगुणा माता पूज्या वन्द्या गरीयसी ॥ १४४ ॥
विद्यादाता मन्त्रदाता ज्ञानदो हरिभक्तिदः ।

पूज्यो वन्द्यश्च सेव्यश्च मातुः शतगुणो गुरुः ॥ १४५ ॥
मन्त्राद्युद्गीरणेनैव गुरुरित्युच्यते बुधैः ।
अन्यो वन्द्यो गुरुरयमन्यश्चारोपितो गुरुः ॥ १४६ ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १४७ ॥
अदीक्षितस्य मूर्खस्य निष्कृतिर्नास्ति निश्चितम् ।
सर्वकर्मस्वनर्हस्य नरके तत्पशोः स्थितिः ॥ १४८ ॥
जन्मदातान्नदाता च मातान्ये गुरवस्तथा ।
पारं कर्तुं न शक्तास्ते घोरसंसारसागरे ॥ १४९ ॥
विद्यामन्त्रज्ञानदाता निपुणः पारकर्मणि ।
स शक्तः शिष्यमुद्धर्तुमीश्वरश्चेश्वरात् परः ॥ १५० ॥
गुरुर्विष्णुर्गुरुर्ब्रह्मा गुरुर्देवो महेश्वरः ।
गुरुर्धर्मो गुरुः शेषः सर्वात्मा निर्गुणो गुरुः १५१ ॥
सवतीर्थाश्रमश्चैव सर्वदेवाश्रयो गुरुः ।
सर्वदेवस्वरूपश्च गुरुरूपी हरिः स्वयम् ॥ १५२ ॥
अभीष्टदेवे रुष्टे च गुरुः शक्तो हि रक्षितुम् ।
गुरौ रुष्टेऽभीष्टदेवो न हि शक्तश्च रक्षितुम् ॥ १५३ ॥
सर्वे ग्रहाश्च यं रुष्टा रुष्टाश्च देवब्राह्मणाः ।
तस्मैव रुष्टो भवति गुरुरेव हि दैवतः ॥ १५४ ॥
न गुरोश्च प्रियश्चात्मा न गुरोश्च प्रियः सुतः ।
धनं प्रियञ्च न गुरोर्न च भार्य्या प्रिया तथा ॥ १५५ ॥
न गुरोश्च प्रियो धर्मो न गुरोश्च प्रियं तपः ।
न गुरोश्च प्रियं सत्यं न पुण्यञ्च गुरोः परम् ॥ १५६ ॥
गुरोः परो न शास्ता च न हि बन्धुर्गुरोः परः ।

देवो राजा च शास्ता च शिष्याणाञ्च सदा गुरुः ॥१५७
यावत् शक्तो दातुमन्नं तावत् शास्ता तदन्नदः ।
गुरुः शास्ता च शिष्याणां प्रतिजन्मनि जन्मनि ॥ १५
मन्त्रो विद्या गुरुर्दैवः पूर्वलब्धो यथा पतिः ।
प्रतिजन्मनिबन्धेन सर्वेषामुपरि स्थितः ॥ १५८ ॥
पिता गुरुश्च वन्द्यश्च यत्र जन्मनि जन्मदः ।
गुरवोऽन्ये तथा माता गुरुश्च प्रतिजन्मनि ॥ १६० ॥
विप्राणां त्वं वरिष्ठश्च गरिष्ठश्च तपस्विनाम् ।
ब्रह्मिष्ठो ब्रह्मविद्ब्रह्मन् धर्मिष्ठः सर्वधर्मिणाम् ॥ १६१
तुष्टो भव मुनिश्रेष्ठ माञ्च शक्रञ्च साम्प्रतम् ।
त्वयि तुष्टे सदा तुष्टा भवन्ति ग्रहदेवताः ॥ १६२ ॥
इत्युक्त्वा सा शची ब्रह्मन् पुनरुच्चै रुरोद ह ।
दृष्ट्वा तद्रोदनं तारा रुरोदोच्चैर्मुहुर्मुहुः ॥ १६३ ॥
पपात चरणे तारा रुरोद च पुनः पुनः ।
अपराधं क्षमेत्युक्त्वा गुरुस्तुष्टोऽप्युवाच ताम् ॥ १६४ ॥

गुरुरुवाच ।

उत्तिष्ठ तारे शच्याश्च सर्वं भद्रं भविष्यति ।
सद्यः प्राप्स्यति भर्त्तारं महेन्द्रञ्च मदाशिषा ॥ १६५
इत्युक्त्वा स गुरुस्तत्र विरराम च नारद ।
पपात चरणे तारा पुनरेव रुरोद च ॥ १६६ ॥
गृहीत्वा च शचीं तारा संस्थाप्य च स्ववक्षसि ।
बोधयामास विविधमध्यात्मकमनुत्तमम् ॥ १६७ ॥
शचीकृतं गुरुस्तोत्रं पूजाकाले च यः पठेत् ।
गुरुश्चाभीष्टदेवश्च सन्तुष्टः प्रतिजन्मनि ॥ १६८ ॥

ग्रहदेवद्विजास्तस्य परितुष्टाश्च सन्ततम् ।
राजानो बान्धवाश्चैव सन्तुष्टाः सर्वतः सदा ॥ १६९ ॥
गुरुभक्तिं विष्णुभक्तिं वाञ्छितं लभते ध्रुवम् ।
सदा हर्षो भवेत्तस्य न च शोकः कदाचन ॥ १७० ॥
पुत्रार्थी लभते पुत्रं भार्यार्थी लभते प्रियाम् ।
सुस्वरूपां गुणवतीं सतीं पुत्रवतीं ध्रुवम् ॥ १७१ ॥
रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।
अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ॥ १७२ ॥
कदाचिद् बन्धुविच्छेदो न भवेत्तस्य निश्चितम् ।
नित्यं तद्वर्द्धते धर्मो विपुलं निर्मलं यशः ॥ १७३ ॥
लभते परमैश्वर्यं पुत्रपौत्रधनान्वितम् ।
इह सर्वसुखं भुक्ता प्राप्यते श्रीहरेः पदम् ॥ १७४ ॥
न भवेत्तत्पुनर्जन्म हरिदास्यं लभेत् ध्रुवम् ।
विष्णुभक्तिरसाब्धौ च निमग्नश्च भवेत् ध्रुवम् ॥१७५॥
शश्वत् पिबति शान्तश्च विष्णुभक्तिरसामृतम् ।
जन्ममृत्युजराव्याधिशोकसन्तापनाशनम् ॥ १७६ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे महेन्द्रदर्पभङ्गप्रकरणे शची-
शोकापनोदने शचीकृतगुरुस्तोत्रकथनं
नामैकोनषष्टितमोऽध्यायः ।

———

# षष्टितमोऽध्यायः ।

—∞∞—

श्रीनारायण उवाच ।

शचीस्तोत्रं समाकर्ण्य परितुष्टो बृहस्पतिः ।
उवाच मधुरं शान्तः कान्तामिन्द्रस्य नारद ॥ १ ॥

बृहस्पतिरुवाच ।

त्यज वत्से भयं सर्वं भयं किं ते मयि स्थिते ।
यथा कचस्य पत्नी मे तथा त्वमसि शोभने ॥ २ ॥
यथा पुत्रस्तथा शिष्यो न भेदः पुत्रशिष्ययोः ।
तर्पणे पिण्डदाने च पालने परितोषणे ॥ ३ ॥
यथाग्निदाता पुत्रश्च तथा शिष्यश्च निश्चितम् ।
इतीदं कण्वशाखायामुवाच कमलोद्भवः ॥ ४ ॥
पिता माता गुरुर्भार्या शिशुश्चानाथबान्धवाः ।
एते पुंसां नित्यपोष्या इत्याह कमलोद्भवः ॥ ५ ॥
यश्चैतांश्च न पुष्णाति भस्मान्तं तस्य सूतकम् ।
दैवे पित्रे न कर्मार्हः सोऽपीत्याह महेश्वरः ॥ ६ ॥
कुरुते नरबुद्धिञ्च मातरं पितरं गुरुम् ।
अयशस्तस्य सर्वत्र विघ्न एव पदे पदे ॥ ७ ॥
सम्पन्मत्तो यः करोति स्वगुरोश्च पराभवम् ।
अचिरात्सर्वनाशश्च भवेत्तस्य सुनिश्चितम् ॥ ८ ॥
मां च दृष्ट्वा सभामध्ये नोत्तस्थौ पाकशासनः ।
तत्फलं भुज्यते साक्षात्तया: पश्य च साम्प्रतम् ॥ ९ ॥
अहं करोमि मोक्षञ्च तव रक्षां सुनिश्चितम् ।

शासितुं रक्षितुं शक्तः स एव गुरुरुच्यते ॥ १० ॥
न नश्यति सतीत्वञ्च हृच्छुद्धायाश्च योषितः ।
यन्मानसे विकल्पश्च तस्य धर्मश्च नश्यति ॥ ११ ॥
भविष्यति प्रभावस्ते दुर्गायाश्च समः सति ।
लक्ष्मीसमा प्रतिष्ठा च यशस्त्वद्यशसा समम् ॥ १२ ॥
सौभाग्यं राधिकातुल्यं तत्समं प्रेम भर्त्तरि ।
तत्तुल्यं गौरवं मान्यं प्रीतिः प्राधान्यमीश्वरे ॥ १३ ॥
रोहिण्याश्च समापि त्वा पूज्याश्च भारतीसमा ।
शुद्धा निरुपमा शश्वत् सावित्रीसदृशी सदा ॥ १४ ॥
एतस्मिन्नन्तरे तत्र आगतो नहुषाच्चरः ।
उवाच वचनं भीतो वाक्पतेर्गोचरे ततः ॥ १५ ॥

दूत उवाच ।

उत्तिष्ठ देवि शीघ्रं त्वं गच्छस्व नहुषं प्रति ।
क्रीड़ां कर्त्तुञ्च रहसि रम्ये नन्दनकानने ॥ १६ ॥
दूतस्य वचनं श्रुत्वा तमुवाच बृहस्पतिः ।
कम्पितावयवः कोपात् रक्तपङ्कजलोचनः ॥ १७ ॥

गुरुरुवाच ।

नहुषं वद गत्वा त्वं शचीं चेद्भोक्तुमिच्छसि ।
अपूर्वं यानमारुह्य निशायामागमिष्यसि ॥ १८ ॥
सप्तर्षीणाञ्च स्कन्धे च दत्त्वा स्वशिविकां शुभाम् ।
तामारुह्य सुवेशश्च गमनं कर्तुमर्हसि ॥ १९ ॥
वाक्पतेर्वचनं श्रुत्वा गत्वोवाच नृपं तदा ।
दूतस्य वचनं श्रुत्वा प्रहस्योवाच किङ्करम् ॥ २० ॥
गच्छ गच्छ त्वरन् गच्छ सप्तर्षीन् शीघ्रमानय ।

उपायञ्च करिष्यामि तैः सार्द्धं साम्प्रतं चर ॥ २१ ॥
नृपस्य वचनं श्रुत्वा गत्वा दूतस्तदन्तिकम् ।
उवाच सर्वांस्तत्रैव यथोक्तं नहुषेण च ॥ २२ ॥
दूतस्य वचनं श्रुत्वा ययुः सप्तर्षयो मुदा ।
राजा दृष्ट्वा च तान् सर्वान् ननामोवाच सादरम् ॥२३

नहुष उवाच ।

यूयञ्च ब्रह्मणः पुत्रा ज्वलन्तो ब्रह्मतेजसा ।
ब्रह्मणः सदृशाः सर्वे सततं भक्तवत्सलाः ॥ २४ ॥
नारायणपराः शश्वच्छुद्धसत्त्वस्वरूपिणः ।
मोहमात्सर्यहीनाश्च दर्पाहङ्कारवर्जिताः ॥ २५ ॥
नारायणसमाः सर्वे तेजसा यशसा सदा ।
गुणेन कृपया प्रेम्णा वरदानेन निश्चितम् ॥ २६ ॥
इत्युक्त्वा प्रणतो राजा तुष्टाव च रुरोद च ।
दृष्ट्वा ते कातरं भूपमूचुः परहितैषिणः ॥ २७ ॥

ऋषय ऊचुः ।

वरं वृणीष्व हे वत्स यत्ते मनसि वाञ्छितम् ।
सर्वं दातुं वयं शक्ता नासाध्यं नश्च किञ्चन ॥ २८ ॥
इन्द्रत्वं वा मनुत्वं वा चिरायुर्वा ततः परम् ।
सप्तद्वीपेश्वरत्वञ्चाप्यतीव सुचिरं सुखम् ॥ २९ ॥
अथापि सर्वसिद्धित्वं सर्वैश्वर्यं सुदुर्लभम् ।
मुक्तिं वा हरिभक्तिं वा तपसा या सुदुर्लभा ॥ ३० ॥
किमीप्सितं ते हे वत्स ब्रूहि नः साम्प्रतं मुदा ।
सर्वं तुभ्यं प्रदायैव यास्यामस्तपसे मुदा ॥ ३१ ॥
युगलक्षसमं यच्च चर्वं कृष्णार्चनं विना ।

तद्दिनं दुर्दिनं यत्तत् ध्यानसेवनवर्जितम् ॥ ३२ ॥
विना तत्सेवनं यो हि विषयान्यञ्च वाञ्छति ।
विषमत्ति प्रणाशाय विहायामृतमीप्सितम् ॥ ३३ ॥
ब्रह्मा शिवश्च धर्मश्च विष्णुश्चापि महान्विराट् ।
गणेशश्च दिनेशश्च शेषश्च सनकादयः ॥ ३४ ॥
एते यच्चरणाम्भोजं ध्यायन्तोऽहर्निशं मुदा ।
जन्ममृत्युजराव्याधिहरं तन्निरता वयम् ॥ ३५ ॥
तेषां च वचनं श्रुत्वा तानुवाच नृपेश्वरः ।
स लज्जितो नम्रवक्त्रो मायामोहितमानसः ॥ ३६ ॥

नहुष उवाच ।

सर्वं दातुं समर्थाश्च यूयञ्च भक्तवत्सलाः ।
अधुना देहि मे तूर्णं शचीदानमभीप्सितम् ॥ ३७ ॥
सप्तर्षिवाहनं कान्तं शचीच्छति महासती ।
एतदेव मम वरं निष्पन्नं कुरुताचिरम् ॥ ३८ ॥
नहुषस्य वचः श्रुत्वा मुनयश्च परस्परम् ।
अत्युच्चैर्जहसुः सर्वे कौतुकेन च नारद ॥ ३९ ॥
राजानं मोहितं मत्वा वेष्टितं विष्णुमायया ।
चक्रुः प्रतिज्ञां वोढुञ्च कृपया दीनवत्सलाः ॥ ४० ॥
चक्रुः स्कन्धे तच्छिविकां मुक्तामाणिक्यभूषिताम् ।
राजा ययौ सुवेशश्च रत्नभूषणभूषितः ॥ ४१ ॥
दृष्ट्वा चातिविलम्बञ्च भर्त्सयामास तान् नृपः ।
क्रुधा शशाप दुर्वासाश्चाग्रगामी च वर्त्मनि ॥ ४२ ॥
महानजगरो भूत्वा पत वै मूढमानस ।
दर्शनाद्धर्मपुत्रस्य तव मोक्षो भविष्यति ॥ ४३ ॥

रत्नयानेन वैकुण्ठं गत्वा वैकुण्ठमेवनम् ।
करिष्यसि महाराज न कर्म निष्फलं भवेत् ॥ ४४ ॥
इत्युक्त्वा प्रययुः सर्वे प्रहस्य मुनिसत्तमाः ।
राजा पपात तच्छापात् सर्पो भूत्वा महामुने ॥ ४५ ॥
शची जगाम तच्छ्रुत्वा गुरुं नत्वामरावतीम् ।
ययौ बृहस्पतिः शीघ्रं यत्रेन्द्रः पद्मतन्तुषु ॥ ४६ ॥
गत्वा सरोवराभ्यासमाजुहाव सुरेश्वरम् ।
अतिप्रसन्नवदनः कृपया च कृपानिधिः ॥ ४७ ॥

बृहस्पतिरुवाच ।

अयि वत्स त्वमागच्छ भयं किं ते मयि स्थिते ।
त्यज भीतिमिहागच्छ गुरुस्तेऽहं बृहस्पतिः ॥ ४८ ॥
स्वगुरोश्च स्वरं श्रुत्वा महेन्द्रो हृष्टमानसः ।
रूपं विहाय सूक्ष्मञ्च स्वरूपेण समाययौ ॥ ४९ ॥
पपात दण्डवन्मूर्ध्ना भक्त्या चरणयोर्गुरोः ।
तं रुदन्तं महाभीतं मुदोरसि चकार सः ॥ ५० ॥
कारयित्वा सोमयागं प्रायश्चित्तार्थमेव च ।
रत्नसिंहासने रम्ये वासयामास तं गुरुम् ॥ ५१ ॥
प्रददौ परमैश्वर्यं पूर्वस्माच्च चतुर्गुणम् ।
आगत्य सर्वदेवाश्च चक्रुः सेवां मुदान्विताः ॥ ५२ ॥
शची संप्राप भर्तारं महेन्द्रं त्रिदशेश्वरम् ।
मन्दिरे पुष्पतल्पे च सुमुदे सा मुदान्विता ॥ ५३ ॥
इत्येवं कथितं वत्स महेन्द्रदर्पभञ्जनम् ।
शचीसतीत्वरक्षा च किं भूयः श्रोतुमिच्छसि ॥ ५४ ॥

नारद उवाच।

सोमयागविधानञ्च ब्रूहि मां मुनिसत्तम।
कथं तं कारयामास गुरुश्च किं फलं परम्॥ ५५॥

नारायण उवाच।

ब्रह्महत्याप्रशमनं सोमयागफलं मुने।
वर्षं सोमलतापानं यजमानः करोति च॥ ५६॥
वर्षमेकं फलं भुंक्ते वर्षमेकं जलं मुदा।
त्रैवार्षिकं व्रतमिदं सर्वपापप्रणाशनम॥ ५७॥
यत्र त्रैवार्षिकं धान्यं निहितं भृतहृदये।
अधिकं वापि विद्येत स सोमं पातुमर्हति॥ ५८॥
महाराजश्च देवो वा यागं कर्त्तुमलं मुने।
न सर्वसाध्यो यज्ञोऽयं बह्वन्नो बहुदक्षिणः॥ ५९॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे शक्रदर्पभङ्गप्रकरणे शक्रमोक्षकथनं नाम षष्टितमोऽध्यायः।

---

# एकषष्टितमोऽध्यायः।

---

श्रीनारायण उवाच।

इति ते कथितं किञ्चिदिन्द्रस्य दर्पभञ्जनम्।
अपरं श्रूयतां ब्रह्मन् सावधानं निगूढकम्॥ १॥
समुद्रमथनं कृत्वा पीत्वामृतरसं पुरा।
निर्जित्य दैत्यसङ्घांश्च बहुदर्पो बभूव ह॥ २॥

तदा कृष्णो बलिद्वारा शक्रदर्पं बभञ्ज ह ।
भ्रष्टश्रियो बभूवुस्ते देवा इन्द्रपुरोगमाः ॥ ३ ॥
तदा बृहस्पतेः स्तोत्राददितेश्च व्रतेन ते ।
जातश्च स्वांशकलयाप्यदित्यां वामनो विभुः ॥ ४ ॥
याञ्ज्ञां कृत्वा बलिं राज्यं कृपया च कृपानिधिः ।
तस्मै ददौ महेन्द्राय देवेभ्यश्चापि सम्पदम् ॥ ५ ॥
बभूव शक्रदर्पश्च पुनः कल्पान्तरे पुरा ।
विभुर्दुर्वाससाद्वारा जहार तच्छ्रियं मुने ॥ ६ ॥
पुनर्ददौ च कृपया कृपालुर्भक्तवत्सलः ।
पुनः श्रीदुर्मदः सोऽपि जहार गौतमप्रियाम् ॥ ७ ॥
तदा गौतमशापेन भगाङ्गश्च बभूव सः ।
सम्प्राप यातनामिन्द्रः स्वाङ्गवेदनया पुरा ॥ ८ ॥
उच्चैस्तं जहसुर्दृष्ट्वा ऋषयो मनवस्तथा ।
देवाश्च लज्जिताः सर्वे मृततुल्यो बृहस्पतिः ॥ ९ ॥
तदा सहस्रवर्षञ्च तपस्तप्ता रवेः पुरा ।
रवेर्वरेण शक्रः स सहस्राक्षो बभूव ह ॥ १० ॥
कलङ्करूपमिन्द्रस्य तच्चक्षुर्निकरं परम् ।
यथा चन्द्रे कलङ्कश्च तारकाहरणादभूत् ॥ ११ ॥

नारद उवाच ।

ब्रह्मन् केन प्रकारेण जहार गौतमप्रियाम् ।
महासतीमहल्याञ्च पूज्यां भुवनपावनीम् ॥ १२ ॥
शुद्धाशयां महाभागां निर्मलां कमलाकलाम् ।
एतद्वेदितुमिच्छामि वद वेदविदां वर ॥ १३ ॥

श्रीनारायण उवाच ।

पुष्करे तीर्थयात्रायां सूर्य्यपर्वणि नारद ।
तत्रागतामहल्याञ्च ददर्श पाकशासनः ॥ १४ ॥
सस्मितां सुदतीं शान्तां पीनश्रोणिपयोधराम् ।
मूर्च्छामवाप चेन्द्रश्च दृष्टिमात्रेण तत्क्षणम् ॥ १५ ॥
अथापरदिने ताञ्च दृष्ट्वा मन्दाकिनीतटे ।
एकाकिनीं सस्मिताञ्च स्नान्तीं नग्नां सलज्जिताम् ॥१६॥
दृष्ट्वा श्रोणीं स्तनयुगमतीवविपुलं हरिः ।
मूर्च्छामवाप कामार्त्तो जहार चेतनां पुनः ॥ १७ ॥
क्षणेन चेतनां प्राप्य गत्वा कामी तदन्तिकम् ।
उवाच श्लक्ष्णया वाचा विनयेन पतिव्रताम् ॥ १८ ॥

महेन्द्र उवाच ।

अहो गुणमहो रूपमहो किं वा नवं वयः ।
अहो किंवा मुखश्रीस्ते शरच्चन्द्रविनिन्दिता ॥ १९ ॥
अहो कटाक्षं कुटिलं पुंसां चित्तविकर्षणम् ।
किमहो लोचनं पद्मप्रभामोचनमीप्सितम् ॥ २० ॥
गमनं रमणीयञ्च गजखञ्जनभञ्जनम् ।
अहो वाक्यन्तु मधुरं पीयूषादपि दुर्लभम् ॥ २१ ॥
किमहो विपुलश्रोणी कामाधारा मनोहरा ।
कामदा कामुकायैव मुनिमानसमोहिनी ॥ २२ ॥
अतीव कठिना पीना रम्भास्तम्भविडम्बिता ।
अहो नितम्बयुगलं वर्तुलं चन्द्रबिम्बवत् ॥ २३ ॥
श्रीयुक्तं श्रीफलयुगतुल्यं ते स्तनयुग्मकम् ।
अत्युन्नतं सुकठिनं त्रैलोक्यचित्तमोहनम् ॥ २४ ॥

अहो किंवा तपस्तेपे गौतमश्च तपोधनः ।
संप्राप यत्फलेनैव सुदतीं सुन्दरीं वराम् ॥ २५ ॥
निषेव्य प्रकृतिं दुर्गां विष्णुमायां सनातनीम् ।
लक्ष्मीश्च लक्ष्मीसदृशीं तपसा प्राप पद्मिनीम् ॥ २६ ॥
सुकोमलां सुवदनां ललनां नलिनाननाम् ।
शुद्धाञ्च सुदतीं श्यामां न्यग्रोधदलमध्यमाम् ॥ २७ ॥
त्वत्पालनञ्च जानामि कामशास्त्रविचक्षणः ।
कामी वा कामुकश्चन्द्रः किं त्वां जानाति गौतमः ॥२८
मां प्रशंसन्ति नित्यं ते कामशास्त्रविचक्षणाः ।
उर्वश्याद्याश्चाप्सरसो मां प्रशंसन्ति सन्ततम् ॥ २९ ॥
दासीं कृत्वा च दास्यामि शचीं तुभ्यं वरानने ।
त्रैलोक्यलक्ष्मीं विपुलां गृहाण त्यज गौतमम् ॥ ३०
अनभिज्ञं कामशास्त्रे दुर्बलञ्च तपस्विनम् ।
अव्यवहार्य्यं निष्कामं नारायणपरायणम् ॥ ३१ ॥
अविदग्धो विधाता च योजयामास योऽक्षमम् ।
ईदृशीं कामुकीं रम्यां ददाति च तपस्विने ॥ ३२ ॥
इत्युक्त्वा कामुकः शक्रः पपात चरणे मुदा ।
तमुवाच महासाध्वी वेदोक्तञ्च यथोचितम् ॥ ३३ ॥

अहल्योवाच ।

अभाग्याद्ब्रह्मणश्चापि मरीचेश्च तपस्विनः ।
अभाग्यात् कश्यपस्यापि त्वं पुत्रः पापमानसः ॥३४॥
किं तज्जपेन तपसा मौनेन च व्रतेन च ।
सुरार्चनेन तीर्थेन स्त्रीभिर्यस्य मनो हृतम् ॥ ३५ ॥
स्त्रीरूपं निर्मितं स्रष्टा मोहाय कामिनां मनः ।

अन्यथा न भवेत् सृष्टि: स्रष्टा तेन पुराज्ञया ॥ ३६ ॥
सर्वमायाकरण्डञ्च धर्ममार्गार्गलं नृणाम् ।
व्यवधानञ्च तपसां दोषाणामाश्रमं परम् ॥ ३७ ॥
कर्मबन्धनिबन्धानां निगडं कठिनं स्मृतम् ।
प्रदीपरूपं कीटानां मीनानां वडिशं यथा ॥ ३८ ॥
विषकुम्भं दुग्धमुखमारम्भे मधुरोपमम् ।
परिणामे दुःखवीजं सोपानं नरकस्य च ॥ ३९ ॥
ऋषय: सनकाद्याश्च नोद्वाहञ्चक्रुरीप्सितम् ।
परस्त्रीषु मनो येषां तेषां सर्वञ्च निष्फलम् ॥ ४० ॥
परस्त्रीसेवनं शक्र इहैवायुर्यशस्करम् ।
परत्र नरकं घोरं ददाति कामुकाय च ॥ ४१ ॥
इत्युक्ता च महासाध्वी विहाय तञ्च कामुकम् ।
प्रययौ स्वगृहं तूर्णं गृहिणी गौतमस्य च ॥ ४२ ॥
तत्सर्वं कथयामास गौतमाय तपस्विने ।
तस्थौ प्रहस्य स मुनिर्महेन्द्रञ्च विनिन्द्य च ॥ ४३ ॥
एकदा गौतम: शीघ्रं जगाम शङ्करालयम् ।
शक्रो गौतमरूपेण तां सम्भोगं चकार स: ॥ ४४ ॥
सर्वं ज्ञात्वा च सर्वज्ञो स्वयं मन्दिरमाययौ ।
निर्गच्छन्तं महेन्द्रञ्च ददर्श मुनिपुङ्गव: ॥ ४५ ॥
नम्रामहल्यां रहसि पीनश्रोणिपयोधरा ।
मुनि: शशाप शक्रञ्च भगाङ्गश्च भवेति च ॥ ४६ ॥
कोपाच्छशाप पत्नीञ्च रुदन्तीं भयविह्वलाम् ।
त्वञ्च पाषाणरूपा च महारण्ये भवेति च ॥ ४७ ॥
ययौ च स्वगृहं शक्रो लज्जैकतानमानस: ।

उवाच मधुरं भीता स्वामिनं शोककर्षितम् ॥ ४८ ॥

अहल्योवाच ।

मां च दासीं च निर्दोषां कथं त्यजसि धार्मिक ।
त्वं च वेदविदां श्रेष्ठो विचारं कुरु धर्मतः ॥ ४९ ॥

गौतम उवाच ।

त्वां जानामि मनःशुद्धां सुव्रतां च पतिव्रताम् ।
त्यक्ष्यामि च तथापि त्वां परवीर्य्यं च बिभ्रतीम् ॥ ५०
परभोग्या च या कान्ता साऽशुद्धा सर्वकर्मसु ।
तां यो गच्छेन्महामूढो नरकं तस्य कल्पकम् ॥ ५१ ॥
अन्नं विष्ठा जलं मूत्रं परभोग्यायाश्च निश्चितम् ।
उपस्पर्शेन तस्याश्च हन्ति पुण्यं पुराकृतम् ॥ ५२ ॥
अनिच्छया च शृङ्गारे स्त्री जारेण न दुष्यति ।
दुष्टा स्त्री निश्चितं साध्वी स्वेच्छाशृङ्गारकर्मणि ॥ ५३
त्वं शक्रं स्वामिनं मत्वा सुखं भुक्त्वा रतिं गृहे ।
पश्चाद्बभूव ते ज्ञानं मां दृष्ट्वा च निशामय ॥ ५४ ॥
गच्छ गच्छ महारण्यं भव पाषाणरूपिणी ।
रामपादाङ्गुलिस्पर्शात् सद्यः पूता भविष्यसि ॥ ५५ ॥
मां संप्राप्स्यसि तत्पुण्यात् पुनरेवागमिष्यसि ।
गच्छ कान्ते महारण्यमित्युक्त्वा तपसे ययौ ॥ ५६ ॥
इत्येवं कथितं सर्वं महेन्द्रदर्पभञ्जनम् ।
पुनः संप्राप लक्ष्मीं च विभीश्च कृपया मुने ॥ ५७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण-
नारदसंवादे श्रीकृष्णजन्मखण्डे
एकषष्टितमोऽध्यायः ।

## द्विषष्टितमोऽध्यायः।

——:०:——

नारद उवाच।

ब्रह्मन् केन प्रकारेण रामो दाशरथिः स्वयम्।
चकार मोचणं कुत्र युगे गौतमयोषितः॥ १॥
रामावतारं सुखदं समासेन मनोहरम्।
कथयस्व महाभाग श्रोतुं कौतूहलं मम॥ २॥

श्रीनारायण उवाच।

ब्रह्मणा प्रार्थितो विष्णुर्जातो दशरथात् स्वयम्।
कौशल्यायाञ्च भगवान् त्रेतायाञ्च मुदान्वितः॥ ३॥
कैकेय्यां भरतश्चैव रामतुल्यो गुणेन च।
लक्ष्मणश्चापि शत्रुघ्नः सुमित्रायां गुणार्णवः॥ ४॥
विश्वामित्रप्रेषितश्च श्रीरामश्च सलक्ष्मणः।
प्रययौ मिथिलां रम्यां सीताग्रहणहेतवे॥ ५॥
दृष्ट्वा पाषाणरूपाञ्च रामो वर्त्मनि कामिनीम्।
विश्वामित्रञ्च पप्रच्छ कारणं जगदीश्वरः॥ ६॥
रामस्य वचनं श्रुत्वा विश्वामित्रो महातपाः।
उवाच तत्र धर्मिष्ठो रहस्यं सर्वमेव च॥ ७॥
कारणं तन्मुखाच्छ्रुत्वा रामो भुवनपावनः।
पस्पर्श पादाङ्गुलिना सा बभूव च पद्मिनी॥ ८॥
सा राममाशिषं कृत्वा प्रययौ भर्तृमन्दिरम्।
शुभाशिषं ददौ तस्मै भार्य्यां सम्प्राप्य गौतमः॥ ९॥

रामश्च मिथिलां गत्वा धनुर्भङ्गं शिवस्य च ।
चकार पाणिग्रहणं सीतायाश्चैव नारद ॥ १० ॥
कृत्वा विवाहं राजेन्द्रो भृगुदर्पं निहत्य च ।
अयोध्यां प्रययौ रम्यां क्रीड़ाकौतुकमङ्गलैः ॥ ११ ॥
राजा पुत्रं नृपं कर्तुमियेष स तु सादरम् ।
सप्ततीर्थोदकं तूर्णमानीय मुनिपुङ्गवान् ॥ १२ ॥
कृताधिवासं श्रीरामं सर्वमङ्गलसंयुतम् ।
दृष्ट्वा भरतमाता च कैकेयी शोकविह्वला ॥ १३ ॥
वरयामास राजानं पूर्वमङ्गीकृतं वरम् ।
रामस्य वनवासञ्च राजत्वं भरतस्य च ॥ १४ ॥
वरं दातुं महाराजो नैयेष प्रेममोहितः ।
धर्मसत्यभयेनैवोवाच रामो नृपं सुधीः ॥ १५ ॥

श्रीराम उवाच ।

तड़ागशतदानेन यत् पुण्यं लभते नरः ।
ततोऽधिकञ्च लभते वापीदानेन निश्चितम् ॥ १६ ॥
दशवापीप्रदानेन यत् पुण्यं लभते नरः ।
ततोऽधिकञ्च लभते पुण्यं कन्याप्रदानतः ॥ १७ ॥
दशकन्याप्रदानेन यत् पुण्यं लभते नरः ।
ततोऽधिकञ्च लभते यज्ञैकेन नराधिप ॥ १८ ॥
दशयज्ञेन यत् पुण्यं लभते पुण्यकृज्जनः ।
ततोऽधिकञ्च लभते पुत्रास्यदर्शनेन च ॥ १९ ॥
दर्शने शतपुत्राणां यत् पुण्यं लभते नरः ।
तत् पुण्यं लभते नूनं पुण्यवान् सत्यपालनात् ॥२०॥
न हि सत्यात् परो धर्मो नानृतात् पातकं परम् ।

न हि गङ्गासमं तीर्थं न देवः केशवात् परः॥ २१॥
नास्ति धर्मात् परो बन्धुर्नास्ति धर्मात् परं धनम्।
धर्मात् प्रियः परः को वा स्वधर्मं रक्ष यत्नतः॥ २२॥
स्वधर्मे रक्षिते तात शश्वत् सर्वत्र मङ्गलम्।
यशस्य सुप्रतिष्ठा च प्रतापः पूजनं परम्॥ २३॥
चतुर्दशाब्दं धर्मेण त्यक्ता गृहसुखं भ्रमन्।
वनवासं करिष्यामि सत्यस्य पालनाय ते॥ २४॥
कृत्वा सत्यञ्च शपथमिच्छयानिच्छयाथवा।
न कुर्यात्पालनं यो हि भस्मान्तं तस्य सूतकम्॥ २५॥
कुम्भीपाके स पचति यावच्चन्द्रदिवाकरौ।
ततो मूको भवेत् कुष्ठी मानवः सप्तजन्मसु॥ २६॥
इत्येवमुक्ता श्रीरामो विधाय वल्कलं जटाम्।
प्रययौ च महारण्ये सीतया लक्ष्मणेन च॥ २७॥
पुत्रशोकान्महाराजस्तत्याज स्वतनुं मुने।
पालनाय पितुः सत्यं रामो बभ्राम कानने॥ २८॥
कालान्तरे महारण्ये भगिनी रावणस्य च।
भ्रमन्ती कानने घोरे भर्त्रा सार्द्धं सुकौतुकात्॥ २९॥
ददर्श रामं कुलटा कामार्त्ता राक्षसी तदा।
पुलकाञ्चितसर्वाङ्गी मूर्च्छामाप स्मरेण च॥ ३०॥
श्रीरामनिकटं गत्वा सस्मितोवाच कामुकी।
शश्वद्यौवनसंयुक्तातिप्रौढ़ा कामदुर्मदा॥ ३१॥

शूर्पणखोवाच।

हे राम हे घनश्याम रूपधाम गुणान्वित।
भावानुरक्तां वनितां मां गृहाण सुनिर्जने॥ ३२॥

श्रुत्वा शूर्पणखावाक्यं धर्मं संस्मृत्य धार्मिकः ।
उवाच मधुरं वाक्यं शापभीतश्च नारद ॥ ३३ ॥

श्रीराम उवाच ।

अम्ब मातः सभार्योऽहमभार्यं गच्छ मेऽनुजम् ।
भजेत् प्रियजनं दुःखमितरश्च सुखालयम् ॥ ३४ ॥
रामस्य वचनं श्रुत्वा प्रययौ लक्ष्मणं मुदा ।
ददर्श लक्ष्मणं शान्तं कान्तञ्च लक्षणान्वितम् ॥ ३५ ॥
मां भजस्व महाभागेत्युवाच च पुनः पुनः ।
लक्ष्मणस्तद्वचः श्रुत्वा तामुवाच कुतूहलात् ॥ ३६ ॥

लक्ष्मण उवाच ।

विहाय रामं सर्वेशं हे मूढे दासमिच्छसि ।
सीतादासी च मत्पत्नी सीतादासोऽहमेव च ॥ ३७ ॥
भव सीतासपत्नी त्वं गच्छ रामं मदीश्वरम् ।
तव पुत्रो भविष्यामि सीतायाश्च यथा सति ॥ ३८ ॥
लक्ष्मणस्य वचः श्रुत्वा कामेन हृतमानसा ।
उवाच लक्ष्मणं मूढ़ा शुष्ककण्ठोष्ठतालुका ॥ ३९ ॥

शूर्पणखोवाच ।

यदि त्यजसि मां मूढ़ कामात् स्वयमुपस्थिताम् ।
युवयोश्च विपत्तिश्च भविष्यति न संशयः ॥ ४० ॥
ब्रह्मा च मोहिनीं त्यक्त्वा विश्वेऽपूज्यो बभूव सः ।
रम्भाशापेन दक्षश्च छागमुण्डो बभूव सः ॥ ४१ ॥
सर्वेद्यश्चोर्वशीशापाद् यज्ञभागविवर्जितः ।
रूपहीनः कुवेरश्च मेनाशापेन लक्ष्मण ॥ ४२ ॥
कामो घृताचीशापेन बभूव भस्मसात् शिवात् ।

बलिर्मदालसाशापाद् भ्रष्टराज्यो बभूव ह ॥ ४३ ॥
शापेन मिश्रकेश्याश्च हृतभार्यो वृहस्पतिः ।
मम शापात्तथा रामो हृतभार्यो भविष्यति ॥ ४४ ॥
कामातुरां यौवनस्थां भार्यां स्वयमुपस्थिताम् ।
न त्यजेद्धर्मभीतश्च श्रुतं साध्यं दिने पुरा ।
इह त्यक्त्वा विपद्ग्रस्तः परत्र नरकं व्रजेत् ॥ ४५ ॥
श्रुत्वा शूर्पणखावाक्यमर्द्धचन्द्रेण लक्ष्मणः ।
चिच्छेद नासिकां तस्याः क्षुरधारेण लीलया ॥ ४६ ॥
तस्या भ्राता च युयुधे बलवान् खरदूषणः ।
ससैन्यो लक्ष्मणास्त्रेण स जगाम यमालयम् ॥ ४७ ॥
चतुर्दशसहस्रञ्च राक्षसान् खरदूषणम् ।
मृतान् दृष्ट्वा शूर्पणखा भर्त्सयामास रावणम् ॥ ४८ ॥
सर्वं निवेदनं कृत्वा जगाम पुष्करं तदा ।
ब्रह्मणश्च वरं प्राप कृत्वा च दुष्करं तपः ॥ ४९ ॥
उवाच तादृशीं दृष्ट्वा निराहारां तपस्विनीम् ।
सर्वज्ञस्तन्मनो मत्वा कृपासिन्धुश्च नारद ॥ ५० ॥

ब्रह्मोवाच ।

अप्राप्य रामं दुष्प्रापं करोषि दुष्करं तपः ।
जितेन्द्रियाणां प्रवरं लक्ष्मणं धर्मलक्षणम् ॥ ५१ ॥
ब्रह्मविष्णुशिवादीनामीश्वरं प्रकृतेः परम् ।
जन्मान्तरे च भर्तारं प्राप्स्यसि त्वं वरानने ॥ ५२ ॥
इत्येवमुक्त्वा ब्रह्मा च जगाम स्वालयं मुदा ।
देहं तत्याज सा वह्नौ सा च कुब्जा बभूव ह ॥ ५३ ॥
अथ सूर्पणखावाक्यात्कोपात्कम्पितविग्रहः ।

जहार मायया सीतां मायावी राक्षसेश्वरः ॥ ५४ ॥
सीतां न दृष्ट्वा रामश्च मूर्च्छां प्राप चिरं मुने ।
चेतनां कारयामास भ्राता चाध्यात्मिकेन च ॥ ५५ ॥
ततो बभ्राम गहनं शैलञ्च कन्दरं नदम् ।
अचहर्निशं स शोकार्त्तो मुनीनामाश्रमं मुने ॥ ५६ ॥
चिरमन्वेषणं कृत्वा न दृष्ट्वा जानकीं विभुः ।
चकार मित्रतां रामः सुग्रीवेण स्वयं प्रभुः ॥ ५७ ॥
निहत्य वालिनं बाणैर्ददौ राज्यञ्च लीलया ।
सुग्रीवाय च मित्राय स्वीकारपालनाय वै ॥ ५८ ॥
दूतान् प्रस्थापयामास सर्वत्र वानरेश्वरः ।
तस्थौ सुग्रीवभवने श्रीरामश्च सलक्ष्मणः ॥ ५९ ॥
हनूमते वरं दत्त्वा रम्यं रत्नाङ्गुलीयकम् ।
सीतायै शुभसन्देशं प्राणधारणकारणम् ॥ ६० ॥
तञ्च प्रस्थापयामास दक्षिणां दिशमुत्तमाम् ।
सुप्रीत्यालिङ्गनं दत्त्वा पादरेणून् सुदुर्लभान् ॥ ६१ ॥
हनूमान् प्रययौ लङ्कां सीतान्वेषणहेतवे ।
रामादधीतसन्देशो ययौ रुद्रकलोद्भवः ॥ ६२ ॥
अशोककानने सीतां ददर्श शोककर्शिताम् ।
निराहारामतिकृशां कुह्वां चन्द्रकलामिव ॥ ६३ ॥
सततं रामरामेति जपन्तीं भक्तिपूर्वकम् ।
बिभ्रतीञ्च जटाभारं तप्तकाञ्चनसन्निभाम् ॥ ६४ ॥
ध्यायमानां पदाब्जञ्च श्रीरामस्य दिवानिशम् ।
शुद्धशय्यां सुशीलाञ्च सुव्रताञ्च पतिव्रताम् ॥ ६५ ॥
महालक्ष्मीलक्ष्मयुक्तां प्रज्वलन्तीं स्वतेजसा ।

पुण्यदां सर्वतीर्थानां दृष्ट्वा भुवनपावनीम् ॥ ६६ ॥
प्रणम्य मातरं दृष्ट्वा रुदन्तीं वायुनन्दनः।
रत्नाङ्गुलीयं रामस्य ददौ तस्यै मुदान्वितः ॥ ६७ ॥
रुरोद धर्मी तां दृष्ट्वा धृत्वा तच्चरणाम्बुजम्।
उवाच रामसन्देशं सीताजीवनरक्षणम् ॥ ६८ ॥

हनूमानुवाच।

पारं समुद्रे श्रीरामः सन्नद्धश्च सलक्ष्मणः।
बभूव राममन्त्रश्च सुग्रीवो बलवान् कपिः ॥ ६९ ॥
रामश्च वालिनं हत्वा राज्यं निष्कण्टकं ददौ।
सुग्रीवाय च मित्राय तद्भार्यां वालिना हृताम् ॥ ७० ॥
सुग्रीवश्च तवोद्धारं स्वीचकार च धर्मतः।
वानराश्च ययुः सर्वे तवान्वेषणकारणात् ॥ ७१ ॥
प्राप्य मङ्गलवार्ताञ्च मत्तो राजीवलोचनः।
गम्भीरं सागरं बद्ध्वा सोऽचिरेणागमिष्यति ॥ ७२ ॥
निहत्य रावणं पापं सपुत्रञ्च सबान्धवम्।
करिष्यत्यचिरेणैव हे मातस्तवमोचनम् ॥ ७३ ॥
अद्य रत्नमयीं लङ्कां निःशङ्कस्त्वत्प्रसादतः।
भस्मीभूतां करिष्यामि मातः पश्य च सस्मितम् ॥ ७४ ॥
मर्कटीडिम्भतुल्याञ्च लङ्कां पश्यामि सुव्रते।
मूत्रतुल्यं समुद्रञ्च शरावमिव भूतलम् ॥ ७५ ॥
पिपीलिकासङ्घमिव ससैन्यं रावणं तथा।
संहर्तुञ्च समर्थोऽहं मुहूर्तार्धेन लीलया ॥ ७६ ॥
रामप्रतिज्ञारक्षार्थं न हनिष्यामि साम्प्रतम्।
स्वस्था भव महाभागे त्यज भीतिं महीश्वरि ॥ ७७ ॥

वानरस्य वचः श्रुत्वा रुरोदोच्चैर्मुहुर्मुहुः ।
उवाच वचनं भीता सीता रामपतिव्रता ॥ ७८ ॥

सीतोवाच ।

अये जीवति मे रामो मच्छोकार्णवदारुणात् ।
अपि मे कुशली नाथः कौशल्यानन्दनः प्रभुः ॥ ७९ ॥
कीदृशश्च कृशाङ्गश्च जानकीजीवनोऽधुना ।
किमाहारश्च किं भुङ्क्ते मम प्राणाधिकः प्रियः ॥ ८० ॥
अपि पारे समुद्रस्य सत्यं सीतापतिः स्वयम् ।
अपि सत्यं ससन्नद्धो न शोकेन हतः प्रभुः ॥ ८१ ॥
अपि स्मरति मां पापां स्वामिनो दुःखरूपिणीम् ।
मदर्थे कति दुःखं वा संप्राप स मदीश्वरः ॥ ८२ ॥
हारो नारोपितः कण्ठे पुरा व्यवहितो रतौ ।
अधुनैवावयोर्मध्ये समुद्रः शतयोजनः ॥ ८३ ॥
अपि द्रक्ष्यामि तं रामं करुणासागरं प्रभुम् ।
कान्तं शान्तं नितान्तञ्च धर्मिष्ठं धर्मकर्मणि ॥ ८४ ॥
अपि सेवां करिष्यामि पादपद्मे पुनः प्रभोः ।
पतिसेवाविहीना या मूढ़ा सा जीवनं वृथा ॥ ८५ ॥
अपि मे धर्मपुत्रश्च सत्यं जीवति लक्ष्मणः ।
मच्छोकसागरे मग्नो भग्नदर्पो मया विना ॥ ८६ ॥
वीराणां प्रवरो धर्मी देवकल्पश्च देवरः ।
अपि सत्यं स सन्नद्धो मत्प्रभोरनुजः सदा ॥ ८७ ॥
अपि द्रक्ष्यामि सत्यं तं लक्ष्मणं धर्मलक्षणम् ।
प्राणानामधिकं प्रेम्णा धन्यं पुण्यस्वरूपिणम् ॥ ८८ ॥
इत्येवं वचनं श्रुत्वा दत्त्वा प्रत्युत्तरं शुभम् ।

भस्मीभूताञ्च लङ्काञ्च चकार लीलया मुने ॥ ८९ ॥
पुनः प्रबोधं तस्यै च दत्त्वा वायुसुतः कपिः ।
प्रययौ लीलया वेगाद्यत्र राजीवलोचनः ॥ ९० ॥
सर्वं तत्कथयामास वृत्तान्तं मातुरेव च ।
सीतामङ्गलवृत्तान्तं श्रुत्वा रामो रुरोद च ॥ ९१ ॥
रुरोदाश्चैव लक्ष्मणश्च सुग्रीवश्चापि नारद ।
वानरा रुरुदुः सर्वे महाबलपराक्रमाः ॥ ९२ ॥
निबध्य सेतुं लङ्काञ्च प्रययौ रघुनन्दनः ।
ससैन्यः सानुजः शीघ्रं सबद्धश्चापि नारद ॥ ९३ ॥
निहत्य रावणं रामो रणं कृत्वा सबान्धवम् ।
चकार मोचणं ब्रह्मन् सीतायाश्च शुभे चणे ॥ ९४ ॥
कृत्वा पुष्पकयानेन सीतां सत्यपरायणाम् ।
अयोध्यां प्रययौ शीघ्रं क्रीड़ाकौतुकमङ्गलैः ॥ ९५ ॥
क्रीड़ां चकार भगवान् सीतां कृत्वा च वचसि ।
विजहौ विरहज्वालां सीता रामश्च तत्चणम् ॥ ९६ ॥
सप्तद्वीपेश्वरो रामो बभूव पृथिवीतले ।
बभूव निलिखा पृथ्वी आधिव्याधिविवर्जिता ॥ ९७ ॥
बभूवतू रामपुत्रौ धार्मिकौ च कुशीलवौ ।
तयोश्च पुत्रैश्च पौत्रैश्च सूर्य्यवंशोद्भवा नृपाः ॥ ९८ ॥
इति ते कथितं वत्स श्रीरामचरितं शुभम् ।
सुखदं मोचदं सारं पारपोतं भवार्णवे ॥ ९९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे श्रीरामचरितं नाम
द्विषष्टितमोऽध्यायः ।

# त्रिषष्टितमोऽध्यायः ।



नारद उवाच ।

अथ कंसो विचिन्त्यैवं दृष्ट्वा दुःस्वप्नमेव च ।
समुद्विग्नो महाभीतो निराहारो निरुत्सुकः ॥ १
पुत्रं मित्रं बन्धुगणं बान्धवञ्च पुरोहितम् ।
समानीय सभामध्ये तानुवाच सुदुःखितः ॥ २ ॥

कंस उवाच ।

मया दृष्टो निशीथे यो दुःस्वप्नो हि भयप्रदः ।
निबोधत बुधाः सर्वे बान्धवाश्च पुरोहिताः ॥ ३ ॥
बिभ्रती रक्तपुष्पाणां मालां सा रक्तचन्दनम् ।
रक्ताम्बरं खड्गतीक्ष्णं खर्परञ्च भयङ्करम् ॥ ४ ॥
प्रकृत्याट्टाट्टहासञ्च लोलजिह्वा भयङ्करी ।
अतीववृद्धा कृष्णाङ्गी नगरे मम नृत्यति ॥ ५ ॥
मुक्तकेशी छिन्ननासा कृष्णा कृष्णाम्बरापि या ।
विधवा सा महाशूद्री मामालिङ्गितुमिच्छति ॥ ६
मलिनं चैलखण्डञ्च बिभ्रती रुक्षमूर्द्धजान् ।
दधतीं चूर्णतिलकं कपाले मम वक्षसि ॥ ७ ॥
कृष्णवर्णानि पक्वानि छिन्नभिन्नानि सत्यक ।
पतन्ति कृत्वा शब्दांश्च शश्वत्तालफलानि च ॥ ८ ॥
कुचैलो विकृताकारो म्लेच्छो हि रुक्षमूर्द्धजः ।
ददाति मह्यं भूषायां छिन्नभिन्नकपर्द्दकान् ॥ ९

महारुष्टा च दिव्या स्त्री पतिपुत्रवती सती ।
बंभञ्च पूर्णकुम्भञ्च साभिशप्य पुनः पुनः ॥ १० ॥
अम्लानामूढ़मालाञ्च रक्तचन्दनचर्च्चिताम् ।
ददाति मह्यं विप्रश्च महारुष्टोऽतिशप्य च ॥ ११ ॥
चणमङ्गारवृष्टिश्च भस्मवृष्टिः चणं चणम् ।
चणं चणं रक्तवृष्टिर्भवेच्च नगरे मम ॥ १२ ॥
वानरं वायसं श्वानं भल्लूकं शूकरं खरम् ।
पश्यामि विकटाकारं शब्दं कुर्वन्तमुल्वणम् ॥ १३ ॥
पश्यामि शुष्ककाष्ठानां राशिमम्लानकज्जलम् ।
अरुणोदयवेलायां कपीन् छिन्ननखानि च ॥ १४ ॥
पीतवस्त्रपरीधाना शुक्लचन्दनचर्च्चिता ।
बिभ्रती मालतीमालां रत्नभूषणभूषिता ॥ १५ ॥
क्रीड़ाकमलहस्ता सा सिन्दूरविन्दुशोभिता ।
कृत्वाऽभिशापं मां रुष्टा याति मन्मन्दिरात् सती ॥१६॥
पाशहस्तांश्च पुरुषान् मुक्तकेशान् भयङ्करान् ।
अतिरुचांश्च पश्यामि विशतो नगरं मम ॥ १७ ॥
नग्ननारीं मुक्तकेशीं नृत्यन्तीञ्च गृहे गृहे ।
अतीवविकृताकारां पश्यामि सस्मितां सदा ॥ १८ ॥
छिन्ननासा च विधवा महाशूद्री दिगम्बरी ।
सा तैलाभ्यङ्गितं माञ्च करोत्यतिभयङ्करी ॥ १९ ॥
निर्वाणाङ्गारयुक्ताश्च भस्मपूर्णा दिगम्बराः ।
अतिप्रभातसमये चिताः पश्यामि सस्मिताः ॥ २० ॥
पश्यामि च विवाहञ्च नृत्यगीतमनोहरम् ।
रक्तवस्त्रपरिधानान् पुरुषान् रक्तमूर्द्धजान् ॥ २१ ॥

रक्तं वमन्तं पुरुषं नृत्यन्तं नग्नमुल्वणम् ।
धावन्तञ्च शयानञ्च पश्यामि सस्मितं सदा ॥ २२ ॥
राहुग्रस्तञ्च गगने मण्डलं चन्द्रसूर्य्ययोः ।
एककाले च पश्यामि सर्वग्रासञ्च बान्धवाः ॥ २३ ॥
उल्कापातं धूमकेतुं भूकम्पं राष्ट्रविप्लवम् ।
झञ्झावातं महोत्पातं पश्यामि च पुरोहित ॥ २४ ॥
वायुना घूर्णमानांश्च छिन्नस्कन्धान् महीरुहान् ।
पतितान् पर्वतांश्चैव पश्यामि पृथिवीतले ॥ २५ ॥
पुरुषं छिन्नशिरसं नृत्यन्तं नग्नमुच्छ्रितम् ।
मुण्डमालाकरं घोरं पश्यामि च गृहे गृहे ॥ २६ ॥
दग्धं सर्वाश्रमं भस्मपूर्णमङ्गारसङ्कुलम् ।
हाहाकारञ्च कुर्वन्तं सर्वं पश्यामि सर्वतः ॥ २७ ॥
इत्येवमुक्त्वा राजा स विरराम सभातले ।
श्रुत्वा स्वप्नं बान्धवाश्च नतवक्त्रा निशश्वसुः ॥ २८ ॥
जहार चेतनां सद्यः सत्यकश्च पुरोहितः ।
मत्वा विनाशं कंसस्य यजमानस्य नारद ॥ २९ ॥
रुरोद नारीवर्गश्च पिता माता च शोकतः ।
मेने विनाशकालञ्च सद्यः स्वयमुपस्थितम् ॥ ३० ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे कंसदुःस्वप्नकथनं नाम
त्रिषष्टितमोऽध्यायः ।

———

# चतुःषष्टितमोऽध्यायः।

श्रीनारायण उवाच।

सर्वं कृत्वा परामर्शं सत्यकश्च पुरोहितः।
बुद्धिमान् शुक्रशिष्यश्च तमुवाच हितं मुने॥ १॥

सत्यक उवाच।

भयं त्यज महाभाग भयं किं ते मयि स्थिते।
कुरु यागं महेशस्य सर्वारिष्टविनाशनम्॥ २॥
यागो धनुर्मखो नाम बह्वन्नो बहुदक्षिणः।
दुःस्वप्नानां नाशकरः शत्रुभीतिविनाशकः॥ ३॥
आध्यात्मिकमाधिदैवमाधिभौतिकमुत्कटम्।
एषां त्रिविधोत्पातानां खण्डनो भूतिवर्धनः॥ ४॥
यागे समाप्ते शम्भुश्च जरामृत्युहरं वरम्।
ददाति साक्षाद्भवति दाता च सर्वसम्पदाम्॥ ५॥
चकारेमञ्च यागञ्च पुरा बाणो महाबलः।
नन्दी परशुरामश्च भल्लश्च बलिनां वरः॥ ६॥
पुरा ददौ धनुरिदं शिवो नन्दीश्वराय च।
यागेन भूत्वा सिद्धः स ददौ बाणाय धार्मिकः॥ ७॥
कृत्वा यागं महासिद्धो ददौ रामाय पुष्करे।
तुभ्यं ददौ पर्शुरामः कृपया च कृपानिधिः॥ ८॥
सहस्रहस्तपरिमितं दैर्घ्येऽतिकाठिनं नृप।
दशहस्तप्रशस्तञ्च शङ्करेच्छाविनिर्मितम्॥ ९॥
पशुपतेः पाशुपतं युक्तयानेन दुर्वहम्।

सर्वे भंक्तुं न शक्ताश्च देवं नारायणं विना ॥ १० ॥
यागे च धनुषः पूजां शङ्करस्य तु शङ्करे ।
कुरु शीघ्रं शुभाहेश्च सर्वान् कुरु निमन्त्रणम् ॥ ११ ॥
अस्मिन् यागे धनुर्भङ्गो भवेद्यदि नराधिप ।
विनाशो यजमानस्य भविष्यति न संशयः ॥ १२ ॥
भग्ने धनुषि यागश्च भग्नो भवति निश्चितम् ।
फलं ददाति को वात्र चानिष्पन्ने च कर्मणि ॥ १३ ॥
ब्रह्मा च धनुषो मूले मध्ये नारायणः स्वयम् ।
अग्रे चोग्रप्रतापश्च महादेवो महामते ॥ १४ ॥
धनुर्हि त्रिविकारश्च सद्रत्नखचितं वरम् ।
ग्रीष्ममध्याह्नमार्तण्डप्रभाप्रच्छन्नकारणम् ॥ १५ ॥
अशक्तश्च नमयितुमनन्तश्च महाबलः ।
सूर्यश्च कार्तिकेयश्च का कथान्यस्य भूमिप ॥ १६ ॥
त्रिपुरारिः पुरानेन जघान त्रिपुरं मुदा ।
निर्भयं कुरु स्वच्छन्दं मङ्गलार्हं महोत्सवे ॥ १७ ॥
सत्यकस्य वचः श्रुत्वा चन्द्रवंशविवर्धनः ।
उवाच कंसः सर्वार्थे सततञ्च हितैषिणम् ॥ १८ ॥

कंस उवाच ।

वसुदेवगृहे यज्ञे मद्वधी कुलनाशनः ।
स्वच्छन्दं नन्दगेहे च वर्धते नन्दनन्दनः ॥ १९ ॥
मद्बन्धुवर्गान् शूरांश्च मन्त्रिणः सुविशारदान् ।
भगिनीं पूतनां पूतां जघान बालको बली ॥ २० ॥
गोवर्धनं दधारैककरेण बलवर्धनः ।
महेन्द्रस्य च शूरस्य चकार च पराभवम् २१ ॥

ब्रह्माणं दर्शयामास ब्रह्मरूपं चराचरम् ।
निवहं बालवत्सानां चकार कृत्रिमं मुदा ॥ २२ ॥
तमेव बलिनं हन्तुं मन्त्रणं कुरु सत्यक ।
मम शत्रुर्विना तेन नास्तीह धरणीतले ॥ २३ ॥
न हि स्वर्गे न पाताले त्रिषु लोकेषु निश्चितम् ।
सन्ति सन्तश्च राजानः सर्वत्र मम बान्धवाः ॥ २४ ॥
महातपस्वी ब्रह्मा च तपस्वी शङ्करः स्वयम् ।
विष्णुः सर्वत्र सर्वात्मा समदर्शी सनातनः ॥ २५ ॥
नन्दपुत्रं निहत्याहं त्रिषु लोकेषु पूजितः ।
सार्वभौमो भविष्यामि सप्तद्वीपेश्वरो महान् ॥ २६ ॥
स्वर्गं निहत्य शक्रञ्च दुर्बलं दैत्यनिर्जितम् ।
भविष्यामि महेन्द्रश्च तत्र निर्जित्य भास्करम् ॥ २७ ॥
यक्ष्मग्रस्तञ्च चन्द्रञ्च ममैव पूर्वपूरुषम् ।
वायुं कुवेरं वरुणं यमं जेष्यामि निश्चितम् ॥ २८ ॥
गच्छ नन्दव्रजं शीघ्रं नन्दञ्च नन्दनन्दनम् ।
तद्भ्रातरञ्च बलिनं बलमानय साम्प्रतम् ॥ २९ ॥
कंसस्य वचनं श्रुत्वा तमुवाच स सत्यकः ।
हितं सत्यं नीतिसारं परं सामयिकं तथा ॥ ३० ॥

सत्यक उवाच ।

अक्रूरमुद्धवं वापि वसुदेवमथापि वा ।
प्रस्थापय महाभाग नन्दव्रजमभीप्सितम् ॥ ३१ ॥
सत्यकस्य वचः श्रुत्वा वसन्तं तत्र संसदि ।
स्वर्णसिंहासनस्थञ्च वसुदेवमुवाच सः ॥ ३२ ॥

राजेन्द्र उवाच ।

तत्त्वज्ञो नीतिशास्त्राणां त्वमुपायविशारदः ।
व्रज नन्दव्रजं बन्धो वसुदेवसुतालयम् ॥ २३ ॥
वृषभानुञ्च नन्दञ्च बलञ्च नन्दनन्दनम् ।
शीघ्रमानय यज्ञेऽत्र सर्वं गोकुलवासिनम् ॥ २४ ॥
गृहीत्वा पत्रिकां दूता गच्छन्तु च चतुर्दिशम् ।
नृपान् मुनिगणान् सर्वान् कर्तुं विज्ञापनं मुदा ॥२५॥
नृपस्य वचनं श्रुत्वा शुष्ककण्ठोष्ठतालुकः ।
उवाच वचनं ब्रह्मन् हृदयेन विदूयता ॥ २६ ॥

वसुदेव उवाच ।

न युक्तमत्र राजेन्द्र गमनं मम साम्प्रतम् ।
विज्ञापितुं नन्दव्रजं वसुदेवस्य नन्दनम् ॥ २७ ॥
यद्यायातो नन्दपुत्रो यागे ते च महोत्सवे ।
अवश्यं तद्विरोधश्च भविष्यति त्वया सह ॥ २८ ॥
तमहञ्च समानीय कारयिष्यामि संयुगम् ।
इति मे न हि भद्रञ्च विघ्नस्तस्य तवापि च ॥ २९ ॥
पित्रानीतो मृतः कृष्ण इति सर्वो वदिष्यति ।
वसुदेवः सुतद्वारा जघान नृपमेव च ॥ ४० ॥
द्वयोरेकतरस्यापि सद्यो मृत्युर्भविष्यति ।
पतिष्यन्ति च शूराश्च नास्ति युद्धं निरामयम् ॥ ४१ ॥
वसुदेववचः श्रुत्वा रक्तपङ्कजलोचनः ।
खड्गं गृहीत्वा तं हन्तुं प्रययौ नृपतीश्वरः ॥ ४२ ॥
हा हेति कृत्वा पुत्रश्च वारयामास तत्क्षणम् ।
उग्रसेनो महाराजमतीवबलवान् मुने ॥ ४३ ॥

स्वपीठाद्वसुदेवश्च कोपाविष्टो गृहं ययौ ।
अक्रूरं प्रेरयामास गन्तुं नन्दव्रजं नृपः ॥ ४४ ॥
दूतान् प्रस्थापयामास शीघ्रं प्रतिदिशं तथा ।
आययुर्मुनयः सर्वे नृपाश्च सपरिच्छदाः ॥ ४५ ॥
दिक्पालाश्च सुराः सर्वे ब्राह्मणाश्च तपस्विनः ।
सनकश्च सनन्दश्च वोढुः पञ्चशिखस्तथा ॥ ४६ ॥
सनत्कुमारो भगवान् प्रज्वलन् ब्रह्मतेजसा ।
कपिलश्च सुरिः पैलः सुमन्तुश्च सनातनः ॥ ४७ ॥
पुलहश्च पुलस्त्यश्च भृगुश्च क्रतुरङ्गिराः ।
मरीचिः कश्यपश्चैव दक्षोऽत्रिश्चयवनस्तथा ॥ ४८ ॥
भरद्वाजश्च व्यासश्च गौतमश्च पराशरः ।
प्रचेताश्च वशिष्ठश्च संवर्तश्च बृहस्पतिः ॥ ४९ ॥
कात्यायनो याज्ञवल्क्योऽप्युतथ्यः सौभरिस्तथा ।
पर्वतो देवलश्चैव जैगीषव्यश्च जैमिनिः ॥ ५० ॥
विश्वामित्रश्च सुतपाः पिप्पलः शाकटायनः ।
जाबालिर्जाङ्गलिश्चैव पिङ्गलिश्च शिलालिकः ॥ ५१ ॥
आस्तिकश्च जरत्कारुस्तथा कल्याणमित्रकः ।
दुर्वासा वामदेवश्च ऋष्यशृङ्गो विभाण्डकः ॥ ५२ ॥
करिपथः कणादश्च कौशिकः पाणिनिस्तथा ।
कौत्सोऽघमर्षणश्चैव वाल्मीकिर्लोमहर्षणः ॥ ५३ ॥
मार्कण्डेयो मृकण्डुश्च पर्शुरामश्च साङ्कृतिः ।
अगस्त्यश्च तथावाञ्च तथाऽन्ये मुनयो मुने ॥ ५४ ॥
सशिष्याश्च सपुत्राश्च ब्राह्मणाश्च तपस्विनः ।
जरासन्धो दन्तवक्त्रो दाम्भिको द्राविडाधिपः ॥ ५५ ॥

शिशुपालो भीष्मकश्च भगदत्तश्च मुद्गलः ।
धृतराष्ट्रो धूमकेशो धूमकेतुश्च शम्बरः ॥ ५६ ॥
शल्यः सत्राजितः शङ्कुर्नृपाश्चान्ये महाबलाः ।
भीष्मो द्रोणः कृपाचार्यो ह्यश्वत्थामा महाबलः ॥ ५७ ॥
भूरिश्रवाश्च शाल्वश्च कैकेयः कौशलस्तथा ।
सर्वान् सम्भाषयामास महाराजो यथोचितम् ॥ ५८ ॥
सत्यको यज्ञदिवसं चकार च शुभक्षणम् ॥ ५९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे कंसयज्ञकथनं नाम
चतुःषष्टितमोऽध्यायः ।

---

## पञ्चषष्टितमोऽध्यायः ।

---

श्रीनारायण उवाच ।

कंसस्य वचनं श्रुत्वा सोऽक्रूरो धर्मिणां वरः ।
उवाच चोद्धवं शान्तं शान्तः प्रहृष्टमानसः ॥ १ ॥

अक्रूर उवाच ।

सुप्रभाताद्य रजनी बभूव मे शुभं दिनम् ।
तुष्टाश्च गुरवो विप्रा देवा मामिति निश्चितम् ॥ २ ॥
कोटिजन्मार्जितं पुण्यं मम स्वयमुपस्थितम् ।
बभूव मे समुत्पन्नं यद्यत्कर्म शुभाशुभम् ॥ ३ ॥
चिच्छेद बन्धनिगड़ं मम बद्धस्य कर्मणा ।
कारागाराच्च संसारान्मुक्तो यामि हरेः पदम् ॥ ४ ॥

सुहृदर्थी कृतोऽहञ्च कंसेन विदुषा रुषा ।
वरेण तुल्यो देवस्य क्रोधो मम बभूव ह ॥ ५ ॥
व्रजराजं समाहर्त्तुं व्रजं यास्यामि साम्प्रतम् ।
द्रक्ष्यामि परमं पूज्यं भुक्तिमुक्तिप्रदायिनम् ॥ ६ ॥
नवीनजलदश्यामं नीलेन्दीवरलोचनम् ।
पीतवस्त्रसमायुक्तकटिदेशविराजितम् ॥ ७ ॥
धूलिधूसरिताङ्गञ्च किंवा चन्दनचर्चितम् ।
अथवा नवनीताक्तमङ्गं द्रक्ष्यामि सस्मितम् ॥ ८ ॥
किंवा विनोदमुरलीं वादयन्तं मनोहरम् ।
किंवा गवां समूहञ्च चारयन्तमितस्ततः ॥ ९ ॥
किंवा वसन्तं गच्छन्तं शयानं वा सुनिश्चितम् ॥
निर्देशं कीदृशञ्चाद्य सुदृष्ट्या च शुभे क्षणे ॥ १० ॥
यत्पादपद्मं ध्यायन्ते ब्रह्मविष्णुशिवादयः ।
न हि जानाति यस्यान्तमनन्तोऽनन्तविग्रहः ॥ ११ ॥
यत्प्रभावं न जानन्ति देवाः [illegible]न्याश्च सन्ततम् ।
यस्य स्तोत्रे जड़ीभूता भीता [illegible]वी सरस्वती ॥ १२ ॥
दासी नियुक्ता यद्दास्ये महालक्ष्मीश्च लज्जिता ।
गङ्गा यस्य पदाम्भोजान्निःसृता सत्वरूपिणी ॥ १३ ॥
जन्ममृत्युजराव्याधिहरा त्रिभुवनात्परा ।
दर्शनस्पर्शनाभ्याञ्च नृणां पातकनाशिनी ॥ १४ ॥
ध्यायते यत्पदाम्भोजं दुर्गा दुर्गतिनाशिनी ।
त्रैलोक्यजननी देवी मूलप्रकृतिरीश्वरी ॥ १५ ॥
लोम्नां कूपेषु विश्वानि महाविष्णोश्च यस्य च ।
असंख्यानि विचित्राणि स्थूलात् स्थूलतरस्य च ॥१६॥

स च यत्षोड़शांशश्च यस्य सर्वेश्वरस्य च ।
तं द्रष्टुं यामि हे बन्धो मायामानुषरूपिणम् ॥ १७ ॥
सर्वं सर्वान्तरात्मानं सर्वज्ञं प्रकृतेः परम् ।
ब्रह्मज्योतिःस्वरूपञ्च भक्तानुग्रहविग्रहम् ॥ १८ ॥
निर्गुणञ्च निरीहञ्च निरानन्दं निराश्रयम् ।
परमं परमानन्दं सानन्दं नन्दनन्दनम् ॥ १९ ॥
स्वेच्छामयं सर्वपरं सर्ववीजं सनातनम् ।
वदन्ति योगिनः शश्वत् ध्यायन्तेऽहर्निशं शिशुम् ॥२०
मन्वन्तरसहस्रञ्च निराहारः कृशोदरः ।
पद्मे पाद्मतपस्तेपे पुरा पाद्मे तु यत्कृते ॥ २१ ॥
पुनः कुरु तपस्याञ्च तदा द्रक्ष्यसि मामिति ।
सकृच्छब्दञ्च शुश्राव न ददर्श तथापि तम् ॥ २२ ॥
तावत्कालं पुनस्तप्त्वा वरं प्राप ददर्श तम् ।
ईदृशं परमेशञ्च द्रक्ष्याम्यद्य तमुद्धव ॥ २३ ॥
पुरा शम्भुस्तपस्तेपे यावद्वै ब्रह्मणो वयः ।
ज्योतिर्मण्डलमध्ये च गोलोके तं ददर्श सः ॥ २४ ॥
सर्वतत्वं सर्वसिद्धं मम तत्वं परं वरम् ।
सम्प्राप तत्पदाम्भोजे भक्तिञ्च निर्मलां पराम् ॥ २५ ॥
चकारात्मसमं तञ्च यो भक्तो भक्तवत्सलः ।
ईदृशं परमेशञ्च द्रक्ष्याम्यद्य तमुद्धव ॥ २६ ॥
सहस्रशक्रपातान्तं निराहारः कृशोदरः ।
यस्यानन्तस्तपस्तेपे भक्त्या च परमात्मनः ॥ २७ ॥
तदा चात्मसमं ज्ञानं ददौ तस्मै य ईश्वरः ।
ईदृशं परमेशञ्च द्रक्ष्याम्यद्य तमुद्धव ॥ २८ ॥

सहस्रशक्रपातान्तं धर्मस्तेपे च यत्तपः ।
तदा बभूव साक्षी स धर्मिणां सर्वकर्मिणाम् ॥ २९ ॥
शास्ता च फलदाता च यत्प्रसादान्नृणामिह ।
सर्वेशमीदृशमहो द्रक्ष्याम्यद्य तमुद्धव ॥ ३० ॥
अष्टाविंशतिरिन्द्राणां पतने यद्दिवानिशम् ।
एवं क्रमेण मासाब्दैः शताब्दं ब्रह्मणो वयः ॥ ३१ ॥
अहो यस्य निमेषेण ब्रह्मणः पतनं भवेत् ।
ईदृशं परमात्मानं द्रक्ष्याम्यद्य तमुद्धव ॥ ३२ ॥
नास्ति भूरजसां संख्या यथैव ब्रह्मणां तथा ।
तथैव बन्धो विश्वानां तदाधारो महाविराट् ॥ ३३ ॥
विश्वे विश्वे च प्रत्येकं ब्रह्मविष्णुशिवादयः ।
मुनयो मनवः सिद्धा मानवाद्याश्चराचराः ॥ ३४ ॥
यत्षोड़शांशः स विराट् सृष्टो नष्टश्च लीलया ।
ईदृशं सर्वशास्तारं द्रक्ष्याम्यद्य तमुद्धव ॥ ३५ ॥
इत्येवमुक्त्वाक्रूरश्च पुलकाञ्चितविग्रहः ।
मूर्च्छां प्राप साश्रुनेत्रो दध्यौ तच्चरणाम्बुजम् ॥ ३६ ॥
बभूव भक्तिपूर्णश्च स्मारं स्मारं पदाम्बुजम् ।
कृत्वा प्रदक्षिणं वापि कृष्णस्य परमात्मनः ॥ ३७ ॥
उद्धवश्च तमाश्लिष्य प्रशशंस पुनः पुनः ।
स च शीघ्रं ययौ गेहमक्रूरोऽपि स्वमन्दिरे ॥ ३८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे अक्रूरहर्षोत्कर्षकथनं
नाम पञ्चषष्टितमोऽध्यायः ।

---

# षट्षष्टितमोऽध्यायः ।

---

श्रीनारायण उवाच ।

अथ रासेश्वरीयुक्तो रासे रासेश्वरः स्वयम् ।
स च रेमे तया सार्द्धमतीवरमणोत्सुकः ॥ १ ॥
सुखसम्भोगमात्रेण ययौ निद्राञ्च राधिका ।
दृष्ट्वा स्वप्नं समुत्थाय दीनोवाच प्रियं दिने ॥ २ ॥

राधिकोवाच ।

अहो स्वामिन्निहागच्छ त्वां करोमि स्ववचसि ।
परिणामे विधाता मे न जाने किं करिष्यति ॥ ३ ॥
इत्युक्ता सा महाभागा प्रियं कृत्वा स्ववचसि ।
दुःस्वप्नं कथयामास हृदयेन विदूयता ॥ ४ ॥

राधिकोवाच ।

रत्नसिंहासनेऽहञ्च रत्नच्छत्रञ्च बिभ्रती ।
तदातपत्रं जग्राह रुष्टो विप्रश्च मे प्रभो ॥ ५ ॥
सागरे कज्जलाकारे महाघोरे च दुस्तरे ।
गभीरे प्रेरयामास मामेव दुर्बलां स च ॥ ६ ॥
तत्र स्रोतसि शोकार्त्ता भ्रमामि च मुहुर्मुहुः ।
महोर्म्मीणाञ्च वेगेन व्याकुला नक्रसङ्कुलैः ॥ ७ ॥
त्राहि त्राहीति हे नाथ त्वां वदामि पुनः पुनः ।
त्वां न दृष्ट्वा महाभीता करोमि प्रार्थनां स्वरम् ॥ ८ ॥
क्षणं तत्र निमज्जन्ती पश्यामि चन्द्रमण्डलम् ।
निपतन्तञ्च गगनाच्छतखण्डञ्च भूतले ॥ ९ ॥

क्षणान्तरे च पश्यामि गगनात् सूर्य्यमण्डलम्।
बभूव च चतुःखण्डं निपत्य धरणीतले ॥ १० ॥
एककाले च गगने मण्डलं चन्द्रसूर्य्ययोः।
अतीवकज्जलाकारं सर्वं ग्रस्तञ्च राहुणा ॥ ११ ॥
क्षणान्तरे च पश्यामि ब्राह्मणो दीप्तिमानिति।
मत्क्रोड़स्थसुधाकुम्भं बभञ्ज च रुषेति च ॥ १२ ॥
क्षणान्तरे च पश्यामि महारुष्टञ्च ब्राह्मणम्।
गृहीत्वा च व्रजन्तञ्च चक्षुषोः पुरुषं मम ॥ १३ ॥
क्रीड़ाकमलदण्डञ्च हस्ताद्धस्तं मम प्रभो।
सहसा खण्डखण्डञ्च बभूव सह हेतुना ॥ १४ ॥
हस्ताद्धस्तञ्च सहसा सद्रत्नसारदर्पणः।
निर्मलः कज्जलाकारः खण्डखण्डो बभूव ह ॥ १५ ॥
हारो मे रत्नसाराणां छिन्नो भूत्वा च वक्षसः।
अतीवमलिनं पद्मं पपात धरणीतले ॥ १६ ॥
सौधपुत्तलिकाः सर्वा नृत्यन्ति च हसन्ति च।
आस्फोटयन्ति गायन्ति रुदन्ति च क्षणं क्षणम् ॥ १७ ॥
कृष्णवर्णं वृहच्चक्रं खे भ्रमन्तं मुहुर्मुहुः।
निपतन्तञ्चोत्पतन्तं पश्यामि च भयङ्करम् ॥ १८ ॥
प्राणाधिदेवः पुरुषो निःसृत्याभ्यन्तरान्मम।
राधे विदायं देहीति ततो यामीत्युवाच ह ॥ १९ ॥
कृष्णवर्णा च प्रतिमा मामाश्लिष्यति चुम्बति।
कृष्णवस्त्रपरीधाना चेति पश्यामि साम्प्रतम् ॥ २० ॥
इतीदं विपरीतञ्च दृष्ट्वा च प्राणवल्लभ।
नृत्यन्ति दक्षिणाङ्गानि प्राणा आन्दोलयन्ति मे ॥२१॥

रुदन्ति शोकात्कर्षन्ति समुद्विग्नञ्च मानसम् ।
किमिदं किमिदं नाथ वद वेदविदां वर ॥ २२ ॥
इत्युक्त्वा राधिकादेवी शुष्ककण्ठोष्ठतालुका ।
पपात तत्पदाम्भोजे भीता सा शोकविह्वला ॥ २३ ॥
श्रुत्वा स्वप्नं जगन्नाथो देवीं कृत्वा स्ववक्षसि ।
आध्यात्मिकेन योगेन बोधयामास तत्क्षणम् ॥ २४ ॥
तत्याज शोकं सा देवी ज्ञानं सम्प्राप्य निर्मलम् ।
शान्तञ्च भगवन्तञ्च कृत्वा कान्तं स्ववक्षसि ॥ २५ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे श्रीराधाशोकापनोदनं
नाम षट्षष्टितमोऽध्यायः ।

---

## सप्तषष्टितमोऽध्यायः ।

---

श्रीनारायण उवाच ।

विरहव्याकुलां दृष्ट्वा कामिनीं काममोहनः ।
कृत्वा वक्षसि तां कृष्णो ययौ क्रीड़ासरोवरम् ॥ १ ॥
राजराजेश्वरी राधा कृष्णवक्षसि राजते ।
सौदामिनीव जलदे नवीने गगने मुने ॥ २ ॥
रेमे सरमया सार्द्धं कृपया च कृपानिधिः ।
द्वयोर्द्वयोर्यथा स्वर्णमण्योर्मारकतो मणिः ॥ ३ ॥
रत्ननिर्माणपर्य्यङ्के रत्नेन्द्रसारनिर्म्मिते ।
रत्नप्रदीपे ज्वलति रत्नभूषणभूषितः ॥ ४ ॥

रत्नभूषाभूषितया रासरत्नञ्च कौतुकात् ।
रसरत्नाकरे रम्ये निमग्नो रसिकेश्वरः ॥ ५ ॥
रासे रासेश्वरी राधा रासेश्वरमुवाच सा ।
सुरतौ विरतौ सत्यां विरते न मनोरथे ॥ ६ ॥

राधिकोवाच ।

प्रफुल्लाहं त्वया नाथ मृता म्लाना च त्वां विना ।
यथा महौषधिगणः प्रभाते भाति भास्करे ॥ ७ ॥
नक्तं दीपशिखेवाहं त्वया सार्द्धं त्वया विना ।
दिने दिने यथा क्षीणा कृष्णपक्षे विधोः कला ॥ ८ ॥
तव वक्षसि मे दीप्तिः पूर्णचन्द्रप्रभासमा ।
सद्यो मृता त्वया त्यक्ता कुह्वां चन्द्रकला यथा ॥९ ॥
ज्वलदग्निशिखेवाहं घृताहुत्या त्वया सह ।
त्वया विनाहं निर्वाणा शिशिरे पद्मिनी यथा ॥ १० ॥
चिन्ताज्वरजराग्रस्ता मत्तस्त्वयि गतेऽप्यहम् ।
अस्तं गते रवौ चन्द्रे ध्वान्तग्रस्ता धरा यथा ॥ ११ ॥
भ्रष्टो वेशस्त्वां विना मे रूपं यौवनचेतनम् ।
तारावली परिभ्रष्टा सूर्यस्योदये यथा ॥ १२ ॥
त्वमेवात्मा च सर्वेषां मम नाथो विशेषतः ।
तनुर्यथात्मना त्यक्ता तथाहञ्च त्वया विना ॥ १३ ॥
पञ्चप्राणात्मकस्त्वं मे मृताहञ्च त्वया विना ।
यथा दृष्टिश्च गोलोके दृष्टिपुत्तलिकां विना ॥ १४ ॥
स्थलं यथा चित्रयुक्तं त्वया सार्द्धमहं तथा ।
असंस्कृता त्वया हीना तृणाच्छन्ना यथा मही ॥ १५ ॥
त्वया सार्द्धमहं कृष्ण चित्रयुक्तेव मृण्मयी ।

त्वां विना जलधौताहं विरूपा मृण्मयीव च ॥ १६ ॥
गोपाङ्गनानां शोभा च त्वया रासेश्वरेण च ।
हारे स्वर्णविकारे च श्वेतेन मणिना सह ॥ १७ ॥
व्रजराज त्वया सार्द्धं राजन्ते राजराजयः ।
यथा चन्द्रेण नभसि ताराराजिर्विराजते ॥ १८ ॥
त्वया शोभा यशोदाया नन्दस्य नन्दनन्दन ।
यथा शाखा फलस्कन्धैस्तरुराजिर्विराजते ॥ १९ ॥
त्वया सार्द्धं गोकुलेश शोभा गोकुलवासिनाम् ।
यथा सर्वा लोकराजी राजेन्द्रेण विराजते ॥ २० ॥
रासस्यापि च रासेश त्वया शोभा मनोहरा ।
राजते देवराजेन यथा स्वर्गेऽमरावती ॥ २१ ॥
वृन्दावनस्य वृक्षाणां त्वञ्च शोभा पतिर्गतिः ।
अन्येषाञ्च वनानाञ्च बलवान् केशरी यथा ॥ २२ ॥
त्वया विना यशोदा च निमग्ना शोकसागरे ।
अप्राप्य वत्सं सुरभी क्रोशन्ती व्याकुला यथा ॥ २३ ॥
आन्दोलयन्ति नन्दस्य प्राणा दग्धञ्च मानसम् ।
त्वया विना तप्तपात्रे यथा धान्यसमूहकः ॥ २४ ॥
इत्युक्त्वा परमप्रेम्णा सा पपात हरेः पदे ।
पुनराध्यात्मिकेनैव बोधयामास तां विभुः ॥ २५ ॥
आध्यात्मिको महायोगो मोहसंच्छेदकारणम् ।
यथा परशुर्वृक्षाणां तीक्ष्णधारश्च नारद ॥ २६ ॥

नारद उवाच ।

आध्यात्मिकं महायोगं वद वेदविदां वर ।
शोकच्छेदञ्च लोकानां श्रोतुं कौतूहलं मम ॥ २७ ॥

श्रीनारायण उवाच ।

आध्यात्मिको महायोगो न ज्ञातो योगिनामपि ।
स च नानाप्रकारश्च सर्वं वेत्ति हरिः स्वयम् ॥ २८ ॥
किञ्चिदाध्यात्मिकञ्चैव गोलोके राधिकेश्वरः ।
सुप्रीतः कथयामास त्रिपुरारिं महामुने ॥ २९ ॥
सहस्रेन्द्रनिपातान्तं तपः कुर्वन्तमीश्वरम् ।
श्रेष्ठं ज्येष्ठं वैष्णवानां वरिष्ठञ्च तपस्विनाम् ॥ ३० ॥
पुष्करे दुष्करं तप्ता पाद्मे पाद्मञ्च पद्मजः ।
दृष्टा तं सादरं कृत्वा उवाच किञ्चिदेव तम् ॥ ३१ ॥
शतेन्द्रपातपर्य्यन्तं कठोरेण कृशोदरम् ।
निश्चेष्टमस्थिसारञ्च कृपया च कृपानिधिः ॥ ३२ ॥
सिंहचेत्रे पुरा धर्मं मत्तातं धर्मिणां वरम् ।
चतुर्दशेन्द्रावच्छिन्नं तपस्तप्ता कृशोदरम् ॥ ३३ ॥
पपाठाध्यात्मिकं किञ्चित् कृपया च कृपानिधिः ।
किञ्चिच्छतेन्द्रावच्छिन्नमातपन्तमुवाच सः ॥ ३४ ॥
किञ्चित् सनत्कुमारञ्च तपन्तं सुचिरं परम् ।
सुतपन्तमनन्तञ्च किञ्चिच्चोवाच नारद ॥ ३५ ॥
चिरं तपन्तं कपिलं हिमशैले तपस्विनम् ।
पुष्करे भास्करे किञ्चित्तपन्तं दुष्करं तपः ॥ ३६ ॥
उवाच किञ्चित् प्रह्लादं किञ्चिद् दुर्वाससं भृगुम् ।
एवं निगूढं भक्तञ्च कृपया भक्तवत्सलः ॥ ३७ ॥
क्रीड़ासरोवरे रम्ये यदुवाच कृपानिधिः ।
शोकार्तां राधिकां तच्च कथयामि निशामय ॥ ३८ ॥
विरसां रसिकां दृष्टा वासयित्वा च वक्षसि ।

उवाचाध्यात्मिकं किञ्चिद् योगिनीं योगिनां गुरुः ॥३९॥

श्रीकृष्ण उवाच ।

जातिस्मरे स्मरात्मानं कथं विस्मरसि प्रिये ।
सर्वं गोलोकवृत्तान्तं सुदाम्नः शापमेव च ॥ ४० ॥
शापात् किञ्चिद्दिनं दीने त्वद्विच्छेदो मया सह ।
भविष्यति महाभागे मेलनं पुनरावयोः ॥ ४१ ॥
पुनरेव गमिष्यामि गोलोकं तं निजालयम् ।
गत्वा गोपाङ्गनाभिश्च गोपैर्गोलोकवासिभिः ॥ ४२ ॥
अधुनाध्यात्मिकं किञ्चित् त्वां वदामि निशामय ।
शोकघ्नं हर्षदं सारं सुखदं मानसस्य च ॥ ४३ ॥
अहं सर्वान्तरात्मा च निर्लिप्तः सर्वकर्मसु ।
विद्यमानश्च सर्वेषु सर्वत्रादृष्ट एव च ॥ ४४ ॥
वायुश्चरति सर्वत्र यथैव सर्ववस्तुषु ।
न च लिप्तस्तथैवाहं साक्षी च सर्वकर्मणाम् ॥ ४५ ॥
जीवो मत्प्रतिबिम्बश्च सर्वः सर्वत्र जीविषु ।
भोक्ता शुभाशुभानाञ्च कर्ता च कर्मणां सदा ॥ ४६ ॥
यथा जलघटेष्वेव मण्डलं चन्द्रसूर्ययोः ।
भग्नेषु तेषु संश्लिष्टस्तयोरेव तथा मयि ॥ ४७ ॥
जीवश्लिष्टस्तथा काले मृतेषु जीविषु प्रिये ।
आवाञ्च विद्यमानौ च सततं सर्वजन्तुषु ॥ ४८ ॥
आधारश्चाहमाधेयं कार्यञ्च कारणं विना ।
अये सर्वाणि द्रव्याणि नश्वराणि च सुन्दरि ॥ ४९ ॥
आविर्भावाधिकाः कुत्र कुत्रचिन्न्यूनमेव च ।
ममांशाः केऽपि देवाश्च केचिद्देवाः कलास्तथा ॥ ५० ॥

केचित्कला: कलांशांशास्तदंशांशाश्च केचन ।
मदंशा: प्रकृति: सूक्ष्मा सा च मूर्त्या च पञ्चधा ॥५१॥
सरस्वती च कमला दुर्गा त्वञ्चापि वेदसू: ।
सर्वे देवा: प्राकृतिका यावन्तो मूर्तिधारिण: ॥ ५२ ॥
अहमात्मा नित्यदेही भक्तध्यानानुरोधत: ।
ये ये प्राकृतिका राधे ते नष्टा: प्राकृते लये ॥ ५३ ॥
अहमेवासमेवाग्रे पश्चादप्यहमेव च ।
यथाहञ्च तथा त्वञ्च यथा धावल्यदुग्धयो: ॥ ५४ ॥
भेद: कदापि न भवेन्निश्चितञ्च तथावयो: ।
अहं महान्विराट् सृष्टौ विश्वानि यस्य लोमसु ॥ ५५ ॥
अंशस्त्वं तत्र महती स्वांशेन तस्य कामिनी ।
अहं क्षुद्रविराट् सृष्टौ विश्वं यन्नाभिपद्मत: ॥ ५६ ॥
अयं विष्णोर्लोमकूपे वासो मे चांशत: सति ।
तस्य स्त्री त्वञ्च बृहती स्वांशेन सुभगा तथा ॥ ५७ ॥
तस्य विश्वे च प्रत्येकं ब्रह्मविष्णुशिवादय: ।
ब्रह्मविष्णुशिवा अंशाश्चान्याश्चापि च मत्कला: ॥५८॥
मत्कलांशांशकलया सर्वे देवि चराचरा: ।
वैकुण्ठे त्वं महालक्ष्मीरहं तत्र चतुर्भुज: ॥ ५९ ॥
स च विश्वाद्बहिश्चार्द्धं यथा गोलोक एव च ।
सरस्वती त्वं सत्ये च सावित्री ब्रह्मण: प्रिया ॥ ६० ॥
शिवलोके शिवा त्वञ्च मूलप्रकृतिरीश्वरी ।
विनाश्य दुर्गं दुर्गाच सर्वदुर्गतिनाशिनी ॥ ६१ ॥
सा एव दक्षकन्या च सा एव शैलकन्यका ।
कैलासे पार्वती तेन सौभाग्या शिववक्षसि ॥ ६२ ॥

स्वांशेन त्वं सिन्धुकन्या क्षीरोदे विष्णुवक्षसि।
अहं स्वांशेन सृष्टौ च ब्रह्मविष्णुमहेश्वराः॥ ६३॥
त्वञ्च लक्ष्मीः शिवा धात्री सावित्री च पृथक् पृथक्।
गोलोके च स्वयं राधा रासे रासेश्वरी सदा॥ ६४॥
वृन्दा वृन्दावने रम्ये विरजा विरजातटे।
सा त्वं सुदामशापेन भारतं पुण्यमागता॥ ६५॥
पूतं कर्तुं भारतञ्च वृन्दारण्यञ्च सुन्दरि।
त्वत्कलां स्वांशकलया विश्वेषु सर्वयोषितः॥ ६६॥
या योषित्सा च भवती यः पुमान् सोऽहमेव च।
अहं च कलया वह्निस्त्वं स्वाहा दाहिका प्रिया॥६७॥
त्वया सह समर्थोऽहं नालं दग्धुञ्च त्वां विना।
अहं दीप्तिमतां सूर्यः कलया त्वं प्रभाकरी॥ ६८॥
संज्ञा त्वञ्च त्वया भामि त्वां विनाहं न दीप्तिमान्।
अहञ्च कलया चन्द्रस्त्वञ्च शोभा च रोहिणी॥ ६९॥
मनोहरस्त्वया सार्द्धं त्वां विना न च सुन्दरः।
अहमिन्द्रश्च कलया स्वर्गलक्ष्मीश्च त्वं शची॥ ७०॥
त्वया सार्द्धं देवराजो हतश्रीश्च त्वया विना।
अहं धर्मश्च कलया त्वञ्च मूर्तिश्च धर्मिणी॥ ७१॥
नाहं शक्तो धर्मकृत्ये त्वाञ्च धर्मक्रियां विना।
अहं यज्ञश्च कलया त्वं स्वांशेन दक्षिणा॥ ७२॥
त्वया सार्द्धञ्च फलदोऽप्यसमर्थस्त्वया विना।
कलया पितृलोकोऽहं स्वांशेन त्वं स्वधा सती॥ ७३॥
त्वयालं कव्यदाने च सदा नालं त्वया विना।
अहं पुमांस्त्वं प्रकृतिर्न स्रष्टाहं त्वया विना॥ ७४॥

त्वञ्च सम्पत्स्वरूपाहमीश्वरश्च त्वया सह ।
लक्ष्मीयुक्तस्त्वया लक्ष्म्या निःश्रीकश्च त्वया विना ॥७५॥
यथा नालं कुलालश्च घटं कर्त्तुं मृदा विना ।
अहं शेषश्च कलया स्वांशेन त्वं वसुन्धरा ॥ ७६ ॥
त्वां शस्यरत्नाधाराञ्च बिभर्मि मूर्ध्नि सुन्दरि ।
त्वञ्च कान्तिश्च शान्तिश्च मूर्तिर्मूर्तिमती सती ॥ ७७ ॥
तुष्टिः पुष्टिः क्षमा लज्जा क्षुधा तृष्णा परा दया ।
निद्रा शुद्धा च तन्द्रा च मूर्च्छा च सन्नतिः क्रिया ॥७८॥
मूर्तिरूपा भक्तिरूपा देहिनां देहरूपिणी ।
ममाधारा सदा त्वञ्च तवात्माहं परस्परम् ॥ ७९ ॥
यथा त्वञ्च तथाहञ्च समौ प्रकृतिपूरुषौ ।
न हि सृष्टिर्भवेद्देवि द्वयोरेकतरं विना ॥ ८० ॥
इत्युक्त्वा परमात्मा च राधां प्राणाधिकां प्रियाम् ।
कृत्वा वक्षसि सुप्रीतो बोधयामास नारद ॥ ८१ ॥
स च क्रीड़ानियुक्तश्च बभूव रत्नमन्दिरे ।
तया च राधया सार्द्धं कामुक्या सह कामुकः ॥ ८२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे आध्यात्मिकयोगकथनं
नाम सप्तषष्टितमोऽध्यायः ।

---

# अष्टषष्टितमोऽध्यायः।

श्रीनारायण उवाच।

कृत्वा क्रीड़ां समुत्थाय पुष्पतल्पात् पुरातनः।
निद्रितां प्राणसदृशीं बोधयामास तत्क्षणम्॥ १॥
वस्त्राञ्चलेन संस्कृत्य कृत्वा तन्निर्मलं मुखम्।
उवाच मधुरं शान्तं शान्ताञ्च मधुसूदनः॥ २॥

श्रीकृष्ण उवाच।

अयि तिष्ठ क्षणं रासे रासेश्वरि शुचिस्मिते।
व्रज वृन्दावनं वापि व्रजं व्रज व्रजेश्वरि॥ ३॥
रासाधिष्ठातृदेवि त्वं रासं रासे कुरु क्षणम्।
ग्रामे ग्रामे यथा सन्ति सर्वत्र ग्रामदेवताः॥ ४॥
प्रियालिनिवहैः सार्द्धं क्षणं चन्दनकाननम्।
क्षणं वा चम्पकवनं गच्छ वा तिष्ठ सुन्दरि॥ ५॥
क्षणं गृहञ्च यास्यामि विशिष्टं कार्य्यमस्ति मे।
विरामं देहि मे प्रीत्या क्षणं मां प्राणवल्लभे॥ ६॥
प्राणाधिष्ठातृदेवी त्वं प्राणाश्च त्वयि सन्ति मे।
प्राणी विहाय प्राणांश्च कुत्र स्यातुं क्षमः प्रिये॥ ७॥
त्वयि मे मानसं शश्वत्त्वं मे संसारवासना।
त्वत्तो मम प्रिया नास्ति त्वमेव शङ्करात् प्रिया॥ ८॥
प्राणा मे शङ्करः सत्यं त्वञ्च प्राणाधिका सति।
इत्युक्त्वा तां समाश्लिष्य भगवान् गन्तुमुद्यतः॥ ९॥

नोपतिष्ठति यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।
स शूद्रवद् वहिष्कार्य्यः सर्व्वस्माद् द्विजकर्म्मणः ॥६८॥
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु ।
यदह्ना कुरुते कर्म न तस्य फलभाग् भवेत् ।
राममन्त्रविहीन ब्राह्मणो नरकं व्रजेत् ॥ ७० ॥
नदीगर्भे च गर्त्ते च वृक्षमूले जलान्तिके ।
देवान्तिके शस्यभूमौ पुरीषं नोत्सृजेद् बुधः ॥७१॥
वल्मीकमूषकोत्खातां मृदमन्तर्जलां तथा ।
शौचावशिष्टां गेहाञ्च न दद्याल्लेपसम्भवाम् ॥ ७२ ॥
अन्तःप्राणिपिपल्याञ्च हलोत्खातां व्रजेश्वर ।
आलवालोत्थिताञ्चैव शस्यक्षेत्रोत्थितां तथा ॥ ७३ ॥
वृक्षमूलोत्थितां नन्द नदीगर्भोत्थितां तथा ।
परित्यजेन्मृदस्त्वेताः सकलाः शौचसाधने ॥ ७४ ॥
कुष्माण्डघातिका या स्त्री दीपनिर्व्वाणकः पुमान् ।
सप्तजन्म भवेद्रोगी दरिद्रो जन्मजन्मनि ॥ ७५ ॥
प्रदीपं शिवलिङ्गञ्च शालग्रामं मणिं तथा ।
प्रतिमां यज्ञसूत्रञ्च सुवर्णं शङ्खमेव च ॥ ७६ ॥
हीरकञ्च तथा मुक्तां गोमूत्रं गोमयं घृतम् ।
शालग्रामशिलातोयं भूमौ त्यक्त्वा व्रजेदधः ॥ ७७ ॥
दरिद्रः कृपणः कुष्ठी वंशहीनोऽप्यभार्य्यकः ।
भूमिहीनः प्रजाहीनो बन्धुहीनश्च कुत्सितः ॥ ७८ ॥
अन्धः पङ्गुर्वा खरश्च खञ्जश्चैवाङ्गहीनकः ।
भवेत् क्रमेण पापी स ह्येतान् भूमौ त्यजेत्तु यः ॥७९
दिवसे सन्ध्ययोर्निद्रां स्त्रीसम्भोगं करोति यः ।

सप्तजन्म भवेद्रोगी दरिद्रः सप्तजन्मसु ॥ ८० ॥
उदिते जगतीनाथे यः कुर्य्याद्दन्तधावनम् ।
स पापिष्ठः कथं ब्रूते पूजयामि जनार्दनम् ॥ ८१ ॥
मृद्भस्मगोमयकृत्पिण्डैस्तथा वालुकयापि वा ।
कृत्वा लिङ्गं सकृत्पूज्य वसेत् कल्पशतं दिवि ॥ ८२ ॥
सहस्रपूजनात् सोऽपि लभते वाञ्छितं फलम् ।
लक्षञ्च पूजयेद्यस्तु शिवत्वं लभते ध्रुवम् ॥ ८३ ॥
जीवन्मुक्तो भवेद्विप्रो लिङ्गमभ्यर्चयेत्तु यः ।
शिवपूजाविहीनश्च ब्राह्मणो नरकं व्रजेत् ॥ ८४ ॥
मत्पूजितं प्रियतमं शिवं निन्दन्ति ये नराः ।
पच्यन्ते निरये तावद्यावद्वै ब्रह्मणः शतम् ॥ ८५ ॥
पूजिते शिवलिङ्गे च यदि स्यात् केशवालुका ।
स महान्धो वालुकया केशेन यवनो भवेत् ॥ ८६ ॥
क्षुद्रे दरिद्रः कृपणो व्याधिः स्यात् कुत्सिते तथा ।
सर्वेभ्यो मानहानिः स्याज्जायते नीचयोनिषु ॥ ८७ ॥
सर्वेषु प्रियमात्रेषु ब्राह्मणश्च मम प्रियः ।
ब्राह्मणाच्च प्रिया लक्ष्मीः सततं वक्षसि स्थिता ॥ ८८ ॥
ततोऽधिका प्रिया राधा प्रिया भक्तास्ततोऽधिकाः ।
ततोऽधिकः शङ्करो मे नास्ति मे शङ्करात् प्रियः ॥ ८९ ॥
महादेव महादेव महादेवेति वादिनः ।
पश्चाद्यामि च संत्रस्तो नामश्रवणलोभतः ॥ ९० ॥
मनो मे भक्तमूले च प्राणा राधात्मिका ध्रुवम् ।
आत्मा मे शङ्करस्त्वानं शिवः प्राणाधिकश्च यः ॥ ९१ ॥
आद्या नारायणी शक्तिः सृष्टिस्थित्यन्तकारिणी ।

करोमि च यया सृष्टिं यया ब्रह्मादिदेवताः ॥९२॥
यया जयति विश्वञ्च यया सृष्टिः प्रजायते।
यया विना जगन्नास्ति मया दत्ता शिवाय सा ॥९३॥
दया निद्रा च क्षुत्तृप्तिस्तृष्णा श्रद्धा क्षमा धृतिः।
तुष्टिः पुष्टिस्तथा शान्तिर्लज्जाधिदेवता हि सा ॥९४॥
वैकुण्ठे सा महालक्ष्मीर्गोलोके राधिका सती।
मर्त्ये लक्ष्मीश्च क्षीरोदे दक्षकन्या सती च सा ॥९५॥
सा दुर्गा मेनका कन्या दैन्यदुर्गतिनाशिनी।
स्वर्गलक्ष्मीश्च दुर्गा सा शक्रादीनां गृहे गृहे ॥९६॥
सा वाणी सा च सावित्री विद्याधिष्ठातृदेवता।
वह्नौ सा दाहिका शक्तिः प्रभाशक्तिश्च भास्करे ॥९७॥
शोभाशक्तिः पूर्णचन्द्रे जले शक्तिश्च शीतता।
शस्यप्रसूता शक्तिश्च धारणा च धरासु सा ॥ ९८ ॥
ब्राह्मण्यशक्तिर्विप्रेषु देवशक्तिः सुरेषु सा।
तपस्विनां तपस्या सा गृहिणां गृहदेवता ॥ ९९ ॥
मुक्तिशक्तिश्च मुक्तानामाशा सांसारिकस्य सा।
मद्भक्तानां भक्तिशक्तिर्मयि भक्तिप्रदा सदा ॥१००॥
नृपाणां राज्यलक्ष्मीश्च वणिजां लभ्यरूपिणी।
पारे संसारसिन्धूनां त्वयी तत्त्वातारिणी ॥ १०१ ॥
सत्सु सद्बुद्धिरूपा सा मेधाशक्तिस्वरूपिणी।
व्याख्याशक्तिः श्रुतौ शास्त्रे दातृशक्तिश्च दातृषु ॥१०२
क्षत्रादीनां विप्रभक्तिः पतिभक्तिः सतीषु च।
एवंरूपा च या शक्तिर्मया दत्ता शिवाय सा ॥१०३॥
एवं ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि।

प्रश्नं करोषि यद्यन्मां तत्सर्वं कथयामि ते ॥ १०४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे भगवन्नन्दसंवादे
पञ्चसप्ततितमोऽध्यायः ।

---

## षट्सप्ततितमोऽध्यायः ।

---

श्रीनन्द उवाच ।

येषाञ्च दर्शने पुण्यं पापञ्च यस्य दर्शने ।
तत्सर्वं वद सर्वेश श्रोतुं कौतूहलं मम ॥ १ ॥

श्रीभगवानुवाच ।

सुब्राह्मणानां तीर्थानां वैष्णवानाञ्च दर्शने ।
देवताप्रतिमादर्शी तीर्थस्नायी भवेन्नरः ॥ २ ॥
सूर्य्यस्य दर्शने भक्त्या सतीनां दर्शने तथा ।
सन्न्यासिनां यतीनाञ्च तथैव ब्रह्मचारिणाम् ॥ ३ ॥
भक्त्या गवाञ्च वह्नीनां गुरूणाञ्च विशेषतः ।
गजेन्द्राणाञ्च सिंहानां श्वेताश्वानां तथैव च ॥ ४ ॥
शुकानाञ्च पिकानाञ्च खञ्जनानां तथैव च ।
हंसानाञ्च मयूराणां चाषाणां शङ्खपक्षिणाम् ॥ ५ ॥
वत्सप्रयुक्तधेनूनामश्वत्थानां तथैव च ।
पतिपुत्रवतीनाञ्च नराणां तीर्थयायिनाम् ॥ ६ ॥
प्रदीपानां सुवर्णानां मणीनाञ्च विशेषतः ।

मुक्तानां हीरकाणाञ्च माणिक्यानां महाशय ॥ ७ ॥
तुलसीशुक्लपुष्पाणां दर्शनं पापनाशनम् ।
फलानि शुक्लधान्यानि घृतं दधि मधूनि च ॥ ८ ॥
पूर्णकुम्भञ्च लाजांश्च राजेन्द्र दर्पणं जलम् ।
मालाञ्च शुक्लपुष्पाणां दृष्ट्वा पुण्यं लभेन्नरः ॥ ९ ॥
गोरोचनञ्च कर्पूरं रजतञ्च सरोवरम् ।
पुष्पोद्यानं पुष्पितञ्च दृष्ट्वा पुण्यं लभेन्नरः ॥ १० ॥
शुक्लपक्षस्य चन्द्रञ्च पीयूषं चन्दनं तथा ।
कस्तूरीं कुङ्कुमं दृष्ट्वा नन्द पुण्यं लभेन्नरः ॥ ११ ॥
पताकामक्षयवटतरुं देवोत्थितं शुभम् ।
देवालयं देवखातं दृष्ट्वा पुण्यं लभेन्नरः ॥ १२ ॥
देवाश्रितं देववटं सुगन्धिपवनं तथा ।
शङ्खञ्च दुन्दुभिं दृष्ट्वा सद्यः पुण्यं लभेन्नरः ॥ १३ ॥
शुक्तिं प्रवालं रजतं स्फाटिकं कुशमूलकम् ।
गङ्गामृदं कुशं ताम्रं दृष्ट्वा पुण्यं लभेन्नरः ॥ १४ ॥
पुराणपुस्तकं शुद्धं सबीजं विष्णुयन्त्रकम् ।
स्निग्धदूर्वाक्षतं रत्नं दृष्ट्वा पुण्यं लभेन्नरः ॥ १५ ॥
तपस्विनां सिद्धमन्त्रं समुद्रं कृष्णसारकम् ।
यज्ञं महोत्सवं दृष्ट्वा स पुण्यं लभते नरः ॥ १६ ॥
गोमूत्रं गोमयं दुग्धं गोधूलिं गोष्ठगोष्पदम् ।
पक्वशस्यान्वितं क्षेत्रं दृष्ट्वा पुण्यं लभेद्ध्रुवम् ॥ १७ ॥
रुचिरां पद्मिनीं श्यामां न्यग्रोधपरिमण्डलाम् ।
सुवेशाढ्यां सुवसनां दिव्यभूषणभूषिताम् ॥१८॥
क्षेम्यां क्षेमकरीं गन्धं सदूर्वाक्षततण्डुलम् ।

सिद्धान्नं परमान्नञ्च दृष्ट्वा पुण्यं लभेन्नरः ॥ १९ ॥
कार्त्तिकीपूर्णिमायाञ्च राधिकाप्रतिमां शुभाम् ।
संपूज्य दृष्ट्वा नत्वा च करोति जन्मखण्डनम् ॥२०॥
हिङ्गुलायां तथाष्टम्यामिषे मासि सिते शुभे ।
श्रीदुर्गाप्रतिमां दृष्ट्वा करोति जन्मखण्डनम् ॥ २१ ॥
शिवरात्रौ च काश्याञ्च विश्वनाथस्य दर्शनम् ।
कृत्वोपवासं पूजाञ्च करोति जन्मखण्डनम् ॥ २२ ॥
जन्माष्टमीदिने भक्तो दृष्ट्वा मां विन्दुमाधवम् ।
प्रणम्य पूजां कृत्वा च करोति जन्मखण्डनम् ॥२३॥
पौषे मासि शुक्लरात्रौ यत्र यत्र स्थले नरः ।
पद्मायाः प्रतिमां दृष्ट्वा करोति जन्मखण्डनम् ।
सप्तजन्म भवेत्तस्य पुत्रः पौत्रो धनेश्वरः ॥२४॥
उपोष्यैकादशीं स्नात्वा प्रभाते द्वादशीदिने ।
दृष्ट्वा काश्यामन्नपूर्णां करोति जन्मखण्डनम् ॥ २५ ॥
चैत्रे मासि चतुर्दश्यां कामरूपेषु पुण्यदे ।
दृष्ट्वा नत्वा भद्रकालीं करोति जन्मखण्डनम् ॥ २६ ॥
अयोध्यायाञ्च रामं मां श्रीरामनवमीदिने ।
संपुज्य नत्वा दृष्ट्वा च करोति जन्मखण्डनम् ॥२७॥
दत्त्वा विष्णुपदे पिण्डं विष्णुं यश्च प्रपूजयेत् ।
पितॄणां स्वात्मनश्चैव करोति जन्मखण्डनम् ॥ २८ ॥
प्रयागे मुण्डनं कृत्वा दानञ्च कुरुते यदि ।
उपोष्य नैमिषारण्ये करोति जन्मखण्डनम् ॥ २९ ॥
उपोष्य पुष्करे स्नात्वा किंवा वदरिकाश्रमे ।
संपूज्य दृष्ट्वा मामेकं करोति जन्मखण्डनम् ॥ ३० ॥

सिद्धिं कृत्वा च वदरीं भुङ्क्ते वदरीकाश्रमे ।
दृष्ट्वा मत्प्रतिमां नन्द करोति जन्मखण्डनम् ॥२१॥
दोलायमानं गोविन्दं पुण्ये वृन्दावने च माम् ।
दृष्ट्वा संपूज्य नत्वा च करोति जन्मखण्डनम् ॥२२॥
भाद्रे दृष्ट्वा च मञ्चस्थं मामेव मधुसूदनम् ।
संपूज्य नत्वा भक्तश्च करोति जन्मखण्डनम् ॥२३॥
रथस्थञ्च जगन्नाथं यो द्रक्ष्यति कलौ नरः ।
संपूज्य नत्वा भक्त्या च करोति जन्मखण्डनम् ॥२४॥
उत्तरायणसंक्रान्त्यां प्रयागे स्नानमाचरेत् ।
संपूज्य नत्वा मामेव करोति जन्मखण्डनम् ॥२५॥
कार्त्तिकीपूर्णिमायाञ्च दृष्ट्वा मत्प्रतिमां शुभाम् ।
उपोष्य कृत्वा पूजाञ्च करोति जन्मखण्डनम् ॥२६॥
चन्द्रभागासमीपे च माघ्याञ्च मां नमेत् सुधीः ।
राधया सह मां दृष्ट्वा करोति जन्मखण्डनम् ॥ २७ ॥
रामेश्वरं सेतुबन्धे आषाढ़ीपूर्णिमादिने ।
उपोष्य दृष्ट्वा संपूज्य करोति जन्मखण्डनम् ॥ २८ ॥
स्वर्गविद्याधरी रात्रौ नृत्यती च मुहुर्मुहुः ।
प्रणामं कर्तुमीशं तं समायाति विभीषणः ॥ २९ ॥
गायन्ति किन्नरा रात्रौ गन्धर्वाश्च मनोहरम् ।
प्रणामं कर्तुमीशं तं समायाति च माधवः ॥४०॥
दृष्ट्वा साक्षाद्वसन्तञ्च सर्वेशं चन्द्रशेखरम् ।
जीवन्मुक्तो भवेदन्ते प्रयाति हरिमन्दिरम् ॥ ४१ ॥
दीननाथं दिनकरं कोणार्के चोत्तरायणे ।
उपोष्य दृष्ट्वा संपूज्य करोति जन्मनः क्षयम् ॥४२॥

कृषिकोष्ठे सुवसने कलविङ्के युगन्धरे ।
विस्मन्दके राजकोष्ठे नन्दके पुष्पभद्रके ॥ ४३ ॥
पार्वतीप्रतिमां दृष्ट्वा कार्तिकेयं गणेश्वरम् ।
नन्दिनं शङ्करं दृष्ट्वा करोति जन्मनः फलम् ॥ ४४ ॥
उपोष्य प्रतिसम्पूज्य दृष्ट्वा स्तुत्वा च तौ नतः ।
पारणञ्च दधि प्राश्य करोति जन्मनः फलम् ॥ ४५ ॥
त्रिकूटे मणिभद्रे च पश्चिमोदधिसन्निधौ ।
समुपोष्य दधि प्राश्य मां दृष्ट्वा मुक्तिमाप्नुयात् ॥ ४६ ॥
प्रतिमासु मदीयासु पार्वतीप्रतिमासु च ।
जीवं संन्यस्य सम्पूज्य करोति जन्मनः चयम् ॥ ४७ ॥
शिवदुर्गालयं दत्त्वा मदीयञ्च विशेषतः ।
शिवसंस्थापनं कृत्वा करोति जन्मनः चयम् ॥ ४८ ॥
पुष्पोद्यानञ्च शङ्कुञ्च सेतुं खातं सरोवरम् ।
विप्रसंस्थापनं कृत्वा करोति जन्मनः फलम् ॥ ४९ ॥
न च वेदाः पुराणानि ब्रह्मसंस्थापनं फलम् ।
जानन्ति सन्तो मुनयः सुरा विप्रादयः पितः ॥ ५० ॥
गण्यन्ते पांशवो भूमौ गण्यन्ते वृष्टिविन्दवः ।
न गण्यते विधात्रापि विप्रसंस्थापने फलम् ॥ ५१ ॥
कृत्वोपजीव्यं विप्रस्य जीवन्मुक्तो भवेन्नरः ।
अचलां श्रियमाप्नोति परे मुक्तिचतुष्टयम् ॥ ५२ ॥
मद्दास्यभक्तिं स लभेद्वैकुण्ठे मोदते चिरम् ।
न हि पातो भवेत्तस्य यथा मे परमात्मनः ॥ ५३ ॥
कुमारीमष्टवर्षीयां सुविप्राय ददाति यः ।
सम्पूज्य सर्वाभरणां दुर्गादानफलं लभेत् ॥ ५४ ॥

सर्वं स्वर्ग्यं समालोक्य ब्रह्मलोकेषु पूजितः।
लभते मम दास्यञ्च वैकुण्ठे मोदते चिरम् ॥ ५५ ॥
त्रिवाहदर्शने कोटिस्वर्णदानफलं लभेत्।
अन्ते स्वर्गं प्रयात्येवमिहैव निश्चलां श्रियम् ॥ ५६ ॥
यः सुविप्रमनाथञ्च दरिद्रञ्च सुपण्डितम्।
दृष्ट्वा कुर्य्यात्तद्विवाहं स मोक्षं लभते ध्रुवम् ॥ ५७ ॥
यच्छत्रपादुकादानं शालग्रामस्य योषितः।
करोति भक्त्या पुण्याहे पृथ्वीदानफलं लभेत् ॥ ५८
गजदाने च तल्लोममानवर्षं श्रुतौ श्रुतम्।
चतुर्गुणं गजेन्द्रे च मोदते मम मन्दिरे ॥ ५९ ॥
गजार्द्धं श्वेततुरगे तदर्द्धञ्चेतरो पितः।
गजतुल्यं कृष्णगवां दाने च तत्फलं लभेत् ॥ ६० ॥
तत्तुल्यं धेनुदाने च अर्द्धं सामान्यगोस्तथा।
लभेद्वत्सप्रसूतानां दाने दाने फलं भुवः ॥ ६१ ॥
भूमिदाने रेणुमानवर्षं स्थानञ्च मत्पदे।
ज्ञानदाने महत् पुण्यं वैकुण्ठे मोदते चिरम् ॥ ६२
श्रियं लभेत् स्वर्णदाने राजत्वं रजतेन च।
अन्नदाने फलं नाहं कथं जानामि वै श्रुतम् ॥ ६३
लभते सर्वदानस्य फलं ब्राह्मणभोजने।
अन्नदानात् परं दानं न भूतं न भविष्यति ॥ ६४ ॥
नात्र पात्रपरीक्षा सा न कालनियमः क्वचित्।
अन्नदाने शुभं पुण्यं दातुः पात्रं त्वपातकी ॥ ६५ ॥
अन्नदानञ्च धन्यं स्याद्धर्मो वैकुण्ठहेतुकम्।
वस्त्रं ददाति विप्राय दरिद्राय कुटुम्बिने ॥ ६६ ॥

वस्त्रसूत्रमानवर्षं वैकुण्ठे मोदते चिरम् ।
सुरम्ये चन्द्रलोके च वारुणे च तथैव च ॥ ६७ ॥
कृत्वा लोहप्रदीपञ्च स्वर्णवर्त्तिसमन्वितम् ।
दत्त्वा घृतप्रदीपञ्च हरये परमात्मने ॥ ६८ ॥
अन्धकारञ्च न गृहं यमदूतं यमं तथा ।
न हि पश्यति दाता च प्रयाति मम मन्दिरम् ॥ ६९ ॥
ब्राह्मणाय च दत्त्वैव न याति यमयातनाम् ।
दिव्यवर्षसहस्रञ्च मोदते शक्रमन्दिरे ॥ ७० ॥
आसनं लभते स्वर्गे वस्तुमानानुरूपतः ।
उत्तमे लक्षवर्षञ्च तदर्द्धं चेतरे व्रज ॥ ७१ ॥
ताम्बूलेन लभेद्भोगं स्वर्गे वर्षशतं द्विज ॥ ७२ ॥
माल्यदाने प्रियं स्वर्गं वस्तुपात्रानुरूपतः ।
फलदानफलं स्वर्गं लभते नात्र संशयः ॥ ७३ ॥
सामान्यशय्यादानेन स्वर्गं वर्षशतं व्रजेत् ।
चतुर्गुणं प्रकृष्टानां गुणलक्षं विलक्षणे ॥ ७४ ॥
अनाथाय सुविप्राय यदि गेहं प्रदीयते ।
अत्रैव मानवर्षञ्च शक्रलोके महीयते ॥ ७५ ॥
दृष्ट्वा बुभुक्षितं विप्रमन्नं तस्मै प्रदीयते ।
अचलां श्रियमाप्नोति पुत्रपौत्रविवर्द्धिनीम् ॥ ७६ ॥
व्रजनाथ व्रजं गत्वा व्रजभूमौ व्रजाधुना ।
व्रज भोजय विप्रांश्च व्रज सर्वं व्रजे व्रजे ॥ ७७ ॥
गोकुले गोकुले वत्स वस वत्सनराकुले ।
व्याकुलानां गोकुलानां सङ्कुले च व्रजे व्रजे ॥ ७८ ॥
एतत्ते कथितं नन्द सानन्दं पुण्यवर्द्धनम् ।

सुस्वप्नदर्शनं पुण्यं यदि नीचं न वक्ति च ॥ ७९ ॥
काश्यपं दुर्गगं नीचं शत्रुमज्ञानिनं स्त्रियम् ।
त्यक्त्वा रात्रिञ्च दिवसे वक्ति विप्रं सुपण्डितम् ॥ ८० ॥
देवालये च देवं वाप्यश्वत्थतुलसीवटम् ।
उक्त्वा तद्द्विगुणं पुण्यमप्रकाश्यं चतुर्गुणम् ॥ ८१ ॥
सुस्वप्नदर्शने प्राज्ञो गङ्गास्नानफलं लभेत् ।
अर्थं वित्तञ्च भार्य्याञ्च भूमिं पुत्रं लभेच्च सः ॥ ८२ ॥
मोक्षञ्च परमैश्वर्य्यं लभते सर्ववाञ्छितम् ।
इत्येवं कथितं तात किम्भूयः श्रोतुमिच्छसि ॥ ८३ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे षट्सप्ततितमोऽध्यायः ।

——

## सप्तसप्ततितमोऽध्यायः ।

नन्द उवाच ।

केन स्वप्नेन किं पुण्यं केन मोक्षो भवेत् सुखम् ।
कोऽपि कोऽपि च सुस्वप्नस्तत्सर्वं कथय प्रभो ॥ १ ॥

श्रीभगवानुवाच ।

वेदेषु सामवेदश्च प्रशस्तः सर्वकर्मसु ।
तथैव काण्वशाखायां पुण्यकाण्डे मनोहरे ॥ २ ॥
स व्यक्तो यस्य दुःस्वप्नः शश्वत् पुण्यफलप्रदः ।

तत्सर्वं निखिलं तात कथयामि निशामय ॥ ३ ॥
स्वप्नाध्यायं प्रवक्ष्यामि बहुपुण्यफलप्रदम् ।
स्वप्नाध्यायं नरः श्रुत्वा गङ्गास्नानफलं लभेत् ॥ ४ ॥
स्वप्नस्तु प्रथमे यामे संवत्सरफलप्रदः ।
द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके ॥ ५ ॥
चतुर्थे चार्द्धमासेन स्वप्नः स्यात्फलप्रदः ।
दशाहे फलदः स्वप्नोऽप्यरुणोदयदर्शने ॥ ६ ॥
प्रातःस्वप्नश्च फलदस्तत्क्षणं यदि बोधितः ।
दिने मनसि यद् दृष्टं तत्सर्वञ्च लभेद् ध्रुवम् ॥ ७ ॥
चिन्ताव्याधिसमायुक्तो नरः स्वप्नञ्च पश्यति ।
तत्सर्वं निष्फलं तात प्रयात्येव न संशयः ॥ ८ ॥
जड़ो मूत्रपुरीषेण पीड़ितश्च भयाकुलः ।
दिगम्बरो मुक्तकेशो न लभेत् स्वप्नजं फलम् ॥ ९ ॥
दृष्ट्वा स्वप्नञ्च निद्रालुर्यदि निद्रां प्रयाति च ।
विमूढ़ो वक्ति चेद्रात्रौ न लभेत् स्वप्नजं फलम् ॥१०॥
उक्त्वा काश्यपगोत्रञ्च विपत्तिं लभते ध्रुवम् ।
दुर्गते दुर्गतिं याति नीचे व्याधिं प्रयाति च ॥ ११ ॥
शत्रौ भयञ्च लभते मूर्खे च कलहं लभेत् ।
कामिन्यां धनहानिः स्याद्रात्रौ चौरभयं भवेत् ॥१२॥
निद्रायां लभते शोकं पण्डिते वाञ्छितं फलम् ।
न प्रकाश्यश्च स स्वप्नः पण्डितैः काश्यपे व्रज ॥१३॥
गवाञ्च कुञ्जराणाञ्च हयानाञ्च व्रजेश्वर ।
प्रासादानाञ्च शैलानां वृक्षाणाञ्च तथैव च ॥ १४ ॥
आरोहणञ्च धनदं भोजनं रोदनं तथा ।

प्रतिगृह्य तथा वीणां शस्त्राद्यां भूमिमालभेत् ॥१५॥
शस्त्रास्त्रेण यदा विद्धो व्रणेन क्रमिणा तथा ।
विष्ठया रुधिरेणैव स युक्तोऽप्यर्थवान् भवेत् ॥१६॥
स्वप्नेऽप्यगम्यगमनो भार्य्यालाभं करोति यः ।
मूत्रसिक्तः पिबेच्छुक्रं नरकञ्च विशत्यपि ॥ १७ ॥
नगरं प्रविशेद्रक्तं समुद्रं वा सुधां पिबेत् ।
शुभवार्तामवाप्नोति विपुलञ्चार्थमालभेत् ॥ १८ ॥
गजं नृपं सुवर्णञ्च वृषभं धेनुमेव च ।
दीपमन्नं फलं पुष्पं कन्यां छत्रं रथं ध्वजम् ।
कुटुम्बं लभते दृष्ट्वा कीर्तिञ्च विपुलां श्रियम् ॥१९॥
पूर्णकुम्भं द्विजं वह्निं पुष्पताम्बूलमन्दिरम् ।
शुक्लधान्यं नटं वेश्यां दृष्ट्वा श्रियमवाप्नुयात् ॥ २० ॥
गोक्षीरञ्च घृतं दृष्ट्वा चार्थं पुण्यधनं लभेत् ॥ २१ ॥
पायसं पद्मपत्रे च दधिदुग्धं घृतं मधु ।
मिष्टान्नं स्वस्तिकं भुक्त्वा ध्रुवं राजा भविष्यति ॥२२॥
पक्षिणां मानुषाणाञ्च भुङ्क्ते मांसं नरो यदि ।
बह्वर्थं शुभवार्ताञ्च लभते वाञ्छितं फलम् ॥ २३ ॥
छत्रं वा पादुकां वापि लब्ध्वा धान्यञ्च गच्छति ।
असिञ्च निर्मलं तीक्ष्णं तत्तथैव भविष्यति ॥२४॥
हेलया सन्तरेद्यो हि स प्रधानो भविष्यति ।
दृष्ट्वा च फलितं वृक्षं धनमाप्नोति निश्चितम् ॥२५॥
सर्पेण भक्षितो यो हि अर्थलाभस्तु तद्भवेत् ।
स्वप्ने सूर्य्यं विधुं दृष्ट्वा मुच्यते व्याधिबन्धनात् ॥२६॥
वडवां कुक्कुटीं दृष्ट्वा क्रौञ्चीं भार्य्यां लभेद् ध्रुवम् ।

स्वप्ने यो निगडैर्बद्धः प्रतिष्ठां पुत्रमालभेत् ॥ २७ ॥
दध्यन्नं पायसं भुङ्क्ते पद्मपत्रे नदीतटे ।
विशीर्णपद्मपत्रे च सोऽपि राजा भविष्यति ॥२८॥
जलौकसं वृश्चिकञ्च सर्पञ्च यदि पश्यति ।
धनं पुत्रञ्च विजयं प्रतिष्ठां वा लभेदिति ॥ २९ ॥
शृङ्गिभिर्दंष्ट्रिभिः कोलैर्वानरैः पीड़ितो यदि ।
निश्चितञ्च भवेद्राजा धनञ्च विपुलं लभेत् ॥ ३० ॥
मत्स्यं मांसं मौक्तिकञ्च शङ्खं चन्दनहीरकम् ।
यस्तु पश्यति स्वप्नान्ते विपुलं धनमालभेत् ॥३१॥
सुराञ्च रुधिरं स्वर्णं दृष्ट्वा विष्ठां धनं लभेत् ।
प्रतिमां शिवलिङ्गञ्च लभेद् दृष्ट्वा जयं धनम् ॥ ३२ ॥
फलितं पुष्पितं विल्वमाम्रं दृष्ट्वा लभेद्धनम् ।
दृष्ट्वा च ज्वलदग्निञ्च धनं वृद्धिं श्रियं लभेत् ।
आमलकं धात्रीफलमुत्पलञ्च धनागमम् ॥३३॥
देवताश्च द्विजा गावः पितरो लिङ्गिनस्तथा ।
यद्ददाति मियः स्वप्ने तत्तथैव भविष्यति ॥ ३४ ॥
शुक्लाम्बरधरा नार्यः शुक्लमाल्यानुलेपनाः ।
समाश्लिष्यन्ति यं स्वप्ने तस्य श्रीः स्वप्नतः सुखम् ॥ ३५ ॥
पीताम्बरधरां नारीं पीतमाल्यानुलेपनाम् ।
अवगूहति यः स्वप्ने कल्याणं तस्य जायते ॥ ३६ ॥

सर्वाणि शुक्लानि प्रशंसितानि
भस्मास्थिकार्पासविवर्जितानि ।
सर्वाणि कृष्णान्यतिनिन्दितानि
गोहस्तिवाजिद्विजदेववर्ज्यम् ॥ ३७ ॥

दिव्या स्त्री सस्मिता विप्रा रत्नभूषणभूषिता ।
यस्य मन्दिरमायाति स प्रियं लभते ध्रुवम् ॥ ३८ ॥
स्वप्ने च ब्राह्मणो देवो ब्राह्मणी देवकन्यका ।
ब्राह्मणो ब्राह्मणी वापि सन्तुष्टा सस्मिता सती ।
फलं ददाति यस्मै च तस्य पुत्रो भविष्यति ॥ ३९ ॥
यं स्वप्ने ब्राह्मणा नन्द कुर्वन्ति च शुभाशिषम् ।
यद्वदन्ति भवेत्तस्य तस्यैश्वर्यं भवेत् ध्रुवम् ॥ ४० ॥
परितुष्टो द्विजश्रेष्ठश्चायाति यस्य मन्दिरम् ।
नारायणः शिवो ब्रह्मा प्रविशेत्तु तदाश्रयम् ॥ ४१ ॥
सम्पत्तिस्तस्य भवति यशश्च विपुलं शुभम् ।
पदे पदे सुखं तस्य स मानं गौरवं लभेत् ॥ ४२ ॥
अकस्मादपि स्वप्ने तु लभते सुरभिं यदि ।
भूमिलाभो भवेत्तस्य भार्य्या चापि पतिव्रता ॥ ४३ ॥
करेण कृत्वा हस्ती यं मस्तके स्थापयेद्यदि ।
राज्यलाभो भवेत्तस्य निश्चितं च श्रुतौ मतम् ॥ ४४ ॥
स्वप्ने तु ब्राह्मणस्तुष्टः समाश्लिष्यति यं व्रज ।
तीर्थस्नायी भवेत्सोऽपि निश्चितञ्च श्रियान्वितः ॥ ४५ ॥
स्वप्ने ददाति पुष्पञ्च यस्मै पुण्यवते द्विजः ।
जययुक्तो भवेत् सोऽपि यशस्वी च धनी सुखी ॥ ४६ ॥
स्वप्ने दृष्ट्वा च तीर्थानि सौधरत्नगृहाणि च ।
जययुक्तश्च धनवान् तीर्थस्नायी भवेन्नरः ॥ ४७ ॥
स्वप्ने तु पूर्णकलशं कश्चित्कस्मै ददाति च ।
पुत्रलाभो भवेत्तस्य सम्पत्तिं वा समालभेत् ॥ ४८ ॥
हस्ते कृत्वा तु कुडवमाढकं वारसुन्दरी ।

यस्य मन्दिरमायाति स लक्ष्मीं लभते ध्रुवम् ॥ ४९ ॥
दिव्या स्त्री यद्गृहं गत्वा पुरीषं विसृजेद् व्रज ।
अर्थलाभो भवेत्तस्य दारिद्र्यञ्च प्रयाति च ॥ ५० ॥
यस्य गेहं समायाति ब्राह्मणो भार्यया सह ।
पार्वत्या सह शम्भुर्वा लक्ष्मीर्नारायणोऽथवा ॥ ५१ ॥
ब्राह्मणो ब्राह्मणी वापि स्वप्ने यस्मै ददाति च ।
धान्यं पुष्पाञ्जलिं वापि तस्य श्रीः सर्वतोमुखी ॥ ५२ ॥
मुक्ताहारं पुष्पमाल्यं चन्दनञ्च लभेद् व्रज ।
स्वप्ने ददाति विप्रश्च तस्य श्रीः सर्वतोमुखी ॥ ५३ ॥
गोरोचनं पताकां वा हरिद्रामिक्षुदण्डकम् ।
सिद्धान्नञ्च लभेत् स्वप्ने तस्य श्रीः सर्वतोमुखी ॥ ५४ ॥
ब्राह्मणो ब्राह्मणी वापि ददाति यस्य मस्तके ।
छत्रं वा शुक्लधान्यं वा स च राजा भविष्यति ॥ ५५ ॥
स्वप्ने रथस्थः पुरुषः शुक्लमाल्यानुलेपनः ।
तत्रस्थो दधि भुङ्क्ते च पायसं वा नृपो भवेत् ॥ ५६ ॥
स्वप्ने ददाति विप्रश्च ब्राह्मणी वा सुधां दधि ।
प्रशस्तपात्रं यस्मै वा सोऽपि राजा भवेत् ध्रुवम् ॥ ५७ ॥
कुमारी चाष्टवर्षीया रत्नभूषणभूषिता ।
यस्य तुष्टा भवेत् स्वप्ने स भवेत्कविपण्डितः ॥ ५८ ॥
ददाति पुस्तकं स्वप्ने यस्मै पुण्यवते च सा ।
स भवेद्विश्वविख्यातः कवीन्द्रः पण्डितेश्वरः ॥ ५९ ॥
यं पालयति स्वप्ने वा मातेव च सुतं यथा ।
सरस्वतीसुतः सोऽपि तत्परो नास्ति पण्डितः ॥ ६० ॥
ब्राह्मणः पाठयेद्यञ्च पितेव यत्नपूर्वकम् ।

ददाति पुस्तकं प्रीत्या स च तत्सदृशो भवेत् ॥ ६१ ॥
प्राप्नोति पुस्तकं स्वप्ने पथि वा यत्र यत्र वा ।
स पण्डितो यशस्वी च विख्यातश्च महीतले ॥ ६२ ॥
स्वप्ने यस्मै महामन्त्रं विप्रा विप्रो ददाति चेत् ।
स भवेत् पुरुषः प्राज्ञो धनवान् गुणवान् सुधीः ॥६३॥
स्वप्ने ददाति मन्त्रं वा प्रतिमां वा शिलामयीम् ।
यस्मै ददाति विप्रश्च मन्त्रसिद्धिश्च तद्भवेत् ॥६४॥
विप्रो विप्रसमूहञ्च दृष्ट्वा नत्वाशिषं लभेत् ।
राजेन्द्रः स भवेद्वापि किंवा च कविपण्डितः ॥ ६५ ॥
शुक्लधान्ययुतां भूमिं यस्मै विप्रः समुत्सृजेत् ।
स्वप्नेऽपि परितुष्टश्च स भवेत् पृथिवीपतिः ॥ ६६ ॥
स्वप्ने विप्रो रथे कृत्वा नानास्वर्गं प्रदर्शयेत् ।
चिरजीवी भवेदायुर्धनवृद्धिर्भवेत् ध्रुवम् ॥ ६७ ॥
विप्राय विप्रः सन्तुष्टो यस्मै कन्यां ददाति च ।
स्वप्ने च स भवेन्नित्यं धनाढ्यो भूपतिः स्वयम् ॥ ६८ ॥
स्वप्ने सरोवरं दृष्ट्वा समुद्रं वा नदीं नदम् ।
शुक्लाहिं शुक्लशैलञ्च दृष्ट्वा श्रियमवाप्नुयात् ॥ ६९ ॥
य पश्यति मृतं स्वप्ने स भवेच्चीरजीवी च ।
अरोगी रोगिणं दुःखी सुखिनञ्च सुखी भवेत् ॥ ७० ॥
दिव्या स्त्री यं प्रवदति मम स्वामी भवानिति ।
स्वप्ने दृष्ट्वा च जागर्ति स च राजा भवेद्दृढ़म् ॥ ७१ ॥
स्वप्ने वा कालिकां दृष्ट्वा लब्ध्वा स्फटिकमालिकाम् ।
इन्द्रचापं शक्रवज्रं स प्रतिष्ठां लभेद् ध्रुवम् ॥७२॥
स्वप्ने वदति यं विप्रो मम दासो भवेति च ।

हरिदास्यं च मद्भक्तिं स लब्ध्वा वैष्णवो भवेत् ॥ ७३ ॥
स्वप्ने विप्रो हरिः शम्भुर्ब्राह्मणी कमला शिवा ।
शुक्ला स्त्री वेदमाता वा जाह्नवी वा सरस्वती ॥ ७४ ॥
गोपालिकावेषधरा बालिका राधिका मम ।
बालश्च बालगोपालः स्वप्नविद्भिः प्रकाशितः ॥ ७५ ॥
एष ते कथितो नन्द सुस्वप्नः पुण्यहेतुकः ।
श्रोतुमिच्छसि किंवा त्वं किं भूयः कथयामि ते ॥७६॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे सुस्वप्नदर्शनं नाम
सप्तसप्ततितमोऽध्यायः ।

---

## अष्टसप्ततितमोऽध्यायः ।

---

नन्द उवाच ।

श्रीकृष्ण जगतां नाथ सुस्वप्नश्च श्रुतो मया ।
वेदसारो नीतिसारो लौकिको वैदिकस्तथा ॥ १ ॥
अधुना श्रोतुमिच्छामि पापं येषाञ्च दर्शने ।
यस्मिन् कर्मणि वा वत्स तन्मां कथितुमर्हसि ॥ २ ॥
वचनं वेदशास्त्रोक्तं तथा वेदानुयायिनः ।
श्रोतुमिच्छन्ति सन्तप्ता लोकास्त्वन्मुखतस्तथा ॥ ३ ॥
वेदानां जनकस्त्वञ्च वैदिकानां सतामपि ।
ब्रह्मादीनां सुराणाञ्च मुनीनां जगतामपि ॥ ४ ॥

श्रुतं यत् त्वन्मुखाम्भोजात् प्रमाणं वचनामृतम् ।
तेन देहोऽभिषिक्तो मे वत्स विच्छेददाहन ॥ ५ ॥
स्वप्ने यच्चरणाम्भोजं सर्वकामफलप्रदम् ।
ब्रह्मादयो न पश्यन्ति तदद्य दृष्टिगोचरम् ॥ ६ ॥
अतः परं त्वत्पदाब्जं क्व पश्यामि च पातकी ।
विण्मूत्रधारी देहो मे निबद्धश्च स्वकर्मणा ॥ ७ ॥
ईदृशञ्च दिनं वत्स कदा मम भविष्यति ।
त्वया ब्रह्मादिनाथेन संवादो मम पापिनः ॥ ८ ॥
कृपां कुरु कृपानाथ मम दोषं क्षमस्व च ।
वत्सबुद्ध्या च दुर्नीतं यत् कृतञ्च महेश्वर ॥ ९ ॥
ब्रह्मेशशेष मुनयो ध्यायन्ते यत्पदाम्बुजम् ।
सरस्वती श्रुतिर्यस्य स्तवने जड़तां व्रजेत् ॥ १० ॥
इत्येवमुक्त्वा नन्दश्च निरानन्दः शुचाकुलः ।
मूर्च्छामाप रुदित्वा च पुत्रविच्छेदविह्वलः ॥ ११ ॥
सन्त्रस्तो भगवान् कृष्णो बोधयामास यत्नतः ।
परमाध्यात्मिकं ज्ञानं ददौ तस्मै जगत्पतिः ॥ १२ ॥

श्रीभगवानुवाच ।

हे नन्द जनकश्रेष्ठ सर्वश्रेष्ठ व्रजेश्वर ।
चेतनं कुरु कल्याणज्ञानञ्च परमं शृणु ॥ १३ ॥
परमाध्यात्मिकं ज्ञानं ज्ञानिनाञ्च सुदुर्लभम् ।
वेदशास्त्रे गोपनीयं तुभ्यमेव ददाम्यहम् ॥ १४ ॥
निबोध श्रूयतां नन्द सानन्दः सुसमाहितः ।
जन्ममृत्युजराव्याधि यदभ्यासान्न जायते ॥ १५ ॥
स्थिरो भव महाराज व्रजनाथ व्रजं व्रज ।

ज्ञानं लब्ध्वा सदानन्दः शोकमोहविवर्जितः ॥ १६ ॥
जलबुद्बुदवत्सर्वं संसारं सचराचरम्।
प्रभाते स्वप्नवन्मिथ्या मोहकारणमेव च ॥ १७ ॥
मिथ्याकृत्रिमनिर्माणहेतुश्च पाञ्चभौतिकः।
मायया सत्यबुद्ध्या च प्रतीतिं जायते नरः ॥ १८ ॥
कामक्रोधलोभमोहैर्वेष्टितः सर्वकर्मसु।
मायया मोहितः शश्वत् ज्ञानहीनश्च दुर्बलः ॥१९॥
निद्रातन्द्राक्षुत्पिपासाक्षमाश्रद्धादयादिभिः।
लज्जा शान्तिर्धृतिः पुष्टिस्तुष्टिश्चाभिश्च वेष्टितः ॥२०॥
मनोबुद्धिचेतनाभिः प्राणज्ञानात्मभिः सह।
संसक्तः सर्वदेवैश्च यथा वृक्षश्च वायसैः ॥ २१ ॥
अहमात्मा च सर्वेशः सर्वज्ञानात्मकः स्मृतः।
मनो ब्रह्मा च प्रकृतिर्बुद्धिरूपा सनातनी ॥ २२ ॥
प्राणा विष्णुश्चेतना सा पद्मा तु चाधिदेवता।
मयि स्थिते स्थिताः सर्वे गतास्तेऽपि गते मयि ॥२३॥
अस्माभिश्च विना देहः सद्यः पतति निश्चितम्।
पाञ्चभूतो विलीनश्च पञ्चभूतेषु तत्क्षणम् ॥ २४ ॥
नाम संकेतरूपञ्च निष्फलं मोहकारणम्।
शोकश्चाज्ञानिनां तात ज्ञानिनां नास्ति किञ्चन ॥२५॥
निद्रादयः शक्तयश्च ताः सर्वाः प्रकृतेः कलाः।
लोभादयोऽह्यधर्मांशास्तथाहङ्कारपञ्चमः ॥२६॥
ते ब्रह्मविष्णुरुद्रांशा गुणाः सत्त्वादयस्त्रयः।
ज्ञानात्मकः शिवो ज्योतिरहमात्मा च निर्गुणः ॥२७॥
यदा विशामि प्रकृतौ तदाहं सगुणः स्मृतः।

सगुणा विषया विष्णुब्रह्मरुद्रादयस्तथा ॥ २८ ॥
धर्मो मदंशो विषयी शेषः सूर्य्यः कलानिधिः ।
एवं सर्वे मत्कलांशा मुनिमन्वादयः सुराः ॥ २९ ॥
सर्वदेहे प्रविष्टोऽहं न लिप्तः सर्वकर्मसु ।
जीवन्मुक्तश्च मद्भक्तो जन्ममृत्युजराहरः ॥ ३० ॥
सर्वसिद्धेश्वरः श्रीमान् कीर्तिमान् पण्डितः कविः ।
चतुस्त्रिंशद्विधः सिद्धः सर्वकर्मोपहारकः ॥ ३१ ॥
तमुपैमि स्वयं सिद्धं भक्तस्त्वन्यन्न वाञ्छति ।
द्वाविंशतिविधं सिद्धं सिद्धसाधनकारणम् ॥ ३२ ॥
मन्मुखाच्छ्रूयतां नन्द सिद्धमन्त्रं गृहाण च ।
अणिमा लघिमाव्याप्तिः प्राकाम्यं महिमा तथा ॥३३॥
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता ।
दूरश्रवणमेवेति परकायप्रवेशनम् ॥ ३४ ॥
मनोयायित्वमेवेति सर्वज्ञत्वमभीप्सितम् ।
वह्निस्तम्भं जलस्तम्भं चिरजीवित्वमेव च ॥ ३५ ॥
कायव्यूहञ्च वाक्सिद्धिं मृतानयनमीप्सितम् ।
सृष्टीनां करणञ्चैव प्राणाकर्षणमेव च ॥ ३६ ॥
ओँ सर्वेश्वरेश्वराय सर्वविघ्नविनाशिने मधुसूदनाय स्वाहेति
अयं मन्त्रो महागूढ़ः सर्वेषां कल्पपादपः ।
सामवेदे च कथितः सिद्धानां सर्वसिद्धिदः ॥३७॥
अनेन योगिनः सिद्धा मुनीन्द्राश्च सुरास्तथा ।
शतलक्षजपेनैव मन्त्रसिद्धिर्भवेत्सताम् ॥ ३८ ॥
यदि नारायणक्षेत्रे हविष्यान्नरतो जपेत् ।
गत्वा कुरु जपं तात काशिकां मणिकर्णिकाम् ॥३९॥

शृणु नारायणक्षेत्रं जलाधस्तच्चतुष्टयम् ।
अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥४०॥
ज्ञानस्नात्र मृते लोके सिद्धिर्भवति तस्य वै ।
व्रतं विनापि मन्त्रेण जीवन्मुक्तो न संशयः ॥ ४१ ॥
व्रजं कुरु पवित्रञ्च व्रजनाथ व्रजं व्रज ।
पापं यद्दर्शने तात कथयामि निशामय ॥ ४२ ॥
दुःस्वप्नं पापबीजञ्च केवलं विघ्नकारणम् ।
गोघ्नञ्च ब्राह्मणघ्नं वा कृतघ्नं कुटिलं तथा ॥ ४३ ॥
देवघ्नं पितृमातृघ्नं पापं विश्वासघातिनम् ।
मिथ्यासाक्ष्यप्रदातारं यश्चातिथ्यविवञ्चकम् ॥ ४४ ॥
ग्रामयाजिनमेवेति देवविप्रस्वहारिणम् ।
अश्वत्थघातिनं दुष्टं शिवविष्णुविनिन्दकम् ॥ ४५ ॥
अदीक्षितमनाचारं सन्ध्याहीनं द्विजं तथा ।
देवलं वृषवाहञ्च शूद्राणां सूपकारकम् ॥ ४६ ॥
शवदाहिनञ्च शूद्राणां शूद्रश्राद्धान्नभोजिनम् ।
अवीरां छिन्ननासाञ्च देवब्राह्मणनिन्दकाम् ॥ ४७ ॥
पतिभक्तिविहीनाञ्च विष्णुभक्तिविहीनकाम् ।
शूद्राणां विधवाञ्चैव चाण्डालीं व्यभिचारिणीम् ॥ ४८ ॥
शश्वत्कोपयुतं दुष्टलक्षणग्रस्तञ्च जारजम् ।
चौरं मिथ्यावादिनञ्च शरणागतयायिनम् ॥ ४९ ॥
मांसापहारिणञ्चैव ब्राह्मणं वृषलीपतिम् ।
ब्राह्मणीगामिनं शूद्रं द्विजं वार्द्धुषिकं तथा ।
अगम्यागामिनं दुष्टं चतुर्वर्णनराधमम् ॥ ५० ॥
माता सपत्नीमाता च [illegible] भगिनी तथा ।

गुरुपत्नी पुत्रपत्नी सोदरस्य प्रिया सती ॥ ५१ ॥
मातृस्वसा पितृस्वसा भागिनेयप्रिया तथा ।
मातुलानी नवोढ़ा च पितृव्यस्त्री रजस्वला ॥५२॥
पितृमातृप्रसूश्चैव चागम्याष्टादश स्मृताः ।
कीर्त्तिताः सामवेदे च परिपाल्याः सतां व्रज ॥५३॥
एता दृष्ट्वा च स्पृष्ट्वा च ब्रह्महत्यां लभेन्नरः ।
तस्माद्दैवेन ता दृष्ट्वा सूर्य्यं दृष्ट्वा हरिं स्मरेत् ॥५४॥
कामतो यदि पश्यन्ति विनिन्द्यास्ते भवन्ति वै ।
तस्मात्सन्तो न पश्यन्ति शापभीता व्रजेश्वर ॥५५॥
राहुग्रस्तं रविं सोमं न पश्यन्ति विपश्चितः ।
जन्माष्टसप्तरिःफाङ्कदशमस्थे दिवाकरे ॥ ५६ ॥
जन्मर्क्षे निधनं चापि चतुर्थेऽपि कलानिधौ ।
नष्टचन्द्रो न दृश्यश्च भाद्रे मासि सितासिते ।
चतुर्थ्यामुदितश्चन्द्रः परित्यक्तो मनीषिभिः ॥ ५७ ॥
चन्द्रस्तारापहरणं कलङ्कमतिदुष्करम् ।
तस्मै ददाति हे नन्द कामतो यदि पश्यति ॥५८॥
अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत् ।
तदा शुद्धो भवेत्सद्यो निष्कलङ्की महीतले ॥ ५९ ॥
सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारक मारोदीस्तव ह्येषः स्यमन्तकः ॥६०॥
इति मन्त्रेण पूतञ्च जलं साधु पिबेद् ध्रुवम् ।
इति ते कथितं सर्वमपरं कथयामि ते ॥ ६१ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे अष्टसप्ततितमोऽध्यायः ।

# एकोनाशीतितमोऽध्यायः ।

---

श्रीनन्द उवाच ।

राहुग्रस्तः कथं सूर्यश्चन्द्रो वापि जगत्प्रभो ।
नष्टश्चन्द्रः कथं भाद्रे चतुर्थ्याञ्चासिते सिते ॥ १ ॥
वेदानां जनकस्त्वञ्च कं पृच्छामि त्वया विना ।
वेदे पुराणे गोप्यं यन्न जानन्ति विपश्चितः ।
इति तद्वचनं श्रुत्वा चेदं वचनमब्रवीत् ॥ २ ॥

श्रीभगवानुवाच ।

अकथ्यं वचनं चेदं निषिद्धं वैदिकैरपि ।
चमस्व नन्द भद्रं ते प्रश्नमन्यं कुरुष्व माम् ॥ ३ ॥
विश्वस्तं वचनं तात न प्रकाश्यं मनीषिभिः ।
विघ्नः प्रकाशे भवति सतां छिद्रस्य दैवतः ॥ ४ ॥

नन्द उवाच ।

कथयस्व जगन्नाथ न भक्ते वञ्चनं कुरु ।
अदृश्यौ चापि देवेशौ राहुग्रस्तौ च पुण्यदौ ॥ ५ ॥

श्रीभगवानुवाच ।

शृणु नन्द प्रवक्ष्यामि कथामेतां पुरातनीम् ।
यां श्रुत्वा निष्कलङ्कश्च तीर्थस्नायी भवेन्नरः ॥ ६ ॥
सर्वपातकिनं दृष्ट्वा यत्पापं लभते नरः ।
आख्यानश्रवणेनैव भस्मीभूतं भवियति ॥ ७ ॥
एकदा जमदग्निश्च महाकौतूहलान्वितः ।

रेणुकासहितस्तुष्टो जगाम नर्मदातटम् ॥ ८ ॥
निर्जने नर्मदातीरे विजहार तया सह।
नवोढ़या च सुन्दर्या नवयौवनयुक्तया ॥ ९ ॥
सुवेशया सुस्मितया रत्नभूषणयुक्तया।
नतया स्तनभारेण श्रोणीभारेण मन्दया ॥१०॥
सुन्दरीणामतुलया श्वेतचम्पकवर्णया।
सुपूर्णचन्द्राननया कटाक्षयुतया तथा ॥ ११ ॥
अतीवसूक्ष्माम्बरया कामबाणार्त्तया व्रज।
पुलकाञ्चिसर्वाङ्गसम्भोगेनातिमूर्च्छया ॥ १२ ॥
पुंस्कोकिलयुते रम्ये शब्दिते सुमधुव्रते।
सुगन्धिवायुसंयुक्ते पुष्पतल्पान्विते शुभे ॥ १३ ॥
चन्दनोचितसर्वाङ्गं वस्त्रमाल्यधरं मुनिम्।
महारासरसाढ्यं तमुवाच भास्करः स्वयम् ॥ १४ ॥
वेदकर्त्तुः प्रपौत्रस्त्वं ब्रह्मणश्च जगत्पतेः।
चतुर्वेदविधेयेषु सुनिष्णातः सदा शुचिः। १५ ॥
वेदाङ्गकर्ता धर्मज्ञः श्रेष्ठो वेदविदां वरः।
महातपस्वी तेजस्वी ब्रह्मचारी च सुव्रती ॥ १६ ॥
युष्मद्विधोक्तं शास्त्रञ्च पठित्वान्यश्च पण्डितः।
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥ १७ ॥
धर्मं त्यजति धर्मज्ञो ह्यधर्मेण रतः कथम्।
दिवामैथुनदोषञ्च वक्ति वेदो विशेषतः।
अहञ्च धर्मिणां साक्षी तेन त्वां कथयामि च ॥१८॥
सूर्य्यस्य वचनं श्रुत्वा तत्याज मैथुनं द्विजः।
दृष्ट्वा पुरो विप्ररूपं सूर्य्यं तेजस्विनं सुरम् ॥ १९ ॥

उवाच सूर्य्यं रक्तास्य: कोपलज्जासमन्वित: ।
रेणुका लज्जिता तत्र विधाय वाससी सती ॥२०॥

जमदग्निरुवाच ।

को भवान् पण्डितम्मन्यो न त्वदन्योऽस्ति पण्डित: ।
अहं भृगोर्भगवत: शिष्यस्त्वं कश्यपस्य च ॥ २१ ॥
चतुर्वेदांश्च जानामि धर्माधर्मनिरूपणे ।
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्य्यय: ॥ २२ ॥
अज्ञानी पुरुष: शश्वज्जड़ितश्च स्वकर्मणा ।
तेजीयसां न दोषाय वह्ने: सर्वभुजो यथा ॥ २३ ॥
अन्ये भवांश्च धर्मश्च साक्षी सर्वे च कर्मणाम् ।
फलदाता च शास्त्रज्ञो यतस्त्वत्तनय: सदा ॥ २४ ॥
न वैष्णवानां शास्तारो यूयमस्माकमेव च ।
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ॥२५॥
हरे: सुदर्शनश्चक्रं शश्वद्रक्षति वैष्णवान् ।
नारायणश्च भगवान् स्वयं ब्रह्मा च शङ्कर: ॥ २६ ॥
शास्ता यमश्च नास्माकं त्वं वै नापि दिवाकर ।
राजपुत्रो यथा स्थाने वयं स्वच्छन्दगामिन: ॥२७॥
शक्तोऽहं भस्मसात् कर्त्तुं यमं सर्वसुरांस्तथा ।
महेन्द्रप्रभृतीन् सूर्य्य क्षणेनैवावलीलया ॥ २८ ॥
कस्त्वं धर्मप्रवक्ता मे याहि स्वस्थानमेव च ।
मम शास्ता च भगवान् श्रीकृष्ण: प्रकृते: पर: ॥ २९ ॥
अद्य मे निर्जने स्थाने रसभङ्गस्त्वया कृत: ।
मम शापात्पापदृष्टो राहुग्रस्तो भविष्यसि ॥३०॥
द्रष्टुं त्वां ये घना: सर्वे दूरीभूता भवन्ति ते ।

त्वामाच्छन्नं करिष्यन्ति वायुना प्रेरितास्तथा ॥३१॥
स्वतेजसा भवान् गर्वाद्धततेजा भविष्यसि।
मेघाच्छन्नः स्वल्पतेजा राहुग्रस्तो भवान् भव ॥३२॥
ब्राह्मणस्य वचः श्रुत्वा भगवान् भास्करः स्वयम्।
ततः पुटाञ्जलिर्भूत्वा तुष्टाव मुनिपुङ्गवम् ॥३३॥

भास्कर उवाच।

अवध्याः सर्वधर्मज्ञ धन्या मान्याः पुरस्कृताः।
नारायणश्च भगवान् शम्भुर्ब्रह्मा स्वयं प्रभुः ॥ ३४ ॥
गणेशश्चापि शेषश्च धर्मश्चापि सनातनः।
स्तुवन्ति ब्राह्मणं सर्वे विप्ररूपिजनार्द्दनम् ॥३५॥
विप्रदत्तश्च यो ब्रह्मन् वयमस्मन्मुखा द्विजः।
हुताशनश्च द्विमुखाः सुराः सर्वे द्विजो वरम् ॥ ३६ ॥
क्षमस्व वैष्णवः शुद्धः स्वधर्मञ्च समाचर।
वैष्णवानां कुतः कोपो हृदि येषां जनार्द्दनः ॥३७॥
अस्माभिः पूजिता विप्रा युष्माभिः पूजिताः सुराः।
परस्परं स्नेहपात्रं चेदमाचरणं द्विज ॥ ३८ ॥
अहमेव त्वया शप्तो मया शप्तो भवान् भव।
अन्यथा मां वदन्त्येवं सूर्यं निस्तेजसं जनाः ॥ ३९ ॥
पराभूतः क्षत्रियेण भविष्यसि द्विजेश्वर।
मरणं क्षत्रियास्त्रेण भवतश्च भविष्यति ॥ ४० ॥
सूर्यस्य वचनं श्रुत्वा चुकोप ब्राह्मणः पुनः।
तं शशापातिरक्तास्यः शम्भुना निर्जितो भवान् ॥४१॥
उभयोः कलहं ज्ञात्वा कश्यपेन सह व्रज।
आजगाम स्वयं ब्रह्मा विधाता जगतामपि ॥ ४२ ॥

आगत्य ब्रह्मा सन्त्रस्तं बोधयामास भास्करम् ।
मुनिश्रेष्ठश्च धर्मज्ञं धर्मज्ञानां गुरोर्गुरुः ॥ ४३ ॥

ब्रह्मोवाच ।

नमस्य भास्कर त्वञ्च साक्षान्नारायणो भवान् ।
युष्माकं परिपाल्यश्चाप्यवध्यो ब्राह्मणः सदा ॥ ४४ ॥
अहं करोमि भवतो विप्रशापान्तमुत्तमम् ।
अत्राहमागतस्त्रस्तो भृगुणा प्रेरितस्ततः ॥ ४५ ॥
स्फुटोऽहं प्रेरितश्चापि कश्यपेन मरीचिना ।
शान्तो भव सुरश्रेष्ठ साक्षी त्वं सर्वकर्मणाम् ॥ ४६ ॥
कुत्रचिद्दिवसे ब्रह्मन् त्वां तत्र कुत्रचित् क्षणम् ।
भविष्यसि घनाच्छन्नः सद्योमुक्तो भविष्यसि ॥ ४७ ॥
न्यूनातिरिक्ते वर्षे च राहुग्रस्तो भविष्यसि ।
तत्राऽदृश्यश्च केषाञ्चित् पुण्यदृश्यो हि कस्यचित् ॥ ४८ ॥
अन्यथा सर्वकालेन पुण्यदृश्यो भवान् भुवि ।
त्वां दृष्ट्वा च नमस्कृत्य सर्वे निष्पापिनो जनाः ॥ ४९ ॥
जन्मसप्ताष्टरिफ्फांकचतुर्थे दशमे तथा ।
जन्मर्क्षे निधनं नृणामदृश्यस्त्वं भविष्यसि ॥ ५० ॥
अस्तकाले घनाच्छन्नमध्याह्नस्थे जलेऽपि वा ।
अर्द्धोदिते च काले च पापदृश्यो भविष्यसि ॥ ५१ ॥
भार्यादुःखनिमित्तेन भार्यया हेतुभूतया ।
श्वशुरेण श्यालकेन हततेजा भविष्यसि ॥ ५२ ॥
अन्यथा तव तेजश्च संज्ञा सहितुमक्षमा ।
मालिसुमालियुद्धे च शम्भुना त्वं पराजितः ॥ ५३ ॥
इत्येवमुक्त्वा सूर्यञ्च बोधयामास ब्राह्मणम् ।

नम्रं शापपराभूतं लज्जितं कोपितं व्रज ॥ ५४ ॥
हे विप्र स्वगृहं गच्छ गच्छ वत्स यथासुखम् ।
त्वत्तेजसा क्षणेनैव भस्मीभूतं भवेज्जगत् ॥ ५५ ॥
सूर्यस्त्वत्परिपाल्यश्च भवान् सूर्यस्य नित्यशः ।
परस्परं च पूज्यश्च सम्बन्धः पोष्यपोषकः ॥ ५६ ॥
हर्यंशेन क्षत्रियेण कार्त्तवीर्यार्जुनेन च ।
भविष्यसि न सन्देहः पराभूतो द्विजो मृतः ॥ ५७ ॥
पुरा ते प्राक्तनं सर्वं कदाचिन्न हि खण्डितम् ।
नारायणस्य स्वांशेन तव पुत्रो भविष्यति ॥ ५८ ॥
त्रिःसप्त कृत्वा जगतीं निःक्षत्राञ्च करिष्यति ।
मृत्युस्ते यशसो वीजं भविष्यति महीतले ॥ ५९ ॥
इत्येवमुक्त्वा ब्रह्मा च ययौ गेहं व्रजेश्वर ।
प्रययौ जमदग्निश्च भास्करश्च स्वमन्दिरम् ॥ ६० ॥
इत्येवं कथितं तात स्वाख्यानं पुण्यकारणम् ।
राहुग्रस्तो भास्करश्चाप्यदृश्यो येन हेतुना ॥ ६१ ॥
चतुर्थ्यामुदितश्चन्द्रो भाद्रे मासि सितासिते ।
अदृश्यो नष्टरूपश्च श्रूयतां येन हेतुना ॥ ६२ ॥
राहुग्रस्तो कलङ्की वा पुरा शप्तो मया पितः ।
सर्वं त्वां कथयिष्यामि कथामेतां पुरातनीम् ॥ ६३ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे भगवन्नन्दसंवादे
एकोनाशीतितमोऽध्यायः ।

——

## अशीतितमोऽध्यायः ।

श्रीकृष्ण उवाच ।

पुरा तारा गुरोः पत्नी नवयौवनसंयुता ।
रत्नभूषणभूषाढ्या वरसूक्ष्माम्बरा सती ॥ १ ॥
सुश्रोणी सस्मिता रम्या सुन्दरी सुमनोहरा ।
अतीवकवरीरम्या मालतीमाल्यभूषिता ॥ २ ॥
सिन्दूरविन्दुना सार्कं चारुचन्दनविन्दुभिः ।
कस्तूरीविन्दुनाधश्च भालमध्यस्थलोज्ज्वला ॥ ३ ॥
रत्नेन्द्रसारनिर्माणक्वणन्मञ्जीररञ्जिता ।
सुवक्रलोचना श्यामा सुचारुकज्जलोज्ज्वला ॥ ४ ॥
सुचारुसारमुक्ताभदन्तपंक्तिमनोहरा ।
रत्नकुण्डलयुग्मेन चारुगण्डस्थलोज्ज्वला ॥ ५ ॥
कामिनीष्वतुला वाला गजेन्द्रमन्दगामिनी ।
सुकोमला चन्द्रमुखी कामाधारा च कामुकी ॥ ६ ॥
स्वर्गमन्दाकिनीतीरे स्नाता स्निग्धाम्बरा वरा ।
ध्यायन्ती गुरुपादं सा स्वगृहं गमनोन्मुखी ॥ ७ ॥
दृष्ट्वा तस्याश्च सर्वाङ्गमनङ्गवाणपीड़ितः ।
भाद्रे चतुर्थ्यां चन्द्रश्च जहार चेतनां व्रज ॥ ८ ॥
ज्ञानं क्षणेन संप्राप्य रथस्थो रसिको बली ।
रथमारोहयामास करे धृत्वा च तारकाम् ॥ ९ ॥
कामोन्मत्तः कामिनीं तां समाश्लिष्य चुचुम्ब च ।

शृङ्गारं कर्तुमुद्यन्तं तमुवाच गुरुप्रिया ॥ १० ॥

तारोवाच ।

त्यज मां त्यज मां चन्द्र सुरेषु कुलपांसन ।
गुरुपत्नीं ब्राह्मणीञ्च पातिव्रत्यपरायणाम् ।
गुरुपत्नीसङ्गमने ब्रह्महत्याशतं भवेत् ॥ ११ ॥
गुरुपत्नी विप्रपत्नी यदि सा च पतिव्रता ।
ब्रह्महत्यासहस्रञ्च तस्याः सङ्गमने लभेत् ॥ १२ ॥
पुत्रस्त्वं तव माताहं धैर्यं कुरु सुरेश्वर ।
धिक् त्वां श्रुत्वा सुरगुरुर्भस्मीभूतं करिष्यति ॥ १३ ॥
पुत्राधिकश्च शिष्यश्च प्रियो मत्स्वामिनो भवान् ।
स्वधर्मं रक्ष पापिष्ठ मामेवं मातरं त्यज ॥ १४ ॥
दास्यामि स्त्रीवधं तुभ्यं यदि मां संग्रहिष्यसि ॥ १५ ॥
विलङ्घ्य तारावचनं ताञ्च सम्भोक्तुमुद्यतम् ।
शशाप तारा कोपेन निष्कामा सा पतिव्रता ॥ १६ ॥
राहुग्रस्तो घनग्रस्तः पापदृश्यो भवान् भव ।
कलङ्की यक्ष्मणा ग्रस्तो भविष्यसि न संशयः ॥ १७ ॥
चन्द्रं शप्त्वा तदा तूर्णं कामदेवं शशाप सा ।
तेजस्विना केनचित् त्वं भस्मीभूतो भविष्यसि ॥ १८ ॥
चन्द्रस्तारां गृहीत्वा च कृत्वापि रमणं व्रज ।
क्रोड़े निधाय प्रययौ रुदन्तीं तां शुचान्विताम् ॥१९॥
निर्जने निर्जने रम्ये शैले शैले मनोहरे ।
सरोनदनदीनाञ्च तीरे तीरे मनोहरे ॥ २० ॥
मधुव्रतपिकोक्ते च पुष्पोद्याने सुपुष्पिते ।
रम्यायां पुष्पशय्यायां स रेमे रामया सह ॥ २१ ॥

चन्दनोचितसर्वाङ्गो मधुपानरतः सुरः।
सुखसम्भोगसंसक्तो बुबुधे न दिवानिशम् ॥ २२ ॥
मलये मलयारण्ये मलयानिलसंयुते।
स्यन्दने चन्दनवने पश्चिमोदधिसन्निधौ ॥ २३ ॥
त्रिकूटे वटमूले च तत्र चन्द्रसरोवरे।
सुचारुशतपत्राणां पत्रे चन्दनचर्चिते ॥ २४ ॥
सुचारुचम्पकोद्याने चम्पकानिलपूजिते।
क्षीरोदकाञ्चनीभूमौ क्रौञ्चकाञ्चनपर्वते ॥ २५ ॥
रत्नशैले मणिमये मणिमन्दिरसुन्दरे।
माणिक्यमुक्तासारेण हीरहारेण शोभिते ॥ २६ ॥
सुचारुवस्त्रचित्राढ्ये श्वेतचामरदर्पणैः।
भूषिते रत्नदीपैश्च देवक्रीड़े प्रियस्थले ॥ २७ ॥
वारुणीं मदिरां पीत्वा वरुणानीसमन्वितः।
वरुणो रमते यत्र तत्र रेमे तया सह ॥ २८ ॥
पावने पवनोद्याने पारिजातानिलेन च।
सुगन्धिमोहिते रत्नमालातीरे च निर्मले ॥ २९ ॥
ऋक्षशैले कल्पवृक्षवने वह्निप्रियाश्रमे।
पपौ च कामधेनूनां क्षीरं क्षीरोदधेस्तटे ॥ ३० ॥
वह्निशुद्धांशुकयुगं वह्निस्तस्मै ददौ मुदा।
वरुणो रत्नमालाञ्च रत्नच्छत्रं समीरणः ॥ ३१ ॥
तत्र दृष्ट्वा सुरगुरुं बलिगेहात् समागतम्।
प्रणम्य सर्वमुक्ता च चन्द्रस्तं शरणं ययौ ॥ ३२ ॥
शुक्रस्तं बोधयामास वचनं नीतियुक्तितः।
निरपेक्षो मुनिश्रेष्ठो वेदवेदाङ्गपारगः ॥ ३३ ॥

शुक्र उवाच ।

शृणु वत्स प्रवक्ष्यामि गुरवे देहि तारकाम् ।
अभीष्ट गुरुपुत्राय पौत्राय ब्रह्मणश्च वै ॥ ३४ ॥
पूजिताय सुराणाञ्च देया तस्मै निशापते ।
प्रियाय तत्प्रियां दत्त्वा शीघ्रं त्वं शरणं व्रज ॥३५॥
गुरुपत्नीं मातृतुल्यां त्यज मद्वचनाद्विधो ।
कुरु पापक्षयं पापनिवृत्तिस्तु महाफला ॥ ३६ ॥
सतीनां गुरुपत्नीनां ग्रहणे च बलेन च ।
ब्रह्महत्यासहस्राणां पातकं लभते जनः ॥ ३७ ॥
कुम्भीपाके च पच्यन्ते यावद्दै ब्रह्मणः शतम् ।
साम्यं नारायणस्थाने तृणपर्वतयोः सुर ॥ ३८ ॥
कस्त्वं वत्स हरेः स्थाने कर्मभोगोऽस्ति ब्रह्मणः ।
नारायणाश्रिताः सर्वे जीविनस्त्रिविधा भवे ॥३९ ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे भगवन्नन्दसंवादे तारा-
हरणे चाशीतितमोऽध्यायः ।

---

## एकाशीतितमोऽध्यायः ।

---

श्रीकृष्ण उवाच ।

एतस्मिन्नन्तरे शुक्रः सुरश्रेणीं ददर्श सः ।
आकाशमार्गादायान्तीं रणशस्त्रास्त्रधारिणीम् ॥ १ ॥

पताकानां त्रिकोटिश्च शतकोटिर्महारथम् ।
शतकोटिर्गजेन्द्राणां रथानां तच्चतुर्गुणम् ॥ २ ॥
अश्वानां तच्छतगुणं समूहञ्च सुदारुणम् ।
पदातीनां समूहञ्च तुरगेभ्यश्च षड्गुणम् ॥ ३ ॥
दुन्दुभीवाद्यभाण्डानां पञ्चलक्षं तथैव च ।
पटहानां त्रिलक्षञ्च डिण्डिमानां त्रिलक्षकम् ॥ ४ ॥
ऐरावते महेन्द्रञ्च श्वेताश्वे धर्ममेव च ।
कुवेरं वरुणं वह्निं रथस्थं पवनं तथा ॥ ५ ॥
महिषस्थं यमञ्चैव स्यन्दनस्थं दिवाकरम् ।
ईशानञ्च गजेन्द्रस्थमनन्तं नागवाहनम् ॥ ६ ॥
आदित्यांश्च वसून् रुद्रान् सिद्धगन्धर्वकिन्नरान् ।
जीवन्मुक्तमुनीनाञ्च समूहं सूर्यवर्चसम् ॥ ७ ॥
तान् दृष्ट्वा निर्भयः शुक्रः समाश्वास्य निशाकरम् ।
सुराणां द्विगुणं सैन्यमाजुहाव व्रजेश्वर ॥ ८ ॥
रत्नमालानदीतीरे हुताशनप्रियाश्रमे ।
तत्र तस्थौ दैत्यसैन्यं पुण्यक्षीरोदधेस्तटे ॥ ९ ॥
एतस्मिन्नन्तरे शुक्रः समीपे सरसस्तटे ।
पुण्याश्रमेऽक्षयवटे सुरसैन्यात् समागतम् ॥ १० ॥
ददर्श वृषभस्थञ्च शङ्करं सर्वशङ्करम् ।
त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं वरम् ॥ ११ ॥
तेजःस्वरूपं परमं भक्तानुग्रहविग्रहम् ।
सर्वसम्पत्प्रदातारं सर्वज्ञं सर्वकारणम् ॥ १२ ॥
सर्वेश्वरं सर्वपूज्यं सर्वरूपं सनातनम् ।
शरणागतदीनार्त्तपरित्राणपरायणम् ॥ १३ ॥

सस्मितं परमात्मानं ज्वलन्तं ब्रह्मतेजसा ।
सन्त्रस्तः सहसोत्थाय प्रणनाम पदाम्बुजे ॥ १४ ॥
ददौ शुभाशिषं तस्मै सुप्रसन्नः परात्परः ।
रत्नसिंहासने तञ्च वासयामास सादरम् ॥ १५ ॥
अथ तत्रान्तरे विप्र पुरतस्तं ददर्श सः ।
शान्तं स्वयं विधातारं रत्नस्यन्दनसुन्दरम् ॥ १६ ॥
वह्निशुद्धांशुकाधानं रत्नमालाविभूषितम् ।
प्रसन्नं सुस्मितं शुद्धं जगतामीश्वरं परम् ॥ १७ ॥
कर्मणां फलदातारं तपोरूपं तपस्विनाम् ।
वेदानां जनकं वेदप्रसूकान्तं मनोहरम् ॥ १८ ॥
पुटाञ्जलिस्तदा त्रस्तः प्रणनाम सुरेश्वरम् ।
रत्नसिंहासने रम्ये वासयामास भक्तितः ॥ १९ ॥
पूजां चकार भक्त्या च तयोश्चरणपङ्कजे ।
नोचितं कुशलप्रश्नं तयोः कल्याणमेव च ॥ २० ॥
विधाता जगतां शुक्रमाचार्यं पुरतः स्थितम् ।
सुनीतिं कथयामास यत्नतः शम्भुसम्मतः ॥ २१ ॥

ब्रह्मोवाच ।

शृणु शुक्र प्रवक्ष्यामि दुर्नीतिं शशिनः सुत ।
लज्जाकरं त्रिजगतां कर्म वेदबहिष्कृतम् ॥ २२ ॥
ज्ञात्वा गृहोन्मुखीं तारां गुरुपत्नीं पतिव्रताम् ।
गृहीत्वा शरणापन्नस्त्वयि पापश्च साम्प्रतम् ॥ २३ ॥
प्रस्तुतं देवसैन्यञ्च पश्य वत्स रणोद्यतम् ।
अहं शम्भुस्त्वत्समीपं तदर्थञ्च समागतौ ॥ २४ ॥

शम्भुरुवाच ।

चन्द्रमानय हे विप्र यद्यात्मशिवमिच्छसि ।
संहरिष्ये शिरस्तस्य त्रिशूलेन च पापिनः ॥ २५ ॥
अन्यथा संहरिष्यामि सर्वदैत्यान् च शेन च ।
मयि रुष्टे रक्षिता को दैत्यानाञ्च भवेद् द्विज ॥ २६ ॥
सद्यः पाशुपतेनैव वायव्यास्त्रेण च साम्प्रतम् ।
सुराणां रिपुवर्गञ्च हरिष्यामि च लीलया ॥ २७ ॥
दुर्वाससो मदंशस्य गुरुस्तस्याङ्गिरा मुनिः ।
परस्पराच्च सम्बन्धाद् गुरुपुत्रो गुरुर्मम ॥ २८ ॥
वृहस्पतिश्च तेजस्वी तं भस्मीकर्तुमीश्वरः ।
न चकार कृपालुश्चेत् प्रियशिष्येण हेतुना ॥ २९ ॥
उतथ्यपत्नीं दृष्ट्वा स पुरा रेमे स्वकामतः ।
तत्पतेः शापतोऽस्यैव परग्रस्ता प्रिया सती ॥ ३० ॥
पत्नीं मद्गुरुपुत्रस्य देहि तारां मनोहराम् ।
मद्वैरिणञ्च चन्द्रञ्च भ्रातृभार्य्यापहारिणम् ॥ ३१ ॥
शरणागतदीनार्तं न हि रक्षेद्यदीश्वरः ।
पच्यते निरये तावद्यावदिन्द्राश्चतुर्दश ॥ ३२ ॥
अत्र नास्ति विचारो मे पापिष्ठे शरणागते ।
पापी यं शरणं याति स पापी च न संशयः ॥ ३३
देहि तं विप्रशार्दूल पापिनं मातृगामिनम् ।
वहिष्कृत्य स्वाश्रमाच्च तारासाध्वीसमन्वितम् ॥३४

शुक्र उवाच ।

सुराणामसुराणाञ्च सर्वेषां जगतामपि ।
त्वमेव शास्ता भगवान् को वा शास्ति सुरेऽसुरे

कृत्वा सुराणां साहाय्यं कथं दैत्यान् हनिष्यसि ।
संहर्तुः सर्वजगतां दैत्यौघे किञ्च पौरुषम् ॥ ३६ ॥
त्वं ज्योतिः परमं ब्रह्म सगुणो निर्गुणः स्वयम् ।
गुणभेदान्मूर्तिभेदो ब्रह्मविष्णुशिवात्मकः ॥ ३७ ॥
बलिद्वारे गदापाणिः स्वयमेव भवान् प्रभो ।
स्वयं प्रदत्ता शुक्राय तस्मै श्रीरपि लीलया ॥ ३८ ॥
क्षमस्व भगवन् शम्भो हर क्रोधञ्च संहर ।
किं पौरुषञ्च भवतो ब्राह्मणस्यापि हिंसया ॥ ३९ ॥
अहं जीवन् शरीरेण न दास्यामि निशाकरम् ।
शरणागतदीनार्तं लज्जितं पापसंयुतम् ॥ ४० ॥
अहञ्च त्वत्पदाम्भोजे शरणं यामि शङ्कर ।
यथोचितं कुरु विभो जगत्सर्वं तथैव च ॥ ४१ ॥
शुक्रस्य वचनं श्रुत्वा प्रसन्नो भगवान् शिवः ।
इत्युक्त्वा च निशानाथं समानय शुभं भवेत् ॥ ४२ ॥
एतस्मिन्नन्तरे ब्रह्मा बोधयित्वा कविं विभुः ।
समानीय निशानाथं तारकासहितं व्रज ॥ ४३ ॥
शम्भोश्च चरणाम्भोजे चकार च समर्पणम् ।
शम्भुस्तं प्रीतियुक्तश्च वासयामास वक्षसि ॥ ४४ ॥
दत्त्वा तस्मै पादरेणुं निष्पापञ्च चकार सः ।
दत्त्वा तन्मस्तके हस्तं कृपालुरभयं ददौ ॥ ४५ ॥
क्षीरोदे स्नापयित्वा च प्रायश्चित्तेन शङ्करः ।
चकार चन्द्रं निष्पापं ब्रह्मणा सहितः शुचिम् ॥ ४६ ॥
योगेन चन्द्रं योगीन्द्रो द्विखण्डं तं चकार सः ।
दधाराधं ललाटे च सोऽप्यर्द्धं ब्रह्मणः पुरः ॥ ४७ ॥

एवमेव महादेवो बभूव चन्द्रशेखरः।
मृगाङ्को लज्जितस्तत्र कलङ्की देवसंसदि ॥ ४८ ॥
लज्जया च स्वयोगेन देहत्यागं चकार सः।
तच्छरीरञ्च क्षीरोदे ब्रह्मणा च समर्पितम्।
करोद्दाविश्च कृपया शुचा क्षीरोदधेस्तटे ॥ ४९ ॥
अत्रेश्चक्षुर्जलं तस्य पपात च जले व्रज।
तस्माद्बभूव चन्द्रश्च निष्पापो देवसंसदि ॥ ५० ॥
ब्रह्मा च भगवान् शम्भुरभिषेकं चकार तम्।
उवाच तं महादेवो निर्भयं देवसंसदि ॥ ५१ ॥

महादेव उवाच।

स्वस्थानं गच्छ पुत्र त्वं कुरुष्व विषयं मुदा।
पश्चात्तस्याश्च शापेन यक्ष्मग्रस्तो भविष्यसि ॥ ५२ ॥
व्यर्थं पतिव्रताशापं कर्तुमीशश्च को भुवि।
मदाशिषा यक्ष्मणश्च प्रतीकारो भविष्यति ॥ ५३ ॥
यस्माद्भाद्रचतुर्थ्यान्तु गुरुपत्नीक्षतिः कृता।
तस्मात्तस्मिन् दिने वत्स पापदृश्यो युगे युगे ॥ ५४ ॥
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ५५ ॥
देहत्यागेन हे वत्स कर्मभोगो न नश्यति।
प्रायश्चित्तान्न सन्देहो ह्रस्तमेव भविष्यति ॥ ५६ ॥
तारापहरणाद्वत्स कलङ्कश्चन्द्रमण्डले।
मृगाकृतिविलग्नश्च भविष्यति युगे युगे ॥ ५७ ॥
शृणु वाक्यमिहागच्छ तारके च पतिव्रते।
सत्यं ब्रूहि कस्य गर्भं त्यक्त्वा शुद्धा भव प्रिये ॥ ५८ ॥

अकामतो बलात् साध्वी न स्त्री जारेण दुष्यति ।
कामतो नरकं याति यावच्चन्द्रदिवाकरौ ॥ ५९ ॥
उवाच तारा ब्रह्माणं गर्भं चन्द्रस्य सस्मितम् ।
जहसुर्देवताः सर्वाः शम्भुश्च मुनिसङ्घकाः ॥ ६० ॥
ददौ ताराञ्च गुरवे लज्जिताय व्रजेश्वर ।
बृहस्पतिर्ययौ गेहं गृहीत्वा च पतिव्रताम् ॥ ६१ ॥
तया प्रसूतं पुत्रञ्च सुन्दरं कनकप्रभम् ।
गृहीत्वा प्रययौ चन्द्रो नमस्कृत्य विधिं शिवम् ॥ ६२
ययुर्देवाश्च मुनयः शम्भुश्च कमलोद्भवः ।
प्रययौ स्वगृहं शुक्रो दैत्ययुक्तो मुदान्वितः ॥ ६३ ॥
एतत्ते कथितं नन्द ह्याख्यानं पुण्यदं शुभम् ।
एतच्छ्रुत्वा तु निष्पापो निष्कलङ्की नरो भवेत् ॥ ६४ ॥
धन्यं यशस्यमायुष्यं सर्वसम्पत्करं परम् ।
शोकापनोदनं हर्षकरं सर्वत्र मङ्गलम् ॥ ६५ ॥
त्यज शोकं सदा नन्द गृहं व्रज व्रजेश्वर ।
ब्रूहि सर्वं यशोदाञ्च मत्प्रसूं गोपिकागणम् ॥ ६६ ॥
बोधयिष्यसि सर्वां तां स्त्रीजातिं शोकसंयुताम् ।
मदीयज्ञानदत्तेन हर्षयुक्तः सदा भव ॥ ६७ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे ताराहरणं नामैका-
शीतितमोऽध्यायः ।

———

## द्व्यशीतितमोऽध्यायः।

---

नन्द उवाच।

श्रुतं सर्वं महाभाग दुःस्वप्नं कथय प्रभो।
उवाच तं वै भगवान् श्रूयतामिति तद्वचः॥ १॥

श्रीभगवानुवाच।

स्वप्ने हसति यो हर्षाद्विवाहं यदि पश्यति।
नर्त्तनं गीतमिष्टञ्च विपत्तिस्तस्य निश्चितम्॥ २॥
दन्ता यस्य विघोद्यन्ते विचरन्तञ्च पश्यति।
धनहानिर्भवेत्तस्य पीड़ा चापि शरीरजा॥ ३॥
अभ्यङ्गितस्तु तैलेन यो गच्छेद्दक्षिणां दिशम्।
खरोष्ट्रमहिषारूढ़ो मृत्युस्तस्य न संशयः॥ ४॥
स्वप्ने कर्णे जपापुष्पमशोकं करवीरकम्।
विपत्तिस्तस्य तैलञ्च लवणं यदि पश्यति॥ ५॥
नग्नां कृष्णां छिन्ननासां शूद्रस्य विधवां तथा।
कपर्दकं तालफलं दृष्ट्वा शोकमवाप्नुयात्॥ ६॥
स्वप्ने रुष्टं ब्राह्मणञ्च ब्राह्मणीं कोपसंयुताम्।
विपत्तिश्च भवेत्तस्य लक्ष्मीर्याति गृहाद् ध्रुवम्॥ ७॥
वनपुष्पं रक्तपुष्पं पलाशञ्च सुपुष्पितम्।
कार्पासं शुक्लवस्त्रञ्च दृष्ट्वा दुःखमवाप्नुयात्॥ ८॥
गायन्तीञ्च हसन्तीञ्च कृष्णाम्बरधरां स्त्रियम्।
दृष्ट्वा कृष्णाञ्च विधवां नरो मृत्युमवाप्नुयात्॥ ९॥

देवता यत्र नृत्यन्ति गायन्ति च हसन्ति च।
आस्फोटयन्ति धावन्ति तस्य देहो मरिष्यति ॥ १० ॥
वातं मूत्रं पुरीषञ्च वैद्यं रौप्यं सुवर्णकम्।
प्रत्यक्षमथवा स्वप्ने जीवितं दशमासिकम् ॥ ११ ॥
कृष्णाम्बरधरां नारीं कृष्णमाल्यानुलेपनाम्।
उपगूहति यः स्वप्ने तस्य मृत्युर्भविष्यति ॥ १२ ॥
मृतवत्सञ्च मुण्डञ्च मृगस्य च नरस्य च।
यः प्राप्नोत्यस्थिमालाञ्च विपत्तिस्तस्य निश्चितम् ॥१३
रथं खरोष्ट्रसंयुक्तमेकाकी योऽधिरोहयेत्।
तत्रस्थोऽपि च जागर्ति मृत्युरेव न संशयः ॥ १४ ॥
अभ्यङ्गितस्तु हविषा क्षीरेण मधुनापि च।
तक्रेणापि गुड़ेनैव पीड़ा तस्य विनिश्चितम् ॥ १५ ॥
रक्ताम्बरधरां नारीं रक्तमाल्यानुलेपनाम्।
उपगूहति यः स्वप्ने तस्य व्याधिर्विनिश्चितम् ॥ १६ ॥
पतितान्नखकेशांश्च निर्वाणाङ्गारमेव च।
भस्मपूर्णाञ्चितां दृष्ट्वा लभते मृत्युमेव च ॥ १७ ॥
श्मशानं शुष्ककाष्ठञ्च तृणानि लौहमेव च।
मसीञ्च किञ्चित्कृष्णाख्यं दृष्ट्वा दुःखं लभेद्ध्रुवम् ॥१८
पादुकां फलकं रक्तं पुष्पमाल्यं भयानकम्।
माषं मसूरं मुद्गं वा दृष्ट्वा सद्यो व्रणं लभेत् ॥ १९ ॥
कटकं सरठं काकं भल्लूकं वानरं गवम्।
पूयं गात्रमलं स्वप्ने केवलं व्याधिकारणम् ॥ २० ॥
भग्नभाण्डं क्षतं शूद्रं गलत्कुष्ठञ्च रोगिणम्।
रक्ताम्बरञ्च जटिलं शूकरं माहिषं खरम् ॥ २१ ॥

अन्धकारं महाघोरमृतं जीवं भयङ्करम् ।
दृष्ट्वा स्वप्ने योनिलिङ्गं विपत्तिं लभते ध्रुवम् ॥ २२ ॥
कुवेशरूपं म्लेच्छञ्च यमदूतं भयङ्करम् ।
पाशहस्तं पाशशस्त्रं दृष्ट्वा मृत्युं लभेन्नरः ॥ २३ ॥
ब्राह्मणो ब्राह्मणी बाला बालको वा सुतः सुता ।
विलापं कुरुते कोपाद् दृष्ट्वा दुःखमवाप्नुयात् ॥ २४ ॥
कृष्णं पुष्पञ्च तन्माल्यं सैन्यं शस्त्रास्त्रधारिणम् ।
म्लेच्छाञ्च विकृताकारां दृष्ट्वा मृत्युं लभेद् ध्रुवम् ॥२५॥
वाद्यञ्च नर्तनं गीतं गायनं रक्तवाससम् ।
मृदङ्गं वाद्यमानं तं दृष्ट्वा दुःखं लभेद् ध्रुवम् ॥ २६ ॥
त्यक्तप्राणं मृतं दृष्ट्वा मृत्युञ्च लभते ध्रुवम् ।
मत्स्यादि धारयेद्यो हि तद्भ्रातुर्मरणं ध्रुवम् ॥ २७ ॥
छिन्नं वापि कबन्धं वा विकृतं मुक्तकेशिनम् ।
क्षिप्रं नृत्यञ्च कुर्वन्तं दृष्ट्वा मृत्युं लभेन्नरः ॥ २८ ॥
मृतो वापि मृता वापि कृष्णाम्लेच्छा भयानका ।
उपगूहति यं स्वप्ने तस्य मृत्युर्विनिश्चितम् ॥२९॥
येषां दन्ताश्च भग्नाश्च केशाश्चापि पतन्ति हि ।
धनहानिर्भवेत्तस्य पीड़ा वा तच्छरीरजा ॥ ३० ॥
उपद्रवन्ति यं स्वप्ने शृङ्गिणो दंष्ट्रिणोऽपि वा ।
बालका मानवाश्चैव तस्य राजकुलाद्भयम् ॥ ३१ ॥
छिन्नवृक्षं पतन्तञ्च शिलावृष्टिं तुषं क्षुरम् ।
रक्ताङ्गारं भस्मवृष्टिं दृष्ट्वा दुःखमवाप्नुयात् ॥ ३२ ॥
गृहं पतन्तं शैलं वा धूमकेतुं भयानकम् ।
भग्नस्कन्धं नरं वापि दृष्ट्वा दुःखमवाप्नुयात् ॥३३॥

रथगेहशैलवृक्षगोहस्तितुरगाम्बरात् ।
भूमौ पतति यः स्वप्ने विपत्तिस्तस्य निश्चितम् ॥३४॥
उच्चैः पतन्ति गर्त्तेषु भस्माङ्गारयुतेषु च ।
क्षारकुण्डेषु चूर्णेषु मृत्युस्तेषां न संशयः ॥३५॥
बलाद् गृह्णाति दुष्टश्च छत्रञ्च यस्य मस्तकात् ।
पितुर्नाशो भवेत्तस्य गुरोर्वापि नृपस्य वा ॥३६॥
सुरभी यस्य गेहाच्च याति त्रस्ता सवत्सिका ।
प्रयाति पापिनस्तस्य लक्ष्मीरपि वसुन्धरा ॥३७॥
पाशेन कृत्वा बद्धञ्च यं गृहीत्वा प्रयान्ति च ।
यमदूताश्च ये म्लेच्छास्तस्य मृत्युर्विनिश्चितम् ॥३८॥
गणको ब्राह्मणो वापि ब्राह्मणो वा गुरुस्तथा ।
परिरुष्टः शपति यं विपत्तिस्तस्य निश्चितम् ॥३९॥
विरोधिनश्च काकाश्च कुक्कुटा भल्लुकास्तथा ।
पतन्त्यागत्य यद्गात्रे तस्य मृत्युर्न संशयः ॥ ४० ॥
महिषा भल्लुका उष्ट्रा शूकरा गर्दभास्तथा ।
रुष्टा धावन्ति यं स्वप्ने स रोगी निश्चितं भवेत् ॥४१॥
रक्तचन्दनकाष्ठानि घृताक्तानि जुहोति यः ।
गायत्र्याश्च सहस्रेण तेन शान्तिर्विधीयते ॥४२॥
सहस्रधा जपेद्यो हि भक्त्येनं मधुसूदनम् ।
निष्पापो हि भवेत्सोऽपि दुःस्वप्नः सुखवान् भवेत् ॥४३॥
अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम् ।
हंसं नारायणञ्चैव ह्येतन्नामाष्टकं शुभम् ॥४४॥
शुचिः पूर्वमुखः प्राज्ञो दशकृत्वश्च यो जपेत् ।
निष्पापोऽपि भवेत्सोऽपि दुःस्वप्नः शुभवान् भवेत् ॥४५

विष्णुं नारायणं कृष्णं माधवं मधुसूदनम्।
हरिं नरहरिं रामं गोविन्दं दधिवामनम् ॥४६॥
भक्त्या चेमानि नामानि दश भद्राणि यो जपेत्।
शतकृत्वो भक्तियुक्तो जप्त्वा नीरोगतां व्रजेत् ॥४७॥
लक्षधा हि जपेद्यो हि बन्धनान्मुच्यते ध्रुवम्।
जप्त्वा च दशलक्षञ्च महाबन्ध्या प्रसूयते।
हविष्याशी यतः शुद्धो दरिद्रो धनवान् भवेत् ॥४८॥
शतलक्षञ्च जप्त्वा च जीवन्मुक्तो भवेन्नरः।
शुद्धो नारायणक्षेत्रे सर्वसिद्धिं लभेन्नरः ॥४९॥
ओं नमः शिवं दुर्गां गणपतिं कार्तिकेयं दिनेश्वरम्।
धर्मं गङ्गाञ्च तुलसीं राधां लक्ष्मीं सरस्वतीम् ॥५०॥
नामान्येतानि भद्राणि जले स्नात्वा च यो जपेत्।
वाञ्छितञ्च लभेत्सोऽपि दुःस्वप्नः शुभवान् भवेत् ॥५१॥
ओं ह्रीं श्रीं क्लीं पूर्वं दुर्गतिनाशिन्यै महामायायै स्वाहा।
कल्पवृक्षो हि लोकानां मन्त्रः सप्तदशाक्षरः।
शुचिश्च दशधा जप्त्वा दुःस्वप्नः सुखवान् भवेत् ॥५२॥
शतलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम्।
सिद्धमन्त्रस्तु लभते सर्वसिद्धिञ्च वाञ्छिताम् ॥५३॥
ओं नमो मृत्युञ्जयायेति स्वाहान्तं लक्षधा जपेत्।
दृष्ट्वा च मरणं स्वप्ने शतायुश्च भवेन्नरः।
पूर्वोत्तरमुखो भूत्वा स्वप्नं प्राज्ञे प्रकाशयेत् ॥५४॥
काश्यपे दुर्गते नीचे देवब्राह्मणनिन्दके।
मूर्खे चैवानभिज्ञे च न च स्वप्नं प्रकाशयेत् ॥५५॥
अश्वत्थे गणके विप्रे पितृदेवासनेषु च।

आर्यै च वैष्णवे मित्रे दिवास्वप्नं प्रकाशयेत् ॥ ५६ ॥
इति ते पुण्यमाख्यातं कथितं पापनाशनम् ।
धन्यं यशस्यमायुष्यं किं भूयः श्रोतुमिच्छसि ।५७।

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे श्रीभगवन्नन्दसंवादे
द्व्यशीतितमोऽध्यायः ।

---

## त्र्यशीतितमोऽध्यायः ।

नन्द उवाच ।

वेदानां कारणं त्वञ्च ब्रह्मादीनाञ्च पुत्रक ।
सर्वं कथय भद्रं ते कं पृच्छामि त्वया विना ॥ १ ॥
विप्राणां यो हि धर्मश्च चत्रविट्शूद्रकर्मणाम् ।
सन्न्यासिनाञ्च यो धर्मो यतीनां ब्रह्मचारिणाम् ॥२॥
विप्राणां विधवास्त्रीणां वैष्णवानां सतामपि ।
पतिव्रतानां स्त्रीणाञ्च तत्सर्वं वक्तुमर्हसि ॥ ३ ॥
गृहिणां गृहिणीनाञ्च शिष्याणाञ्च विशेषतः ।
पुत्राणाञ्चापि कन्यानां पितरं मातरं प्रति ॥४॥
स्त्रीजातिश्च कतिविधा भक्तः कतिविधः प्रभो ।
ब्रह्माण्डञ्च कतिविधं वद नश्च किमात्मकम् ।
किं नित्यं कृत्रिमं किञ्च ब्रूहि सर्वं क्रमेण च ॥ ५ ॥

श्रीभगवानुवाच ।

सन्ध्यापूतः सदा विप्रः कुरुते मम सेवनम् ।
नित्यं भुंक्ते मत्प्रसादमनिवेद्य कदाचन ॥ ६ ॥
अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् ।
विष्णुप्रसादभोजी च जीवन्मुक्तश्च ब्राह्मणः ॥ ७ ॥
नित्यं तपस्यानिरतः शुचिः शान्तश्च शास्त्रवित् ।
व्रततीर्थाश्रितो धर्मी नानाध्यापनसंयुतः ॥ ८ ॥
विष्णुमन्त्रं गृहीत्वा च कृत्वा च गुरुसेवनम् ।
गृहीत्वा तदनुज्ञाञ्च पश्चाद्भवति संगृही ॥ ९ ॥
दक्षिणां नित्यपूजानां गुरवे च निवेदयेत् ।
गुरूणां पोषणं नित्यं कर्त्तव्यं नात्र संशयः ॥ १० ॥
सर्व्वेषामपि वन्द्यानां पिता चैव महान् गुरुः ।
पितुः शतगुणैर्माता मातुः शतगुणैः गुरुः ॥ ११ ॥
मन्त्रदस्तन्त्रदश्चैव गुराणाञ्च चतुर्गुणः ।
नारायणश्च भगवान् गुरुः प्रत्यक्ष ईश्वरः ॥ १२ ॥
उद्देशे दीयते तस्मै गुरायेति श्रुतौ श्रुतम् ।
प्रत्यक्षभोक्ता स्वगुरुः स्वयं देही जनार्द्दनः ॥ १३ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुरेव स्वयं शिवः ।
गुरौ च सर्व्वदेवाश्च तिष्ठन्ति सततं मुदा ॥ १४ ॥
गुरौ तुष्टे हरिस्तुष्टो यस्मिंस्तुष्टे च देवताः ।
गुरुः पुत्रसमं स्नेहं शिष्येषु न करिष्यति ।
लभते ब्रह्महत्याञ्च भुंक्ते कृत्वा च नाशिषम् ॥ १५ ॥
स्वधर्म्मनिरतो विप्रो ब्राह्मणश्च सदा शुचिः ।
विष्णुसेवी सदा विप्रस्तदन्योऽप्यशुचिः सदा ॥ १६ ॥

ब्राह्मणो वृषवाहश्च शूद्राणां सूपकारकः ।
ब्राह्मणो देवलश्चैव सन्ध्याहीनश्च दुर्बलः ॥ १७ ॥
ब्राह्मणश्च दिवाशायी शूद्रश्राद्धान्नभोजकः ।
शूद्राणां शवदाही च ते च शूद्रसमा द्विजाः ॥ १८ ॥
शालग्राममहामन्त्रं कृत्वा पूजां विधानतः ।
भुंक्ते नैवेद्यशेषञ्च तत्पादोदकमेव च ॥ १९ ॥
हरेः पादोदकं पीत्वा तीर्थस्नायी भवेन्नरः ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ २० ॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत् ॥ २१ ॥
गङ्गाजलाद्दशगुणं शालग्रामजलं व्रज ।
नित्यं भुंक्ते च यो विप्रो जीवन्मुक्तः सुरैः समः ॥ २२ ॥
विप्राणां नित्यकृत्यञ्च विष्णोर्नैवेद्यभोजनम् ।
यत्नेन पूजनं तस्य तत्पादोदकसेवनम् ॥ २३ ॥
नित्यं त्रिसन्ध्यं कुरुते भक्त्या च मम पूजनम् ।
एकादश्यां न भुंक्ते च मम वै जन्मवासरे ॥ २४ ॥
शिवरात्रौ च हे तात श्रीरामनवमीदिने ।
न च भुंक्ते व्रती यो हि जीवन्मुक्तो हि स द्विजः ॥ २५ ॥
पृथिव्यां यानि तीर्थानि तस्य पादे नतानि च ।
विप्रपादोदकं पीत्वा तीर्थस्नायी भवेन्नरः ॥ २६ ॥
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपात्रेषु पिबन्ति पितरो जलम् ॥ २७ ॥
विष्णुप्रसादभोजी च पवित्रं कुरुते महीम् ।
तीर्थानि च नरांश्चैव जीवन्मुक्तो हि स द्विजः ॥ २८ ॥

सर्वतीर्थेषु स स्नातो व्रतानाञ्च फलं लभेत् ।
पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् ॥ [illegible] ॥
वह्निवायुसमः पूतस्तेजसा भास्करोपमः ।
यमदूतं यमं चैव स च स्वप्ने न पश्यति ॥ ३० ॥
वैकुण्ठे मोदते सोऽपि पार्षदो हरिणा सह ।
न भवेत्तस्य पातो हि विप्रस्य हरिसेविनः ॥ ३१ ॥
विष्णुमन्त्रोपासकश्च स एव वैष्णवो द्विजः ।
ब्राह्मणो वैष्णवः प्राज्ञो न हि तस्मात्परः पुमान् ॥३२॥
वेदोक्तो वा पुराणोक्तस्तन्त्रोक्तो वा मनुः शुचिः ।
विचारतो गृहीत्वा तं शैवः शाक्तश्च वैष्णवः ॥ ३३ ॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशत्ययम् ।
तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥ ३४ ॥
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः ।
भित्त्वा ब्रह्माण्डमखिलं यास्यत्येव हरेः पदम् ॥ ३५ ॥
पूर्वान् सप्त परान् सप्त सप्त मातामहादिकान् ।
सोदरानुद्धरेद्भक्तस्तत्प्रसूं तत्प्रसूं तथा ॥ ३६ ॥
जपेन्नारायणं क्षेत्रे पुरश्चरणपूर्वकम् ।
पुरुषाणां सहस्रञ्च लीलयात्मानमुद्धरेत् ॥ ३७ ॥
मन्त्रग्रहणमात्रेण फलमेतद् व्रजेश्वर ।
पुरश्चरणसम्पर्कात् पुरुषाणां शतं शतम् ॥ ३८ ॥
ऐकान्तिको वैष्णवश्च पुंसां लक्षं समुद्धरेत् ।
क्रिया विष्णुपदे यस्य सङ्कल्पाश्च वहिष्कृताः ॥ ३९ ॥
द्विजाः सुरा मम प्राणा भक्तः प्राणात् परः प्रियः ।
विश्वेषु प्रियपात्रेषु न मे भक्तात् परः प्रियः ॥ ४० ॥

अगम्यागमनं दुःखं धर्मिष्ठो नैव वाञ्छति ।
क्षमस्व गच्छ भद्रन्ते ब्राह्मण ज्ञानदुर्बल ॥८९॥
यथा दीपशिखां दृष्ट्वा कीटः पतति निश्चितम् ।
मिष्टं दृष्ट्वा वड़ीशाग्रे लुब्धमीनो मृगो यथा ॥९०॥
यथा विषाक्तं भक्ष्यञ्च भुङ्क्ते भोक्ता बुभुक्षितः ।
गृह्णाति दुष्टो दुष्टञ्च विषकुम्भं पयोमुखम् ॥९१॥
तथा दृष्ट्वा परस्त्रीणां मुखपद्मं मनोहरम् ।
विनाशवीजं मोहेन भ्रान्तो भवति लम्पटः ॥९२॥
मुखञ्च रुचिरं स्त्रीणां श्रोणीयुग्मं स्तनं तथा ।
कामाधारं नाशवीजमधर्मस्थलमेव च ॥ ९३ ॥
भगं नरककुण्डञ्च लालामूत्रसमन्वितम् ।
दुर्गन्धियुक्तं पापञ्च यमदण्डस्य कारणम् ।९४॥
यथा लिङ्गं विशत्येव पापयोनौ च योषिताम् ।
तथा पुमान् विशत्येव रौरवे च युगे युगे ॥९५॥
रहस्यञ्चापदं दृष्ट्वा मां त्वं धर्षितुमिच्छसि ।
अत्रैव सर्वदेवाश्च लोकपालाश्च ब्राह्मण ॥९६॥
जाज्वल्यमानो धर्मश्च साक्षी शास्ता च कर्मणाम् ।
यमश्च दण्डकर्त्ता च स्थापितो हरिणा स्वयम् ॥९७॥
स्वयं कृष्णश्च धर्मात्मा ज्ञानरूपो महेश्वरः ।
दुर्गा बुद्धिर्मनो ब्रह्मा चेन्द्रियाणि सुरास्तथा ॥९८॥
सर्वप्राणिषु तिष्ठन्ति साक्षिणः कर्मणां द्विज ।
क्व गुप्तं क्व रहस्यं वा ब्राह्मण ज्ञानदुर्बल ॥९९॥
क्षमस्व गच्छ भद्रन्ते अबध्याश्च द्विजातयः ।
शक्ताहं भस्मसात् कर्त्तुं गच्छ वत्स यथासुखम् ॥१००॥

तपस्यासु मम गतमष्टोत्तरशतं युगम् ।
नास्ति गोत्रं मत्पितुश्च न माता न पिता मम ॥१०१॥
सर्व्वान्तरात्मा भगवान् कृष्णो रक्षति मां द्विज ।
कृष्णेन स्थापितो धर्म्मो माञ्च रक्षति नित्यशः ॥१०२॥
आदित्यश्च तथा चन्द्रः पवनश्च हुताशनः ।
ब्रह्मा शम्भुर्भगवती दुर्गा रक्षति मां सदा ॥१०३॥
येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः ।
मयूराश्चित्रिता येन स मे रक्षां करिष्यति ॥१०४॥
अनाथबालवृद्धानां रक्षकाः सर्व्वदेवताः ।
नारीबुद्ध्या न मां धर्म्मस्त्यक्त्वा गच्छेद्धि सर्व्वदा ॥१०५॥
मां मातरं परित्यज्य गच्छ वत्स यथासुखम् ।
इत्येवमुक्त्वा देवी सा तस्थौ तत्र धरा यथा ॥१०६॥
आगच्छन्तञ्च सम्भोक्तुं सा यातं बोधनेन च ।
शशापेति च सा कोपाद् ब्रह्मबन्धो क्षयो भव ॥१०७॥
क्षयो भव दुराचार हे पापिष्ठ क्षयो भव ।
पुनः शप्तुं स्वयं सूर्य्यो वारयामास यत्नतः ॥१०८॥
एतस्मिन्नन्तरे तात तत्रैव जगदीश्वराः ।
आजग्मुरतिसन्त्रस्ता ब्रह्मविष्णुशिवादयः ।
धर्म्मं दृष्ट्वा कलारूपं रुरुदुस्त्रिदशेश्वराः ॥ १०९॥
कृत्वा क्रोडेऽतीवकृशं क्षुद्रा भीतं यथा विधुम् ।
निश्चेष्टं मलिनं दग्धं सतीकोपाग्निना व्रज ॥११०॥

श्रीभगवानुवाच ।

क्षमस्व वृन्दे मङ्गल्ये जन्ममृत्युजराहरे ।
धर्म्मं जानन्ति मङ्गल्यं रक्ष धर्म्मं पतिव्रते ॥१११॥

ब्रह्मोवाच ।

ध्वान्तपूर्णं जगत् सर्वं विना धर्मं बभूव ह ।
कम्पितौ चन्द्रसूर्य्यौ च शेषश्चापि वसुन्धरा ॥११२॥

महादेव उवाच ।

प्रनष्टञ्च जगत्सर्वं विना धर्मेण सुन्दरि ।
धर्मं जीवय भद्रन्ते स्वस्ति तेऽस्तु वरानने ॥ ११३ ॥

सूर्य्य उवाच ।

वरं वृणीष्व भद्रन्ते यत्ते मनसि वाञ्छितम् ।
धर्मं जीवय भद्रन्ते रच सृष्टिं पतिव्रते ॥ ११४ ॥

अनन्त उवाच ।

धर्मं करोषि तपसा कथं धर्मं विहंसि च ।
धर्मं जीवय भद्रन्ते सर्वधर्मो भवेत्तव ॥ ११५ ॥

चन्द्र उवाच ।

द्विजरूपधरो धर्मस्त्वां परीक्षितुमागतः ।
ब्रह्मणा प्रेरितश्चैव निर्दोषश्च विहिंसितः ॥११६॥

महेन्द्र उवाच ।

तपसोपार्जितो धर्मो धर्मेण च फलं नृणाम् ।
कथं फलञ्च तपसां यदि धर्मः क्षयं गतः ॥११७॥

वरुण उवाच ।

धर्मं जीवय धर्मिष्ठे धर्मं रच सनातनम् ।
निष्फलं कर्मिणां कर्म विना धर्मेण धार्मिके ॥११८॥

पवन उवाच ।

जगत् पूतं कुरु शुभे धर्मं जीवय साम्प्रतम् ।

धर्मे प्रनष्टे तपसां तवापूर्वं विनङ्क्ष्यति ॥११९॥

वह्निरुवाच ।

स्वधर्मोपार्जनं कर्तुमागतासि च भारतम् ।
त्विहंसि धर्ममज्ञात्वा पुनर्जीवय सुन्दरि ॥ १२० ॥

यम उवाच ।

वेदोक्तकर्मकर्तॄणामहं विश्वे वरानने ।
धर्मानुसारात् फलदो धर्मं जीवय सत्वरम् ॥१२१॥
देवानां वचनं श्रुत्वा समुत्थाय पतिव्रता ।
नमस्कृत्य सुरेशांश्च तानुवाच तपस्विनी ॥१२२॥

वृन्दोवाच ।

अहं देव न जानामि धर्मं ब्राह्मणरूपिणम् ।
कृतः क्षयो मया कोपान्मां परीक्षितुमागतः ॥१२३॥
जीवयामि ध्रुवं धर्मं युष्माकञ्च प्रसादतः ।
इत्येवमुक्त्वा सा वृन्दा चेत्युवाच व्रजेश्वर ॥१२४॥
तपः सत्यं यदि मम सत्यञ्च विष्णुपूजनम् ।
तेन पुण्येन सद्योऽत्र द्विजो भवतु विज्वरः ॥१२५॥
यदि मे च भवेत्सत्यं व्रतं सत्यं तपः शुचिः ।
तेन पुण्येन सत्येन द्विजो भवतु विज्वरः ॥१२६॥
यदि नारायणः सत्यः सर्वात्मा नित्यविग्रहः ।
ज्ञानात्मकः शिवः सत्यो द्विजो भवतु विज्वरः ॥१२७॥
ब्रह्म सत्यञ्च ते देवाः प्रकृतिः परमा यदि ।
यज्ञः सत्यस्तपः सत्यं द्विजो भवतु विज्वरः ॥१२८॥
इत्येवमुक्त्वा सा वृन्दा धर्मं क्रोड़े चकार च ।

तं दृष्ट्वा च कलारूपं रुरोद कृपया सती ॥१२९॥
एतस्मिन्नन्तरे मूर्त्तिर्धर्मभार्य्या शुचाकुला ।
निपत्य विष्णुपादे च शिरसा चेत्युवाच सा ॥१३०॥

मूर्त्तिरुवाच ।

हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु ।
तूर्णं जीवय कान्तं मे जगन्नाथ कृपामय ॥१३१॥
पतिहीना च या नारी पापिनी सा भवार्णवे ।
यथास्यं चक्षुर्विरतं प्राणहीना यथा तनूः ॥१३२॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
मितं बन्धुर्मितं माता सर्वदाता पतिः प्रभुः ॥१३३॥
इत्येवमुक्त्वा सा देवी तत्र तस्थौ रुरोद च ।
उवाच वृन्दां भगवान् सर्वात्मा प्रकृतेः परः ॥ १३४॥

श्रीभगवानुवाच ।

त्वयायुस्तपसा लब्धं यावदायुश्च ब्रह्मणः ।
तदेव देहि धर्माय गोलोकं गच्छ सुन्दरि ॥१३५॥
तवानया च तपसा पश्चान्माञ्च लभिष्यसि ।
पश्चाद्गोलोकमागत्य वाराहे च वरानने ॥१३६॥
वृषभानुसुता त्वञ्च राधाच्छाया भविष्यसि ।
मत्कलांशश्च रापाणस्त्वां विवाहे ग्रहिष्यति ।
मां लभिष्यसि रासे च गोपीभी राधया सह ॥१३७॥
राधा श्रीदामशापेन वृकभानसुता यदा ।
सा चैव वास्तवी राधा त्वञ्च छायास्वरूपिणी ॥१३८॥
विवाहकाले रापाणस्त्वाञ्च छायां ग्रहिष्यति ।
त्वां [illegible] वास्तवी राधा सान्तर्धाना भविष्यति ॥१३९॥

राधेवेति विमूढ़ाश्च विज्ञास्यन्ति च गोकुले ।
स्वप्ने राधापदाम्भोजं न हि पश्यन्ति बल्लवाः ॥१४०॥
स्वयं राधा मम क्रोड़े छाया रापाणकामिनी ।
विष्णोश्च वचनं श्रुत्वा ददावायुश्च सुन्दरि ॥१४१॥
उत्तस्थौ पूर्णधर्मश्च तप्तकाञ्चनसन्निभः ।
पूर्वस्मात् सुन्दरः श्रीमान् प्रणनाम परात्परम् ॥१४२॥
ब्रह्मोवाच ।
देवाः शृणुत मद्वाक्यं दुर्लङ्घ्यं सावधानतः ।
न हि मिथ्या भवेद्वाक्यं मदीयञ्च निशामय ॥१४३॥
क्षयो भवेतिवाक्यञ्च मयोक्तं कोपभीतया ।
वारत्रयं पुनर्वक्तुं वारयामास भास्करः ॥ १४४ ॥
सत्ये च परिपूर्णोऽयं यथा पूर्वो यथाधुना ।
त्रिपादश्चापि त्रेतायां द्विपादो द्वापरे तथा ॥ १४५ ॥
एकपादश्च धर्मोऽयं कलेश्च प्रथमे हरे ।
शेषः कलाषोड़शांशः पुनः सत्ये यथा पुरा ॥ १४६ ॥
विनिर्गतं मम मुखात् चयस्तेन ततः क्रमात् ।
पुनरुक्ते च मनसि वारयामास भास्करः ॥ १४७ ॥
तेनैव हेतुनायञ्च कलिशेषे कलामयः ।
तथा धर्मः स्थितो दुर्गे कलिशेषे तथा ध्रुवम् ॥ १४८ ॥
एतस्मिन्नन्तरे नन्द ददृशुर्देवतारथम् ।
गोलोकादागतं वेगादतीवसुन्दरं शुभम् ॥ १४९ ॥
अमूल्यरत्ननिर्माणं हीरहारपरिष्कृतम् ।
मणिमाणिक्यमुक्ताभिर्वस्त्रैश्च श्वेतचामरैः ॥ १५० ॥
विभूषितं भूषणैश्च रुचिरै रत्नदर्पणैः ।

नत्वा हरिं हरं ब्रह्मा ब्रह्माणं सर्व्वदेवताः ॥ १५१ ॥
समारुह्य रथं दृष्ट्वा गोलोकञ्च जगाम सा ।
देवा जग्मुश्च स्वस्थानं किं भूयः श्रोतुमिच्छसि ॥१५२॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे भगवन्नन्दसंवादे
षड़शीतितमोऽध्यायः ।

---

## सप्ताशीतितमोऽध्यायः ।

---

नन्द उवाच ।

त्वां ज्ञातुं न हि शक्ताश्च वेदा वेदप्रभुं स्वयम् ।
सुरा ब्रह्मेशशेषाद्या मुनिसिद्धादयस्तथा ॥ १ ॥
को भवानिति विज्ञातुं परं कौतूहलं मम ।
तत्सर्वं स्वात्मयाथार्थ्यं निर्जने कथय प्रभो ॥ २ ॥

श्रीनारायण उवाच ।

एतस्मिन्नन्तरे तत्र कृष्णं द्रष्टुं मुनीश्वराः ।
आजग्मुः सहसा वत्स ज्वलन्तो ब्रह्मतेजसा ॥ ३ ॥
पुलहश्च पुलस्त्यश्च क्रतुश्च भृगुरङ्गिराः ।
प्रचेताश्च वशिष्ठश्च दुर्वासाः कण्व एव च ॥ ४ ॥
कात्यायनः पाणिनिश्च कणादो गौतमस्तथा ।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥ ५ ॥
कपिलश्चासुरिश्चैव वायुः पञ्चशिखस्तथा ।

विश्वामित्रो वाल्मीकिश्च कश्यपश्च पराशरः ॥ ६ ॥
विभाण्डको मरीचिश्च शुक्रोऽत्रिश्च बृहस्पतिः ।
गार्ग्यश्चापि तथा वात्स्यो व्यासश्च जैमिनिस्तथा ॥७॥
मितवाक् ऋष्यशृङ्गश्च याज्ञवल्क्यः शुकस्तथा ।
सौभरिः शुद्धजटिलो भरद्वाजः सुभद्रकः ॥ ८ ॥
मार्कण्डेयो लोमशश्च आसुरिश्च विटङ्कणः ।
अष्टावक्रः शतानन्दो वामदेवश्च भागुरिः ॥ ९ ॥
संवर्त्तश्चाप्युतथ्यश्च नरोऽहश्चापि नारदः ।
जाबालिः परशुरामश्चाप्यगस्त्यः पैल एव च ॥ १० ॥
युधामन्युर्गौरमुखोऽप्युपमन्युः श्रुतश्रवाः ।
मैत्रेयश्च्यवनश्चैव वररुच्यर्षिरेव च ॥ ११ ॥
तान् दृष्ट्वा सहसोत्थाय नमस्कृत्य पुटाञ्जलिः ।
सिंहासनेषु रम्येषु वासयामास सादरम् ॥ १२ ॥
पूजयामास विधिवत् कुशलप्रश्नपूर्वकम् ।
परस्परञ्च सम्भाष्य मध्ये कृष्ण उवास सः ॥ १३ ॥
एतस्मिन्नन्तरे कृष्णस्तेजोराशिं ददर्श सः ।
ददृशुस्ते च मुनयोऽप्याकाशे च समुज्ज्वलम् ॥ १४ ॥
तेजसोऽभ्यन्तरे वत्स कुमारं कनकप्रभम् ।
यथेवं पञ्चवर्षीयं नग्नं बालकमीप्सितम् ॥ १५ ॥
आविर्बभूव सहसा सभामध्ये च नारद ।
उत्तिष्ठमानं सहसा तं दृष्ट्वा मुनिपुंगवाः ॥ १६ ॥
प्रणेमुर्मुनयः सर्वे शौरिश्च प्रणनाम तम् ।
सस्मितं स्निग्धनेत्रञ्च कृत्वा युक्तिञ्च सादरम् ॥ १७ ॥
स सर्वानाशिषं कृत्वा समुवास च संसदि ।

उवाच तांश्च शौरिश्च भगवन्तं सनातनम् ॥ १८ ॥

सनत्कुमार उवाच ।

भद्रं वो मुनयः शश्वत्तपसां फलमीप्सितम् ।
कृष्णस्य कुशलप्रश्नं शिववीजस्य निष्फलम् ॥ १९ ॥
सांप्रतं कुशलं वश्च दर्शनं परमात्मनः ।
भक्तानुरोधाद्देहस्य परस्य प्रकृतेरपि ॥ २० ॥
निर्गुणस्य निरीहस्य सर्ववीजस्य तेजसः ।
भारावतरणायैव चाविर्भूतस्य साम्प्रतम् ॥ २१ ॥

श्रीकृष्ण उवाच ।

शरीरधारिणश्चापि कुशलप्रश्नमीप्सितम् ।
तत्कथं कुशलप्रश्नं मयि विप्र न विद्यते ॥ २२ ॥

सनत्कुमार उवाच ।

शरीरे प्राकृते नाथ सन्ततञ्च शुभावहम् ।
नित्यदेहे क्षेमवीजे शिवप्रश्नमनर्थकम् ॥ २३ ॥

श्रीभगवानुवाच ।

यो यो विग्रहकारी च स च प्राकृतिकः स्मृतः ।
देहो न विद्यते विप्र तां नित्यां प्रकृतिं विना ॥ २४ ॥

सनत्कुमार उवाच ।

रक्तविन्दूद्भवा देहास्ते च प्राकृतिकाः स्मृताः ।
कथं प्रकृतिनाथस्य वीजस्य प्राकृतं वपुः ॥ २५ ॥
सर्ववीजस्य सर्वादिर्भवांश्च भगवान् स्वयम् ।
सर्वेषामवताराणां प्रधानं वीजमव्ययम् ॥ २६ ॥
कृत्वा वदन्ति वेदाश्च नित्यं नित्यं सनातनम् ।
ज्योतिःस्वरूपं परमं परमात्मानमीश्वरम् ॥ २७ ॥

मायया सगुणश्चैव मायेशं निर्गुणं परम् ।
प्रवदन्ति च वेदाङ्गास्तथा वेदविदः प्रभो ॥ २८ ॥

श्रीकृष्ण उवाच ।

साम्प्रतं वासुदेवोऽहं रक्तवीर्य्याश्रितं विभुः ।
कथं न प्राकृतो विप्र शिवप्रश्नमभीप्सितम् ॥ २९ ॥

सनत्कुमार उवाच ।

वासुः सर्व्वनिवासश्च विश्वानि यस्य लोमसु ।
तस्य देवः परं ब्रह्म वासुदेव इतीरितः ॥ ३० ॥
वासुदेवेति तन्नाम वेदेषु च चतुर्षु च ।
पुराणेष्वितिहासेषु यात्रादिषु च दृश्यते ॥ ३१ ॥
रक्तवीर्य्याश्रितो देहः क्व ते वेदे निरूपितः ।
साक्षिणो मुनयश्चैव धर्म्मः सर्व्वत्र एव च ।
साक्षिणो मम वेदाश्च रविचन्द्रौ च साम्प्रतम् ॥ ३२

भृगुरुवाच ।

सत्यं वदसि विप्रेन्द्र त्वमेव वैष्णवाग्रणीः ।
स्वागतं कुशलं शश्वत्किं निमित्तमिहागतः ॥ ३३ ॥

सनत्कुमार उवाच ।

श्रूयतां मुनयः सर्व्वे श्रूयतां कृष्ण साम्प्रतम् ।
अहो येन निमित्तेन चातिशीघ्रमिहागतः ॥ ३४ ॥

श्रीकृष्ण उवाच ।

भगवन् सर्व्वधर्म्मज्ञ किन्निमित्तमिहागतः ।
सर्व्वं जानासि सर्व्वज्ञ त्वमेव विदुषां वर ॥ ३५ ॥

सनत्कुमार उवाच ।

धन्योऽसि भगवन् शश्वन्मान्योऽसि जगतामपि ।

सर्वेश्वरेश्वरोऽसि त्वं त्वत्परो नास्ति विश्वतः ॥ ३६ ॥

श्रीकृष्ण उवाच ।

यज्ञानाञ्च व्रतानाञ्च तपस्यानां द्विजेश्वर ।
सततं फलदाताहं दक्षिणाभिः सहेति च ॥ ३७ ॥
इति श्रुत्वा कुमारश्च जवेन प्रययौ च ते ।
मत्वाश्चर्यञ्च वचनं वारयामास तेऽपि तम् ॥ ३८ ॥

ऋषय ऊचुः ।

हे सिद्धेन्द्र महाभाग कुमार करुणामय ।
का शङ्कितकथा प्रोक्ता भगवत्कृष्णसन्निधौ ॥ ३९ ॥
किं पुत्र दृष्टमाश्चर्यं श्रुतं किमपि कुत्रचित् ।
अतीव कृत्वा विस्तीर्णमस्माकं वक्तुमर्हसि ॥ ४० ॥
एतस्मिन्नन्तरे ब्रह्मा पार्वत्या सह शङ्करः ।
अनन्तश्चापि धर्मश्च श्रीसूर्यश्च निशाकरः ॥ ४१ ॥
आदित्या वसवो रुद्रा दिक्पालाद्याश्च देवताः ।
श्रीकृष्णं सहसोत्थाय सम्भाव्य च पृथक् पृथक् ॥ ४२ ॥
मधुपर्कादिकं दत्त्वा पूजयामास भक्तितः ।
प्रणेमुरृषयः सर्वे शेषं शम्भुं विधिं शिवाम् ॥ ४३ ॥
परस्परञ्च सम्भाषा बभूव द्विजदेवयोः ।
समुवासासने मध्ये कुमारः कनकप्रभः ।
कथां कथितुमारेभे संसदि द्विजदेवयोः ॥ ४४ ॥

सनत्कुमार उवाच ।

मया गतञ्च गोलोके न दृष्टो राधिकापतिः ।
ततो गतञ्च वैकुण्ठे तत्र नास्ति चतुर्भुजः ॥ ४५ ॥
ततो गतश्च क्षीरोदस्तत्र नास्ति हरिः स्वयम् ।

परिश्रान्तो विषण्णश्च स्नानं क्षीरोदधेस्तटे ॥ ४६ ॥
विस्तीर्णे वालुकामध्ये कच्छपः शतयोजनः ।
भीतश्च कम्पितस्तत्र दृष्टो दुःखी च शुष्कितः ॥ ४७ ॥
निःसारितो राघवेण मीनेन च महात्मना ।
धन्योऽसीति मयोक्तश्च नाहं धन्य उवाच सः ॥ ४८ ॥
क्षीरोदः सागरो धन्यो जन्तवो यत्र मद्विधाः ।
मत्तो महत्तराश्चापि ह्यसंख्याश्च महामुने ॥ ४९ ॥
भवान् धन्योऽसि क्षीरोद तेनोक्तो नाहमेव च ।
धन्या वसुन्धरा देवी यत्रैव सप्त सागराः ॥ ५० ॥
धन्यासि वसुधेत्युक्ता नाहमेवेत्युवाच सा ।
धन्योऽनन्तो ममाधारः कृष्णांशो नागराड्विभुः ॥५१॥
सहस्रमूर्ध्नां मध्येऽहं मूर्ध्नि शूर्पे च सर्षपः ।
धन्योऽसि शेषेत्युक्तोऽयं धन्यो नाहमुवाच वै ॥ ५२ ॥
धन्यः कूर्मो ममाधारो गच्छ तत्रैव वै मुने ।
धन्योऽसि कूर्मेत्युक्तोऽयं नाहं धन्योऽस्मि वै मुने ॥ ५३ ॥
वायुना धार्यमाणोऽहं मत्तो धन्यतमश्च सः ।
धन्योऽसीत्युक्तः पवनो धन्यो नाहमुवाच सः ।
धन्यश्च भगवान् ब्रह्मा विधाता जगतामपि ॥ ५४ ॥
धन्योऽसि तत्र धाता च धन्यो नाहमुवाच सः ।
धन्यो महेश्वरो देवो योगीन्द्राणां गुरोर्गुरुः ॥ ५५ ॥
सर्वाराध्यः सर्वपूज्यो धर्मरूपः सनातनः ।
कालकालश्च संहर्ता स्वयं मृत्युञ्जयः प्रभुः ।
धन्योऽसि तत्र शम्भुश्च धन्यो नाहमुवाच सः ॥ ५६ ॥
सर्वादौ पूजनं यस्य ज्ञानिनाञ्च गुरोर्गुरुः ।

धन्यो गणेश्वरो देवो देवानां प्रवरः परः ॥ ५७ ॥
सिद्धेन्द्रेषु मुनीन्द्रेषु देवेन्द्रेषु श्रुतौ श्रुतम्।
योगीन्द्रेषु च प्राज्ञेषु न गणेशात् परः पुमान् ॥५८॥
निम्नगासु यथा गङ्गा तीर्थेषु पुष्करं यथा।
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्य्ययः ॥५९॥
वेदो नारायणः साक्षाद्वयं पूज्या व्यवस्थया।
तस्माच्छास्त्राणि सर्वाणि पुराणानि च सन्ति वै ॥६०॥
तस्मान्निरूपितो धर्मो चेतिहासश्च संहिताः।
तस्मात् धन्याश्च ते वेदा वदन्त्यत्र मनीषिणः ॥६१॥
यूयं धन्याश्च मान्याश्चेत्युक्ता वेदा मया ततः।
ऊचुस्ते न वयं धन्या यज्ञसङ्घश्च साम्प्रतम् ॥ ६२ ॥
वयं व्यवस्थाकर्तारो यज्ञौघः फलदः स्वयम्।
तस्माद्धन्यः स एवापि गच्छ गच्छ महामुने ॥ ६३ ॥
धन्योऽसि यज्ञसङ्घोऽसीत्युक्तस्तत्र मया विभो।
ऊचुस्ते न वयं धन्या धन्यं कर्म शुभं मुने ॥ ६४ ॥
शुभकर्मासि धन्यं त्वं नाहं धन्यमुवाच तत्।
कर्मणां फलदातारो कर्महेतुश्च साम्प्रतम् ॥ ६५ ॥
धातुर्विधाता भगवान् सर्वादिः सर्वकारकः।
श्रीकृष्णः परमात्मा च धन्यो मान्यश्च निश्चितम् ॥६६॥
धर्मालयं ततो गत्वा न दृष्ट्वा जगदीश्वरम्।
मथुरामागतं द्रष्टुं परिपूर्णतमं प्रभुम् ॥ ६७ ॥
यज्ञानां तपसां चैव व्रतानां शुभकर्मणाम्।
ईश्वरं फलदातारं परमात्मानमेव च ॥ ६८ ॥
कारणं कारणानाञ्च ब्रह्मादीनां पुरःसरम्।

धन्योऽसीति मयोक्तश्च दक्षिणाभिः सहेति च ॥ ६९ ॥
इत्युक्तेन भगवता कथितं सर्वकारणम् ।
दक्षिणाभिश्च फलदो हतयज्ञो ह्यदक्षिणः ॥ ७० ॥
दक्षिणा विप्रमुद्दिश्य तत्काले तु न दीयते ।
एकरात्रे व्यतीते तु तद्दानं द्विगुणं भवेत् ॥ ७१ ॥
मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम् ।
संवत्सरे व्यतीते तु स दाता नरकं व्रजेत् ॥ ७२ ॥
वर्षाणाञ्च सहस्रञ्च मूत्रकुण्डे निपत्य च ।
ततश्चाण्डालतां याति व्याधियुक्तश्च पातकी ॥ ७३ ॥
दाता न दीयते दानं गृहीता चेन्न गृह्यते ।
उभौ तौ नरकं प्राप्तौ वर्षाणाञ्च सहस्रकम् ॥ ७४ ॥
यजमानश्च चाण्डालो ब्राह्मणस्तत्पुरोहितः ।
व्याधियुक्तावुभौ तौ च मापिनौ कर्मणः फलात् ॥ ७५ ॥
सर्वे देवाश्च मुनयो जहसुर्विस्मयं ययुः ।
विस्मयञ्च ययौ नन्दस्तत्याज पुत्रभावकम् ॥ ७६ ॥
रुरोद च सभामध्ये लज्जाहीनः शुचाकुलः ।
त्यज मोहमितीत्युक्त्वा बोधयामास पार्वती ॥ ७७ ॥

श्रीनन्द उवाच ।

अमूल्यरत्नं माणिक्यं यथा कुजन्मनो गृहे ।
स्थितं तेन च देवेश तथाहं वञ्चितः प्रभो ॥ ७८ ॥
ममापराधं भगवन् क्षमस्व प्रकृतेः परः ।
यास्यामि न पुनर्गेहं गोकुलं यमुनातटम् ॥ ७९ ॥
वृन्दावनं तथा वासं क्रीडावासं गदाग्रज ।
तत्सर्वं च यशोदाया गोपिकान्तिकमेव च ॥ ८० ॥

किं ब्रवीमि यशोदां च प्रेयसीं राधिकामपि ।
प्रेमपात्रञ्च बालौघं वद भो कथयामि किम् ॥ ८१ ॥
इत्युक्त्वा च सभामध्ये मूर्च्छां संप्राप नारद ।
क्रोड़े कृत्वा जगन्नाथो बोधयामास तत्क्षणम् ॥ ८२ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे भगवन्नन्दसंवादे
सप्ताशीतितमोऽध्यायः ।

---

## अष्टाशीतितमोऽध्यायः ।

---

श्रीकृष्ण उवाच ।

चेतनं कुरु हे तात हे तात चेतनं कुरु ।
जलबुद्बुदवत् सर्वं संसारं सचराचरम् ॥ १ ॥
त्यज मोहं महाभाग मायां स्तौहि परात्पराम् ।
ब्रह्मस्वरूपां परमां सर्वमोहनिकृन्तनीम् ॥ २ ॥
मुक्तिप्रदां महाभागां विष्णुमायां सनातनीम् ।
त्रिपुरस्य बधे घोरे महायुद्धे भयाकुले ।
येन स्तोत्रेण शम्भुश्च तया दैत्यं जघान सः ॥ ३ ॥
स्तोत्रराजं प्रदास्यामि सर्वमोहनिकृन्तनम् ।
सर्ववाञ्छाप्रदं नन्द श्रूयतामत्र संसदि ॥ ४ ॥

श्रीनन्द उवाच ।

सर्वविघ्नविनाशाय दुःखप्रशमनाय च ।

विभूतये च यशसे नृणां वाञ्छितसिद्धये ॥ ५ ।
स्तोत्रमेकं महादेव्या जगन्मातुर्जगत्प्रभो ।
परं दुर्गतिनाशिन्या गोपनीयं सुदुर्लभम् ॥ ६ ॥
देहि मह्यं विनीताय भक्ताय भक्तवत्सल ।
वेदानां जनकस्त्वञ्च निर्गुणश्च परात्परः ॥ ७ ॥

श्रीभगवानुवाच ।

शृणु वक्ष्यामि वैश्येन्द्र स्तोत्रं यत्परमाद्भुतम् ।
सर्वविघ्नविनाशार्थं मोहपाशनिकृन्तनम् ॥ ८ ॥
रणत्रस्तेन विभुना शङ्करेण पुराकृतम् ।
नारायणोपदेशेन प्रेरितेन च ब्रह्मणा ॥ ९ ॥
शत्रुग्रस्तं शिवं दृष्ट्वा स ब्रह्माणमुवाच ह ।
उवाच शङ्करं ब्रह्मा रथस्थं पतितं रणे ॥ १० ॥
शूरसङ्कटशान्त्यर्थं दुर्गां दुर्गतिनाशिनीम् ।
मूलप्रकृतिमाद्यां तां स्तौहि ब्रह्मस्वरूपिणीम् ॥ ११ ॥
हरिणा प्रेरितोऽहं च त्वां वदामि सुरेश्वर ।
विना शक्तिसहायेन को वा कं जेतुमीश्वरः ॥ १२ ॥
ब्रह्मणश्च वचः श्रुत्वा दुर्गां सस्मार शङ्करः ।
पुटाञ्जलिपरो भूत्वा भक्तिनम्रात्मकन्धरः ॥ १३ ॥
स्नातः पादौ च प्रक्षाल्य धृत्वा धौते च वाससी ।
आचान्तः कुशहस्तश्च शुचिर्विष्णुं च संस्मरन् ॥ १४ ॥

श्रीमहादेव उवाच ।

रक्ष रक्ष महादेवि दुर्गे दुर्गतिनाशिनि ।
मां भक्तमनुरक्तञ्च शत्रुग्रस्तं कृपामयि ।१५॥
विष्णुमाये महाभागे नारायणि सनातनि ।

ब्रह्मस्वरूपे परमे नित्यानन्दस्वरूपिणि ॥१६॥
त्वञ्च ब्रह्मादिदेवानामम्बिके जगदम्बिके।
त्वं साकारे च गुणतो निराकारे च निर्गुणात् ॥१७॥
मायया पुरुषस्त्वञ्च मायया प्रकृतिः स्वयम्।
तयोः परं ब्रह्म परं त्वं बिभर्षि सनातनि ॥१८॥
वेदानां जननी त्वञ्च सावित्री च परात्परा।
वैकुण्ठे च महालक्ष्मीः सर्वसम्पत्स्वरूपिणी ॥ १९ ॥
मर्त्यलक्ष्मीश्च क्षीरोदे कामिनी शेषशायिनः।
स्वर्गेषु स्वर्गलक्ष्मीस्त्वं राजलक्ष्मीश्च भूतले ॥२०॥
नागादिलक्ष्मीः पाताले गृहेषु गृहदेवता।
सर्वशस्यस्वरूपा त्वं सर्वैश्वर्यविधायिनी ॥२१॥
रागाधिष्ठातृदेवी त्वं ब्रह्मणश्च सरस्वती।
प्राणानामधिदेवी त्वं कृष्णस्य परमात्मनः ॥ २२ ॥
गोलोके च स्वयं राधा श्रीकृष्णस्यैव वक्षसि।
गोलोकाधिष्ठिता देवी वृन्दावनवने वने ॥२३॥
श्रीरासमण्डले रम्या वृन्दावन वनादिनी।
शतशृङ्गाधिदेवी त्वं नाम्ना चित्रावलीति च ॥ २४ ॥
दक्षकन्या कुत्र कल्पे कुत्र कल्पे च शैलजा।
देवमातादितिस्त्वञ्च सर्वाधारा वसुन्धरा ॥ २५ ॥
त्वमेव गङ्गा तुलसी त्वञ्च स्वाहा स्वधा सती।
त्वदंशांशांशकलया सर्वदेवादियोषितः ॥२६॥
स्त्रीरूपञ्चापिपुरुषं देवि त्वञ्च नपुंसकम्।
वृक्षाणां वृक्षरूपा त्वं सृष्टा चाङ्कुररूपिणी ॥२७॥
वह्नौ च दाहिका शक्तिर्जले शैत्यस्वरूपिणी।

सूर्य्यतेजःस्वरूपा च प्रभारूपा च सन्ततम् ॥२८॥
गन्धरूपा च भूमौ च आकाशे शब्दरूपिणी।
शोभास्वरूपा चन्द्रे च पद्मसङ्घे च निश्चितम् ॥२९॥
सृष्टौ सृष्टिस्वरूपा च पालने परिपालिका।
महामारी च संहारे जले च जलरूपिणी ॥३०॥
क्षुत्त्वं दया त्वं निद्रा त्वं तृष्णा त्वं बुद्धिरूपिणी।
तुष्टिस्त्वञ्चापि पुष्टिस्त्वं श्रद्धा त्वञ्च क्षमा स्वयम् ॥३१॥
शान्तिस्त्वञ्च स्वयं भ्रान्तिः कान्तिस्त्वं कीर्त्तिरेव च।
लज्जा त्वञ्च तथा माया भुक्तिमुक्तिस्वरूपिणी ॥३२॥
सर्वशक्तिस्वरूपा त्वं सर्वसम्पत्प्रदायिनी।
वेदेऽनिर्वचनीया त्वं त्वां न जानाति कश्चन ॥३३॥
सहस्रवक्त्रस्त्वां स्तोतुं न च शक्तः सुरेश्वरि।
वेदा न शक्ताः को विद्वान् न च शक्ता सरस्वती ॥३४॥
स्वयं विधाता शक्तो न न च विष्णुः सनातनः।
किं स्तौमि पञ्चवक्त्रेण रणत्रस्तो महेश्वरि ॥३५॥
कृपां कुरु महामाये मम शत्रुक्षयं कुरु।
इत्युक्त्वा च सकरुणं रथस्थे पतिते रणे ॥३६॥
आविर्बभूव सा दुर्गा सूर्य्यकोटिसमप्रभा।
नारायणेन कृपया प्रेरिता परमात्मना ॥३७॥
शिवस्य पुरतः शीघ्रं शिवाय च जयाय च।
इत्युवाच महादेवो मायाशक्त्यासुरं जहि ॥३८॥

श्रीदुर्गोवाच।

वरं वृणीष्व भद्रन्ते यत्ते मनसि वाञ्छितम्।
भवान् वरः सुराणाञ्च जयं तुभ्यं ददाम्यहम् ॥३९॥

श्रीमहादेव उवाच।

जयो भवतु दैत्यस्य इति मे वरमीश्वरि।
देहीति वाञ्छितं दुर्गे परमाद्ये सनातनि ॥४०॥

भगवत्युवाच।

हरिं स्मर महाभाग जय दैत्यं जगद्गुरो।
स्वयं विधाता भगवान् त्वमेव ज्योतिरीश्वरः॥४१॥
एतस्मिन्नन्तरे विष्णुर्वृषरूपो बभूव ह।
दधार कलया मूर्ध्ना शूलपाणे रथं विभुः॥४२॥
ऊर्ध्वचक्रमथोग्रञ्च प्रकृतिञ्च चकार सः।
शस्त्रं ददौ मन्त्रपूतमुद्दधार ततो रथम् ॥४३॥
शिवः शस्त्रं गृहीत्वा च ध्यात्वा विष्णुं महेश्वरीम्।
जघान त्रिपुरं शीघ्रं स पपात महीतले॥ ४४ ॥
तुष्टुवुः शङ्करं देवाश्चक्रुश्च पुष्पवर्षणम्।
दुर्गा तस्मै ददौ शूलं पिनाकं विष्णुरेव च ॥४५॥
ब्रह्मा शुभाशिषञ्चैव मुनयश्चापि हर्षिताः।
ननृतुर्देवताः सर्वा जगुर्गन्धर्वकिन्नराः॥ ४६ ॥
एतस्मिन्नन्तरे तात स्तवराजमनुत्तमम्।
विघ्नं विघ्नकरं शीघ्रं शत्रुसंहारकारणम्॥ ४७॥
परमैश्वर्य्यजनकं सुखदं परमं शुभम्।
निर्वाणमोक्षदञ्चैव हरिभक्तिप्रदं ध्रुवम्॥४८॥
गोलोकवासदञ्चैव सर्वसिद्धिप्रदं वरम्।
स्तोत्रराजप्रपठनात् प्रसन्ना पार्वती सदा॥४९॥
लोभमोहकामक्रोधकर्ममूलनिकृन्तनम्।
बलबुद्धिकरञ्चैव जन्ममृत्युविनाशनम्॥ ५० ॥

धनपुत्रप्रियाभूमिसर्वसम्पत्प्रदं नृणाम् ।
शोकदुःखहरञ्चैव सर्वसिद्धिप्रदं वरम् ॥५१॥
स्तोत्रराजप्रपठनात् महाबन्ध्या प्रसूयते ।
बन्धनान्मुच्यते दुःखी भयान्मुच्येत निश्चितम् ॥५२॥
रोगाद्विमुच्यते रोगी दरिद्रश्च धनी भवेत् ।
दावाग्निमध्ये न मृतो मग्नः पोतो महार्णवे॥५३॥
दस्युग्रस्तो रिपुग्रस्तो हिंस्रजन्तुसमन्वितः ।
स्तोत्रेणानेन वैश्येन्द्र कल्याणं लभते नरः ॥५४॥
तैजसानां यथा रत्नमाश्रमाणां द्विजो यथा ।
नदीनाञ्च यथा गङ्गा मन्त्राणां प्रणवो यथा ॥५५॥
तुलसी सर्वपत्राणां धराणाञ्च वसुन्धरा ।
पुष्पाणां पारिजातञ्च काष्ठानां चन्दनं यथा ॥५६॥
विष्णुपूजा च तपसां व्रतेष्वेकादशी यथा ।
ज्ञानिनाञ्च यथा शम्भुः सिद्धानाञ्च गणेश्वरः ॥५७॥
देवानाञ्च यथा विष्णुर्वेदाः शास्त्रेषु तत्त्वतः ।
देवीनाञ्च यथा दुर्गा शान्तानां कमला यथा ॥५८॥
सरस्वती च विदुषां राधिका सुन्दरीषु च ।
तथा स्तोत्रेष्विदं स्तोत्रं नातः परतरं व्रज ॥५९॥
पुरा दत्तं ब्रह्मणे च पुष्करे सूर्य्यपर्वणि ।
दैत्यग्रस्ताय भीताय सर्वदुर्गहरं परम् ॥६०॥
शिवाय शत्रुग्रस्ताय ददौ ब्रह्मा मदाज्ञया ।
शिवश्च सनकादिभ्यः पुरा दुर्वाससे ददौ ॥६१॥
सनत्कुमारो भगवान् कृपया गौतमाय च ।
पुलहाय पुलस्त्याय ददौ चाङ्गिरसे मुदा ॥६२॥

तथा चन्द्राय सूर्य्याय सूर्य्यश्चापि यमाय च ।
यमश्च चित्रगुप्ताय कृपया च पुरा ददौ ॥६३॥
नित्यं पठिष्यसि स्तोत्रं गोलोकगमनाय वै ।
साक्षात्पश्यसि भो तात तामिव पार्वतीमिह ॥ ६४ ॥
यस्मै कस्मै न दातव्यं पापिने गोपनं कुरु ।
नारायणस्य भक्ताय शान्ताय विदुषे तथा ॥६५॥
सर्वज्ञाय च विप्राय प्रदातव्यं प्रयत्नतः ।
विप्राय वृषवाहाय वृषलीपतये तथा ।६६॥
शूद्राणां सूपकाराय शूद्रश्राद्धान्नभोजिने ।
कन्याविक्रयिणे चैव ब्राह्मणाय विशेषतः ॥६७॥
सर्वसिद्धिञ्च लभते सिद्धस्तोत्रो भवेद्यदि ।
दशायुतजपेनैव सिद्धस्तोत्रो भवेन्नरः ॥६८॥
अग्निस्तम्भं जलस्तम्भं मृत्स्तम्भं मनसस्तथा ।
अश्वमेधसहस्राच्च पृथिव्याश्च प्रदक्षिणात् ।
स्नानाच्च सर्वतीर्थानां स्तोत्रमेतच्च पुण्यदम् ६९॥
दत्तं तुभ्यं मया तात मम प्राणसमं व्रज ।
स्तवनं कुरु पार्वत्याश्चेदानीं मम संसदि ।७०॥
श्रीकृष्णस्य वचः श्रुत्वा नन्दस्तुष्टाव पार्वतीम् ।
स्तोत्रेणानेन विप्रेन्द्र सर्वसम्पत्प्रदायिनीम् ॥७१॥
वरं तस्मै ददौ दुर्गा गोलोकवासमीप्सितम् ।
दुर्लभं परमं ज्ञानं वेदे यन्न श्रुतं मुने ।७२॥
राजेन्द्रत्वं गोकुले च कृष्णभक्तिं सुदुर्लभाम् ।
तद्दास्यञ्चाप परतो महत्त्वं सिद्धमेव च ।७३॥
वरं दत्त्वा ययौ दुर्गा संभाष्य शम्भुना सह ।

जग्मुर्देवाश्च मुनयः स्तुत्वा च नन्दनन्दनम् ॥९४॥
उवाच नन्दं श्रीकृष्णो व्रज नन्द व्रजान्वितः ।
प्रहृष्टस्त्यक्तमोहश्च बोधेन दुर्लभेन च ॥९५॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे भगवन्नन्दसंवादे
अष्टाशीतितमोऽध्यायः ।

---

## नवाशीतितमोऽध्यायः ।

श्रीकृष्ण उवाच ।

गच्छ गच्छ गृहं गच्छ व्रजराज व्रजं व्रज ।
सर्वतत्त्वं त्वया ज्ञातं दृष्टाश्च मुनयः सुराः ॥ १ ॥
श्रुतं मे धन्यमाख्यानं नानाख्यानं सुदुर्लभम् ।
दुर्गायाः स्तोत्रराजञ्च जन्मपापनिकृन्तनम् ॥ २ ॥
स्थितं तत्ते निगदितं हर्षेण च सुखेन च ।
यत् कृतं बालभावेन चापराधञ्च तत् क्षम ॥ ३ ॥
यत् सुखं न कृतं तात पित्रोश्च नृपमन्दिरे ।
कृतं सुखं तत्परञ्च स्वर्गादपि सुदुर्लभम् ॥ ४ ॥
मदीयं प्रियवाक्यञ्च प्रश्रयं विनयं नयम् ।
परिहासं बहुतरं यशोदां गोपिकागणम् ॥ ५ ॥
बालकानां समूहञ्च राधाञ्चापि विशेषतः ।
एकत्र च स्थितं तेषु बन्धुवर्गेषु कर्मणा ॥ ६ ॥

इहैवापि सुखं भुक्त्वा गच्छ गोलोकमुत्तमम् ।
सार्द्धं यशोदया तात रोहिण्या गोपिकागणैः ॥ ७ ॥
गोपानां बालकैः सार्द्धं वृषभानेन गोपकैः ।
राधामाता कलावत्या राधया सह यास्यसि ॥ ८ ॥
रथानां शतलक्षञ्च गोलोकादागतं पितः ।
अमूल्यरत्ननिर्माणं हीरहारपरिष्कृतम् । ९ ॥
मणिमाणिक्यमुक्तानां मालाजालविभूषितम् ।
वह्निशुद्धांशुकै रम्यैराच्छिन्नं पीतवर्णकैः ॥ १० ॥
पार्षदप्रवरै रम्यैर्वेष्टितं श्वेतचामरैः ।
सद्रत्नदर्पणै रम्यैर्गोपिकाभिश्च गोपकैः ।
वेष्टितञ्च तदारुह्य कौतुकाद्यास्यसि ध्रुवम् ॥ ११ ॥
त्यक्त्वा च पार्थिवं देहं दिव्यदेहं विधाय च ।
अयोनिसम्भवा राधा राधामाता कलावती ॥ १२ ॥
यास्यत्येव हि तेनैव नित्यदेहेन निश्चितम् ।
पितॄणां मानसी कन्या धन्या मान्या कलावती ॥१३॥
धन्या च सीतामाता च दुर्गामाता च मेनका ।
अयोनिसम्भवा दुर्गा तारा सीता च सुन्दरी ॥ १४ ॥
अयोनिसम्भवास्ताश्च धन्या मेना कलावती ।
इत्येवं कथितं तात गोपनीयं सुदुर्लभम् ।
वरोऽयं दत्तस्तुभ्यञ्च मया च दुर्गया तथा ॥ १५ ॥
श्रीकृष्णस्य वचः श्रुत्वा प्रत्युवाच व्रजेश्वरः ।
पुनरेव जगन्नाथं तद्भक्तो भक्तवत्सलम् ॥ १६ ॥

नन्द उवाच ।

युगानाञ्च चतुर्णाञ्च यं यं धर्मं सनातनम् ।

क्रमेण कृष्ण विस्तीर्णं कृत्वा मां कथय प्रभो ॥ १७ ॥
कलिशेषे भविष्यद्यद्गुणदोषं कलेस्तथा।
का गतिर्वा पृथिव्याश्च धर्मस्य प्राणिनां तथा ॥ १८ ॥
नन्दस्य वचनं श्रुत्वा हृष्टः कमललोचनः।
कथां कथितुमारेभे विचित्रां मधुरान्विताम् ॥ १९ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे भगवन्नन्दसंवादे
नवाशीतितमोऽध्यायः।

---

## नवतितमोऽध्यायः।

श्रीकृष्ण उवाच।

शृणु नन्द प्रवक्ष्यामि सानन्दमानसं यथा।
कथां रम्यां सुमधुरां पुराणेषु परिष्कृताम् ॥ १ ॥
परिपूर्णतमो धर्मो धार्मिकाश्च कृते युगे।
परिपूर्णतमं सत्यं परिपूर्णतमा दया ॥ २ ॥
अतीवप्रज्वलद्रूपा वेदाश्चत्वार एव च।
वेदाङ्गाश्चापि विविधाश्चेतिहासश्च संहिता ॥ ३ ॥
पुराणानि सुरम्याणि पञ्चरात्राणि पञ्च च।
रुचिराणि सुभद्राणि धर्मशास्त्राणि यानि च ॥ ४ ॥
विप्रा वेदविदः सर्वे पुण्यवन्तस्तपस्विनः।
नारायणं ते ध्यायन्ति तद्गतस्का जपन्ति च ॥ ५ ॥

ब्राह्मणाः क्षत्रिया वैश्याश्चतुर्वर्णाश्च वैष्णवाः ।
शूद्रा ब्राह्मणभृत्याश्च सत्यधर्मपरायणाः ॥ ६ ॥
राजानो धार्मिकाश्चैव प्रजापालनतत्पराः ।
गृह्णन्त्येव प्रजानाञ्च षोड़शांशकलां नृपाः ॥ ७ ॥
करशून्याश्च विप्राश्च पूज्याः स्वच्छन्दगामिनः ।
सन्ततं सर्वं शस्याढ्या रत्नाधारा वसुन्धरा ॥ ८ ॥
गुरुभक्ताश्च शिष्याश्च पितृभक्ताः सुतास्तथा ।
योषितः पतिभक्ताश्च पतिव्रतपरायणाः ॥ ९ ॥
ऋतौ सम्भोगिनः सर्वे न स्त्रीलुब्धा न लम्पटाः ।
न भयं दस्युचौर्याणां न तत्र पारदारिकाः ॥ १० ॥
तरवः पूर्णफलिनः पूर्णक्षीराश्च धेनवः ।
बलवन्तो जनाः सर्वे दीर्घाः सौन्दर्यसंयुताः ॥ ११ ॥
लक्षवर्षायुषः केचित् पुण्यवन्तो ह्यरोगिणः ।
यथा विप्रा विष्णुभक्तास्त्रिवर्णा विष्णुसेविनः ॥ १२ ॥
जलपूर्णा नदा नद्यः सन्ततं कन्दरास्तथा ।
तीर्थपूताश्चतुर्वर्णास्तपःपूता द्विजातयः ॥ १३ ॥
मनःपूताश्च निखिला खलहीनं जगत्त्रयम् ।
सत्कीर्तिपरिपूर्णञ्च यशस्यं मङ्गलान्वितम् ॥ १४ ॥
पितरः सर्वकालेषु तिथिकालेषु देवताः ।
सर्वकालेष्वतिथयः पूजिताश्च गृहे गृहे ॥ १५ ॥
त्रिवर्णा विप्रभक्ताश्च विप्रभोजनतत्पराः ।
ब्राह्मणस्य मुखं क्षेत्रमनूषरमकण्टकम् ॥ १६ ॥
नारायणोत्कीर्तनेन हर्षयुक्तास्तदुत्सवे ।
न देवानां द्विजानाञ्च विदुषां तत्र निन्दकाः ॥ १७ ॥

नात्मप्रशंसकाः केचित्सर्वे परगुणोत्सुकाः ।
न शत्रवो जनानाञ्च सर्वे सर्वहितैषिणः ॥ १८ ॥
पुरुषा योषितश्चापि न हि मूर्खाश्च पण्डिताः ।
न दुःखिनो जनाः सर्वे सर्वेषां रत्नमन्दिरम् ॥ १९ ॥
मणिमाणिक्यरत्नौघरत्नस्वर्णसमन्वितम् ।
न भिक्षुका न रोगार्ताः शोकहीनाश्च हर्षिताः ॥२०॥
न हि भूषणहीनाश्च नरा नार्यश्च केचन ।
न पापिनो न धूर्ताश्च न क्षुधार्ता न कुत्सिताः ॥२१॥
जराहीनाः प्राणिनश्च शश्वद्यौवनसंस्थिताः ।
आधिव्याधिविहीनाश्च निर्विकाराश्च देहिनः ॥२२॥
यदुक्तो वै सत्ययुगे धर्मः सत्यं दयादिकम् ।
पादहीनश्च त्रेतायां सत्यार्द्धं द्वापरेऽपि च ॥ २३ ॥
धर्मैकपाच्च प्रथमे कलेश्चापि कृशो बलः ।
दुष्टानां दस्युचौर्याणामङ्कुरः प्रभवेद् व्रज ॥ २४ ॥
अधर्मनिरताः केचिद्भीताः सङ्गोपिनस्तथा ।
भीता गुप्ताश्च पुंश्चल्यो भीताश्च पारदारिकाः ॥ २५ ॥
धर्मिष्ठानां भयं शश्वदधर्मिष्ठाश्च कम्पिताः ।
स्वल्पधर्मरता भूपाः स्वल्पवेदरता द्विजाः ॥ २६ ॥
व्रतधर्मरताः केचित्सर्वे स्वच्छन्दगामिनः ।
यावत्तिष्ठन्ति तीर्थानि यावत्तिष्ठन्ति साधवः ॥ २७ ॥
यावत्तिष्ठन्ति ग्रामाणां देवाः शास्त्राणि पूजनम् ।
तावत्किञ्चित्तपः सत्यं स्वर्गधर्मांश्च एव च ॥ २८ ॥
कलेर्दोषनिधेस्तात गुण एको महानपि ।
मानसञ्च भवेत् पुण्यं सुकृतं न हि दुष्कृतम् ॥ २९ ॥

तीर्थादिके गते तात नष्टो धर्मांश एव च ।
कलारूपश्च धर्मस्य यथा कुह्वां निशाकरः ॥ ३० ॥

नन्द उवाच ।

तीर्थान्येतानि सर्वाणि तिष्ठन्त्येव कियद्दिनम् ।
साधवो ग्राम्यदेवाश्च शास्त्राण्येतानि वत्सक ॥ ३१ ॥

श्रीकृष्ण उवाच ।

कलौ दशसहस्राणि हरिस्तिष्ठति मेदिनीम् ।
देवानां प्रतिमा पूज्या शास्त्राणि च पुराणकम् ॥ ३२ ॥
तदर्धमपि तीर्थानि गङ्गादीनि सुनिश्चितम् ।
तदर्धं ग्रामदेवाश्च वेदाश्च विदुषामपि ॥ ३३ ॥
अधर्मः परिपूर्णश्च तदन्ते च कलौ पितः ।
एकवर्णा भविष्यन्ति वर्णाश्चत्वार एव च ॥ ३४ ॥
न मन्त्रपूतोद्वाहश्च न हि सत्यं न च क्षमा ।
स्त्रीस्वीकाररतो नित्यं ग्राम्यधर्मप्रधानतः ॥ ३५ ॥
न यज्ञसूत्रं तिलकं ब्राह्मणानाञ्च नित्यशः ।
सन्ध्याशास्त्रविहीनाश्च विप्रवंशाः स्मृता अपि ॥३६॥
सर्वैः सार्धञ्च सर्वेषां भक्षणं नियमच्युतम् ।
अभक्ष्यभक्षा लोकाश्च चतुर्वर्णाश्च लम्पटाः ॥ ३७ ॥
नारीषु न सती काचित् पुंश्चली च गृहे गृहे ।
करोति तर्जनं कान्तं भृत्यतुल्यञ्च कम्पितम् ॥ ३८ ॥
जाराय दत्त्वा मिष्टान्नं ताम्बूलं वस्त्रचन्दनम् ।
न ददात्येव चाहारं स्वामिने दुःखिने पितः ॥ ३९ ॥
पुत्रेण भर्त्सितस्तातः शिष्येण भर्त्सितो गुरुः ।
प्रजाभिस्ताड़ितो भूपो भूपेन ताड़िताः प्रजाः ॥४०॥

दस्युचौरैश्च दुष्टैश्च शिष्टाश्च परिपीड़िताः ।
शस्यहीना च वसुधा क्षीरहीनाश्च धेनवः ॥ ४१ ॥
स्वल्पक्षीरे घृतं नास्ति नवनीतञ्च नित्यशः ।
सत्यहीना जनाः सर्वे नित्यं मिथ्या वदन्ति च ॥ ४२ ॥
शौचसन्ध्याशास्त्रहीना ब्राह्मणा वृषवाहकाः ।
सूपकाराश्च शूद्राणां शूद्राणां शवदाहकाः ॥ ४३ ॥
शूद्रस्त्रीनिरताः शश्वच्छूद्रा विप्रवधूरताः ।
खादन्ति यस्य विप्रस्य भक्ष्यञ्च परिपाचकाः ॥ ४४ ॥
मातुः परां तस्य पत्नीं शूद्रा गृह्णन्ति लम्पटाः ।
भृत्यश्च हत्वा राजानं स्वयं राजा भविष्यति ॥ ४५ ॥
नारी हत्वा पतिं कामाद्भजेज्जारञ्च कौतुकात् ।
पुत्रश्च पितरं हत्वा स्वयं भूपो भविष्यति ॥ ४६ ॥
सर्वे स्वच्छन्दनिरताः शिश्नोदरपरायणाः ।
वङ्गरा व्याधियुक्ताश्च कुत्सिताश्च कुचेलकाः ॥ ४७ ॥
त्रिशुलमन्त्रलिप्ताश्च मिथ्यामन्त्रप्रचारकाः ।
जातिहीनाश्च गुरवो वयोहीनाश्च निन्दकाः ॥ ४८ ॥
राजानश्चापि म्लेच्छाश्च यवना धर्मनिन्दकाः ।
सत्कीर्तिमपि साधूनां कुर्वन्त्युन्मूलनं मुदा ॥ ४९ ॥
पितृदेवद्विजातीनामतिथीनाञ्च नित्यशः ।
पूजा नास्ति गुरूणाञ्च पित्रोश्च पूजनं स्त्रियः ॥ ५० ॥
स्त्रीबन्धूनां गौरवञ्च स्त्रीणाञ्च सततं पितः ।
चौरः सत्कुलजातिश्च ब्राह्मणो देवहारकः ॥ ५१ ॥
मानं वहन्ति लोभेन युगे धर्मेण कौतुकात् ।
देवायतनहीनञ्च जगत्सर्वं भयाकुलम् ॥ ५२ ॥

अराजकञ्च दुर्नीतं सन्ततं कलिदोषतः।
बुभुक्षिताः कुचेलाश्च दरिद्रा व्याधिनो नराः॥ ५३॥
कपर्दकवटाध्यक्षो राजेन्द्रो हि घटेश्वरः।
वृद्धाङ्गुष्ठसमा लोका वृक्षाः शाकसमास्तथा॥ ५४॥
तालानां नारिकेलाणां पनसानां तथैव च।
फलानि सर्षपाख्येव तत् क्षुद्रञ्च ततः परम्॥ ५५॥
जलभाजनपात्रेण शस्येन वाससा तथा।
विहीनं मन्दिरं सर्वं गृहाणामपरिष्कृतम्॥ ५६॥
गन्धकेन परिवृतं दीपहीनं तमोयुतम्।
हिंस्रजन्तुभयाद्भीता जनाः सर्वे च पापिनः॥ ५७॥
सर्वे च फललोभिष्ठाः पुंश्चल्यः कलहप्रियाः।
रूपवत्यो न कामिन्यो नराश्चापि न रूपिणः॥ ५८॥
नद्यो नदाः कन्दराश्च तड़ागाश्च सरोवराः।
जलपद्मविहीनाश्च जलहीना घनास्तथा॥ ५९॥
अपत्यहीना नार्यश्च कामुक्यो जारसंयुताः।
अश्वत्थच्छेदिनः सर्वे वृक्षहीना वसुन्धरा॥ ६०॥
फलहीनाश्च तरवः शाखास्कन्धविहीनकाः।
फलानि स्वादुहीनानि चान्नानि च जलानि च॥६१॥
मानवाः कटुवक्तारो निर्दया धर्मवर्जिताः।
तदन्ते द्वादशादित्याः संहरिष्यन्ति मानवान्॥ ६२॥
सर्वान् जन्तूंश्च तापेन बहुवृष्ट्या व्रजेश्वर।
अवशिष्टा च पृथिवी कथामात्रावशेषिता॥ ६३॥
कलौ गते च पृथिवीच्छन्नं वर्षगते तथा।
पुनः सत्यप्रवृत्तिश्च भविष्यति क्रमेण वै॥ ६४॥

इत्येवं कथितं सर्वं गच्छ तात व्रजं सुखम् ।
अहं दुग्धमुखो बालः पुत्रस्ते कथयामि किम् ॥ ६५
नवनीतं घृतं दुग्धं दधि तक्रं परिष्कृतम् ।
स्वस्तिकं शुभकर्माहं मिष्टान्नञ्च सुधोपमम् ॥ ६६ ॥
मिष्टद्रव्यञ्च यत् किञ्चित् पितृदेवनिमित्तकम् ।
भुक्तं बलाच्च तत् सर्वं बालानां रोदनं बलम् ॥ ६७ ॥
तत् क्षमस्वापराधं मे बालदोषः पदे पदे ।
त्वं पिता तव पुत्रोऽहं यशोदा जननी मम ॥ ६८ ॥
मदीयं परिहासञ्च यशोदां रोहिणीं वद ।
कुमारास्याच्छ्रुतं सर्वं सोऽहमित्येवमीप्सितम् ॥ ६९
कीर्तयिष्यसि तत् सर्वं सर्वं गोकुलवासिनम् ।
कालः करोति संसर्गं बन्धूनां बन्धुभिः सह ॥ ७० ॥
कालः करोति विच्छेदं विरोधं प्रीतिमेव च ।
कालः सृष्टिञ्च कुरुते कालश्च परिपालनम् ॥ ७१ ॥
कालः करोति सानन्दं कालः संहरते प्रजाः ।
सुखं दुःखं भयं शोकं जरां मृत्युञ्च जन्म च ॥ ७२ ॥
सर्वं कर्मानुरोधेन काल एव करोति च ।
सर्वं कालकृतं तात विस्मयं न व्रजं व्रज ॥ ७३ ॥
कुतस्त्वं गोकुले वैश्यो नन्दो वैश्याधिपो नृपः ।
वसुदेवसुतोऽहञ्च मथुरायामहो कुतः ॥ ७४ ॥
पित्रा मे कंसभीतेन त्वद्गृहे च समर्पितः ।
पितुः परः पिता त्वञ्च माता मातुः परापि वा ॥७५॥
मया दत्तेन ज्ञानेन पार्वत्या च व्रजेश्वर ।
त्यज मोहं महाभाग गच्छ तात सुखं गृहम् ॥ ७६ ॥

नन्द उवाच ।

स्मर वृन्दावनं तात रम्यं पुण्यं महोत्सवम् ।
गोकुलं गोकुलं रम्यं सुन्दरं यमुनातटम् ॥७७॥
रमणीनां सुरम्यञ्च त्वत्प्रियं रासमण्डलम् ।
गोपालिका गोपबालान् यशोदां रोहिणीं प्रियाम् ॥७८॥
प्राणाधिकां राधिकां न कथं स्मरसि पुत्रक ।
वारमेकं स्वल्पदिनं गोकुलं गच्छ वत्सक ॥७९॥
इत्येवमुक्त्वा नन्दश्च क्रोडे कृष्णं चकार सः ।
नेत्राश्रुणा च पूर्णेन तं सिषेच शुचान्वितः ॥८०॥
चुचुम्ब तद्गण्डयुग्मं कृत्वा वक्षसि मोहतः ।
सानन्दः परमानन्दो भगवांस्तमुवाच सः ॥८१॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे नवतितमोऽध्यायः ।

---

## एकनवतितमोऽध्यायः ।

श्रीभगवानुवाच ।

निषेकेन परिच्छन्नो विभेदस्तेन वा भवेत् ।
क्षणेन दर्शनं तेन निषेकः केन वार्यते ॥ १ ॥
गमनागमनार्थञ्चाप्युद्धवः कथयिष्यति ।
प्रस्थापयामि तं शीघ्रं विज्ञास्यसि ततः पितः ॥२॥
यशोदां रोहिणीञ्चैव गोपिका गोपबालकान् ।

प्राणाधिकां राधिकां तां गत्वा सम्बोधयिष्यति ॥३॥
एतस्मिन्नन्तरे तत्र वसुदेवश्च देवकी।
बलदेवश्चोद्धवश्च तथाक्रूरश्च सत्वरम् ॥ ४ ॥

वसुदेव उवाच।

नन्द त्वं बलवान् ज्ञानी सद्बन्धुश्च सखा मम।
त्यज मोहं गृहं गच्छ वत्सस्तेऽयं यथा मम ॥ ५ ॥
द्वारभूता गोकुलाच्च मथुरा नास्ति बान्धवः।
महोत्सवे सदानन्दे नन्द द्रक्ष्यसि पुत्रकम् ॥ ६ ॥

श्रीदेवक्युवाच।

यथायमावयोः पुत्रस्तथैव भवतो ध्रुवम्।
सालसः केन हे नन्द शुचा देहो हि लक्ष्यते ॥७॥
एकादशाब्दं सबलः स्थित्वा ते मन्दिरे सुखम्।
कथं स्वल्पदिनेनैव शोकग्रस्तो भविष्यसि ॥ ८ ॥
तिष्ठ पुत्रेण सार्द्धञ्च मथुरायां कियद्दिनम्।
पूर्णचन्द्राननं पश्य जन्म त्वं सफलं कुरु ॥ ९ ॥

श्रीभगवानुवाच।

गच्छोद्धव सुखं भद्र भविष्यति तव प्रियम्।
प्रहर्षं गोकुलं गत्वा यशोदां रोहिणीं प्रसूम् ॥१०॥
गोपबालसमूहञ्च राधिकां गोपिकागणम्।
प्रबोधयाध्यात्मिकेन महत्तेन च शुच्छिदा ॥११॥
नन्दस्तिष्ठतु सानन्दं मन्मातुराज्ञया शुचा।
नन्दस्थितिं मद्विनयं यशोदां कथयिष्यसि ॥ १२ ॥
इत्येवमुक्त्वा श्रीकृष्णः पित्रा मात्रा बलेन च।
अक्रूरेण समं तूर्णं ययावाभ्यन्तरं गृहम् ॥१३॥

उद्धवो रजनीं स्थित्वा मथुरायाञ्च नारद ।
प्रभाते प्रययौ शीघ्रं रम्यं वृन्दावनं वनम् ॥१४॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे चैकनवतितमोऽध्यायः ।

---

## द्विनवतितमोऽध्यायः ।

—०:०—

श्रीनारायण उवाच ।

श्रीकृष्णप्रेरितो हृष्टः प्रणम्य च गणेश्वरम् ।
स्मरन्नारायणं शम्भुं दुर्गां लक्ष्मीं सरस्वतीम् ॥ १ ॥
गङ्गाञ्च मनसि ध्यात्वा दिगीशं तं महेश्वरम् ।
प्रजगामोद्धवश्चैव दृष्ट्वा मङ्गलसूचकम् ॥ २ ॥
शुश्राव दुन्दुभिं घण्टां नादं शङ्खध्वनिं तथा ।
हरिशब्दञ्च संगीतं शुश्राव मङ्गलध्वनिम् ॥ ३ ॥
पतिपुत्रवतीं साध्वीं प्रदीपमाल्यदर्पणम् ।
परिपूर्णतमं कुम्भं दधिलाजफलानि च ॥४॥
दूर्वाङ्कुरं शुक्लधान्यं रजतं काञ्चनं मधु ।
ब्राह्मणानां समूहञ्च कृष्णसारं वृषं घृतम् ॥ ५ ॥
सद्योमांसं गजेन्द्रञ्च नृपेन्द्रं श्वेतघोटकम् ।
पताकां नकुलं चाषं शुक्लपुष्पञ्च चन्दनम् ॥६॥
दृष्ट्वैवं पथि कल्याणं प्राप वृन्दावनं वनम् ।
ददर्श पुरतो वृक्षं भाण्डीरवटमक्षयम् ॥ ७ ॥

स्निग्धपूर्णं रत्नवर्णं पुण्यदं तीर्थमीप्सितम् ।
सुवेषान् बालकांश्चैव रत्नभूषणभूषितान् ॥ ८ ॥
वदतो बलकृष्णेति रुदतश्च शुचान्वितान् ।
तानाश्वास्य ययौ दूरं प्रविश्य नगरं मुदा ॥ ९ ॥
ददर्श नन्द शिविरं रचितं विश्वकर्मणा ।
मणिरत्नविनिर्माणं मुक्तामाणिक्यहीरकैः ॥ १० ॥
परिच्छिन्नं मनोरम्यं सद्रत्नकलशान्वितम् ।
द्वारं चित्रं विचित्राढ्यं दृष्ट्वा च प्रविवेश सः ॥११॥
अवरुह्य रथात्तूर्णं तस्थौ तत्प्राङ्गणे मुदा ।
यशोदा रोहिणी शीघ्रं पप्रच्छ कुशलं परम् ॥१२॥
आसनञ्च जलं गाञ्च मधुपर्कं ददौ मुदा ।
क्व नन्दः क्व बलः कृष्णः सत्यं तत् कथयोद्धव ॥१३॥
उद्धवः कथयामास सर्वं भद्रं क्रमेण च ।
सार्द्धञ्च बलकृष्णाभ्यां नन्दः सानन्दपूर्वकम् ॥१४॥
आयास्यति विलम्बेन कृष्णोपनयनावधि ।
युष्माकं कुशलं तत्त्वं विज्ञाय विधिपूर्वकम् ॥१५॥
अहं यास्यामि मथुरां यशोदे शृणु साम्प्रतम् ।
श्रुत्वा मङ्गलवार्त्ताञ्च यशोदा रोहिणी मुदा ॥१६॥
ब्राह्मणाय ददौ रत्नं सुवर्णं वस्त्रमीप्सितम् ।
उद्धवं भोजयामास मिष्टान्नञ्च सुधोपमम् ॥१७॥
मणिश्रेष्ठञ्च रत्नञ्च ददौ तस्मै च हीरकम् ।
वाद्यञ्च वादयामास भद्रं नानाविधं तथा ॥१८॥
ब्राह्मणान् भोजयामास कारयामास मङ्गलम् ।
वेदांश्च पाठयामास परमानन्दपूर्वकम् ॥१९॥

शङ्करं पूजयामास विप्रद्वारा परं विभुम् ।
नानोपहारैर्नैवेद्यैः पुष्पधूपप्रदीपकैः ॥२०॥
चन्दनैर्वस्त्रताम्बूलैर्मधुगव्यघृतादिभिः ।
भवानीं पूजयामास श्रीवृन्दारण्यदेवताम् ॥२१॥
षोडशोपचारैर्द्रव्यैश्च बलिभिर्विविधैर्मुने ।
महिषाणां शतं शुद्धं छागलानां सहस्रकम् ॥ २२ ॥
मेषाणामयुतं शुद्धं युक्तमादाय पञ्चकम् ।
ब्राह्मणेभ्यः स्वर्णशतं धेनूनाञ्च शतं तथा ॥ २३ ॥
प्रददौ दक्षिणां तूर्णं कृष्णकल्याणहेतवे ।
उद्धवं पूजयामास सादरञ्च पुनः पुनः ॥ २४ ॥
समाघ्राय यशोदाञ्च रोहिणीं गोपबालकान् ।
वृद्धान् गोपालिकाः सर्वाः प्रययू रासमण्डलम् ॥२५॥
ददर्श रासं रुचिरं चन्द्रमण्डलवर्तुलम् ।
श्रीरामकदलीस्तम्भैः शतकैरुपशोभितम् ॥ २६ ॥
युक्तैश्च स्निग्धवसनैश्चन्दनानाञ्च पल्लवैः ।
पट्टसूत्रनिबद्धैश्च श्रीयुक्तमाल्यजालकैः ॥ २७ ॥
दधिलाजफलैः पट्टैः पुष्पैर्दूर्वाङ्कुरैरपि ।
चन्दनागुरुकस्तूरीकुङ्कुमैः परिसंस्कृतम् ॥ २८ ॥
वेष्टितं रक्षितं यत्नाद्गोपिकानां त्रिकोटिभिः ।
त्रिलक्षैः सुन्दरै रम्यैः संसिक्तं रतिमन्दिरैः ॥ २९ ॥
लक्षगोपैः परिवृतं कृष्णागमनशङ्कितैः ।
यमुनां दक्षिणां कृत्वा प्रययौ मालतीवनम् ॥ ३० ॥
चन्दनानां चम्पकानां यूथिकानां तथैव च ।
केतकीमाधवीनाञ्च वनं कृत्वा प्रदक्षिणम् ॥ ३१ ॥

वकुलानां वञ्जुलानामशोकानाञ्च काननम्।
मल्लिकानां पलाशानां शिरीषाणां तथैव च॥ ३२॥
धात्रीणां काञ्चनानाञ्च कर्णिकानां वनं तथा।
नागेश्वराणां विपिनं लवङ्गानां तथैव च॥ ३३॥
वनञ्च शालतालानां हिन्तालानां वनं तथा।
पनसानां रसालानां लाङ्गलीनां मनोहरम्॥ ३४॥
मन्दारकाननं रम्यं वामं कृत्वा च सत्वरम्।
दृष्ट्वा कुन्दवनं रम्यं सम्प्राप्य मधुकाननम्॥ ३५॥
पुंस्कोकिलानां शब्देन मधुरेण समन्वितम्।
मधुव्रतसमूहानां मधुरध्वनिपूरितम्॥ ३६॥
वन्यवृक्षैः परिवृतं माध्वीकाधारमीप्सितम्।
वातेन वन्यपुष्पाणां परितः सुरभीकृतम्॥ ३७॥
तद्दृष्ट्वा राजमार्गेण यशोदोक्तेन साम्प्रतम्।
ययौ शीघ्रं निरुद्विग्नं रहस्यं बदरीवनम्॥ ३८॥
श्रीफलानाञ्च निम्बानां नारिङ्गाणां वनं तथा।
दृष्ट्वा रक्तिमवर्णञ्च सुपक्वफलमीप्सितम्॥ ३९॥
तदेव वामतः कृत्वा विवेश कदलीवनम्।
अतीवनिर्जने रम्ये ददर्श राधिकाश्रमम्॥ ४०॥
मणीन्द्राणाञ्च प्राकारं परिखादुर्गवेष्टितम्।
अत्यगम्यं रिपूणाञ्च मित्राणां सुगमं सुखम्॥ ४१॥
गोप्यं सङ्केतमार्गञ्च रक्षकैः परिरक्षितम्।
नानाचित्रविचित्राढ्यं निर्मितं विश्वकर्मणा॥ ४२॥
मणीन्द्रमुक्तामाणिक्यहीरहारोज्ज्वलं परम्।
रत्नेन्द्रसाररचितं रत्नस्तम्भैः सुशोभितम्॥ ४३॥

रत्नसोपानसंसक्तमन्दिरेण मनोहरम् ।
अमूल्यरत्नरचितं कलशैः परिशोभितम् ॥ ४४ ॥
वह्निशुद्धांशुकाभिश्च पताकाभिः परिष्कृतम् ।
सद्रत्नदर्पणोत्कृष्टं चर्चितं श्वेतचामरैः ॥ ४५ ॥
ददर्श सिंहद्वारञ्च युक्तं रत्नकपाटकैः ।
द्वारोपरि विचित्रञ्च रम्यं वृन्दावनं वनम् ॥ ४६ ॥
कदम्बकाननं रम्यं तद्वस्त्रहरणादिकम् ।
विश्वकर्मविरचितं सुरम्यं रासमण्डलम् ॥ ४७ ॥
नानारत्नकुटीरञ्च गोपगोपीसमन्वितम् ।
रचितं गोपिकालक्षैर्वह्नहस्तैर्मनोहरैः ॥ ४८ ॥
स्वच्छन्दाचरणैः शश्वदभीतैर्बलिभिर्मुदा ।
तद्द्वारं पुरतो दृष्ट्वा विलङ्घ्य च जगाम सः ॥ ४९ ॥
द्वितीयद्वारमुल्लङ्घ्य तस्मादुत्तममीप्सितम् ।
द्वारं चतुर्थं सम्प्राप्य सर्वस्माच्च विलक्षणम् ॥ ५० ॥
तत्पश्चात् पञ्चमं द्वारं ददर्श चित्रमुत्तमम् ।
द्वारषट्कञ्च प्रययौ सर्वतो रुचिरं परम् ॥ ५१ ॥
रामरावणयोर्युद्धं भित्तिचित्रं मनोहरम् ।
दशावतारं विष्णोश्च कृत्रिमं रासमण्डलम् ॥ ५२ ॥
यमुनां जलकेलीञ्च रचितां विश्वकर्मणा ।
गोपिकानां सहस्रेण षष्ठद्वारञ्च रक्षितम् ॥ ५३ ॥
रत्नेन्द्रसारनिर्माणभूषणैर्भूषितेन च ।
सद्रत्नदण्डहस्तेन हीरकैर्भूषितेन च ॥ ५४ ॥
मणीन्द्रमुक्तामाणिक्यहीराहारान्वितेन च ।
माधवी तत्प्रधाना सा पप्रच्छ साम्प्रतं शिवम् ॥ ५५ ॥

ददौ प्रत्युत्तरं सर्वं क्रमेण च स उद्धवः ।
गत्वा विज्ञापयामास राधाप्रियसखीगणम् ।
सा माधवी महाहृष्टा तत्र संस्थाप्य तं मुदा ॥ ५६ ॥
श्रुत्वा मङ्गलवार्ताञ्च राधाप्रियसखीगणैः ।
कृत्वा शङ्खध्वनिं घण्टामृदङ्गपणहस्वनम् ॥ ५७ ॥
कृत्वा निर्मञ्छनं शीघ्रमुद्धवं प्रियमागतम् ।
हृष्टाप्रवेशयामास राधाभ्यन्तरमुत्तमम् ॥ ५८ ॥
अमूल्यरत्ननिर्माणं गत्वा मन्दिरमुत्तमम् ।
ददर्श पुरतो राधां कृशां चन्द्रकलोपमाम् ॥ ५९ ॥
सुपक्वपद्मनेत्राञ्च शयानां शोकमूर्च्छिताम् ।
रुदन्तीं रक्तवदनां क्लिष्टाञ्च त्यक्तभूषणाम् ॥ ६० ॥
निश्चेष्टाञ्च निराहारां सुवर्णवर्णकुण्डलाम् ।
शुष्किताधरकण्ठाञ्च किञ्चिन्निःश्वाससंयुताम् ॥ ६१ ॥
प्रणनाम च तां दृष्ट्वा भक्तिनम्रात्मकन्धरः ।
पुलकाञ्चितसर्वाङ्गो भक्त्या भक्तः स उद्धवः ॥ ६२ ॥

उद्धव उवाच ।

वन्दे राधापदाम्भोजं ब्रह्मादिसुरवन्दितम् ।
यत्कीर्तिकीर्तनेनैव पुनाति भुवनत्रयम् ॥ ६३ ॥
नमो गोकुलवासिन्यै राधिकायै नमो नमः ।
शतशृङ्गनिवासिन्यै चन्द्रवत्यै नमो नमः ॥ ६४ ॥
तुलसीवनवासिन्यै वृन्दारण्यै नमो नमः ।
रासमण्डलवासिन्यै रासेश्वर्यै नमो नमः ॥ ६५ ॥
विरजातीरवासिन्यै वृन्दायै च नमो नमः ।
वृन्दावनविलासिन्यै कृष्णायै च नमो नमः ॥ ६६ ॥

नमः कृष्णप्रियायै च शान्तायै च नमो नमः ।
कृष्णवक्षःस्थितायै च तत्प्रियायै च नमो नमः ॥६७॥
नमो वैकुण्ठवासिन्यै महालक्ष्म्यै नमो नमः ।
विद्याधिष्ठातृदेव्यै च सरस्वत्यै नमो नमः ॥ ६८ ॥
सर्वैश्वर्याधिदेव्यै च कमलायै नमो नमः ।
पद्मनाभप्रियायै च पद्मायै च नमो नमः ॥ ६९ ॥
महाविष्णोश्च मात्रे च पराद्यायै नमो नमः ।
नमः सिन्धुसुतायै च मर्त्यलक्ष्म्यै नमो नमः ॥ ७० ॥
नारायणप्रियायै च नारायण्यै नमो नमः ।
नमोऽस्तु विष्णुमायायै वैष्णव्यै च नमो नमः ॥ ७१ ॥
महामायास्वरूपायै सम्पदायै नमो नमः ।
नमः कल्याणरूपिण्यै शुभायै च नमो नमः ॥ ७२ ॥
मात्रे चतुर्णां वेदानां सावित्र्यै च नमो नमः ।
नमो दुर्गविनाशिन्यै दुर्गादेव्यै नमो नमः ॥ ७३ ॥
तेजःसु सर्वदेवानां पुरा कृतयुगे मुदा ।
अधिष्ठानकृतायै च प्रकृत्यै च नमो नमः ॥ ७४ ॥
नमस्त्रिपुरहारिण्यै त्रिपुरायै नमो नमः ।
सुन्दरीषु च रम्यायै निर्गुणायै नमो नमः ॥ ७५ ॥
नमो निद्रास्वरूपायै निर्गुणायै नमो नमः ।
नमो दक्षसुतायै च नमः सत्यै नमो नमः ॥ ७६ ॥
नमः शैलसुतायै च पार्वत्यै च नमो नमः ।
नमो नमस्तपस्विन्यै ह्युमायै च नमो नमः ॥ ७७ ॥
निराहारस्वरूपायै ह्यपर्णायै नमो नमः ।
गौरीलोकविलासिन्यै नमो गौर्य्यै नमो नमः ॥७८॥

नमः कैलासवासिन्यै माहेश्वर्यै नमो नमः ।
निद्रायै च दयायै च श्रद्धायै च नमो नमः ॥ ७६ ॥
नमो धृत्यै क्षमायै च लज्जायै च नमो नमः ।
तृष्णायै क्षुत्स्वरूपायै स्थितिकर्त्र्यै नमो नमः ॥ ८० ॥
नमः संहाररूपिण्यै महामायै नमो नमः ।
भयायै चाभयायै च मुक्तिदायै नमो नमः ॥ ८१ ॥
नमः स्वधायै स्वाहायै शान्त्यै कान्त्यै नमो नमः ।
नमस्तुष्ट्यै च पुष्ट्यै च दयायै च नमो नमः ॥ ८२ ॥
नमो निद्रास्वरूपायै श्रद्धायै च नमो नमः ।
क्षुत्पिपासास्वरूपायै लज्जायै च नमो नमः ॥ ८३ ॥
नमो धृत्यै क्षमायै च चेतनायै नमो नमः ।
सर्वशक्तिस्वरूपिण्यै सर्वमात्रे नमो नमः ॥ ८४ ॥
अग्नौ दाहस्वरूपायै भद्रायै च नमो नमः ।
शोभायै पूर्णचन्द्रे च शरत्पद्मे नमो नमः ॥ ८५ ॥
नास्ति भेदो यथा देवि दुग्धधावल्ययोः सदा ।
यथैव गन्धभूम्योश्च यथैव जलशैत्ययोः ॥ ८६ ॥
यथैव शब्दनभसोर्ज्योतिःसूर्यकयोर्यथा ।
लोके वेदे पुराणे च राधामाधवयोस्तथा ॥ ८७ ॥
चेतनं कुरु कल्याणि देहि मामुत्तरं सति ।
इत्युक्त्वा चोद्धवस्तत्र प्रणनाम पुनः पुनः ॥ ८८ ॥
इत्युद्धवकृतं स्तोत्रं यः पठेद्भक्तिपूर्वकम् ।
इह लोके सुखं भुक्त्वा यात्यन्ते हरिमन्दिरम् ॥ ८६ ॥
न भवेद् बन्धुविच्छेदो रोगः शोकः सुदारुणः ।
प्रोषिता स्त्री लभेत् कान्तं भार्याभेदी लभेत् प्रियाम्॥६०

अपुत्रो लभते पुत्रान्निर्धनो लभते धनम् ।
निर्भूमिर्लभते भूमिं प्रजाहीनो लभेत् प्रजाम् ॥ ८१ ॥
रोगाद्विमुच्यते रोगी बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ ८२ ॥
अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ॥ ८३ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे राधास्तोत्रे
द्विनवतितमोऽध्यायः ।

---

## त्रिनवतितमोऽध्यायः ।

श्रीनारायण उवाच ।

उद्धवस्तवनं श्रुत्वा चेतनं प्राप्य राधिका ।
विलोक्य कृष्णाकारञ्च तमुवाच शुचान्विता ॥ १ ॥

श्रीराधिकोवाच ।

किन्नाम भवतो वत्स केन वा प्रेरितो भवान् ।
आगतो वा कुत इति ब्रूहि मां केन हेतुना ॥ २ ॥
कृष्णाकृतिस्त्वं सर्वाङ्गैर्मन्ये त्वां कृष्णपार्षदम् ।
कृष्णस्य कुशलं ब्रूहि बलदेवस्य साम्प्रतम् ॥ ३ ॥
नन्दस्तिष्ठति तत्रैव हेतुना केन तद्वद ।
समायास्यति गोविन्दो रम्यं वृन्दावनं वनम् ॥ ४ ॥

पुनर्द्रक्ष्यामि तस्यैव पूर्णचन्द्रमुखं शुभम्।
पुनः क्रीड़ां करिष्यामि तेनाहं रासमण्डले॥ ५॥
जले च विहरिष्यामि पुनर्वा सखीभिः सह।
श्रीनन्दनन्दनाङ्गे च पुनर्दास्यामि चन्दनम्॥ ६॥

उद्धव उवाच।

उद्धवेत्यभिधानं मे चत्रियोऽहं वरानने।
प्रेषितः शुभवार्त्तार्थं कृष्णेन परमात्मना॥ ७॥
तवान्तिकं समायातः पार्षदोऽहं हरेरपि।
कृष्णस्य बलदेवस्य शिवं नन्दस्य साम्प्रतम्॥ ८॥

श्रीराधिकोवाच।

अस्ति तद् यमुनाकूलं सुगन्धिपवनोऽस्ति सः।
तस्य केलिकदम्बानां मूलमस्त्येव साम्प्रतम्॥ ९॥
पुण्यं वृन्दावनं रम्यं तद्विद्यमानमीप्सितम्।
पुंस्कोकिलानां विरुतं तल्पं चन्दनचर्चितम्॥ १०॥
चतुर्विधञ्च भोज्यञ्च मधुपानञ्च सुन्दरम्।
दुरन्तो दुःखदोऽप्यस्ति पापिष्ठो मन्मथस्तथा॥ ११॥
ते च रत्नप्रदीपाश्च ज्वलन्ति रासमण्डले।
मणीन्द्रसारनिर्माणमस्त्येव रतिमन्दिरम्॥ १२॥
गोपाङ्गनागणोस्त्येव पूर्णचन्द्रोऽस्ति शोभितः।
सुगन्धिपुष्परचितं तल्पं चन्दनचर्चितम्॥ १३॥
ताम्बूलं रतिभोगार्हं कर्पूरादिसुसंस्कृतम्।
सुगन्धिमालतीमाल्यं श्वेतचामरदर्पणम्॥ १४॥
मुक्तामाणिक्यसंसक्तहीरहारमनोहरम्।

नानोपकाननं रम्यं रम्यक्रीड़ासरोवरम् ॥१५॥
सुगन्धिपुष्पोद्यानञ्च पद्मश्रेणीमनोहरम्।
अस्त्येव सर्वविभवः प्राणनाथः कुतो मम ॥१६॥
हा कृष्ण हा रमानाथ क्वासि मे प्राणवल्लभ।
क्व वापराधो दास्याश्च दासीदोषः पदे पदे ॥१७॥
इत्येवमुक्का सा देवी पुनर्मूर्च्छामवाप सा।
चेतनं कारयामास पुनरेव स उद्धवः।
तां दृष्ट्वा परमाश्चर्य्यं मेने क्षत्रियपुङ्गवः ॥१८॥
सखीभिः सप्तभिः शश्वत् सेवितां श्वेतचामरैः।
गोपीनाञ्च त्रिलक्षैश्च सुप्रियैः प्रियसेविताम् ॥१९॥
दिवानिशं वेष्टिताञ्च गोपीनां शतकोटिभिः।
काचित् कज्जलहस्ता च काचिन्माल्यधरापरा ॥२०॥
काचित् सिन्दूरहस्ता च काचिद्गोरोचनाकरा।
काचिच्चन्दनपात्रञ्च हस्ते कृत्वा च तिष्ठति ॥२१॥
काचिद्दर्पणहस्ता च काचित् कुङ्कुमवाहिका।
कस्तूरीपात्रमिष्टञ्च काचिद्वहति तत्र वै ॥२२॥
काचिच्चम्पकपात्रञ्च करे धृत्वा च तिष्ठति।
मधुभिर्मधुरैः पूर्णपात्रं धृत्वा शुचान्विता ॥२३॥
काचित् सुगन्धितैलञ्च गृहीत्वा परितिष्ठति।
काचिद्वहति ताम्बूलं कर्पूरादिसुवासितम् ॥२४॥
काचिद्वासितमिष्टञ्च जलं धृत्वा च तिष्ठति।
क्रीड़ापुत्तलिकां काचिच्चित्राढ्यां परिरक्षति ॥२५॥
काचिद्वहति कन्दूकं काचिच्च रत्नभूषणम्।
वह्निशुद्धांशुकं काचिदमूल्यं परिरक्षति ॥२६॥

काचिद्भक्ष्योपहारञ्च गृहीत्वा परिवर्त्तते ।
काचिच्च केशवेशार्थं करोति माल्यमीप्सितम् ॥२७॥
काचित् कङ्कतिकां धृत्वा पुरतः परितिष्ठति ।
काचिद्यावकहस्ता च काचिद्धात्रीरसं मुदा ॥२८॥
दूरतोऽपि वहत्येवं भीता च परितिष्ठति ।
काचिद्भीता भिया स्तौति काचिद्रोदिति शोकतः ॥२९॥
काचित्तां बोधयत्येव विदग्धा विरहातुराम् ।
काचिदुत्तापतप्ता च स्निग्धतल्पे मनोहरे ॥३०॥
स्थापयेद्दिहदूरार्थं स्निग्धपद्मदले शुभे ।
एवम्भूताञ्च तां दृष्ट्वा प्रोवाच पुनरुद्धवः ।
सुप्रियं कर्णपीयूषं विनयेन च भीतवत् ॥३१॥

उद्धव उवाच ।

जाने त्वां देवदेवीशां सुस्निग्धां सिद्धयोगिनीम् ।
सर्वशक्तिस्वरूपाञ्च मूलप्रकृतिमीश्वरीम् ॥३२॥
श्रीदामशापाद्धरणीं प्राप्तां गोलोकवासिनीम् ।
कृष्णप्राणाधिकां देवि तद्वक्षःस्थलवासिनीम् ॥३३॥
शृणु देवि प्रवक्ष्यामि शुभवार्त्तामभीप्सिताम् ।
सुस्थिरं सखीभिः सार्द्धं हृदयस्निग्धकारिणीम् ॥३४॥
दुःखदावाग्निदग्धायाः सुधावर्षणरूपिणीम् ।
विरहव्याधियुक्ताया रसायनसमां शुभाम् ॥३५॥
तत्र तिष्ठति नन्दोऽयं सानन्दो मुदितः सदा ।
निमन्त्रितश्च वसुना कृष्णोपनयनावधि ॥ ३६ ॥
गृहीत्वा स बलं कृष्णं सार्द्धं मङ्गलकर्मणि ।
स नन्दो परमानन्दो मुदा यास्यति गोकुलम् ॥३७॥

आगत्य कृष्णो मुदितः प्रणम्य मातरं पुनः ।
नक्तमायास्यति मुदा पुण्यं वृन्दावनं वनम् ॥३८॥
अचिराद्द्रक्ष्यसि सति श्रीकृष्णमुखपङ्कजम् ।
सर्वं विरहदुःखञ्च सन्त्यक्ष्यसि च साम्प्रतम् ॥३९॥
सुस्थिरा भव मातस्त्वं त्यज शोकं सुदारुणम् ।
वह्निशुद्धांशुकं रम्यं परिधाय प्रहर्षिता ॥४०॥
अमूल्यरत्ननिर्माणभूषणग्रहणं कुरु ।
गृहाण चन्दनं स्निग्धं कस्तूरीकुङ्कुमान्वितम् ॥४१॥
कुरुष्व केशसंस्कारं मालतीमाल्यभूषितम् ।
सुवेशं कुरु कल्याणि गण्डे च चित्रपत्रकम् ॥४२॥
सिन्दूरविन्दुं सीमन्ते कस्तूरीचन्दनान्वितम् ।
अलक्तकाक्तं चरणं युक्तं यावकभूषणैः ॥ ४३ ॥
कुरुष्व तिष्ठ चोत्तिष्ठ रत्नसिंहासने वरे ।
सपङ्कपङ्कजं तल्पं त्यज सार्द्धं शुचा सति ॥४४॥
भुङ्क्ष्व कृष्णेन मनसा विशुद्धं मधुरं मधु ।
संस्कृतं भासितं तोयं ताम्बूलञ्च सुवासितम् ।४५।
रत्नेन्द्रसारनिर्माणपर्य्यङ्के सुमनोहरे ।
वह्निशुद्धांशुकान्ते च मालतीमाल्यभूषिते ॥ ४६ ॥
सुगन्धियुक्ते कस्तूरीजातीचम्पकचन्दनैः ।
परितो मालतीमाल्यहीरहारबिभूषिते ॥ ४७ ॥
मणीन्द्रमुक्तामाणिक्यसुन्दरैश्च परिष्कृते ।
पुष्पमाल्योपधाने च मङ्गलार्हे मुदान्विता ॥४८॥
शयनं कुरु देवेशि गोपीभिः सेविता सदा ।
करोति सेवनं शश्वत् प्रियाली श्वेतचामरैः ॥४९॥

पदारविन्दसेवाञ्च गोपी भक्ता मनोहरे ।
सद्रत्नसारनिर्माणपर्य्यङ्के सुमनोहरे ॥ ५०॥
इत्येवमुक्त्वा स मुनि पुनस्तूष्णीं बभूव ह ।
प्रणम्य पादपद्मञ्च ब्रह्मादिसुरवन्दितम् ॥५१॥
उद्धवस्य वचः श्रुत्वा सस्मिता राधिका सती ।
कौतुकञ्च ददौ तस्मै रत्नसाराङ्गुलीयकम् ॥५२॥
अमूल्यं सुन्दरं रम्यं विश्वकर्मविनिर्मितम् ।
सुखशोभं पीतवर्णं सुदीप्तं सुप्रदीपवत् ॥ ५३॥
कृष्णाय वह्निना दत्तमपूर्वं रासमण्डले ।
मणिकुण्डलयुग्मञ्चामूल्यरत्नविनिर्मितम् ॥५४॥
अमूल्यरत्ननिर्माणं सर्वभूषणभूषितम् ।
वह्निशुद्धांशुकयुगं रत्ननिर्माणनायकम् ॥५५॥
हीरहारविनिर्माणं हारञ्च सुमनोहरम् ।
पुरा दत्तञ्च सुप्रीत्या कृष्णाय वरुणेन च ॥५६॥
श्रीसूर्य्येण च यद्दत्तं श्रीकृष्णाय स्यमन्तकम् ।
प्रदत्तं कौतुकं तस्मै यद्दत्तं हरिणा पुरा ॥५७॥
यद्दत्तञ्च महेन्द्रेण रत्नसिंहासनं परम् ।
तत् प्रदत्तं मुदा देव्या तस्मै प्रीत्या च राधया ॥५८॥
मणीन्द्रसारनिर्माणं छत्ररत्नं मनोहरम् ।
मुक्तामाणिक्यसारेण हीरहारसमन्वितम् ॥५९॥
विचित्ररत्नपद्मेन चित्रितं वारुणं सदा ।
शोभितं परितश्चान्यै रत्ननिर्माणदर्पणैः ॥६०॥
यद्दत्तं ब्रह्मणा प्रीत्या हरये रासमण्डले ।
सुप्रीत्या राधया तत्र प्रदत्तमुद्धवाय च ॥ ६१ ॥

मणिसारविनिर्माणं मणिराजविराजितम् ।
जपामाल्यं संस्कृतञ्च यद्दत्तं शम्भुना पुरा ॥ ६२ ॥
तदेव दत्तं तस्मै चाप्यमूल्यं पुण्यदं शुभदम् ।
जन्ममृत्युजराव्याधिहरञ्चातिमनोहरम् ॥ ६३ ॥
चन्द्रकान्तमणिं रम्यं चन्द्रदत्तं परिष्कृतम् ।
चन्द्रावली ददौ तस्मै सुदीप्तं पूर्णचन्द्रवत् ॥ ६४ ॥
विशुद्धं मधुपर्कञ्च मधुपात्रं यदक्षयम् ।
धर्मेण यत् प्रदत्तञ्च तद्दत्तं प्रियया हरेः ॥ ६५ ॥
जलभोजनपात्रञ्च शुद्धं स्वर्णविनिर्मितम् ।
मिष्टान्नं परमान्नञ्च ददौ सुस्वादु मिष्टकम् ॥ ६६ ॥
भोजनं कारयित्वा च कर्पूरादिसुवासितम् ।
ताम्बूलञ्च ददौ शीघ्रं माल्यं सुस्निग्धचन्दनम् ॥ ६७ ॥
शुभाशिषञ्च प्रददौ वाञ्छितं प्रवरं वरम् ।
ज्ञानकृष्णेन यद्दत्तं गोलोके रासमण्डले ॥ ६८ ॥
पुत्रपाणां शतं यावन्निश्चलां कमलां ददौ ।
विद्यां यशस्करीं शुद्धां यशः कीर्तिं सुनिर्मलाम् ॥ ६९ ॥
सर्वसिद्धिं हरेर्दास्यं हरिभक्तिञ्च निश्चलाम् ।
पार्षदप्रवरत्वञ्च पार्षदञ्च हरेरिति ॥ ७० ॥
वरं प्रसादं दत्त्वा च समुत्थाय मुदान्वितम् ।
वह्निशुद्धांशुके धृत्वा चामूल्यं रत्नभूषणम् ॥ ७१ ॥
हीरहारं रत्नमालां परिधाय मनोहराम् ।
सिन्दूरं कज्जलं पुष्पमाल्यं सुस्निग्धचन्दनम् ॥ ७२ ॥
रत्नसिंहासनस्थं तं पूजिता पूजितं मुदा ।
वेष्टिता हर्षनिरतं गोपीनां शतकोटिभिः ।

तप्तकाञ्चनवर्णाभा शतचन्द्रसमप्रभा ॥ ७३ ॥

श्रीराधिकोवाच ।

सत्यमायास्यति हरिः सत्यं निष्कपटं वद ।
वद तथ्यं भयं त्यक्त्वा सत्यं ब्रूहि सुसंसदि ॥ ७४ ॥
वरं कूपशताद्वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात् पुत्रः सत्यं पुत्रशतात्किल ।
न हि सत्यात्परो धर्मो नानृतात्पातकं परम् ॥ ७५

उद्धव उवाच ।

सत्यमायास्यति हरिः सत्यं द्रक्ष्यसि सुन्दरि ।
ध्रुवं त्यक्ष्यसि सन्तापं दृष्ट्वा चन्द्रमुखं हरेः ॥ ७६ ॥
मद्दर्शनान्महाभागे गतस्ते विरहज्वरः ।
नानाभोगं सुखं भुंक्ष्व त्यज चिन्तां दुरत्ययाम् ॥ ७७
अहं प्रस्थापयिष्यामि गत्वा मधुपुरीं हरिम् ।
विधाय तत्प्रबोधञ्च कार्यमन्यत् करिष्यति ॥ ७८ ॥
विदायं कुरु मे मातर्यास्यामि हरिसन्निधिम् ।
सर्वं तं कथयिष्यामि तद्वृत्तान्तं यथोचितम् ॥ ७९

श्रीराधिकोवाच ।

गमिष्यसि यदा वत्स मथुरां सुमनोहराम् ।
शृणु दुःखकथां काञ्चित्तिष्ठ वत्स स्थिरो भव ॥ ८० ॥
मां विस्मृतो न भवसि विरहज्वरकातराम् ।
कथयिष्यामि मत्कान्तं ध्रुवं प्रस्थापयिष्यसि ॥ ८१
नारीणां मनसो वार्तां को वा जानाति पण्डितः ।
किञ्चिच्छास्त्रानुसारेण प्रकरोति निरूपणम् ॥ ८२ ॥
वेदा वक्तुं न शक्ताश्च शास्त्राणि किं वदन्ति च ।

कथयिष्यामि त्वां सर्वं पुत्र कृष्णश्च वक्ष्यसि ॥ ८३ ॥
गेहे वने न भेदो मे पश्वादिषु यथा नृषु।
किंवा जलं किमु स्वप्नमज्ञानञ्च दिवानिशम् ॥ ८४ ॥
आत्मानञ्च न जानामि चोदयं चन्द्रसूर्य्ययोः।
क्षणं प्राप्य हरेर्वार्तां चेतनं मे बभूव ह ॥ ८५ ॥
कृष्णाकृतिञ्च पश्यामि शृणोमि मुरलीध्वनिम्।
कुलं लज्जां भयं त्यक्त्वा चिन्तयामि हरेः पदम् ॥ ८६ ॥
सम्प्राप्य सर्वजगतामीश्वरं प्रकृतेः परम्।
न ज्ञानं मायया तस्य ज्ञात्वा गोपपतेर्मम ॥ ८७ ॥
ध्यायन्ते यत्पदाम्भोजं वेदा ब्रह्मादयः सुराः।
स भर्त्सितो मया कोपात् हृदि शल्यमिदं मम ॥ ८८ ॥
तत्पदाम्भोजसेवाभिर्गुणप्रस्तावतोऽपि वा।
तद्भक्त्या यत्क्षणो नीतो ध्यानेन पूजयाथवा ॥ ८९ ॥
तत्रापि मङ्गलं सर्वं हर्षमायुर्व्यवस्थितम्।
विघ्नञ्च हृदि सन्तापस्तद्विच्छेदे सदोद्धव ॥ ९० ॥
क्रीड़ाप्रीतिर्न भविता तादृशीष्टा पुनर्मम।
तादृशं प्रेमसौभाग्यं निर्जनेन च सङ्गमः ॥ ९१ ॥
वृन्दावनं न यास्यामि तत्सङ्गे पुनरुद्धव।
चन्दनं वा न दास्यामि नन्दनन्दनवक्षसि ॥ ९२ ॥
मालां तस्मै न दास्यामि न द्रक्ष्यामि मुखाम्बुजम्।
मालतीनां केतकीनां चम्पकानाञ्च काननम् ॥ ९३ ॥
पुनरेव न यास्यामि सुन्दरं रासमण्डलम्।
हरिसङ्गे न यास्यामि रम्यं चन्दनकाननम् ॥ ९४ ॥
पुनरेव न यास्यामि मलयं रत्नमन्दिरम्।

माधवीनां वनं रम्यं रहस्यं मधुकाननम् ॥ ९५ ॥
श्रीखण्डकाननं रम्यं स्वच्छं चन्द्रसरोवरम् ।
विस्पन्दकं सुरवनं नन्दनं पुष्पभद्रकम् ॥ ९ ६॥
भद्रकं हरिणा सार्द्धं न यास्यामि पुनः पुनः ।
क्व सा रम्या विकसिता माधवे माधवीलता ॥ ९७
क्व गता माधवी रात्रिः क्व मधुः क्वापि माधवः ।
इत्येवमुक्त्वा सा राधा ध्यात्वा कृष्णपदाम्बुजम् ।
पुनर्मूर्च्छाञ्च सम्प्राप्य रुदती पुलकान्विता ॥ ९८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे राधोद्धवसंवादे
त्रिनवतितमोऽध्यायः ।

---

## चतुर्नवतितमोऽध्यायः ।

---

श्रीनारायण उवाच ।

उद्धवो विस्मयं प्राप्य भयञ्च विपुलं मुने ।
चेतनं कारयामास तामुवाच मृतामिव ॥ १ ॥
तद्भक्तिं समभिज्ञाय स्वात्मानं भक्तसंज्ञकम् ।
तुच्छं मेने जगत्सर्वं दृष्ट्वा भाग्यवतीं सतीम् । २ ॥

उद्धव उवाच ।

चेतनं कुरु कल्याणि जगन्मातर्नमोऽस्तु ते ।

त्वमेव प्राकृतं सर्वं कृष्णं द्रक्ष्यसि साम्प्रतम् ॥ ३ ॥
त्वत्तो विश्वं पवित्रञ्च त्वत्पादरजसा मही।
सुपवित्रं त्वद्वदनं पुण्यवत्यश्च गोपिकाः॥ ४ ॥
लोकास्त्वामेव गायन्ति गीतैर्मङ्गलसंस्तवैः।
त्वत्सुकीर्तिञ्च वेदाश्च सनकाद्याश्च सन्ततम् ॥ ५ ॥
कृतपापहरां पुण्यां तीर्थपूजाञ्च निर्मलाम्।
हरिभक्तिप्रदां भद्रां सर्वविघ्नविनाशिनीम् ॥ ६ ॥
त्वमेव राधा त्वं कृष्णस्त्वं पुमान् प्रकृतिः परा।
राधामाधवयोर्भेदो न पुराणे श्रुतौ तथा ॥ ७ ॥
राधिकां मूर्च्छितां दृष्ट्वा पश्चात् कृत्वा तमुद्भवम्।
उवाच माधवी गोपी राधायाः पुरतः स्थिता ॥ ८ ॥

माधव्युवाच।

किंवा चौरस्य कृष्णस्य रूपं वा वेशमुत्तमम्।
किं सुखं विभवं किंवा गौरवञ्चाप्यनुत्तमम् ॥ ९ ॥
किंवा तद्वीर्य्यमैश्वर्य्यं शौर्य्यं वा दुरतिक्रमम्।
किंवा सिद्धं प्रसिद्धं वा किंवा तुल्यं गुणोत्तमम् ॥१०॥
इतो वा कुत आयातः पुनरेव कुतो गतः।
बालको गोपवेशश्च न हि राजात्मजः पुमान् ॥ ११ ॥
त्वं किं स्मरसि कल्याणि गोपालं नन्दनन्दनम्।
आत्मानं रक्ष यत्नेन कः प्रियः स्वात्मनः परः ॥ १२ ॥

मालत्युवाच।

धिक् त्वां राधेति निर्लज्जां तवैव जीवनं वृथा।
जगतो युवतीनाञ्च करोषि सुयशःक्षयम् ॥ १३ ॥

नारीणां गोपनं कार्य्यं सुव्यक्तेऽपि स्वयशःचये।
यत्नेन चक्षुषो बाह्यं सखि सञ्चरणं कुरु॥ १४ ॥
अन्तरे पतिभावञ्च सङ्गोप्य भावनं कुरु।
न वै जातिश्च शत्रूणां मित्राणाञ्च सुरेश्वरि॥ १५ ॥
शत्रुः कार्य्यवशेनैव मित्रञ्च कर्मणा भवेत्।
स्वकार्य्यमुद्धरेत् प्राज्ञः कार्य्यध्वंसेन मूर्खता॥ १६ ॥
कः कस्य वल्लभो राधे कः कस्याप्रिय एव च।
कार्य्यञ्च समयं ज्ञात्वा सन्तः कुर्वन्ति सन्ततम्॥ १७
शत्रुर्धनापहारी च प्राणहर्ता ततः परः।
कटुवक्ता दुःखदाता शत्रूणां लक्षणं शृणु॥ १८ ॥
स्वकुलात् त्वां वहिष्कृत्य विसृज्य शोकसागरे।
गृहीत्वा चेतनं प्राणान्निष्ठुरो दारुणो गतः॥ १९ ॥
किं किं स्मरसि मूढ़े हि त्यज शोकं सुदारुणम्।
आत्मानं रक्ष यत्नेन कः प्रियः स्वात्मनः परः॥ २० ॥

पद्मावत्युवाच।

भवता कथितं पूर्णं यमुनाजलसन्निधौ।
अरसस्यं रतिदूरं नारीणां न सुखं प्रिये॥ २१ ॥
विद्युज्ज्वाला जले रेखा खलानां प्रीतिरेव च।
न नीतिर्नीतिशास्त्रेषु सुविश्वासः खलेषु च॥ २२ ॥
यदा त्वं यमुनाकूले मुखं वीक्ष्य हरेरहो।
सस्मितं सुकटाक्षञ्च पुनः कृत्वास्य गोपनम्॥ २३ ॥
पुनः पुनस्त्वं संवीक्ष्य त्वया त्यक्तञ्च चेतनम्।
गृहं त्यक्त्वा गुरुभयं सखीनां वचनं शुभम्॥२४॥
सन्ततं ध्यायते कृष्णं नाहारं जीवनं तथा।

क्व कृष्णो मथुरायाञ्च क्वापि त्वं कदलीवने ॥ २५ ॥
त्वं यदि त्यक्ष्यसि प्राणानाविर्भवति सोऽधुना ।
काले द्रक्ष्यसि स्वात्मानं यदि रक्षसि सुन्दरि ॥ २६ ॥

चन्द्रमुख्युवाच ।

प्राक्तनेन शुभं सर्वं सुखञ्च विभवश्चिरम् ।
दुःखं शोकं प्राक्तनेन विपत् सम्पच्च साम्प्रतम् ॥ २७ ॥
भारते पुण्यभूमौ च सर्वेषामीप्सिते वरे ।
लभेत् पतिं हरिं कान्तं तपसा प्रकृतेः परम् ॥ २८ ॥
तथा विप्रदहेन्नात्र कामबाणेन साम्प्रतम् ।
अस्याः शत्रुः कथं चन्द्रो मधुर्वा मधुमाधवौ ॥ २९ ॥
शङ्करेण प्रदग्धोऽभूत् पुनरेव स मन्मथः ।
चन्द्रं भक्षतु राहुश्च पुनश्चोद्गमनं तथा ॥ ३० ॥
मधुश्च मित्रशोकेन प्राणांस्त्यक्त्वा ययौ वनम् ।
सुधासिन्धुश्च चेन्दुर्यो विषसिन्धुश्च मां प्रति ॥ ३१ ॥
सुवेशोऽस्या ज्वलद्वह्निश्चन्दनं तत्घृताहुतिः ।
सन्ततं प्रदहेन्नात्र सुगन्धिश्च समीरणः ॥ ३२ ॥
त्यक्ताहारा मम सखी पश्य श्वसितजीवतीम् ।
प्रशंसां कुरु कृष्णस्य मुखेन कुरुनन्दन ॥ ३३ ॥
तन्नामस्मृतिमात्रेण तद्गुणश्रवणेन च ।
तद्वार्तया च शुभया सहसा चेतनं भवेत् ॥ ३४ ॥

शशिकलोवाच ।

त्वं किं माधवि जानासि कृष्णमात्मानमीश्वरम् ।
यं तं ब्रह्मादयो देवा वेदाश्चत्वार एव च ॥ ३५ ॥

ध्यायन्ति सन्ततं सन्तः पादपद्मं सुरेप्सितम् ।
पद्मा सरस्वती दुर्गा सोऽनन्तोऽपि महेश्वरः ॥ ३६ ॥
यं न जानन्ति सिद्धेन्द्रा मुनीन्द्रा मनवस्तथा ।
सर्वात्मनः कुतो रूपं निर्गुणस्य कुतो गुणाः ॥ ३७ ॥
सत्यमुक्तञ्च सत्यस्य यत्तदेव यथोचितम् ।
धत्ते भारावतरणे पृथिव्याश्च मनोहरम् ॥ ३८ ॥
सुखमाह्लादकं रम्यं भक्तानुग्रहविग्रहम् ।
किमनिर्वचनीयञ्च रूपं जनमनोहरम् ॥ ३९ ॥
कोटिकन्दर्पलावण्यं लीलाधाम शुभाश्रयम् ।
यत्पादपद्ममधुरं मधु मन्दाकिनीजलम् ॥ ४० ॥
दध्रे शिरसि भक्त्या च सर्वेशः शङ्करः परः ।
शश्वत् करोति वैरागी तीर्थकीर्तेश्च कीर्तनम् ॥ ४१ ॥
नग्नं नृत्यति भक्त्या च पञ्चवक्त्रेण गायति ।
आहारं भूषणं वस्त्रं परित्यज्य दिगम्बरः ॥ ४२ ॥
ब्रह्मज्योतिस्वरूपञ्च ध्यात्वा शुभ्रं सुनिर्मलम् ।
ब्रह्मा च तपसा जन्म नयत्येव हि सेवया ।
शेषः सनत्कुमारश्च सिद्धसङ्घश्च योगवित् ॥ ४३ ॥

सुशीलोवाच ।

निर्मन्थनाहं न भवेत्तस्य कामशतं शतम् ।
चन्द्रोऽश्विनीकुमारौ वा रूपेषु केन गुण्यते ॥ ४४ ॥
असंख्येषु च विश्वेषु ब्रह्मविष्णुशिवादयः ।
मुनयो मनवः सिद्धा भक्ताः सन्तश्च सन्ततम् ॥ ४५ ॥
ध्यायन्ते यत्पदाम्भोजं निर्गुणस्यात्मनश्च वै ।
वेदाः स्तोतुं न शक्ताश्च यमीशञ्च सरस्वती ॥ ४६ ॥

जडीभूता च भीता च स्तवनेन क्षमापयेत् ।
सहस्रवक्त्रस्तवने कम्पितश्च निरन्तरम् ॥ ४७ ॥
वेदानां जनको ब्रह्मा स्तोत्रेण तस्य हीश्वरः ।
तं सत्यं नित्यमीशञ्च माधवी परिनिन्दति ॥ ४८ ॥
अपवित्रा सभाभूता गोपीनां जीवनं वृथा ।
तासु पुण्यवती राधा ध्यायते यं दिवानिशम् ॥ ४९ ॥
यन्नामस्मृतिमात्रेण कोटिजन्मार्जितं सखि ।
कृतं पापभयं शोकः प्रणश्यति न संशयः ॥ ५० ॥

रत्नमालोवाच ।

दधार वामहस्तेन शैलं गोवर्धनं हरिः ।
ततः किं तद्यशः शौर्य्यं जगतां जनकस्य च ॥ ५१ ॥
शैलानाञ्च सहस्रं यो भेत्तुं शक्तश्च दैत्यराट् ।
लीलामात्रेण तेषाञ्च लक्षं हन्तुं क्षमो हरिः ॥ ५२ ॥
यदंशकलया जातः शूकरो विष्णुरीश्वरः ।
वसुधां दशनाग्रेण चोद्दधार च लीलया ॥ ५३ ॥
शैलानाञ्च सहस्राणि यत्र सन्ति महीतले ।
दैत्याश्च वाप्यसंख्याश्च वीराः शूरास्तथैव च ॥ ५४ ॥
तेनैव कर्मणा तस्य न शौर्य्यं न च पौरुषम् ।
न यशश्च प्रशंसा वा सखि सर्वात्मनात्मना ॥ ५५ ॥

पारिजातोवाच ।

सप्तद्वीपा च वसुधा सशैलवनसागरा ।
काञ्चनीभूमिसहिता सर्वाधारा मनोहरा ॥ ५६ ॥
सप्तस्वर्गाश्च विविधा ब्रह्मलोकावधि प्रिये ।
विचित्राः सुन्दराश्चैव पातालानाञ्च सप्त च ॥ ५७ ॥

एतैः परिमितं विश्वं ब्रह्माण्डं ब्रह्मणा कृतम् ।
महाविष्णोर्लोमकूपे तदेवं चाणुवत् स्थितम् ॥ ५८ ॥
तस्य यावन्ति लोमानि तानि विश्वानि सन्ति च ।
स एव षोड़शांशश्च कृष्णस्य परमात्मनः ॥ ५९ ॥
तस्यैव किं यशः शौर्य्यं महिमानमनूपमम् ।
यत् स्मरी गोपकन्या च किंवा जानाति माधवी ॥६०॥

माधव्युवाच

मया यदुक्तं न ज्ञात्वा मूढ़ा जल्पन्ति गोपिकाः ।
उद्धव शृणु मे वाक्यं यन्मया कथितं शुभम् । ६१ ॥
स्वेच्छया सगुणो विष्णुः स्वेच्छया निर्गुणो भवेत् ।
भुवो भारावतरणे गोपवेशः शिशुर्विभुः ॥ ६२ ॥
यदि वेदाः पुराणानि सिद्धाः सन्तश्च सन्ततम् ।
ब्रह्मेशशेषभक्ताश्च न जानन्ति यमीश्वरम् ॥ ६३ ॥
तं किं जानामि मूढ़ाहं यत्स्मरी गोपकन्यका ।
तथापि मद्वचः सत्यं श्रूयतां वत्स तत्त्वतः ॥ ६४ ॥
किमनिर्वचनीयञ्च रूपं शौर्य्यं यशो बलम् ।
वीर्य्यं वेशञ्च सिद्धिं चाप्यन्यो वा यो गुणो हरेः ॥ ६५ ॥
स्वेच्छामयस्य तस्यैव सगुणस्य च साम्प्रतम् ।
किमनिर्वचनीयञ्च वर्त्तते तद्विशेषणम् ॥ ६६ ॥
निर्गुणस्य च विष्णोश्च देहहीनस्य स्वात्मवान् ।
वर्त्तते च किमाख्येयं तस्य रूपादिकञ्च किम् ॥ ६७ ॥
मां निन्दति महामूढ़ा न बुद्धा वचनं मम ।
एषा जानाति किं मूढ़ा तं सत्यं प्रकृतेः परम् ॥ ६८ ॥
ज्योतिःस्वरूपं परमं परमात्मानमीश्वरम् ।

तमनिर्वचनीयञ्च भक्तानुग्रहविग्रहम् ॥ ६९ ॥
यत्पादपद्मं पद्मा सा वै लोकजननी परा ।
सेवते कम्पिता भीता दासीवत् सततं भिया ॥ ७० ॥
विष्णुमाया च प्रकृतिर्मूलरूपा सनातनी ।
ब्रह्मस्वरूपा परमा भीता दक्षिणपार्श्वतः ॥ ७१ ॥
सरस्वती जड़ीभूता भीता च परमेश्वरी ।
स्तोतुं न शक्ता वेदाः किं स्तुवन्ति परमेश्वरम् ॥ ७२ ॥
तासां तद्वचनं श्रुत्वा चोद्धवो भक्तिविह्वलः ।
पुलकाञ्चितसर्वाङ्गो रुरोद च पपात च ॥ ७३ ॥
मूर्च्छां सम्प्राप्य भक्त्या च ध्यात्वा तं परमेश्वरम् ।
तुच्छं मेने स चात्मानं गोपीं भक्त्याप्युवाच सः ॥ ७४ ॥

उद्धव उवाच ।

धन्यं यशस्यं द्वीपानां जम्बुद्वीपं मनोहरम् ।
यत्र भारतवर्षञ्च पुण्यदं शुभदं तथा ॥ ७५ ॥
वणिजाञ्च पुण्यकृतं वाणिज्यस्थलमीप्सितम् ।
अत्र कृत्वा सुपुण्यञ्च भुङ्क्तेऽन्यत्र शुभं फलम् ॥ ७६ ॥
धन्यं भारतवर्षञ्च पुण्यदं शुभदं वरम् ।
गोपीपादाब्जरजसा पूतं परमनिर्मलम् ॥ ७७ ॥
ततोऽपि गोपिका धन्या मान्या योषित्सु भारते ।
नित्यं पश्यन्ति राधायाः पादपद्मं सुपुण्यदम् ॥ ७८ ॥
षष्टिवर्षसहस्राणि तपस्तप्तञ्च ब्रह्मणा ।
राधिकापादपद्मस्य रेणूनामुपलब्धये ॥ ७९ ॥
गोलोकवासिनी राधा कृष्णप्राणाधिका परा ।
तत्र श्रीदामशापेन वृषभानसुताधुना ॥ ८० ॥

ये ये भक्ताश्च कृष्णस्य देवा ब्रह्मादयस्तथा।
राधायाश्चापि गोपीनां कलां नार्हन्ति षोड़शीम् ॥८१
कृष्णभक्तिं विजानाति योगीन्द्रश्च महेश्वरः।
राधागोप्यश्च गोपाश्च गोलोकवासिनश्च ये ॥ ८२ ॥
किञ्चित्सनत्कुमारश्च ब्रह्मा चेद्विषयी तथा।
किञ्चिदेव विजानन्ति सिद्धा भक्ताश्च निश्चितम् ॥८३॥
धन्योऽहं कृतकृत्योऽहमागतो गोकुलं यतः।
गोपिकाभ्यो गुरुभ्यश्च हरिभक्तिं लभेऽचलाम् ॥ ८४ ॥
मथुरां च न यास्यामि तीर्थकीर्त्तेश्च कीर्तनम्।
श्रोष्यामि किङ्करो भूत्वा गोपीनां जन्मजन्मनि ॥ ८५
न गोपीभ्यः परो भक्तो हरेश्च परमात्मनः।
यादृशीं लेभिरे गोप्यो भक्तिं नान्ये च तादृशीम् ॥८६

कलावत्युवाच।

पितॄणां मानसी कन्या धन्या मेना कलावती।
वयं तिस्रो भगिन्यश्च भ्रमामः पृथिवीतले ॥ ८७ ॥
धन्या जनकपत्नी च सीतामाता पतिव्रता।
अयोनिसम्भवा राधा अहं चायोनिसम्भवा ॥ ८८ ॥
राधा श्रीदामशापेन वृषभानसुता भुवि।
सनत्कुमारशापेन वयमेव महीतले ॥ ८९ ॥
क्षीरोदसागरं रम्यं श्वेतद्वीपं मनोहरम्।
तिस्रो भगिन्यो भक्त्या च विष्णुं द्रष्टुं गता वयम् ॥९०॥
अभ्युत्थानादि न कृतं कोपादस्मान् शशाप ह।
सनत्कुमारो भगवान् योगीन्द्राणां गुरुर्गुरुः ॥ ९१ ॥

सनत्कुमार उवाच ।

मूढ़ास्तिष्ठत भूमौ च पुनः स्वर्गं न यास्यथ ।
मर्त्यप्राणिप्रिया भूत्वा चाहङ्कारेण हेतुना ॥ ९२ ॥
पुनर्वरञ्च प्रत्येकं ददौ तुष्टो द्विजेश्वरः ।
विष्णोर्वंशस्य शैलस्य हिमाधारस्य कामिनी ॥ ९३ ॥
ज्येष्ठा भवतु त्वत्कन्या भविष्यत्येव पार्वती ।
धन्या प्रिया तु भवतु योगिनो जनकस्य च ॥ ९४ ॥
तस्य कन्या महालक्ष्मीः सीतादेवी भविष्यति ।
वृषभानस्य वैश्यस्य योगिनां प्रवरस्य च ॥ ९५ ॥
दुर्वाससश्च शिष्यस्य कनिष्ठा च कलावती ।
भविष्यति प्रिया साध्वी द्वापरान्ते च गोकुले ॥ ९६ ॥
कलावतीसुता राधा देवी गोलोकवासिनी ।
श्रीदामगोपशापेन भविष्यति न संशयः ॥ ९७ ॥
ईशो ब्रह्मेशशेषाणां भारावतारणेन च ।
आगमिष्यति पृथ्वीञ्च पुण्यक्षेत्रञ्च भारतम् ॥ ९८ ॥
कलावती वृषभानः कौतुकात् कन्यया सह ।
जीवन्मुक्तश्च गोलोकं गमिष्यति न संशयः ॥ ९९ ॥
धन्या च सीतया सार्द्धं वैकुण्ठञ्च गमिष्यति ।
मेनका योगिनी सिद्धा पार्वत्याश्च वरेण च ॥ १०० ॥
कल्पान्ते विष्णुलोके च लक्ष्मीवक्षोदले चिरम् ।
विना विपत्त्या महिमा केषां कुत्र भविष्यति ॥ १०१ ॥
कर्मणा च गते दुःखे प्रभवेद्दुर्लभं सुखम् ।
पुरा पितॄणां कन्याश्च स्वर्गभोगविलासिकाः ॥ १०२ ॥
लक्ष्मीसमा वरेणापि विप्रस्य विष्णुदर्शनात् ।

कर्मचयश्चाप्यस्माकं बभूव विष्णुदर्शनात् ॥ १०३ ॥
पुण्येन तेन तीव्रेण कुमारस्यापि दर्शनम् ।
श्रुतं तव कुमारास्यात् ज्ञानं परमदुर्लभम् ॥ १०४ ॥
ब्रह्मविष्णुशिवादीनां सिद्धानां जगतामपि ।
ईश्वरः परमात्मा च श्रीकृष्णः प्रकृतेः परः ।
निर्गुणश्च निरीहश्च परः स्वेच्छामयो वरः ॥ १०५ ॥

तुलस्युवाच ।

सर्वप्राणिषु देवाश्च तिष्ठन्त्येव पृथक् पृथक् ।
प्राणो विष्णुश्च विषयी मनो ब्रह्मा च चेतना ॥ १०६
प्रकृतिर्बुद्धिरूपा च सर्वशक्त्याधिदेवता ।
ज्ञानस्वरूपः शम्भुश्च स्वयं धर्मश्च पूरुषः ॥ १०७ ॥
निर्गुणः परमात्मा च तद्ब्रह्म प्रकृतेः परम् ।
स एव कृष्णः साक्षी च कर्मणां जीविनामपि ॥१०८॥
भोक्ता च सुखदुःखानां जीवस्तत्प्रतिबिम्बकः ।
चक्षुषोश्चन्द्रसूर्यौ च जिह्वायाञ्च सरस्वती ॥ १०९ ॥
वसुन्धरा त्वचि सदा बाह्वोस्ते लोकपालकाः ।
आत्मनश्चापि ते सर्वे परिचारकरूपिणः ॥ ११० ॥
आत्मन्येव प्रियास्ते च सर्वे गच्छन्ति जीविनः ।
यथा संसदि संसारे नरदेहमिवानुगाः । १११ ॥
तस्मात्सर्वात्मनात्मानं भजन्ति सन्ततं सदा ।
सन्तश्च परया भक्त्या ध्यायन्ते योगिनो मुदा ॥ ११२ ॥
कर्मिणां कर्मणा साक्षी कुतः कर्म च गोपनम् ।
अन्तर्यामी च कृष्णश्च प्रचारं कुरुते मुदा ॥ ११३ ॥

कालिकोवाच ।

नरा बालाश्च वृद्धाश्च युवानस्त्रिविधास्तथा ।
देवादयश्च ये सिद्धाः सर्वे जानन्ति तं परम् ॥११४॥
साम्प्रतं मूर्च्छितां राधां युक्तो बोधयितुं बुधः ।
अत युक्तिः प्रधाना च तां प्रबोधय चोद्धव ॥ ११५॥

उद्धव उवाच ।

चेतनं कुरु कल्याणि जगन्मातर्निबोध माम् ।
उद्धवं कृष्णभक्तस्य किङ्करस्यापि किङ्करम् ॥११६॥
प्रसादं कुरु मातर्मां यास्यामि मथुरां पुनः ।
न स्वतन्त्रः पराधीनो योषा दारुमयी यथा ।
यथा वृषो वशीभूतो वृषवाहस्य सन्ततम् ॥११७॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे राधोद्धवसंवादे
चतुर्नवतितमोऽध्यायः ।

---

## पञ्चनवतितमोऽध्यायः ।

श्रीनारायण उवाच ।

उद्धवस्य वचः श्रुत्वा चेतनं प्राप्य राधिका ।
सा चोवाच समुत्थाय रत्नसिंहासने वरे ॥ १ ॥
उवाच मधुरं देवी हृदयेन विदूयता ।

गोपीभिः सप्तभिर्भक्त्या सेविता श्वेतचामरैः ॥२॥

श्रीराधिकोवाच ।

मथुरां गच्छ वत्स त्वं मा च विस्मर सम्पदा ।
अतोऽप्यधर्मो नास्त्येव भवतो भवसागरे ॥ ३ ॥
मदीयं वचनं सर्वं गत्वा कथय साम्प्रतम् ।
श्रीकृष्णं परमानन्दं शीघ्रमानय मत्प्रभुम् ॥ ४ ॥
योषिज्जन्मनि योषित्सु संप्राप्य तादृशं पतिम् ।
भेदो बभूव कस्या वा मदन्या कापि दुःखिनी ॥५॥
किं ददासि प्रबोधं मे नास्ति मे बोधमोचितम् ।
निष्फलो देहिनां देहो विनात्मानं सदोद्धव ॥६॥
संप्रीत्या सह सौभाग्यं गौरवं नित्यनूतनम् ।
अतीवदुर्लभं प्रेमरहस्यं नवसङ्गमम् ॥ ७ ॥
स्मरामि मनसा शश्वन्नान्यो मनसि वर्त्तते ।
रात्रौ निद्रां परित्यज्य स्मरणं शोकवर्धनम् ॥ ८ ॥
मामुद्धर ध्रुवं वत्स निमग्नां शोकसागरे ।
जीवाभयप्रदानेन तीर्थे स्नानफलं नृणाम् ॥९॥
प्रबोधितुं न शक्नोमि दुर्निवारञ्च मानसम् ।
चिन्तये चरणाम्भोजं कृष्णस्य परमात्मनः ॥१०॥
तद्गुणं महिमानञ्च प्रीतिञ्च प्रेमसागरम् ।
स्मारं स्मारञ्च सौभाग्यं मनो मे न स्थिरं चिरम् ॥११॥
जगतां युवतीनाञ्च कासां वा दुःखमीदृशम् ।
श्रीकृष्णभेददुःखञ्च का वा जानाति मां विना ॥१२॥
किञ्चिज्जानाति सीता साप्यहञ्च विधिबोधितम् ।
मत्परा दुःखिनी नास्ति कामिनीषु जगत्त्रये ॥१३॥

का वा याति प्रतीतिं मे श्रुत्वा च मानसीं व्यथाम् ।
कासां वा मत्समं दुःखं युवतीनां सुताद्भव ॥१४॥
राधिकासदृशी स्त्रीषु न भूता न भविष्यति ।
दुःखिनी विरहातप्ता सुखसौभाग्यवर्जिता ॥१५॥
सम्प्राप्य कल्पवृक्षञ्च पतिञ्च जगतां पतिम् ।
वञ्चिताहं विधात्रा च निर्दयेन च पापिना ॥१६॥
जीवनं सफलं जन्म सुस्निग्धं चक्षुषी मनः ।
तत्पादपद्मवक्त्रेन्दुरूपवेशप्रदर्शनात् ॥ १७ ॥
यन्नामस्मृतिमात्रेण पञ्चप्राणाः प्रहर्षिताः ।
स्मृतिमात्रात् प्रफुल्यन्ते आत्मा सुस्निग्ध एव च ॥१८॥
यस्य पस्पर्श सुरतौ यशस्त्रिभुवनेष्वपि ।
कया वा सम्पदा वत्स विस्मरामि तमीश्वरम् ॥१९॥
त्रैलोक्यविजयं रूपं गुणमेव बिभर्ति यत् ।
न निर्मितो यो विधिना तेनैव निर्मितो विधिः ॥२०॥
तं विधेश्च विधातारं दातारं सर्वसम्पदाम् ।
कल्पवृक्षात्परं शान्तं लक्ष्मीकान्तं मनोहरम् ॥२१॥
सर्वेशं सर्ववीजञ्च परमात्मानमीश्वरम् ।
कया वा सम्पदा तात विस्मरामि च तं पतिम् ॥२२॥
यस्य निर्मन्यनार्हेञ्च न चन्द्रो न च मन्मथः ।
नैवाश्विनीकुमारश्च गुणसाम्यं न विश्वतः ॥२३॥
ध्यायन्ते यत्पदाम्भोजं ब्रह्मेशशेषसंज्ञकाः ।
कया वा सम्पदा तात विस्मरामि च तं प्रभुम् ॥२४॥
स्वप्ने पश्यन्ति ये रूपमतुलञ्च मनोहरम् ।
तेऽपि सर्वं परित्यज्य ध्यायन्ते तमहर्निशम् ॥२५॥

गुणेन शैत्यः सलिलं शु क्रकाष्ठं द्रवेदिति ।
मृतहृत्यो मुकुलितः स्तम्भितश्च समीरणः ॥२६॥
सूर्य्यश्च जलधिश्चैव स्त गितो भक्तिभावतः ।
कया वा सम्पदा पु त्र विस्मरामि च तं प्रियम् ॥२७॥
यद्भयाद्वाति वातोऽयं सूर्य्यस्तपति यद्भयात् ।
वर्षतीन्द्रो दहत्यग्नि र्मृत्युश्चरति जन्तुषु ॥२८॥
यद्भयात् फलिता वृ क्षाः पुष्पिताः समयेऽपि च ।
समुद्राः स्वात्मवि ये ग्रहाश्च मुनयः सुराः ॥ २९ ॥
कालस्य कालः सं वर्त्तः संहर्त्ता स्रष्टुरीश्वरः ।
स्वाधीनश्च स्वतन्त्रश्च स्वयमेवात्मसंज्ञकः ॥ ३० ॥
कया वा सम्पदा भ क्ता विस्मरामि च तं प्रभुम् ।
प्रबोधो नास्ति तद्भे दे येन मां बोधयेद् बुधः ॥३१॥
माञ्च बोधयितुं शक्त ा न सावित्री सरस्वती ।
न वेदा न च वे दाङ्गाः के वा सन्तश्च के सुराः ॥३२॥
सहस्रवक्त्रोऽनन्त स्तश्च वेदानां जनको विधिः ।
न शम्भुर्न गुर्व णेशश्च योगीन्द्राणां गुरोर्गुरुः ॥३३॥
स्थितेर्गतिश्चि न्तनीया मार्गशून्ये कुतो गतिः ।
कालसाध्यञ्च सर्वञ्च सुखं दुःखं शुभाशुभम् ॥३४॥
दुर्निवारः स कालश्च कालसाध्यं जगत्सु च ।
उत्तिष्ठ मथुरां गच्छ सुखं वस मनोहरम् ॥३५॥
व्रजवासं परित्यज्य भवांश्च गमनोत्सुकः ।
सुचिरं कृष्णविच्छेदो दुःखाय न सुखाय च ॥३६॥
पश्य चन्द्रमुखं तस्य जन्ममृत्युजरापहम् ।
राधिकावचनं श्रुत्वा रुरोद भृशमुद्धवः ।

रुदन्तीं राधिकां दृष्ट्वा बन्धुविच्छेदकातराम् ॥३७॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे राधोद्धवसंवादे
पञ्चनवतितमोऽध्यायः ।

---

## षण्णवतितमोऽध्यायः ।

——०:०——

श्रीनारायण उवाच ।

श्रीकृष्णस्मरणं कृत्वा गमनोन्मुखमुद्धवम् ।
नतं राधापदाम्भोजे शिरसा पुलकाञ्चितम् ॥ १ ॥
उवाच माधवी गोपी रुदन्ती प्रेमविह्वला ।
भक्तं रुदन्तमुच्चैश्च राधाविच्छेदकातरम् ॥२॥

माधव्युवाच ।

उद्धव शृणु वक्ष्यामि क्षणं तिष्ठ यथोचितम् ।
निगूढं परमं ज्ञानं यत्ते मनसि वाञ्छितम् ॥३॥
सुदुर्लभं पुराणेषु वेदेषु गोपनीयकम् ।
प्रश्नं कुरु महाभाग राधिकां त्रिजगत्प्रसूम् ॥ ४ ॥
इत्युक्त्वा सा च गोपीशा समुवास सुसंसदि ।
उवाच मधुरं शान्तामुद्धवश्चापि राधिकाम् ॥ ५ ॥

उद्धव उवाच ।

एकाकी भव मायाति यात्येकाकी पुनः पुनः ।
प्राणी कर्मानुरोधेन स्वकर्मफलभुक् पुमान् ॥६॥

कर्मणा जायते जन्तुः कर्मणैव प्रलीयते ।
सुखं दुःखं भयं शोकः कर्मणैवाभिपद्यते ॥ ७ ॥
जन्तुर्भोगावशेषेण भोगं भुङ्क्ते भवेषु च ।
पुनश्च कर्मणो भोगात्समायाति च याति च ॥८॥
रत्नादिकञ्च यत् किञ्चित् मह्यं दत्तं त्वया सति ।
मया सार्द्धं न यात्येव तेन मे किं प्रयोजनम् ॥ ९
भवाब्धितारणे देवी भवती तरणीवरा ।
कर्णधारः स्वयं कृष्णः सर्वेषां पारकारकः ॥१०॥
किञ्चिद्दानं देहि मह्यं भवाब्धिपारकारणम् ।
प्राप्य प्रसादं यास्यामि मथुरां कृष्णमूलकम् ॥११॥
यां यां कालगतिं मातः सुराणाञ्च नृणामपि ।
पितॄणां ब्रह्मलोकस्य तदूर्ध्वस्य च तां वद ॥१२॥
तामेव दुस्तरां घोरां तीर्त्वा यामि हरेः पदम् ।
एवम्भूतमुपायञ्च देहि मे कमलालये ॥ १३ ॥
दूरतो यत्पदाम्भोजं ध्यायन्ति च दिवानिशम् ।
देवा ब्रह्मेशशेषाद्यास्त्वं तद्वक्षःस्थलस्थिता ॥१४॥
उद्धवस्य वचः श्रुत्वा जहास कमलालया ।
वाससा नेत्रनीरञ्च संमार्जितमुवाच सा ॥१५॥
माधवीवचनेनैव करोषि प्रश्नमुद्धव ।
स्त्रीजातिरबला लोके किं वा ज्ञानं ददामि ते ॥१६॥
शुद्धां कालगतिं वत्स जानाति भगवान् हरिः ।
ब्रह्मा महेशः शेषश्च वेदाश्चत्वार एव च ॥ १७ ॥
किञ्चिद्वेदानुसारेण सन्तो जानन्ति पुत्रक ।
श्रूयतां कृष्णवक्त्रेण गोलोके रासमण्डले ॥ १८ ॥

गोलोके चापि वैकुण्ठे ब्रह्मलोके च साम्प्रतम्।
या च दृष्टा कालगतिस्तामेव कथयामि ते ॥१९॥
नृणां पितॄणां देवानां ब्रह्मलोकादिकस्य च।
वहिर्लोकस्य ब्रह्माण्डात् पातालानाञ्च निश्चितम् ॥२०॥
दुरत्ययां कालगतिं येनोपायेन पण्डिताः।
निस्तरन्ति बुधश्रेष्ठ कथयामि निशामय ॥२१॥

श्रीराधोवाच।

भजन्ति जगतां नाथं कालकालं जगद्गुरुम्।
निर्गुणञ्च निरीहञ्च परमात्मानमीश्वरम् ॥ २२ ॥
सद्यः पतति देहोऽयं विना येन सदात्मना।
तं निषेव्य कालगतिं तरत्येव हि केवलम् ॥ २३ ॥
आयुर्हरति सर्वेषां प्राणिनां रविरेव च।
श्रीहरेः शुद्धभक्तानां सतां पुण्यवतां विना ॥ २४ ॥
विधेर्मानसिकान् पुत्रान् चतुरः पश्य पुत्रक।
सनकादीन् भागवतान् येषां च सुस्थिरं वयः ॥ २५ ॥
रुद्राद्यान्वयसादित्यान् ज्ञानिनाञ्च गुरोर्गुरून्।
बालाननुपनीतांश्च पञ्चवर्षशिशून् यथा ॥ २६ ॥
अभ्यन्तरे महास्फीतान् सस्मितांश्च दिगम्बरान्।
श्रीकृष्णध्यानपूतांश्च तीर्थपूतांश्च वैष्णवान् ॥ २७ ॥
वेदवेदाङ्गशास्त्राणां चिन्ताहीनान् प्रफुल्लितान्।
भक्त्या दिवानिशं शश्वत् हरिभावेन तत्परान् ॥ २८ ॥
वाह्यपूजाविहीनांश्च पूतान् मानसिकांस्तथा।
मृत्युञ्जयान् महाभागान् कालव्यालजितस्तथा ॥२९॥
सनकश्च सनन्दश्च तृतीयश्च सनातनम्।

परं सनत्कुमारञ्च ये स्मरन्ति च सर्वशः ॥ ३० ॥
तीर्थस्नानफलं लब्ध्वा मुच्यन्ते कृतपातकात् ।
हरिभक्तिर्भवत्येषां हरिदास्यं लभन्ति च ॥ ३१ ॥
मृकुण्डबालकं पश्य कर्मणा च द्विजोत्तमम् ।
दशवर्षायुतं तीव्रं ज्वलन्तं ब्रह्मतेजसा ॥ ३२ ॥
हरिसेवनतः पश्चात् सप्तकल्पान्तजीवनम् ।
वोढुं पञ्चशिखं पश्य लोमकञ्चासुरिं तथा ॥ ३३ ॥
सर्वकर्मविहीनञ्च हरिसेवनतत्परम् ।
शतकल्पायुषञ्चैव ध्यायमानं हरेः पदम् ॥ ३४ ॥
जमदग्नेः सुतं पश्य रामं तं चिरजीविनम् ।
हनुमन्तं बलिं व्यासमश्वत्थामानमेव च ॥ ३५ ॥
विभीषणं कृपं विप्रं जाम्बुवन्तञ्च भल्लुकम् ।
हरिभावनया चैते शुद्धाः सुचिरजीविनः ॥ ३६ ॥
सिद्धेन्द्रेषु मुनीन्द्रेषु नरेष्वन्येषु चोद्धव ।
हरिभावनशुद्धाश्च सर्वे ते चिरजीविनः ॥ ३७ ॥
प्रह्लादं पश्य दैत्येषु हिरण्यकशिपोः सुतम् ।
हरिद्विषो दुरन्तस्य हरिभावनतत्परम् ॥ ३८ ॥
चिरायुषं कालजितं पश्यान्यञ्चाप्यसंज्ञकम् ।
अनेकजन्मतपसा लब्ध्वा जन्म च भारते ॥ ३९ ॥
ये हरिं तं न सेवन्ते ते मूढाः कृतपापिनः ।
वासुदेवं परित्यज्य विषये निरता जनः ॥ ४० ॥
त्यक्तामृतं महामूढो विषं भुङ्क्ते निजेच्छया ।
कस्य स्त्री कस्य वा पुत्रः कस्य वा बान्धवास्तथा ॥ ४१ ॥
कः कस्य बन्धुर्विपदि श्रीकृष्णेन विना भुवि ।

तस्मात्सन्तः सदा कृष्णं भजन्त्येव दिवानिशम् ॥ ४२ ॥
जन्ममृत्युजराव्याधिहरं सर्वहरं परम् ।
कालस्य तरणोपायं भजनं परमात्मनः ॥ ४३ ॥
आनन्दनन्दनस्यैव परिपूर्णतमस्य च ।
शृणु कालगतिं वत्स मदीयज्ञानगोचराम् ॥ ४४ ॥
नराणाञ्च पितृनाञ्च सुराणाञ्चापि ब्रह्मणः ।
नागानां राक्षसादीनां तत्परेषाञ्च पुत्रक ॥ ४५ ॥
कथयामि निगूढ़ार्थं सावधानं निशामय ।
सर्वस्माच्च परस्थानः सर्वाधारो महान्विराट् ॥ ४६ ॥
यस्य लोमसु विश्वानि चासंख्यानि च तानि च ।
सर्वस्माच्च परं सूक्ष्मं परमाणुं निशामय ॥ ४७ ॥
कालारम्भात्मकं सर्वमनूहं परमीप्सितम् ।
परमः सद्विशेषाणामनेको संयुतः सदा ॥ ४८ ॥
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ।
परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः ॥ ४९ ॥
त्रसरेणुत्रिकेणापि त्रुटिरुक्ता मनीषिभिः ।
वेधस्त्रुटिशतेनैव त्रिवेधेन लवस्तथा ॥ ५० ॥
त्रिलवेन निमेषश्च त्रिनिमेषेण च क्षणः ।
काष्ठा पञ्चक्षणेनैव लघुश्च दशकाष्ठया ॥ ५१ ॥
लघु पञ्चदशं दण्डस्तत्प्रमाणं निशामय ।
द्वादशार्द्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ॥ ५२ ॥
स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम् ।
दण्डद्वये मुहूर्तः स्यात् षष्टिदण्डात्मिका तिथिः ॥ ५३ ॥
तदष्टभागः प्रहरः प्रमाणञ्च निरूपणम् ।

चतुर्भिः प्रहरै रात्रिश्चतुर्भिर्दिनमुच्यते ॥ ५४ ॥
तिथिपञ्चदशेनैव पक्षमासं प्रकीर्तितम् ।
पक्षद्वयेन मासः स्याच्छुक्लकृष्णाभिधेन च ॥ ५५ ॥
ऋतुर्मासद्वयेनैव तत्षट्केनैव वासरः ॥ ५६ ॥
वसन्तो ग्रीष्मवर्षाश्च शरद्धेमन्तशीतकः ।
वर्षाः पञ्चविधा ज्ञेयाः कालविद्भिर्निरूपिताः ॥ ५
संवत्सरः प्रवत्सर इलावत्सर एव च ।
अनुवत्सरो वत्सरोऽयमिति कालविदो विदुः ॥ ५८
अब्दो द्विषट्कमासैश्च तन्नाम शृणु चोद्धव ।
वैशाखो ज्यैष्ठ आषाढ़ः श्रावणो भाद्र एव च ॥ ५९
आश्विनः कार्तिको मार्गः पौषो माघस्तु फाल्गुनः
चैत्रस्तु चरमो ज्ञेयो वर्षशेषो निरूपितः ॥ ६० ॥
वसन्तश्चैत्रवैशाखमासयुग्मेन कीर्तितः ।
ज्यैष्ठाषाढ़द्वयेनैव ग्रीष्मस्तु परिकीर्तितः ॥ ६१ ॥
वर्षा श्रावणभाद्रे च ह्याश्विने कार्तिके शरत् ।
मार्गे पौषे च हेमन्तः शिशिरो माघफाल्गुने ॥ ६२
अब्दस्तु चायने द्वे वै चोत्तरे दक्षिणायने ।
माघादिषट्विनिर्मितमुत्तरायणमीप्सितम् ।
श्रावणादिमासषट्कं दक्षिणायनमेव च ॥ ६३ ॥
नक्तं वृद्धेः श्रावणाच्च पौषपर्यन्तमेव च ।
प्रतिपत्पूर्णिमां तस्य शुक्लपक्षः प्रकीर्तितः ॥ ६४ ॥
पूर्णिमायाः प्रतिपदश्चामावास्यान्त एव च ।
कृष्णपक्षस्तु विज्ञेयो वेदविद्भिर्निरूपितः ॥ ६५ ॥
द्वितीया च तृतीया च चतुर्थी पञ्चमी तथा ।

षष्ठी च सप्तमी चैव ह्यष्टमी नवमी तथा ॥ ६६ ॥
दशम्येकादशी चापि द्वादशी च त्रयोदशी ।
चतुर्दशी कुहूर्यावद्दिनन्तु गणनं स्मृतम् । ६७ ॥
अश्विनी भरणी चापि कृत्तिका रोहिणी तथा ।
मृगशिरो तथार्द्रा च नक्षत्रे द्वे पुनर्वसू ॥ ६८ ॥
पुष्याश्लेषे मघा चैव पूर्वा चोत्तरफाल्गुनी ।
हस्तचित्रे तथा स्वाती विशाखा चानुराधिका ॥६९॥
ज्येष्ठा मूलं तथा ज्ञेया पूर्वाषाढ़ोत्तरा तथा ।
श्रवणाभिजितं चैव धनिष्ठा च प्रकीर्त्तिता ॥ ७० ॥
ततः शतभिषा ज्ञेया पूर्वाभाद्रपदस्तथा ।
तथोत्तरा तु विज्ञेया रेवती चरमा स्मृता ॥ ७१ ॥
अष्टाविंशति नक्षत्रं कलत्रं शशिनस्तथा ।
क्रमेण ताभिः सार्द्धञ्च चन्द्रस्तिष्ठति नित्यशः ॥ ७२ ॥
सप्तविंशतिनक्षत्रं कलत्रञ्च श्रुतौ श्रुतम् ।
अभिजिच्छ्रवणच्छाया तेनाष्टाविंशतिः स्मृता ॥ ७३ ॥
एकदा च सधौ चन्द्रो रोहिण्या वामया सह ।
रेमे दिवानिशं नित्यं श्रवणा च चुकोप सा ॥ ७४ ॥
छायाञ्च दत्त्वा चन्द्राय ययौ तातान्तिकं भिया ।
ततो पितरमादाय सा चक्रे च विभागकम् ॥ ७५ ॥
बभूव तेन नक्षत्रमभिजिन्नामकं पुरा ।
एतच्छ्रुत्वा कृष्णमुखाच्छतशृङ्गे च पर्वते ॥ ७६ ॥
नक्षत्रं कथितं वत्स तिथ्या भ्रमति नित्यशः ।
योगञ्च करणञ्चैव मद्वक्त्रेण निशामय ॥ ७७ ॥
विष्कम्भः प्रीतिरायुष्मान् सौभाग्यं शोभनस्तथा ।

अतिगण्डः सुकर्मा च धृतिः शूलस्तथैव च ॥ ७८ ॥
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ।
वज्रं सिद्धिर्व्यतीपातो वरीयान् परिघः शिवः ॥ ७९
सिद्धिः साध्यः शुभः शुक्लो ब्रह्मैन्द्रो वै धृतिस्तथा ।
कीर्त्तितस्ते योगगणो करणं श्रूयतामिति ॥ ८० ॥
बवश्च बालवश्चैव कौलवस्तैतिलस्तथा ।
गरश्च वणिजश्चापि विष्टिश्च शकुनिस्तथा ॥ ८१ ॥
चतुष्पाच्चापि नागश्च किन्तुघ्न इति कीर्त्तितम् ।
नराणाञ्चापि मासेन पितृणाञ्च दिवानिशम् ॥ ८२ ॥
शुक्ले चापि दिनन्तेषां कृष्णे नक्तं प्रकीर्त्तितम् ।
वत्सरेण नराणाञ्च सुराणाञ्च दिवानिशम् ॥ ८३ ॥
दिनन्तेषामुत्तरे च नक्तञ्च दक्षिणायने ।
मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः ॥ ८४ ॥
मनोरायुःपरिमितं शक्रस्यायुः प्रकीर्त्तितम् ।
पञ्चविंशत् सहस्रञ्च तथा पञ्चशतं परम् ॥ ८५ ॥
तत्र सूर्यगतिर्नास्ति शक्रपातानुसारतः ।
दिवानिशञ्च जानन्ति ब्रह्मलोकनिवासिनः ॥ ८६ ॥
दण्डद्वयं नरपलं शक्रपातेन तत्पलम् ।
एवं त्रिंशद्दिनेनैव धातुर्मासः प्रकीर्त्तितः ॥ ८७ ॥
अब्दो द्वादशभिर्मासै रवं तस्य शतायुषः ।
ब्रह्मणः पतनेनैव निमेषात् श्रीहरेरपि ॥ ८८ ॥
धातुः पातानुसारेण वैकुण्ठेन दिवानिशम् ।
तत्र सूर्यगतिर्नास्ति चैवं गोलोकतः स्मृतम् ॥ ८९ ॥
वैकुण्ठवासिनः सर्वे न वै जानन्त्यहर्निशम् ।

चन्द्रस्यापि ग्रहाणाञ्च गतिर्नास्ति च तत्र वै ॥ ९० ॥
चक्रं नैव भ्रमत्येव राशीनामिच्छया हरेः ।
दिनञ्च तेजसा दीप्तं कृष्णस्य परमात्मनः ॥ ९१ ॥
नक्तं तेजोविहीनञ्च हरौ च मन्दिरं गते ।
एवं कालगतिस्तत्र विष्णुलोकेऽस्ति सन्ततम् ॥ ९२ ॥
कालस्वरूपो भगवान् परमात्मा निराकृतिः ।
चन्द्रसूर्यगतिर्नास्ति पातालेषु च सप्तसु ॥ ९३ ॥
तद्वासिनश्च जानन्ति शङ्कन्ते न दिवानिशम् ।
दिने च मूर्ध्नि नागानां मणिर्ज्वलति नित्यशः ॥९४॥
सन्ध्यायां दीप्तमग्निश्च रात्रिश्च तमसावृता ।
कालन्तास्त्रीप्रमाणेन जानन्ति तन्निवासिनः ॥ ९५ ॥
यथा भुवि तथा तत्र परिमाणं प्रकीर्त्तितम् ।
कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम् ॥ ९६ ॥
दिव्यैर्द्वादशसाहस्रैर्वत्सरैश्चापि तन्मितम् ।
अष्टौ शतान्यप्यधिकं सहस्राणां चतुष्टयम् ॥ ९७ ॥
दिव्यैर्वर्षैः कृतयुगं कालविद्भिर्निरूपितम् ।
अष्टाविंशत् सहस्राण्यप्यधिकं पारिमाणकम् ॥ ९८ ॥
लक्षाणाञ्च सप्तदशन्नृमाणं परिकीर्त्तितम् ।
अधिकं षट्शतान्येव सहस्राणां शतं तथा ॥ ९९ ॥
दिव्यैर्वर्षैश्च त्रेतेति वत्स कालविदो विदुः ।
षण्णवतिसहस्राणि लक्षैर्द्वादशभिः सह ॥ १०० ॥
नृणां वर्षैश्च त्रेतेति कालविद्भिः प्रकीर्त्तितः ।
चतुष्टयं शतानाञ्चाप्यधिकं द्विसहस्रकम् ॥ १०१ ॥
वर्षं दिव्यं द्वापरञ्च कालज्ञैः परिकीर्त्तितम् ।

चतुःषष्टिसहस्राणि लक्षैरष्टभिरेव च॥ १०२॥
नृणां वर्षैर्द्वापरञ्च कालज्ञैः परिकीर्तितम्।
अधिकं द्विशतञ्चैव दिव्यं वर्षसहस्रकम्॥ १०३॥
एवं मितं कलियुगं वत्स प्राज्ञैर्निरूपितम्।
द्वात्रिंशच्च सहस्रञ्च चतुर्लक्षं नृमाणकम्॥ १०४॥
वर्षञ्चेति कलियुगे चकार कालकोविदः।
लक्षैर्द्विचत्वारिंशद्भिः सह विंशत्सहस्रकैः॥ १०५॥
नृमाणवर्षैः कालज्ञैर्व्यक्तमेव चतुर्युगम्।
इति ते कथितं वत्स कालसंख्यानिरूपणम्॥ १०६
यथाश्रुतं यथाज्ञानं गच्छ वत्स हरेः पुरम्॥ १०७॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे राधोद्धवसंवादे कालनिरूपणं
नाम षण्णवतितमोऽध्यायः।

---

## सप्तनवतितमोऽध्यायः।

श्रीनारायण उवाच।

गच्छन्तमुद्धवं दृष्ट्वा सन्त्रस्ता श्रीहरेः प्रिया।
समुत्थायासनात् शीघ्रं हृदयेन विदूयता॥ १॥
गोपीभिः सहिता शीघ्रं समुद्विग्ना महासती।
ददौ शुभाशिषं तस्मै तस्य मूर्ध्नि करं दधा॥ २॥
स्निग्धदूर्वाचितं शुक्लधान्यं पुष्पञ्च मङ्गलम्।

प्रेरयामास लाजांश्च फलं पर्णं तथा दधि ॥ ३ ॥
दर्पणं दर्शयामास पूर्णकुम्भं सपल्लवम् ।
सफलं गन्धसिन्दूरकस्तूरीचन्दनान्वितम् ॥ ४ ॥
पुष्पमाल्यं प्रदीपञ्च रक्तगन्धं द्विजोत्तम ।
पतिपुत्रवती साध्वी काञ्चनं रजतं तथा ॥ ५ ॥
तमुवाच महासाध्वी हितं सत्यञ्च मङ्गलम् ।
सङ्गोप्यं साश्रुनेत्रञ्च पतितं दुःखिता हृदि ॥ ६ ॥

राधिकोवाच ।

शुभं भवतु मार्गस्ते कल्याणमस्तु सन्ततम् ।
ज्ञानं लभ हरेः स्थानात् कृष्णस्य सुप्रियो भव ॥ ७ ॥
कृष्णभक्तिः कृष्णदास्यं वरेषु च वरं वरम् ।
श्रेष्ठा पञ्चविधा मुक्तेर्हरिभक्तिर्गरीयसी ॥ ८ ॥
ब्रह्मत्वादपि देवत्वादिन्द्रत्वादमरादपि ।
अमृतात् सिद्धिलाभाच्च हरिदास्यं सुदुर्लभम् ॥९॥
अनेकजन्मतपसा सम्भूय भारते द्विज ।
हरिभक्तिर्यदि लभेत्तस्य जन्म सुदुर्लभम् ॥ १० ॥
सफलं जीवनं तस्य कुर्वतः कर्मणः क्षयम् ।
पितॄणाञ्च सहस्राणि स्वस्य मातुश्च निश्चितम् ॥ ११ ॥
मातामहानां पुंसां च गतानां सोदरस्य च ।
बान्धवस्यापि पत्न्याश्च गुरूणां शिष्यभृत्ययोः ॥ १२ ॥
तत्कर्म शोभनं वत्स यच्च कृष्णे समर्पणम् ।
तत्कर्म शोभनं शुद्धं कृष्णसन्तोषणं यतः ॥ १३ ॥
सङ्कल्पसाधनं कर्म सम्प्रीतिविधिपूर्वकम् ।
तदेव मङ्गलं धन्यं परिणामसुखावहम् ॥ १४ ॥

तद्व्रतं तत्तपः सत्यं तद्भक्तिः पूजनं तथा ।
तदुद्देश्यमनशनं केवलं दास्यकारणम् ॥ १५ ॥
समस्तपृथिवीदानं प्रादक्षिण्यं भुवस्तथा ।
समस्ततीर्थस्नानञ्च समस्तञ्च व्रतं तपः ॥ १६ ॥
समस्तयज्ञकरणं सर्वदानफलं तथा ।
समस्तवेदवेदाङ्गपठनं पाठनं तथा ॥ १७ ॥
भीतस्य रक्षणञ्चैव ज्ञानदानं सुदुर्लभम् ।
अतिथीनां पूजनञ्च शरणागतरक्षणम् ॥ १८ ॥
सर्वदेवार्चनञ्चैव वन्दनं जपनं मनोः ।
भोजनं विप्रदेवानां पुरश्चरणपूर्वकम् ॥ १९ ॥
गुरुशुश्रूषणञ्चैव पित्रोर्भक्तिश्च पोषणम् ।
सर्वं श्रीकृष्णदासस्य कलां नार्हति षोड़शीम् ॥ २० ॥
तस्मादुद्धव यत्नेन भज कृष्णं परात्परम् ।
निर्गुणञ्च निरीहञ्च परमात्मानमीश्वरम् ॥ २१ ॥
नित्यं सत्यं परं ब्रह्म प्रकृतेः परमीश्वरम् ।
परिपूर्णतमं शुद्धं भक्तानुग्रहविग्रहम् ॥ २२ ॥
कर्मिणां कर्मणां साक्ष्यप्रदं निर्लिप्तमेव च ।
ज्योतिःस्वरूपं परमं कारणानाञ्च कारणम् ॥ २३ ॥
सर्वस्वरूपं सर्वेशं सर्वसम्पत्प्रदं शुभम् ।
भक्तिदं दास्यदं स्वस्य निजसम्पत्पदप्रदम् ॥ २४ ॥
विसृज्य ज्ञातिबुद्धिञ्च मात्सर्यमशुभप्रदम् ।
भज तं परमानन्दं सानन्दं नन्दनन्दनम् ॥ २५ ॥
वेदे कौथुमिशाखायां तस्य नाम्नां सहस्रकम् ।
नन्दनन्दननामोक्तं कृतविघ्नसुदुर्लभम् ॥ २६ ॥

उद्धवः सर्वमाकर्ण्य परमं विस्मयं ययौ ।
ज्ञानं सम्प्राप्य सम्पूर्णं परिपूर्णो बभूव ह ॥ २७ ॥
स्ववस्त्रञ्च गले बद्ध्वा दण्डवत् प्रणनाम ताम् ।
मूर्द्ध्नः केशैश्च तत्पादं निबध्य च पुनः पुनः ॥ २८ ॥
पुलकाञ्चितसर्वाङ्गः साश्रुनेत्रश्च भक्तितः ।
तद्विच्छेदरुचा प्रेम्णा रुरोदोच्चैश्च नारद ॥ २९ ॥
रुरोद राधा तत्प्रेम्णा रुरोद व्रजवीगणः ।
उद्धवस्य गलं धृत्वा स्थापयामास लोभतः ॥ ३० ॥
उद्धवं मूर्च्छितं दृष्ट्वा जृम्भितं त्यक्तचेतनम् ।
शीघ्रमुत्थापयामास राधिका कृष्णमानसम् ॥ ३१ ॥
चेतनं कारयामास जलं दत्त्वा मुखाम्बुजे ।
शुभाशिषञ्च प्रददौ वत्स जीवेति नारद ॥ ३२ ॥
उद्धवश्चेतनं प्राप्य तामुवाच सुसंसदि ।
रुदन्तीनाञ्च गोपीनां पुरतः परमार्थदम् ॥ ३३ ॥

उद्धव उवाच ।

धन्यं सप्तसु द्वीपानां जम्बुद्वीपः सुदुर्लभः ।
यत्र भारतवर्षन्तु सर्वेषामीप्सितं वरम् ॥ ३४ ॥
अहो भारतवर्षेषु पुण्यं वृन्दावनं वनम् ।
राधापादाब्जसंस्पर्शरजःपूतं सुरेप्सितम् ॥ ३५ ॥
धन्या मान्या च पृथिवी त्रिषु लोकेषु पूजिता ।
राधायास्तीर्थपूतायाः पादाब्जरजसा वरा ॥ ३६ ॥
षष्टिवर्षसहस्राणि दिव्यानि पुष्करे पुरा ।
ब्रह्मणा च तपस्तप्तं वेदोक्तं भक्तिपूर्वकम् ॥ ३७ ॥
गोलोके राधिकाकृष्णदर्शनार्थं मनोरथात् ।

गोलोके राधिकाकृष्णो न दृष्टः स्वप्नतस्तदा ॥ ३८ ॥
श्रुता तेनाकाशवाणी सत्यरूपा च लीलया ।
वाराहे भारते वर्षे पुण्ये वृन्दावने वने ॥ ३९ ॥
रासोत्सवे महारम्ये तत्रैव रासमण्डले ।
द्रक्ष्यसीति च देवानां मध्ये सुस्थो न संशयः ॥ ४० ॥
श्रुत्वा च विरतो ब्रह्मा तपसः स्वगृहं गतः ।
कृष्णो दृष्टश्च हृष्टश्च परिपूर्णमनोरथः ॥ ४१ ॥
गोपानां गोपिकानाञ्च सफलं जन्म जीवनम् ।
नित्यं पश्यन्ति ते पादपद्मं ब्रह्मादिदुर्लभम् ॥ ४२ ॥
मानिनीं राधिकां सन्तः सदा सेवन्ति नित्यशः ।
योगीन्द्राश्च मुनीन्द्राश्च सिद्धेन्द्रा वैष्णवास्तथा ॥ ४३ ॥
सतीं पुण्यां तीर्थपूतां स्वतःशुद्धां सुदुर्लभाम् ।
सुलभं यत्पदाम्भोजं ब्रह्मादीनां सुदुर्लभम् ॥ ४४ ॥
यत्पादपद्मनखरं क्षतं यावकचिह्नितम् ।
सर्वेश्वरेश्वरेणेव कृष्णेन परमात्मना ॥ ४५ ॥
चकार यस्याः पूजाञ्च स्तोत्रराजं सुदुर्लभम् ।
शतशृङ्गे स्वयं कृष्णो गोलोके रासमण्डले ॥ ४६ ॥
पारिजातप्रसूनानामञ्जलिं गन्धचन्दनम् ।
ददौ दूर्वाक्षतं स्निग्धं यस्याः पादारविन्दयोः ॥ ४७ ॥
त्रिंशत्सहस्रकोटीनां गोपीनामीश्वरी च या ।
तत्षट्त्रिंशत्सखीनाञ्च ईश्वरी राधिकाभिधा ॥४८॥
ये का द्विषन्ति निन्दन्ति पापिनश्च हसन्ति च ।
कृष्णप्राणाधिकां देवदेवीञ्च राधिकां वराम् ॥ ४९ ॥
ब्रह्महत्याशतं ते च लभन्ते नात्र संशयः ।

तत्पापेन च पच्यन्ते कुम्भीपाके च रौरवे ॥ ५० ॥
तप्ततैले महाघोरे ध्वान्ते कीटे च यन्त्रके ।
चतुर्दशेन्द्रावच्छिन्नं पितृभिः सप्तभिः सह ॥ ५१ ॥
ततः परञ्च जायन्ते जन्मैकं लोकजन्मतः ।
दिव्यं वर्षसहस्रञ्च विष्ठाकीटाश्च पापतः ॥ ५२ ॥
पुंश्चलीनां योनिकीटास्तद्रक्तमलभक्षकाः ।
मलकीटाश्च तन्मानवर्षञ्च पूयभक्षकाः ।
वेदे च काण्वशाखायामित्याह कमलोद्भवः ॥ ५३ ॥
इत्युक्तवन्तं तं यान्तमुवाच राधिका पुनः ।
रुदन्तञ्च रुदन्ती सा कृष्णविच्छेदकातरा ॥ ५४ ॥

श्रीराधिकोवाच ।

गच्छ वत्स मधुपुरीं सर्वं बोधय माधवम् ।
यथा पश्यामि गोविन्दं प्रयत्नेन तथा कुरु ॥ ५५ ॥
निष्फलञ्च गतं जन्म गच्छ मिथ्या दुराशया ।
आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥ ५६ ॥
पश्चाद्विचिन्त्य गोविन्दं जीवन्मुक्ता बभूव सा ॥ ५७ ॥
इत्युक्ता राधिका तत्र रुरोद च भृशं पुनः ।
प्रणम्य तां रुदन्तीं च यशोदाभवनं ययौ ॥ ५८ ॥
अथोद्धवे गते राधा मूर्च्छां सम्प्राप नारद ।
तत्याज चेतनं शश्वद् बभूव ध्यानतत्परा ॥ ५९ ॥
पङ्कस्थे पङ्कजदले सजले शयने मुने ।
गोप्यस्तां स्नापयामासुः साश्रुनेत्रोत्पला वराः ॥६०॥
तत्स्पर्शमात्राच्छयनं भस्मीभूतं बभूव ह ।
पुनस्निग्धस्थले स्निग्धनिचोले चन्दनान्तिके ॥ ६१

पुनस्तां स्थापयामासुर्विरहज्वरकातराम् ।
सहसा शुष्कतां प्राप सुगन्धिचन्दनोदकम् ॥ ६२ ॥
निमेषेण शतयुगं तद् बभूवोद्धवं विना ।
हाहोद्धवोद्धव हरिं शीघ्रं गत्वा वदेति च ॥ ६३ ॥
समानय हरिं शीघ्रं यत् प्राणेश्वरमित्यपि ।
इत्युक्तवचनां दीनां सन्तापहृतचेतनाम् ॥ ६४ ॥
रुरुदुर्गोपिकाः सर्वा राधां कृत्वा स्ववक्षसि ।
चेतनां कारयामासुर्बोधयामासुरीप्सितम् ॥ ६५ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे राधोद्धवसंवादे
सप्तनवतितमोऽध्यायः ।

---

## अष्टनवतितमोऽध्यायः ।

---

श्रीनारायण उवाच ।

अथोद्धवो यशोदाञ्च प्रणम्य त्वरया मुदा ।
खर्जूरकाननं वामे कृत्वा च यमुनां ययौ ॥ १ ॥
स्नात्वा भुक्त्वा च तत्रैव जगाम मथुरां पुनः ।
ददर्श वटमूले च गोविन्दं रहसि स्थितम् ॥ २ ॥
प्रफुल्लोऽप्युद्धवं दृष्ट्वा सस्मितं तमुवाच सः ।
रुदन्तं शोकदग्धञ्च साश्रुनेत्रञ्च कातरम् ॥ ३ ॥

श्रीभगवानुवाच ।

आगच्छोद्धव कल्याणं राधा जीवति जीवति ।
कल्याणयुक्ता गोप्यश्च जीवन्ति विरहज्वरात् ॥ ४ ॥
शुभं गोपशिशूनाञ्च वत्सानाञ्च गवामपि ।
माता मे पुत्रविरहाद्यशोदा कीदृशी च सा ॥ ५ ॥
वद बन्धो यथार्थं तत्त्वां दृष्ट्वा किमुवाच सा ।
त्वयोक्ता जननी किं वा पुनः सा किमुवाच माम् ॥६॥
दृष्टं तद्यमुनाकूलं पुण्यं वृन्दावनं वनम् ।
निर्जनोपवनौघैश्च सुरम्यं रासमण्डलम् ॥ ७ ॥
रम्यं कुञ्जकुटीरौघैं रम्यं क्रीडासरोवरम् ।
पुष्पोद्यानं विकसितं सङ्कुलञ्च मधुव्रतैः ॥ ८ ॥
भाण्डीरे च वटो दृष्टः सुस्निग्धो बालकान्वितः ।
दृष्टो गोष्ठो गवां दृष्टं गोकुलं गोकुलव्रजम् ॥ ९ ॥
यदि जीवति राधा सा दृष्ट्वा त्वां किमुवाच माम् ।
तत्सर्वं वद हे बन्धो चान्दोलयति मे मनः ॥ १० ॥
किमूचुर्गोपिकाः सर्वाः किमूचुर्गोपबालकाः ।
गोपाश्च वृद्धाः किं वोचुर्वयस्या जनकस्य मे ॥ ११ ॥
बलदेवस्य जननी किमूचे रोहिणी सती ।
किमूचुरपरास्तातबन्धुवल्लभवल्लवाः ॥ १२ ॥
किं भुक्तं किमपूर्वं वा दत्तं माता च राधया
कीदृक् वाक्यं सुमधुरं सम्भाषा कीदृशीति च ॥१३॥
गोपानां गोपिकानाञ्च शिशूनां मातुरेव च ।
राधायाश्चापि कीदृग् वा मयि प्रेमोद्भवादिकम् ॥१४॥
माञ्च स्मरति माता मे माञ्च स्मरति रोहिणी ।

माञ्च स्मरति सा राधा मत्प्रेमविरहाकुला ॥१५॥
माञ्च स्मरन्ति गोप्यश्च गोपाश्च गोपबालकाः ।
भाण्डीरे वटमूले च बालाः क्रीड़न्ति मां विना ॥१६॥
दत्तमन्नं ब्राह्मणीभिर्यत्र भुक्तं सुधोपमम् ।
प्रमदाबालकैः सार्द्धं यत्तद् दृष्टं परीप्सितम् ॥१७॥
इन्द्रयागस्थलं दृष्टं दृष्टं गोवर्धनं वरम् ।
ब्राह्मणा च हृता गावो यत्र तद् दृष्टमुत्तमम् ॥१८॥
श्रीकृष्णस्य वचः श्रुत्वा शोकोक्तं मधुरान्वितम् ।
उद्धवः समुवाचेदं भगवन्तं सनातनम् ।१९।

उद्धव उवाच ।

यद्यदुक्तं त्वया नाथ सर्वं दृष्टं यथेप्सितम् ।
सफलं जीवनं जन्म कृतमत्रैव भारते ॥ २० ॥
दृष्टं भारतसारञ्च पुण्यं वृन्दावनं वनम् ।
तत्सारं व्रजभूमौ च सुरम्यं रासमण्डलम् ॥ २१ ॥
तत्सारभूता गोलोकवासिन्यो गोपिका वराः ।
दृष्टा तत्सारभूता च राधा रासेश्वरी परा ॥२२॥
कदलीवनमध्ये च निर्जने सुहृदस्थले ।
पङ्कस्थे पङ्कजदले सजले चन्दनार्चिते ॥ २३ ॥
शयनेऽतिविषण्णा सा रत्नभूषणवर्जिता ।
अतीवमलिना क्षीणा छादिता शुक्लवाससा ॥२४॥
सेविता सखीभिस्तत्र सततं श्वेतचामरैः ।
कृशोदरी निराहारा क्षणं भ्रमिति च क्षणम् ॥२५॥
क्षणं जीवति किं सा वा विरहज्वरपीड़िता ।
किं वा जलं स्थलं किं वा नक्तं किं वा दिनं हरे ॥२६

परं पशुं न जानाति किं परं किमु बान्धवम् ।
बाह्यज्ञानविरहिता ध्यायमाना पदं तव ॥२७॥
त्रैलोक्ये यशसा भाति तन्मृत्युर्यशसम्भवः ।
स्त्रीहत्यां नैव वाञ्छन्ति ज्ञानहीनाश्च दस्यवः ॥२८॥
गच्छ शीघ्रं जगन्नाथ कदलीवनमीप्सितम् ।
वहिर्भूता न जगतां सा राधा त्वत्परायणा ॥२९॥
अतीवभक्ता न त्याज्या प्रभुणा रक्षिता सदा ।
न हि राधापरा भक्ता न भूता न भविष्यति ॥३०॥
मन्मथः शङ्कराद्भीतो भवांश्च तत्पुरःसरः ।
भवद्विधं पतिं प्राप्य कामदग्धा च राधिका ॥३१॥
तस्मात्सर्वपरं कर्म तच्च केनापि वार्य्यते ।
मधुर्दहति चन्द्रश्च सततं किरणेन च ॥ ३२ ॥
शश्वत्सुगन्धिवायुश्चाप्यनाथा सर्वपीड़िता ।
तप्तकाञ्चनवर्णाभा साधुना कज्जलोपमा ॥ ३३ ॥
सुवर्णवर्णकेशी च वासोवेशविवर्जिता ।
स्वयं विधाता त्वद्भक्तः सुराणां प्रवरो विभुः ॥ ३४ ॥
त्वद्भक्तः शङ्करो देवो योगीन्द्राणां गुरोर्गुरुः ।
सनत्कुमारस्त्वद्भक्तो गणेशो ज्ञानिनां वरः ॥ ३५ ॥
मुनीन्द्राश्च कतिविधास्त्वद्भक्ता धरणीतले ।
त्वद्भक्ता यादृशी राधा न भक्तस्तादृशोऽपरः ॥ ३६ ॥
ध्यायतं यादृशी राधा स्वयं लक्ष्मीर्न तादृशी ।
हरिरायाति चेत्येवं राधायै स्वीकृतं मया ।
शीघ्रं गच्छ महाभाग तदेव सार्थकं कुरु ॥ ३७ ॥
उद्धवस्य वचः श्रुत्वा जहासोवाच माधवः ।

वेदोक्तं कथयामास सहितं सत्यसुव्रतम् ॥ ३८ ॥

श्रीभगवानुवाच ।

स्त्रीषु धर्मविवाहेषु वृत्त्यर्थे प्राणसङ्कटे ।
गवामर्थे ब्राह्मणार्थे नानृतं स्याज्जुगुप्सितम् ॥ ३९ ॥
तत्स्वीकारविहीनेन कुतस्त्वं नरकं कुतः ।
गोलोकं याति मद्भक्तो नरकं न हि पश्यति ॥ ४० ॥
त्वदङ्गीकारसाफल्यं करिष्यामि तथापि च ।
यास्यामि स्वप्ने तन्मूलं गोपीनां मातुरेव च ॥ ४१ ॥
इत्याकर्ण्य ययौ गेहमुद्धवश्च महायशाः ।
हरिर्जगाम स्वप्ने च गोकुलं विरहाकुलम् ॥ ४२ ॥
स्वप्ने राधां समाश्वास्य दत्त्वा ज्ञानं सुदुर्लभम् ।
सन्तोष्य क्रीड़या ताश्च गोपिकाश्च यथोचितम् ॥ ४३ ॥
बोधयित्वा यशोदाञ्च स्तनं पीत्वा च निद्रिताम् ।
गोपान् गोपशिशूंश्चैव बोधयित्वा ययौ पुनः ॥ ४४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायण-
नारदसंवादे श्रीकृष्णजन्मखण्डे
अष्टनवतितमोऽध्यायः ।

---

# नवनवतितमोऽध्यायः ।

—:०:—

श्रीनारायण उवाच ।

एतस्मिन्नन्तरे गर्गो वसुदेवाश्रमं ययौ ।
दण्डी छत्री च जटिलो दीप्तश्च ब्रह्मतेजसा ॥ १ ॥
शुक्लयज्ञोपवीती च तपस्वी संयतः सदा ।
शुक्लदन्तः शुक्लवासा यदोः कुलपुरोहितः ॥ २ ॥
तं दृष्ट्वा सहसोत्थाय देवकी प्रणनाम च ।
वसुदेवश्च भक्त्या च रत्नसिंहासनं ददौ ॥ ३ ॥
मधुपर्कं कामधेनुं वह्निशुद्धांशुकं तथा ।
दत्त्वा गन्धं पुष्पमाल्यं पूजयामास भक्तितः ॥ ४ ॥
मिष्टान्नं परमान्नञ्च पिष्टकं मधुरं मधु ।
भोजयामास यत्नेन ताम्बूलं वासितं ददौ ॥ ५ ॥
प्रणम्य कृष्णं मनसा सबलञ्च विलोक्य च ।
उवाच वसुदेवञ्च देवकीञ्च पतिव्रताम् ॥ ६ ॥

गर्ग उवाच ।

वसुदेव निबोधेदं सबलं पश्य पुत्रकम् ।
उपनीतोचितं शुद्धं वयसा साम्प्रतं वरम् ॥ ७ ॥

वसुदेव उवाच ।

शुभक्षणं कुरु गुरो यदूनां पूज्यदैवते ।
उपनीतोचितं शुद्धं प्रशस्यञ्च सतामपि ॥ ८ ॥

गर्ग उवाच ।

सर्वेभ्यो बान्धवेभ्योऽपि देह्यामन्त्रणपत्रिकाम् ।
संभारं कुरु यत्नेन वसुदेव ! वसूपम ! ॥ ९ ॥
परश्वः शुभमेवास्ति चोपनेतुमिहार्हसि ।
दिनं सतामपि मतं विशुद्धं चन्द्रतारयोः ॥ १० ॥
गर्गस्य वचनं श्रुत्वा वसुदेवो वसूपमः ।
प्रस्थापयामास सर्वान् बन्धून् मङ्गलपत्रिकाम् ॥११॥
घृतकुल्यां दुग्धकुल्यां दधिकुल्यां मनोहराम् ।
मधुकुल्यां गुड़कुल्यां प्रचकार समन्वितः ॥ १२ ॥
राशिं नानोपहाराणां मणिरत्नं सुवर्णकम् ।
नानालङ्कारवस्त्रञ्च मुक्तामाणिक्यहीरकम् ॥ १३ ॥
श्रीकृष्णो देवगर्गांश्च मुनीन्द्रान् सिद्धपुङ्गवान् ।
सस्मार मनसा भक्त्या भक्तांश्च भक्तवत्सलः ॥ १४ ॥
शुभे दिने च संप्राप्ते ते च सर्वे समाययुः ।
मुनीन्द्रा बान्धवा देवा राजानो बहुशस्तथा ॥ १५ ॥
देवकन्या नागकन्या राजकन्याश्च सर्वशः ।
विद्याधर्य्यश्च गन्धर्वाश्चाययुर्वाद्यभाण्डकाः ॥ १६ ॥
ब्राह्मणा भिक्षुका भट्टा यतयो ब्रह्मचारिणः ।
सन्न्यासिनश्चावधूता योगिनश्च समाययुः ॥ १७ ॥
स्त्रीबान्धवाः स्वबन्धूनां वर्गा मातामहस्य च ।
बन्धूनां बान्धवाः सर्वे स्वाययुः शुभकर्मणि ॥ १८ ॥
भीष्मो द्रोणश्च कर्णश्चाप्यश्वत्थामा कृपो द्विजः ।
सपुत्रो धृतराष्ट्रश्च सभार्य्यश्च समाययौ ॥ १९ ॥
कुन्ती सपुत्रा विधवा हर्षशोकसमाप्लुता ।

नानादेशोद्भवा योग्या राजानो राजपुत्रकाः ॥२०॥
अत्रिर्वशिष्ठश्चावनो भरद्वाजो महातपाः ।
याज्ञवल्क्यश्च भीमश्च गार्ग्यो गर्गो महातपाः ॥२१॥
वत्सः सपुत्रश्च धर्मो जैगीषव्यः पराशरः ।
पुलहश्च पुलस्त्यश्चाप्यगस्त्यश्चापि सौभरिः ॥२२॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
सनत्कुमारो भगवान् वोढुः पञ्चशिखस्तथा ॥२३॥
दुर्वासाश्चाङ्गिरा व्यासो व्यासपुत्रः शुकस्तथा ।
कुशिकः कौशिको राम ऋष्यशृङ्गो विभाण्डकः ॥२४॥
शृङ्गी च वामदेवश्च गौतमश्च गुणार्णवः ।
क्रतुर्यतिश्चारुणिश्च शुक्राचार्यो बृहस्पतिः ॥ २५ ॥
अष्टावक्रो वामनश्च पारिभद्रश्च वाल्मिकिः ।
पैलो वैशम्पायनश्च प्रचेताः पुरुजित् तथा ॥ २६ ॥
भृगुर्मरीचिर्मधुजित् कश्यपश्च प्रजापतिः ।
अदितिर्देवमाता च दितिर्दैत्यप्रसूस्तथा ॥ २७ ॥
सुमन्तुश्च सुभानुश्च एकः कात्यायनस्तथा ।
मार्कण्डेयो लोमशश्च कपिलश्च पराशरः ॥ २८ ॥
पाणिनिः पारियात्रश्च पारिभद्रश्च पुङ्गवः ।
संवर्त्तश्चाप्युतथ्यश्च नरोऽहश्चापि नारद ! ॥ २९ ॥
विश्वामित्रः शतानन्दो जाबालिस्तैतिलस्तथा ।
सान्दीपिनिश्च ब्रह्मांशो योगिनां ज्ञानिनां गुरुः ॥३०॥
उपमन्युर्गौरमुखो मैत्रेयश्च श्रुतश्रवाः ।
कठः कचश्च करखो भरद्वाजश्च धर्मवित् ॥ ३१ ॥
सशिष्या मुनयः सर्वे वसुदेवाश्रमं ययुः ।

वसुदेवश्च तान् दृष्ट्वा ववन्दे दण्डवद्भुवि ॥ ३२ ॥
अथास्मिन्नन्तरे ब्रह्मा सस्मितो हंसवाहनः ।
रत्ननिर्म्माणयानेन पार्वत्या सह शङ्करः ॥ ३३ ॥
नन्दी स्वयं महाकालो वीरभद्रः सुभद्रकः ।
मणिभद्रः पारिभद्रः कार्त्तिकेयो गणेश्वरः ॥ ३४ ॥
गजेन्द्रेण महेन्द्रश्च धर्म्मश्चन्द्रो रविस्तथा ।
कुबेरो वरुणश्चैव पवनो वह्निरेव च ॥ ३५ ॥
यमः संयमिनीनाथो जयन्तो नलकूबरः ।
सर्वे ग्रहाश्च वसवो रुद्राश्च सगणास्तथा ॥ ३६ ॥
आदित्याश्च तथा शेषो नानादेवाः समाययुः ।
वसुदेवश्च भक्त्या च ववन्दे शिरसा भुवि ॥ ३७ ॥
तुष्टाव परया भक्त्या देवेन्द्रांश्च तथा सुरान् ।
भक्तिनम्रात्ममूर्द्धा च पुलकाञ्चितविग्रहः ॥ ३८ ॥

वसुदेव उवाच ।

परं ब्रह्म परं धाम परमेशः परात्परः ।
स्वयं विधाता मद्गेहे जगतां परिपालकः ॥३९॥
वेदानां जनकः स्रष्टा सृष्टिहेतुः सनातनः ।
सुराणाञ्च मुनीन्द्राणां सिद्धेन्द्राणां गुरोर्गुरुः ॥ ४० ॥
स्वप्ने यत्पादपद्मञ्च क्षणं द्रष्टुं सुदुर्लभम् ।
शिवस्मरणमात्रेण सर्व्वानिष्टाः पलायिताः ॥ ४१ ॥
सर्वसङ्कटमुत्तीर्य्य कल्याणं लभते नरः ।
सर्व्वाग्रे पूजनं यस्य देवानामग्रणीः परः ॥ ४२ ॥
घटेषु मङ्गलं मन्त्रैर्भक्त्या चावाहनेन च ।
स्वयं गणेशो भगवान् स साक्षाद्विघ्ननायकः ॥ ४३ ॥

कार्त्तिकेयश्च भगवान् देवादीनाञ्च पूजितः ।
देवानां प्रवरा पूज्या महालक्ष्मीः परात्परा ॥ ४४ ॥
मह्नि हे पार्वती माता जगतामादिरूपिणी ।
सर्वशक्तिस्वरूपा च मूलप्रकृतिरीश्वरी ॥ ४५ ॥
परापराणां परमा परब्रह्मस्वरूपिणी ।
यस्या अर्चां समाराध्य वाञ्छितं लभते नरः ॥ ४६ ॥
शरत्काले च भक्त्या च सा साक्षान्मम मन्दिरे ।
सर्वदेवैश्च सहिता सगणा भक्तवत्सला ॥ ४७ ॥
कृपामयी च कृपया चाविर्भूता च भारते ।
धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम ॥ ४८ ॥
आगतासि यतो दुर्गे परमाद्या च मद्गृहम् ।
एवं सर्वांश्च तुष्टाव क्रमेण च परस्परम् ॥ ४९ ॥
सर्वान् मुनीन्द्रान् विप्रांश्च गले बद्धांशुकं मुदा ।
प्रत्येकं वासयामास रत्नसिंहासने वरे ॥ ५० ॥
पूजयामास विधिवत् क्रमेण च पृथक् पृथक् ।
प्रत्येकं वरयामास ब्रह्मादींश्च सुरानपि ॥ ५१ ॥
मुनिवर्गान् ब्राह्मणांश्च भक्त्या गर्गं पुरोहितम् ।
रत्नैः प्रवालैर्मणिभिर्मुक्तामाणिक्यहीरकैः ॥ ५२ ॥
भूषणैर्वसनैश्चैव माल्यैश्च गन्धचन्दनैः ।
रत्नसिंहासने रम्ये सर्वेषां मध्यदेशतः ॥ ५३ ॥
गणेशं वरयामास पूजार्थं शुभकर्मणि ।
सप्ततीर्थोदकेनैव सुवर्णकलशेन च ॥ ५४ ॥
पुष्पचन्दनयुक्तेन शीतेन वासितेन च ।
स्वर्गगङ्गाजलेनैव पुष्करोदकपुष्पतः ॥ ५५ ॥

पञ्चामृतेन शुद्धेन पञ्चगव्येन भक्तितः ।
हेरम्बं स्नापयामास समुद्रोदेन मन्त्रतः ॥ ५६ ॥
वरयामास माल्येन पारिजातस्य नारद ! ।
रत्नेन्द्रभूषणेनैव वह्निशुद्धेन वाससा ॥ ५७ ॥
गन्धचन्दनपुष्पैश्च रत्नमाल्याङ्गुलीयकम् ।
तुष्टाव पार्वतीपुत्रं सर्वदेवाधिपं शुभम् ।
विघ्ननिघ्नकरं शान्तं भगवन्तं सनातनम् ॥ ५८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे भगवदुपनयने गणेशाभिषेके नवनवतितमोऽध्यायः ।

---

## शततमोऽध्यायः ।

श्रीनारायण उवाच ।

अथादितिर्दितिश्चैव देवकी रोहिणी रतिः ।
सरस्वती च सावित्री यशोदा च पतिव्रता ॥ १ ॥
लोपामुद्रारुन्धती च अहल्या तारका तथा ।
ययुस्ताः पार्वतीं दृष्ट्वा वेगेन मन्दिरादपि ॥ २ ॥
परस्परञ्च संभाष्य समाश्लिष्य पुनः पुनः ।
प्रणम्य वेशयामासुर्मन्दिरं रत्ननिर्मितम् ॥ ३ ॥
रत्नसिंहासने रम्ये वासयामासुरीश्वरीम् ।
वरयामास माल्येन वाससा रत्नभूषणैः ॥ ४ ॥

पारिजातस्य पुष्पञ्च शक्रानीतं मनोहरम्।
ददौ तत्पादपद्मे च देवकी भक्तिपूर्वकम्॥ ५॥
सिन्दूरविन्दुं सीमन्ते भाले चन्दनविन्दुकम्।
कस्तूरीकुङ्कुमादींश्च प्रददौ परितस्तयोः॥ ६॥
मिष्टान्नं भोजयामास शीततोयं सुवासितम्।
ताम्बूलञ्च वरं रम्यं कर्पूरादिसुवासितम्॥ ७॥
अलक्तकञ्च प्रददौ नखेषु पादपद्मयोः।
कुङ्कुमस्यापि रागञ्च सिषिवे श्वेतचामरैः॥ ८॥
संपूज्य पार्वतीं देवीं मुनिपत्नीः क्रमेण च।
पूजयामास विधिवत् पतिपुत्रवतीः सतीः॥ ९॥
राजकन्या देवकन्या नागकन्या मनोहराः।
मुनिकन्या बन्धुकन्याः पूजयामास सुव्रतः॥ १०॥
वाद्यं नानाविधं रम्यं वादयामास कौतुकात्।
मङ्गलं कारयामास भोजयामास ब्राह्मणान्॥ ११॥
भैरवीं पूजयामास मथुराग्रामदेवताम्।
उपचारैः षोड़शभिः षष्ठीं मङ्गलचण्डिकाम्॥१२॥
पुण्यं स्वस्त्ययनं शुद्धं कारयामास मङ्गलम्।
वेदांश्च पाठयामास वसुदेवस्य वल्लभा॥ १३॥
स्वर्गङ्गाम्बुजलेनैव सुवर्णकलशेन च।
स्नापयामास सबलं श्रीकृष्णं पुत्रवत्सला॥ १४॥
वस्त्रचन्दनमाल्यैश्च तयोर्वेशञ्चकार सा।
रत्नेन्द्रसारनिर्माणभूषणैश्च मनोहरैः॥ १५॥
मातृभूषणभूषाढ्यः सबलः कृष्ण एव च।
आययौ च सभां देवमुनीन्द्राणाञ्च नारद!॥ १६॥

दृष्ट्वा तं जगतां नाथमुत्तस्थौ प्रजवेन च ।
स्वयं विधाता शम्भुश्च शेषो धर्मश्च भास्करः ॥ १७ ॥
देवाश्च मुनयश्चैव कार्त्तिकेयो गणेश्वरः ।
पृथक् पृथक् क्रमेणैव तुष्टाव परमेश्वरम् ॥ १८ ॥

ब्रह्मोवाच ।

नाथानिर्वचनीयोऽसि भक्तानुग्रहविग्रहः ।
वेदानिर्वचनीयञ्च कस्त्वां स्तोतुमिहेश्वरः ॥ १९ ॥

श्रीमहादेव उवाच ।

देहेषु देहिनं शश्वत् स्थितं निर्लिप्तमेव च ।
कर्मिणां कर्मणां शुद्धं साक्षिणं साक्षतं विभुम् ।
किं स्तौमि रूपशून्यञ्च गुणशून्यञ्च निर्गुणम् ॥ २० ॥

अनन्त उवाच ।

किंवा जानाम्यहं नाथ ! त्वामज्ञोऽनन्तमीश्वरम् ।
अनन्तकोटिब्रह्माण्डकारणं दुःखतारणम् ॥ २१ ॥
महाविष्णोश्च लोम्नाञ्च विवरेषु जलेषु च ।
सन्ति विश्वान्यसंख्यानि चित्राणि कृत्रिमाणि च ॥२२॥
सन्ति सन्तश्च देवाश्च ब्रह्मविष्णुशिवात्मकाः ।
त्वदंशाः प्रतिविम्बेषु तीर्थानि भारतं तथा ॥ २३ ॥
ब्रह्माण्डैकस्थितोऽहञ्च सूक्ष्मनागस्वरूपकः ।
स्थापितश्च त्वया कूर्मे गजेन्द्रे मशको यथा ॥ २४ ॥
परमाणु परं सूक्ष्मं विश्वेषु नास्ति कुत्रचित् ।
महाविष्णोः परं स्थूलं समो नास्ति च कुत्रचित् ॥२५॥
महाविष्णोः परस्त्वञ्च तत्परो नास्ति कश्चन ।
स्थूलात् स्थूलतरो देवः सूक्ष्मात् सूक्ष्मतमो महान् ॥२६॥

आधारस्य महाविष्णोर्जलरूपो भवान् स्वयम् ।
जलाधारो हि गोलोकस्त्वञ्च स्थावररूपधृक् ॥ २७ ॥
सर्वाधारो महान् वायुः श्वासनिःश्वासरूपकः ।
भक्तानुग्रहदेहस्य नित्यस्य भवतो विभोः ॥ २८ ॥
वक्तैर्बहुतरैर्वाथ त्वया दत्तैः पुरैव च ।
स्तोतुमिच्छामि त्वद्योगं न दत्तं ज्ञानमीश्वरम् ॥ २९ ॥

देवा ऊचुः ।

त्वामनन्तं यदि स्तोतुं देवोऽनन्तो न हीश्वरः ।
न हि स्वयं विधाता च न हि ज्ञानात्मकः शिवः ॥३०॥
सरस्वती जड़ीभूता किं कुर्मः स्तवनं वयम् ॥ ३१ ॥

मुनीन्द्रा ऊचुः ।

वेदा न शक्ताः स्तोतुञ्चेत्वाञ्चैव ज्ञातुमीश्वरम् ।
वयं वेदविदः सन्तः किं कुर्म स्तवनं तव ॥३२॥
इदं स्तोत्रं महापुण्यं देवैश्च मुनिभिः कृतम् ।
यः पठेत् संयतः शुद्धः पूजाकाले च भक्तितः ॥ ३३ ॥
इह लोके सुखं भुक्त्वा लब्ध्वा ज्ञानं निरञ्जनम् ।
रत्नयानं समारुह्य गोलोकं स च गच्छति ॥ ३४ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे
श्रीकृष्णजन्मखण्डे भगवदुपनयने
शततमोऽध्यायः ।

———

# एकाधिकशततमोऽध्यायः ।

—०—

श्रीनारायण उवाच ।

संस्तूय देवा मुनयो विरेमुश्चैव मानसे ।
ददृशुः प्राङ्गणे कृष्णं शोभितं पीतवाससा ॥ १ ॥
यथासौ दामिनीयुक्तं नवीनजलदं मुने ! ।
वकपङ्क्तियुतञ्चैव मालतीमालया तथा ॥ २ ॥
कपाले मण्डलाकारकस्तूरीयुक्तचन्दनम् ।
सकलङ्कं मृगाङ्कञ्च शोभितं जलदे तथा ॥ ३ ॥
द्विभुजं श्यामलं कान्तं राधाकान्तं मनोहरम् ।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहविग्रहम् ॥ ४ ॥
रत्नकेयूरवलयरत्नमञ्जीररञ्जितम् ।
रुदन्तं पितुरुत्सङ्गे बलेन सहितं परम् ॥ ५ ॥
अथ मङ्गलकाले च शुभलग्ने मनोरमे ।
संवीक्षिते ग्रहैः सौम्यैर्जाग्रल्लग्नाधिपे स्थिते ॥ ६ ॥
असद्ग्रहैरदृष्टे च सद्ग्रहेक्षित एव च ।
शुभकर्मसमारम्भं स्वस्तिवाचनपूर्वकम् ॥ ७ ॥
चकार वसुदेवश्चाप्याज्ञयासुरविप्रयोः ।
दत्त्वा सुवर्णशतकं ब्राह्मणाय च सादरम् ॥ ८ ॥
देवेन्द्रांश्च मुनीन्द्रांश्च नमस्कृत्य पुरोहितम् ।
गणेशञ्च दिनेशञ्च वह्निञ्च शङ्करं शिवाम् ॥ ९ ॥
सम्पूज्य देवषट्कञ्च साचतैर्देवसंसदि ।

उपचारैः षोड़शभिः संयतो भक्तिपूर्वकम् ॥ १० ॥
पुत्राधिवासनं चक्रे वेदमन्त्रेण संसदि।
सम्पूज्य नानादेवांश्च दिक्पालांश्च नवग्रहान् ॥ ११ ॥
दत्त्वा पञ्चोपचारांश्च भक्त्या षोड़शमातृकाः।
दत्त्वा च वसुधाराञ्च सप्तवारान् घृतेन च ॥ १२ ॥
चेदिराजं वसुं नत्वा सम्पूज्य प्रययौ पुनः।
वृद्धिश्राद्धं सुनिर्वाप्य यत्किञ्चिद्दैविकं तथा ॥ १३ ॥
यज्ञं कृत्वा तु वेदोक्तं यज्ञसूत्रं ददौ मुदा।
बलदेवाग्रजायैव कृष्णाय परमात्मने ॥ १४ ॥
गायत्रीञ्च ददौ ताभ्यां मुनिः सांदीपिनिस्तथा।
भिक्षां ददौ च प्रथमं पार्वती परमादरात् ॥ १५ ॥
अमूल्यरत्नपात्रस्थं मुक्तामाणिक्यहीरकम्।
हीरसारविनिर्माणं पिता दत्तञ्च हारकम् ॥ १६ ॥
शुभाशिषञ्च प्रददौ शुक्लपुष्पेण दूर्वया।
ततोऽदितिर्दितिश्चैव मुनिपत्नाश्च देवकी ॥ १७ ॥
यशोदा रोहिणी हृष्टा सावित्री च सरस्वती।
प्रत्येकं प्रददौ भिक्षां मणिकाञ्चनभूषिताम् ॥ १८ ॥
देवकन्या नागकन्या राजकन्याः पतिव्रताः।
कामिन्यो बान्धवानाञ्च सस्मिताः स्निग्धलोचनाः ॥१८॥
इन्द्राणी वरुणानी च पवनानी च रोहिणी।
कुवेरपत्नी स्वाहा च रतिः कामस्य कामिनी ॥ २० ॥
प्रत्येकं प्रददौ भिक्षां रत्नभूषणभूषिताम्।
भिक्षां गृहीत्वा भगवान् सबलो भक्तिपूर्वकम् ॥ २१ ॥
किञ्चिद्ददौ च गर्गाय किञ्चित् स्वगुरवे तथा।

वैदिकं कर्म निर्वाप्य गर्गाय दक्षिणां ददौ ॥ २२ ॥
देवांश्च भोजयामास ब्राह्मणांश्चापि सादरम् ।
ये ये समाययुर्यज्ञे ते च दत्त्वा शुभाशिषम् ॥ २३ ॥
कृष्णाय बलदेवाय प्रहृष्टाः प्रययुर्गृहम् ।
नन्दः सभार्य्यो निर्वाप्य शुभकर्म सुतस्य वै ॥ २४ ॥
क्रोड़े कृत्वा बलं कृष्णं चुचुम्ब वदनं तयोः ।
उच्चैः रुरोद नन्दश्च यशोदा च पतिव्रता ।
श्रीकृष्णस्तं समाश्वास्य बोधयामास यत्नतः ॥ २५ ॥

श्रीकृष्ण उवाच ।

सानन्दं गच्छ हे मातर्यशोदे तात ! सत्वरम् ।
त्वमेव माता पोष्ट्री त्वं पिता च परमार्थतः ॥ २६ ॥
अवन्तिनगरं तात ! यास्यामि सबलोऽधुना ।
मुनेः सांदीपिनेः स्थानं वेदपाठार्थमीप्सितम् ॥ २७ ॥
तत आगत्य सुचिरं काले भवति दर्शनम् ।
कालः करोति कलनं स च भेदं करोति च ॥ २८ ॥
सर्वं कालकृतं मातर्भेदं संमीलनं नृणाम् ।
सुखं दुःखञ्च हर्षञ्च शोकञ्च मङ्गलालयम् ॥ २९ ॥
मया दत्तञ्च तत्त्वञ्च योगिनामपि दुर्लभम् ।
सर्वं नन्दश्च सानन्दं त्वामेव कथयिष्यति ॥ ३० ॥
इत्युक्त्वा जगतां नाथो वसुदेवसभां ययौ ।
तदाज्ञया क्षणं प्राप्य ययौ सांदीपिनेर्गृहम् ॥ ३१ ॥
वसुदेवं देवकीञ्च सम्भाष्य विनयेन च ।
नन्दः सभार्य्यः प्रययौ हृदयेन विदूयता ॥ ३२ ॥
मुक्तामणिं सुवर्णञ्च माणिक्यहीरकं तथा ।

वह्निशुद्धांशुकं रत्नं नन्दाय देवकी ददौ ॥ ३३ ॥
श्वेताश्वञ्च गजेन्द्रञ्च सुवर्णं रथमुत्तमम् ।
नन्दाय कृष्णः प्रददौ वसुदेवश्च सादरम् ॥ ३४ ॥
तयोरनुव्रजन् विप्रा देवकीप्रमुखाः स्त्रियः ।
वसुदेवस्तथाक्रूरोऽप्युद्धवश्च ययौ मुदा ॥ ३५ ॥
कालिन्दीनिकटं गत्वा ते सर्वे रुरुदुः शुचा ।
परस्परञ्च सम्भाष्य ते सर्वे स्वालयं ययुः ॥ ३६ ॥
कुन्ती सपुत्रा विधवा वसुदेवाज्ञया मु[illegible]
नानारत्नमणिं प्राप्य प्रययौ स्वालयं मुदा ॥ ३७ ॥
वसुदेवो देवकी च पुत्रकल्याणहेतवे ।
नानारत्नमणिं वस्त्रं सुवर्णं रजतं तथा ॥ ३८ ॥
मुक्तामाणिक्यहारञ्च मिष्टान्नञ्च सुधोप[illegible] ।
भट्टेभ्यो ब्राह्मणेभ्यश्च प्रददौ सादरं मुदा ॥ ३९ ॥
महोत्सवं वेदपाठं हरेर्नामैकमङ्गल[illegible] ।
विप्राणां भोजनञ्चैव कारयामास य[illegible] ॥ ४० ॥
ज्ञातीनां बान्धवानाञ्च पुरस्कारं यथो[illegible] ।
चकार मणिमाणिक्यमुक्तावस्त्रैर्म[illegible] ॥ ४१ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे ना[illegible]
श्रीकृष्णजन्मखण्डे भगवद्[illegible]
नामैकशततमोऽध्या[illegible] ।

———

## द्व्यधिकशततमोऽध्यायः।

---

श्रीनारायण उवाच।

कृष्णः सान्दीपिनेर्गेहं गत्वा च सबलो मुदा।
ननमश्चकार स्वगुरुं गुरुपत्नीं पतिव्रताम् ॥ १ ॥
शुभाशिषं गृहीत्वा च दत्त्वा रत्नं मणिं हरिम्।
गुरवे तस्य भार्य्यायै तमुवाच यथोचितम् ॥ २ ॥

श्रीकृष्ण उवाच।

त्वत्तो विद्यां लभिष्यामि वाञ्छितां वाञ्छितं मम।
कृत्वा शुभक्षणं विप्र मां पाठय यथोचितम् ॥ ३ ॥
ओमित्युक्ता मुनिश्रेष्ठः पूजयामास तं मुदा।
मधुपर्कप्राशनेन गवा वस्त्रेण चन्दनैः ॥ ४ ॥
मिष्टान्नं भोजयामास ताम्बूलञ्च सुवासितम्।
सुप्रियं कथयामास तुष्टाव परमेश्वरम् ॥ ५ ॥

सान्दीपिनिरुवाच।

परं ब्रह्म परं धाम परमीश परात्पर।
स्वेच्छामयं स्वयं ज्योतिर्निर्लिप्तैको निरङ्कुशः ॥६॥
भक्तैकनाथ भक्तेष्ट भक्तानुग्रहविग्रह।
भक्तवाञ्छाकल्पतरो भक्तानां प्राणवल्लभ ॥ ७ ॥
मायया बालरूपोऽसि ब्रह्मेशशेषवन्दितः।
मायया भुवि भूपालो भुवो भारक्षयाय च ॥ ८ ॥
योगिनो यं विदन्त्येवं ब्रह्मज्योतिः सनातनम्।

ध्यायन्ते भक्तनिवहा ज्योतिरभ्यन्तरे मुदा ॥ ९ ॥
द्विभुजं मुरलीहस्तं सुन्दरं श्यामरूपकम्।
चन्दनोचितसर्वाङ्गं सस्मितं भक्तवत्सलम् ॥ १० ॥
पीताम्बरधरं देवं वनमालाविभूषितम्।
लीलापाङ्गतरङ्गैश्च निन्दितानङ्गमूर्च्छितम् ॥ ११ ॥
अलक्तभवनं तद्वत्पादपद्मं सुशोभनम्।
कौस्तुभोद्भासिताङ्गञ्च दिव्यमूर्तिं मनोहरम् ॥ १२ ॥
ईषद्धास्यप्रसन्नञ्च सुवेशं प्रस्तुतं सुरैः।
देवदेवं जगन्नाथं त्रैलोक्यमोहनं परम् ॥ १३ ॥
कोटिकन्दर्पलीलाभं कमनीयमनीश्वरम्।
अमूल्यरत्ननिर्माणभूषणौघेन भूषितम्।
वरं वरेण्यं वरदं वरदानामभीप्सितम् ॥ १४ ॥
चतुर्णामपि वेदानां कारणानाञ्च कारणम्।
पाठार्थं मत्प्रियस्थानमागतोऽसि च मायया ॥ १५ ॥
पाठं ते लोकशिक्षार्थं रमणं गमनं रणम्।
स्वात्मारामस्य च विभोः परिपूर्णतमस्य च ॥ १६ ॥

गुरुपत्न्युवाच।

अद्य मे सफलं जन्म सफलं जीवनं मम।
पातिव्रत्यञ्च सफलं सफलञ्च तपोवनम् ॥ १७ ॥
मद्दत्तहस्तः सफलो दत्तं येनान्नमीप्सितम्।
तदाश्रमं तीर्थपरं तीर्थपादपदाङ्कितम्।
तत्पादरजसा पूता गृहाः प्राङ्गणमुत्तमम् ॥ १८ ॥
यस्य त्वत्पादपद्मञ्चैवावयोर्जन्मखण्डनम्।
तावद् दुःखञ्च शोकश्च तावद्रोगश्च रोगकः ॥ १९ ॥

